# ॥ त्रयीसंग्रहः ॥

## ( त्रयीचतुष्टय-द्वितीयभागः )

"ऋचो अक्षरे परमे व्योमन्, यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किं ऋचा करिष्यति, य इत्तद्विदुस्त इमे समासते ॥"
[ ऋ०सं०१. २२. ८. ३९.–१०१४० ]



१८१४ शकाब्दे

आवसथ्यश्रीसत्यव्रतसामश्रमिभट्टाचार्येण प्रणीतः ।

कलकत्ता—सत्ययन्त्रतः

( १६—१, घोषेस् लेन )

श्रीमहेन्द्रनाथसरकारेण मुद्रयित्वा ग्रन्थकर्त्रा प्रकाशितः ।

॥ शाका: १८१५ । संवत् १९५० । खी० १८९३ ॥

## ॥ त्रयीसङ्ग्रहमङ्गलाचरणम् ॥

( युग्मकम् )

विश्वरूपं प्रणम्याथ नन्दरामं च छान्दसम् ।
त्रयीचतुष्टये रम्ये त्रयीविद्या–प्रचारणे ॥ १ ॥
त्रयीपरिचयं ख्यात्वा सर्व-वेद-निदर्शनम् ।
त्रयीसङ्ग्रह माख्याति श्रीसत्यव्रतसामगः ॥ २ ॥

---



॥ श्रीं । अथ ॥

# ॥ त्रयीसङ्ग्रहसूचनोपसंहारौ ॥

अथ सौरजगच्चक्रान्तर्मणिनाभिदिनमणिपुरीव सम्प्रति दिव्यत्-
प्रस्फुरन्ती येयं भारतराजन्वती कलकत्ता नाम महानगरी, तस्या
मेतस्यां प्रायस्त्रिंशद्वर्षं मयैको 'वङ्गवेदविद्यालयः' प्रतिष्ठापितः ।
वङ्गब्राह्मणेषु सामवेदिसङ्ख्याधिक्यादिहापि सामवेदाध्ययनार्थिना
मन्तेवासिना मेव सङ्ख्याधिक्यं प्रतिभाति चिरम् । ते च प्रायः
स्वल्पैरहोभिरतिप्रयोजनीयानि सामादीन्येव पिपठिषन्ति । तत-
स्तेषा मध्ययनार्थ मेकं पाठ्यपुस्तकं तथैव सङ्गृहीतं १८१२ शकाब्दे
मया सामसङ्ग्रहाभिधम् । त मेव सामसङ्ग्रहं दृष्ट्वा केचन
मच्छात्राः, केचन वेदप्रकाशसमुत्साहिनो महाशया विद्वांसश्च,
तथैव त्रयीसङ्ग्रहाय मा मन्वरुधन् । तत एव १८१४ शकाब्दे संगृ-
हीतस्त्रयीसङ्ग्रहः । तत्सूचनाप्येवं समासतः कृतस्तत्प्रकाशसमये—
"अथात्र ऋग्यजुस्सामेतित्रिविधारचितसंहिताचतुष्टयात्, तद्ब्राह्मण-
चतुष्टयाच्च, तदीयारण्यकचतुष्टयादपि *, निदर्शनीभूतमन्त्रादीनि
सभाष्याण्येव संगृह्य प्रकाश्यन्ते । यथा चैतत्संग्रहपाठा दनधीत-
वेदविद्याना मपि गुरूपदेश मन्तरैव भवेद् वेदपदार्थबोधः, तथैव
यतितव्य मिति धियाय मारब्धः । अतोऽस्य व्याख्यान्तरादिक-
ज्ञापिकां टीप्पनीम्, सुगमानुवादम्, किञ्चित्परिचायिका मुप-
क्रमणिकाञ्च प्रणीय काशयितु मपीहेच्छा विद्यते"—इति । तदद्य
भगवत्कृपातो गुरुचरणप्रसादतश्च पूर्णो मे सोऽभिलाषः ।

---

* [illegible]

तथा चात्र त्रयीसंग्रहे ऋग्यजुस्सामरचितेभ्यश्चतुर्भ्य एव वेदेभ्यः कतिचिन्मन्त्रादयः संगृहीताः, सायणाचार्यप्रणीतभाष्यग्रन्थाश्च प्रायस्तत्र सर्वत्र सनाथीकृताः; यत्र यत्र सायणभाष्याभावस्तत्र तत्र यथोपदेशं व्याख्यान्तराणि च विरचय्य काशितानि। त्रयीपरिचयाभिधश्च यो ग्रन्थान्तरो निरमायि, स एवास्योपक्रमणी स्यादिति तस्यैव प्राथम्य मभ्युपगम्यत एतत्त्रयीचतुष्टये।

त्रयीसंग्रहस्य व्याख्यान्तरादिबोधाय तट्टीकाग्रन्थोऽप्येक आरचितस्त्रयीटीकानामकः। अत्र वैदिककाले नु विज्ञानचर्चा याऽऽस्यासीत्, तन्निदर्शनानि च प्रकाशितानि यथावसरं समासेन। वस्तुतः शौनःशेपीयसूक्तादौ केषुचिन्मन्त्रेषु तदानीन्तनविज्ञानचर्चाबाहुल्योदाहरणानि प्रतीयन्त एव। तथाहि ऋ०सं०१.२.१७.१–५ ऋचः— "तदित्समान माशाते वेनन्ता न प्र युच्छतः।

धृतव्रताय दाशुषे ॥ १

वेदा यो वीनां पद मन्तरिक्षेण पतताम्।

वेद नावः समुद्रियः ॥ २

वेद मासो धृतव्रतो द्वादश प्रजावतः।

वेदा य उपजायते ॥ ३

वेद वातस्य वर्त्तनि मुरोर्ऋष्वस्य बृहतः।

वेदा ये अध्यासते ॥ ४

नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा।

साम्राज्याय सुक्रतुः ॥ ५"—इति।

अथैता ऋचो यथोपदेशस्मरणं व्याचष्टे समासतः;—

मित्रावरुणौ अहोरात्रस्वरूपौ देवौ 'तत् इत्' तम एव 'धृतव्रताय' धृतव्रतं वैषयिककार्यौन्नतौ दृढाध्यवसायं 'दाशुषे'

दाश्वांसं विद्यानाश्रयादिदानशीलं मनुष्यजातिं 'वेनन्ता' कामयमानौ चिरं 'समानं' तुल्यम् 'आशाते' अश्नुवाते, सुखात्मकतयेति भावः; किञ्च तं सुखयितुं कदापि 'न प्रयुच्छतः' प्रमादं न कुरुतः॥ १

त मेवेत्युक्तं तं क मित्याचष्टे तिसृभिः—

'यः' दृढव्रतः पुरुषः 'अन्तरिक्षेण' पथा 'पतताम्' उत्पतताम् उड्डीय चलतां 'वीनां' गमनसाधनानां यानानां 'पदं' व्यवसायम् (अन्तरिक्षविज्ञानं) 'वेद' जानाति, यश्च 'समुद्रियः' समुद्रियस्य 'नावः' पदम् (अर्णवविज्ञानं) 'वेद' जानाति, योऽपि 'धृतव्रतः' वैषयिककार्य्योन्नतौ दृढाध्यवसायः 'प्रजावतः' अनुपलविपलादिसन्ततिविशिष्टान् 'द्वादश' द्वादशसङ्ख्याकान् 'मासः' अग्रहायणादीन् 'वेद' जानाति, किञ्च 'यः' तत्र त्रयोदशोऽधिमासः 'उपजायते' तत्तत्त्वञ्च (कालविज्ञानं) 'वेद' जानाति, अपि च यः 'उरोः' विस्तीर्णस्य 'ऋष्वस्य' सर्वदा परीक्षणीयस्य 'बृहतः' असाधारणपराक्रान्तस्य 'वातस्य' वायोः 'वर्त्तनिं' पदं (वायुविज्ञानं) 'वेद' जानाति, किञ्च तं वायु माश्रित्य 'ये' विग्रहाः 'अध्यासते' जीवन्तो विद्यन्ते, तेषा मेषा मपि पदं (शारीरविज्ञानं) यो 'वेद' जानाति ; त मेवेति पूर्वेणान्वयः ॥ २,३,४

'धृतव्रतः' दृढाध्यवसायो जनः 'सुक्रतुः' अन्तरिक्षविज्ञानवित्त्वेन, अर्णवविज्ञानवित्त्वेन, कालविज्ञानवित्त्वेन, वायुविज्ञानवित्त्वेन, शारीरविज्ञानवित्त्वेन वा सुन्दरकर्मकुशल इति 'पस्त्यासु' मनुष्येषु 'वरुणः' वरुणतुल्यः प्रधानः सन् 'साम्राज्याय' आधिपत्यायैव 'निषसाद' [ सार्वकालिको लिडयम् । पा० ३.४.६. ] चिरं निषीदतीति ॥ ५

एवं यजुर्वेदेऽपि यथा तै॰ आ॰ १. ८. ४-६ मन्त्राः—

"अनवर्णे इमे भूमी इयञ्चासौ च रोदसी।

किंस्विदत्रान्तराभूतं येनेमे विधृते उभे ?

विष्णुना विधृते भूमी इति वत्सस्य वेदना ;—

इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्ये।

व्यष्टभ्नाद्रोदसी विष्णवेते दाधर्थ पृथिवी मभितो मयूखैः"—इति।

एवं सामवेदेऽपि यथा छान्दो॰ ब्रा॰ ५. ११. १ श्रुतिः—

"(सूर्यः) नैवोदेता नास्त मेतैकल एव मध्ये स्थाता"—इति।

ततः संस्कृतानभिज्ञाना मल्पसंस्कृतज्ञानाञ्च वेदबुभुत्सूनां वङ्गानां त्रयीसंग्रहार्थपरिग्रहाय तत्त्रयीसंग्रहमन्त्रादीनां वङ्गभाषयापि प्रणीतं सव्याख्यानानुवादं त्रयीभाषाभिधम्।

तदेषां चतुर्णा मेव ग्रन्थानां समुदित मेकं नामधेय मुपात्त मिह त्रयीचतुष्टय मिति। एषां सूचीपत्राणि च संक्षेपतः कृतान्येव यथास्थानम् ; तत्तदालोचनतस्तत्तद्विषयास्त्वावगम्याः सुतरां भवेयुरितीहैव वेदविद्याधिकारिणो निखिलपाठकान् किल विनयाञ्जलिभिर्नमस्कृत्योपरमाम्यत्र, अभ्युचितकृतज्ञताप्रकाशायात्र पुनःपुनरेवं ब्रवीमि च—

वत्समुखानृषीनास्मान् नौमि विज्ञानवेदिनः।

आकर्षणादितत्त्वानि ज्ञापितानि पुरापि यैरिति शम्॥

कलकत्ता। संं॰१९५२। } श्रीसत्यव्रतशर्म्मा। (सामश्रमी)

# ॥ त्रयीसङ्ग्रहसूचीपत्रम् ॥




॥ परिच्छेदसूची ॥ पृष्ठम्



॥ विशेषद्रष्टव्यविषयसूची ॥ पृ० पं०

( ५८ )

३१

# ॥ त्रयीसङ्ग्रहः ॥

वस्तुतः

## चतुर्वेदपदार्थावबोधाय निदर्शनसञ्चयः ।



कलिकाता-घोषोपनिष्करीयषोड़शैकसङ्ख्यभवनवासिना,

आवसथ्यश्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

ऋग्यजुस्सामाथर्ववेदीयसंहिताब्राह्मणारण्यकेभ्यो

मधुकरवृत्त्या संगृहीतः प्रकाशितश्च ।



CALCUTTA.

16/1 Ghoshe's Lane, Satya Press.

Printed by Mohendra Nath sircar.

1893



## ॥ त्रयीसङ्ग्रहस्य सूचीपत्रम् ॥



---

# ॥ त्रयीसङ्ग्रहः ॥



## यजुर्वेदस्य,

### तैत्तिरीयशाखीयाऽऽरण्यकात्

सप्तमप्रपाठकीयैकादशानुवाकः ।

॥ ॐ ॥ वेद मनूच्याचार्योऽन्तेवासिन मनुशास्ति—

शा० भा० । वेद मनूच्येत्येवमादिकर्त्तव्यतोपदेशारम्भः प्राग् ब्रह्मविज्ञानान्नियमेन कर्त्तव्यानि श्रौतस्मार्तकर्माणीत्येव मर्थः ; अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात् । संस्कृतस्य हि विशुद्धसत्त्वस्यात्मज्ञान मञ्जसैवोत्पद्यते । 'तपसा कल्मषं हन्ति विद्ययाऽमृत मश्नुते'—इति (म० सं० १२, १०४) स्मृतिः । वक्ष्यति च—'तपसा ब्रह्म विजिज्ञासस्व'—इति ( ९,२ ) । अतो विद्योत्पत्त्यर्थं मनुष्ठेयानि कर्माणि । अनुशास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः । प्रागुपन्यासाच्च कर्मणां केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि । उदितायां विद्यायां 'अभयं प्रतिष्ठां विन्दते' ( ८,७ ), 'न बिभेति कुतश्चन'( ८,९ ), 'किमहं साधु नाकरवम्' ( ८,९ )—इत्येवमादिना कर्मनैष्किञ्चन्यं दर्शयिष्यतीत्यतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि

मश्नुते’—इति ( वा० स० ४४, ११ ) । ऋतादीनां पूर्वत्र उपदेश आनर्थक्यपरिहारार्थः ( ८ अनु० ) ; इह तु ज्ञानोत्पत्त्यर्थेला-त्कर्तव्यनियमार्थः । वेद मनूच्याध्याप्याचार्योऽन्तेवासिन मनु-शास्ति ग्रन्थग्रहणादनु पश्चाच्छास्ति तदर्थं ग्राहयतीत्यर्थः ।

सा० भा० । अथैकादशेऽनुवाके केवलकर्मणा मपि विवि-दिषोत्पादनद्वारेण मोक्षहेतुत्व मभिप्रेत्य तदनुशासनं विधत्ते । वेद मनूच्येति । आचार्यस्वरूपं मनुना स्मर्यते—‘उपनीय तु यः शिष्यं वेद मध्यापयेद्द्विजः । सकल्पं सरहस्यं च त माचार्यं प्रच-क्षते’— इति (म०सं० २,१४०) । अन्ते पूर्वोक्तस्य आचार्यस्य समीपे सर्वदा वसतीत्यन्तेवासी । ‘छायाभूतोऽपरित्यागी नित्य मेव वसेद्गुरौ’—इति स्मृतेः । तादृशं शिष्य माचार्यो वेद मनूच्योपन-यन मनु पश्चात् अध्याप्यानुशास्ति । ग्रन्थग्रहणादूर्ध्वं मनुष्ठेय मर्थं ग्राहयति । अनेनैतदवगम्यते—अधीतवेदेन धर्मजिज्ञासा मकृत्वा गुरुकुलान्न निवर्तितव्य मिति * ।

१ । सत्यं वद ।

शा० भा० । कथ मनुशास्तीत्याह—सत्यं वद । यथा प्रमा-णावगतं † वक्तव्यं वद ।

सा० भा० । अनुशासनप्रकारं संग्रहेण दर्शयति । सत्य-मिति । सत्यशब्देन ‘अहिंसा सत्य मस्तेय मित्यादिस्मृतिप्रसिद्धाः ( म० सं० १०,६३ ) सर्वेऽप्युपलक्ष्यन्ते ।

---

* एतच्च शास्तीति विध्यर्थे लेटो रूपम्, शिष्यादिरर्थकस्येति फलितम् ।

† “एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः । तस्मादाचक्षाणमाहुरद्राक्षीदिति । स

## २। धर्मं चर।

शा० भा०। धर्मं चर। धर्म इत्यनुष्ठेयानां सामान्यवचनम्; सत्यादिविशेषनिर्देशात्।

सा० भा०। धर्मशब्देन प्रत्यक्षश्रुतिविहिता अग्निहोत्रादयो विवक्षिताः। 'चोदनालक्षणोऽर्थो धर्मः'—इति (मी० सू० १,१,२) जैमिनिना सूचितत्वात्। श्रौतं स्मार्तं च कर्म सर्वं मनुष्ठेय मिति संग्रहवाक्ययोः तात्पर्यार्थः।

## ३। स्वाध्यायान्मा प्रमदः।

शा० भा०। स्वाध्यायादध्ययनान्मा प्रमदः प्रमादं मा कार्षीः।

सा० भा०। 'सकृत्कृते कृतः शास्त्रार्थः'—इति न्यायेन श्रौत-स्मार्तयोः सकृदनुष्ठितयोः पश्चात्परित्यागप्रसक्तौ तत्परित्यागरूपं प्रमादं निषेधति—स्वाध्यायादिति। अध्ययनेन गृहीतस्य स्वाध्यायस्य विस्मृतिः प्रमादस्तं मा कार्षीः। 'ब्रह्महत्यासमं ज्ञेय मधीतस्य च नाशनम्'—इति (याज्ञ० सं० ३,२२८) स्मृतेः।

## ४। आचार्याय प्रियं धन माहृत्य,

## ५। प्रजातन्तुं मा व्यवच्छेत्सीः।

शा० भा०। आचार्याय आचार्यार्थं प्रिय मिष्टं धन माहृत्य आनीय दत्त्वा विद्यानिष्क्रयार्थम्। आचार्येण चानुज्ञातोऽनुरूपान् दारानाहृत्य प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः

काव्यादिकर्मणा * तदुत्पत्तौ यत्नः कर्त्तव्य इत्यभिप्रायः। प्रजा-प्रजनन-प्रजाति-त्रयनिर्देशसामर्थ्यात् (८ अनु०); अन्यथा प्रजननस्येत्येतदेक मेवावक्ष्यत्।

सा० भा०। गोसुवर्णवस्त्रादिरूपं यद्धन माचार्यस्य प्रियं तद्विद्यादक्षिणार्थं सम्पाद्य गुरवे समर्प्य ततो विवाहं कृत्वा प्रजायाः पुत्रपौत्रादिरूपायाः तन्तुर्विस्तारः, तस्य विच्छेदं मा कार्षीः।

## ६। सत्यान्न प्रमदितव्यम्।

## ७। धर्मान्न प्रमदितव्यम्।

शा० भा०। सत्यान्न प्रमदितव्यं प्रमादो न कर्त्तव्यः। सत्याच्च प्रमदनेऽनृतप्रसङ्गः; प्रमादशब्दसामर्थ्यात्। विस्मृत्याप्यनृतं न वक्तव्य मित्यर्थः; अन्यथासत्यवदनप्रतिषेध एव स्यात्। धर्मान्न प्रमदितव्यम्। धर्मशब्दस्यानुष्ठेयविषयत्वात् अननुष्ठानं प्रमादः, स न कर्त्तव्यः। अनुष्ठातव्य एव धर्म इति यावत्।

सा० भा०। पूर्वोक्तयोः सत्यधर्मयोः कदाचिदालस्यादननुष्ठानं प्रमादः, सोऽपि न कर्त्तव्यः।

## ८। कुशलान्न प्रमदितव्यम्।

शा० भा०। एवं कुशलादात्मरक्षार्थात्कर्मणो न प्रमदितव्यम्।

* ऋ० सं० १०,१८३। अथ० सं० ११, १,१। तै० ब्रा० १,१,८,१। तै० सं० ६,५,६, १; ७,१,८,१। आश्व० गृ० ४,७। कात्या० श्रौ० ५,१,२१। आप० श्रौ० २,१०।

सा० भा० । कुशलं क्षेमस्तेन तत्कारणं कर्म विवक्षितम् । तच्च द्विविधं वैदिकं लौकिकं च । 'यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदित्या-दिक * मायुरारोग्यप्रदं वैदिकम् । चिकित्सादिकं लौकिकम् ।

## ९ । भूत्यै न प्रमदितव्यम् ।

शा० भा० । भूतिर्विभूतिस्तस्यै भूत्यै भूत्यर्थान्मङ्गलयुक्तात् कर्मणो न प्रमदितव्यम् ।

सा० भा० । भूतिरैश्वर्यं तया तत्कारणमुपलक्ष्यते । तत्रापि 'वायव्यꣳ श्वेतमालभेत भूतिकामः'–इत्यादिकं ( तै० सं० २, १,१,१ ) वैदिकम् । प्रतिग्रहादिकं लौकिकम् । कुशलभूत्योरभावे मुक्तिहेतुकर्मानुष्ठानासम्भवात्तयोरप्रमादोऽनुशासनीयः ।

## १० । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ।

शा० भा० । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । ते हि नियमेन कर्त्तव्ये इत्यर्थः । अतोऽवगम्यते अधीतवेदस्य धर्म-जिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति । 'बुद्ध्वा कर्माणि चारभेत्'—इति स्मृतिश्च ।

सा० भा० । अधीतस्वाध्यायस्य विस्मृतिरूपः प्रमादः पूर्वं निवारितः । अत्र त्वध्यापनीयस्वाध्यायब्रह्मयज्ञयोरननुष्ठानरूपः प्रमादो निवार्यते ।

---

* शत० ब्रा० ११,७,३,२ । कात्या० श्रौ० ४,१५,१२ ; ५,१२,१ । आश्व० श्रौ० १०,२ ।

## ११ । देवपितृकार्य्याभ्यां न प्रमदितव्यम् ।

शा० भा० । तथा देवपितृकार्याभ्यां न प्रमदितव्यम् । देव-पित्र्ये कर्मणी कर्त्तव्ये ।

सा० भा० । पौराणिकं विनायकव्रतानन्तव्रतादिकं देव-कार्यम् * । प्रतिसांवत्सरादिकं पितृकार्यम् ।

## १२ । मातृदेवो भव ।

## १३ । पितृदेवो भव ।

## १४ । आचार्यदेवो भव ।

## १५ । अतिथिदेवो भव ।

शा० भा० । मातृदेवः । माता देवो यस्य स त्वं मातृदेवो भव स्याः । एवं पितृदेवः, आचार्यदेवः, अतिथिदेवो भव । देवता-वदुपास्या एते इत्यर्थः ।

---

* नून मेतत् प्रबलपौराणमतकालजातेन लिखित मिति तत्कालभावाज्ञानस्य भ्रमविजृम्भितम् ; तैत्तिरीयारण्यकाम्नायात् पूर्वं विनायकादिव्रतविधायकपुराणग्रन्थानां भविष्यद्धर्मनिहितत्वात् । अतएव च सायणपूर्ववर्त्तिना भगवच्छङ्करानन्दस्वामिनैवं व्याख्यातम्—'देवकार्यं दर्शपौर्णमासादि, पितृकार्यं पिण्डपितृयज्ञादि'—इति । नित्य-कार्येषु पञ्चमहायज्ञेष्वपि देवपितृकार्ये विद्येते एव वैश्वदेवतर्पणरूपे इति ।

सा॰ भा॰। अथ मात्रादिषु मनुष्यत्वबुद्धिपरित्यागेन देवताबुद्ध्या पूजां विधत्ते—मातृदेवो भवेति। मातैव पूजनीयो रुद्रविष्णुविनायकादिरूपो देवो यस्य सोऽयं मातृदेवः। एव मुत्तरत्रापि।

१६। यान्यनवद्यानि कर्माणि, तानि सेवितव्यानि; नो इतराणि।

शा॰ भा॰। यान्यपि चान्यान्यनवद्यानि अनिन्दितानि शिष्टाचारलक्षणानि कर्माणि तानि सेवितव्यानि कर्तव्यानि त्वया; नो कर्तव्यानीतराणि सावद्यानि शिष्टकृतान्यपि।

सा॰ भा॰। यदुक्तं कुशलान्न प्रमदितव्यम्, भूत्यै न प्रमदितव्यमिति। तत्र कश्चिद्विशेषं दर्शयति—यान्यनवद्यानीति। क्षेमैश्वर्यकारणानि कर्माणि द्विविधानि। अनिन्द्यानि निन्द्यानि च। तत्र पूर्वोदाहृतान्यायुष्कामेष्टिप्रतिग्रहयाजनादीन्यनिन्द्यानि कर्माणि सेवितव्यानि; इतराणि त्वभिचारादीनि, शत्रुवधद्वारा क्षेमहेतुत्वेऽपि नरकप्रदत्वेन निन्दितत्वान्न सेव्यानि।

१७। यान्यस्माकं सुचरितानि तानि, त्वयोपास्यानि; नो इतराणि।

शा॰ भा॰। यान्यस्माकमाचार्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि, तान्येव त्वयोपास्यानि; अदृ-

ष्टार्थान्यनुष्ठेयानि नियमेन कर्तव्यानीति यावत्; नो इतराणि विपरीतान्याचार्यकृतान्यपि ।

सा० भा० । ननु शिष्टाचारस्यापि श्रुतिस्मृतिवत्प्रमाणत्वादाचार्यस्य तव सम्बन्धीनि चरितानि सर्वाण्यपि सेवितव्यानीत्याशङ्क्य तत्रापि विशेषं दर्शयति – यान्यस्माकमिति । द्विविधं चरितं दैव मासुरं चेति । तदुभयं भगवानुदाजहार—'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् । अहिंसा सत्य मक्रोध स्त्यागः शान्ति रपैशुनम् । दया भूतेष्वलोलुत्वं मार्दवं ह्री रचापलम् । तेजः क्षमा धृतिः शौच मद्रोहो नातिमानिता । भवन्ति सम्पदं दैवी मभिजातस्य भारत । दम्भो दर्पो ऽभिमानश्च क्रोधः पारुष्य मेव च । अज्ञानं चाभिजातस्य पार्थ सम्पद मासुरीम् । दैवी सम्पद् विमोक्षाय निबन्धायाऽऽसुरी मता'—इति (गी० १६, १ – ५) । तत्रास्माकं सम्बन्धीनि यान्यभयादीनि सुचरितानि त्वया तान्येव सेवितव्यानि; न तु दम्भादीनि । अयं न्यायः सर्वत्र शिष्टाचारे योजनीयः । तथा हि, जामदग्न्यः पितुराज्ञया स्वजननीं जघानेत्यत्रापि पित्राज्ञापालनरूपं सुचरित मादर्तव्यम्; न तु मातृवधरूपं दुश्चरितम् । एव मन्यदप्युदाहार्यम् ।

१८ । ये के चास्मच्छ्रेयांसो ब्राह्मणाः, तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् ।

शा० भा० । ये के च विशेषिता आचार्यत्वादिधर्मैः अस्मदस्मत्तः श्रेयांसः प्रशस्यतराः, ते च ब्राह्मणाः; न क्षत्रियादयस्तेषां

मासनेन आसनदानादिना त्वया प्रश्वसितव्यम्। प्रश्वसनं प्रश्वासः श्रमापनयः; तेषां श्रमस्त्वयापनेतव्य इत्यर्थः। अथवा तेषां चासने गोष्ठीनिमित्ते समुदिते तेषु न प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः; केवलं तदुक्तसारग्राहिणा भवितव्यम्।

सा० भा०। अथ महापुरुषसेवायां कञ्चिद्विशेष मुपदिशति—ये के चास्मदिति। वयोविद्यादिगुणैरस्मत्तो भवदाचार्येभ्यो येऽधिका धर्मनिष्ठाः सन्ति, तेषा मासनदानपादप्रक्षालनादि-शुश्रूषया प्रश्वासः श्रमापनयनं त्वया कर्तव्यम्। अथवा तेषा मासने त्वया प्रश्वासोऽपि न कर्तव्यः! पण्डितम्मन्यतया विक्षे-पेण वादादि न कर्तव्य मिति किमु वक्तव्यम्। तस्मात्तदुप-दिष्टार्थग्राहिणैव त्वया भवितव्यम्।

१९। श्रद्धया देयम्।

२०। अश्रद्धयादेयम्।



शा० भा०। किञ्च यत्किञ्चिद्देयं तच्छ्रद्धयैव दातव्यम्। अश्र-द्धया अदेयं न दातव्यम्।

सा० भा०। अथ दाने कञ्चिद्विशेष मुपदिशति—श्रद्धयेति। यदा धनं विप्राय दीयते तदा श्रद्धायुक्तेनैव भवता देयम्। अश्र-द्धया तु किञ्चिदप्यदेयम्, श्रद्धया रहितस्य दानस्य लोकद्वये-ऽप्यनुपयोगात्। तथा च भगवतोक्तम्—"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह"—इति (गी० १७,२८) अदेय मितिपदच्छेदपक्षे

तदिदं व्याख्यानम्। देय मिति वा पदच्छेदः। यथा श्रद्धया युक्तो ददाति तथा श्रद्धाराहित्येऽपि दातव्यम्। सात्त्विकदानफला भाव एवोदाहृतवाक्येन दर्शितः, राजसतामसदानफलं तु विद्यते। अतएव भगवता दाने त्रैविध्य मुक्तम्—"दातव्य मिति यद्दानं दीयतेऽनुपकारिणे। देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्। यत्तु प्रत्युपकारार्थं फल मुद्दिश्य वा पुनः। दीयते च परिक्लिष्टं तद्राजस मुदाहृतम्। अदेशकाले यद्दान मपात्रेभ्यश्च दीयते। असत्कृत मवज्ञातं तत्तामस मुदाहृतम्"— इति (गी॰ १७, २०—२२)।

२१। श्रिया देयम्।

२२। ह्रिया देयम्।

२३। भिया देयम्।

२४। संविदा देयम्।

शा॰ भा॰। श्रिया विभूत्या देयं दातव्यम्। ह्रिया लज्जया च देयम्। भिया च भयेन देयम्। संविदा च। संविन्मित्रादि-कार्यम्।

सा॰ भा॰। श्रीर्विभवः। ह्रीर्लज्जा। भीः शास्त्रभीतिः। संविद्देशकालपात्रविशेषज्ञानम्। एतैर्वाक्यैः पूर्वोक्तं त्रिविधं दानं प्रपञ्च्यते। धनबाहुल्याच्छ्रीर्मन विद्यते, तत्र दासा दास्यश्च यथा धन मपहरन्ति, तथा ब्राह्मणैरप्यपह्रियता मित्येव



अवजानानः श्रिया निमित्तभूतया यद्दानं करोति तत्तामसम् । मत्समाः पुरुषा दानं कुर्वन्ति मम त्वदानेन महती लज्जेत्येवं लज्जया निमित्तभूतया पूर्ववदवज्ञातो यद्ददाति तद्राजसम् । ऋत्विगादिभ्यो यद्दानं शास्त्रेण विहितं तस्यादाने मम प्रत्यवायः स्यादिति भीत्या यद्दानं तत्सात्त्विकम् । तत्राध्वर्युप्रमुखाश्चत्वारः प्रधानभूताः सम्पूर्णदक्षिणा मर्हन्ति, प्रतिप्रस्थात्रादयस्तदर्द्धं मर्हन्ति, नेष्ट्रादयस्तृतीयांश मर्हन्ति उन्नेत्रादयश्चतुर्थांश मर्हन्तीत्येवं * संविदा विवेकज्ञानेन युक्तः सात्त्विको दद्यात् । यद्वा सर्व मप्येतत्सात्त्विकदानविषय मेव । वित्तशाठ्यं न कारयेदित्यादिशास्त्राद्विभवानुसारेण दातव्यम् । स्वल्पदानेन मम प्रभोर्महती लज्जा भविष्यतीत्येवं लज्जया युक्तः प्रभूतं दद्यात् ।

२५ । अथ यदि ते कर्म्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः सम्मर्शिनः युक्ता आयुक्ताः अलूक्षा धर्म्मकामाः स्युः, यथा ते तत्र वर्त्तेरन्, तथा तत्र वर्त्तेथाः ।

शा० भा० । अथैवं वर्त्तमानस्य यदि कदाचित्ते तत्र श्रौते

---

* अध्वर्युः, होता, उद्गाता, ब्रह्मा ; प्रतिप्रस्थाता, मैत्रावरुणः, प्रस्तोता, ब्राह्मणाच्छंसी ; नेष्टा, अच्छावाकः, प्रतिहर्त्ता, आग्नीध्रः ; उन्नेता, ग्रावस्तुत्, सुब्रह्मण्यः, पोता । शत० ब्रा० १०,३,१,१९ ; कात्या० श्रौ० ७,१,६ ; १३,२,११ ; आप० श्रौ० सू० ७,१ ; यज्ञपरिभाषासूत्राणि च १९—२४ द्रष्टव्यानि ।

स्मार्ते वा कर्म्मणि, वृत्ते वा आचारलक्षणे, विचिकित्सा संशयः स्यात् भवेत्; ये तत्र तस्मिन्देशे काले वा ब्राह्मणाः, तत्र कर्म्मादौ ( युक्ता इति व्यवहितेन सम्बन्धः कर्तव्यः ) सम्मर्शिनो विचारक्षमाः युक्ता अभियुक्ताः कर्म्मणि वृत्ते वा, आयुक्ता अपरप्रयुक्ताः, अलूक्षा अरूक्षा अक्रूरमतयः, धर्म्मकामा अदृष्टार्थिनः अकामहता इत्येतत्; ते यथा येन प्रकारेण ब्राह्मणाः तत्र तस्मिन् कर्म्मणि वृत्ते वा वर्तेरन्, तथा त्वमपि वर्तेथाः ।

सा० भा० । एवं लक्षात लनुष्ठेय मर्थ मुपदिश्यानन्तरं सन्दिग्धे ऽनुष्ठेये निर्णयोपाय मुपदिशति—अथ यदीति इति । कर्म्म श्रौत मग्निहोत्रादिकं स्मार्तं सन्ध्यावन्दनादिकं च * । 'उदिते जुहोति', 'अनुदिते जुहोति'-इति वाक्यद्वयं शृण्वतः श्रौते कर्म्मणि सन्देहः स्यात् । स्मार्तेऽपि सन्ध्यादेवता पुरुषमूर्तिः स्त्रीमूर्तिर्वेति † वचनद्वयेन सन्देहः । वृत्तं कुलपरम्परागतो लौकिक आचारः । तत्रापि मातुलसुताविवाहमांसभक्षणादिविप्रतिपत्तिदर्शिनः सन्देहो भवति । तदानीं यस्मिन्देशे यस्मिन् काले यस्मिन् कुले स्वयं वर्तते, तत्र तेषु देशकालकुलविशेषेषु वर्तमानाः सम्मर्शादिविशेषणविशिष्टा ब्राह्मणाः; तत्र तस्मिन् सन्दिग्धे विषये यथा वर्तेरंस्तथा त्वमपि वर्तस्व । रागद्वेषौत्सुक्यादिदोषराहित्येन सम्यक् शास्त्रार्थनिर्णयकुशलाः सम्मर्शिनः ।

---

* अस्मन्मते सन्ध्यावन्दनमपि श्रौतमेव ; श्रुतिवाक्यविहितत्वात् । षड्विंशब्राह्मणस्य चतुर्थप्रपाठकीयः पञ्चमखण्डो द्रष्टव्यः ।

† न हि सन्ध्याविधायकश्रुतिवाक्येषु, न च सन्ध्यापद्धतिविधायकपुराणवाक्येषु क्वचिदपि सन्ध्यामूर्त्तिर्ध्येयेति विद्यते ; अत एव खलु संशयः पौराणिक एव ।

नित्यनैमित्तिकानुष्ठाने स्वयं प्रवृत्ता युक्ताः। तत्राप्यासमन्ताद्युक्ता आयुक्ताः। अवैकल्येन सम्यगनुष्ठास्याम इत्येव मभियुक्ता इत्यर्थः। लूक्षेण क्रोधेन आग्रहेण वा रहिता अलूक्षाः। धर्म्म मेव कामयन्ते न तु लाभपूजादिक मिति धर्म्मकामाः।

२६। अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः सम्मर्शिनः

युक्ता आयुक्ताः अलूक्षा धर्मकामाः स्युः ; यथा ते

तेषु वर्त्तेरन्, तथा तेषु वर्त्तेथाः ॥

आ० भा०। अथ अभ्याख्यातेष्वभ्युक्ता दोषेण सन्दिह्यमानेन संयोजिताः केनचित्तेषु च यथोक्तं सर्वं मुपनयेत् ये तत्रेत्यादि॥

सा० भा०। इत्थं सन्दिग्धधर्म्मनिर्णयोपाय मुपदिश्यानन्तरं पातकादिशङ्कया निन्दितेषु पुरुषेष्वव्यवहार्यत्वे निर्णयोपाय मुपदिशति—अथाभ्याख्यातेष्विति। पूर्ववद्व्याख्येयम्॥

एष आदेशः—एष उपदेशः—एषा वेदोपनिषत्—

एतदनुशासनम्—एव मुपासितव्यम्—

एव मु चैतदुपास्यम्॥ ११ ॥

आ० भा०। एष आदेशो विधिः। एष उपदेशः पुत्रादिभ्यः पित्रादीनाम्। एषा वेदोपनिषद्वेदरहस्यं वेदार्थ इत्येतत्।

एतदेवानुशासन मीश्वरवचनम्। आदेशवाक्यस्य विधिरुक्तत्वात् सर्वेषां वा प्रमाणभूताना मनुशासन मेतत्। यस्मादेवं तस्मादेवं सर्वं मुपासितव्यं कर्तव्यम्। एव मु चैतदुपास्य मुपास्य मेव चैतन्नानुपास्य मित्यादरार्थं पुनर्वचनम् ॥ ११ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्य-पादशिष्यस्य शङ्करभगवतः कृतौ—तैत्तिरीयारण्यक-भाष्ये सप्तमप्रपाठकीयैकादशोऽनुवाकः ॥ ११ ॥

सा० भा०। उक्त मनुशासन मुपसंहरति—एष आदेश इति। सत्यं वदेत्यारभ्य तथा तेषु वर्तेथा इत्यन्तो योऽयं ग्रन्थसन्दर्भः, स एष आदेशः श्रौतो विधिः। यथा राजा स्वभृत्य मादिशति, तथा वैदिको विधिरनुष्ठातार मादिशति। आदेशस्य समीपवर्तित्वात् स्मार्तो विधिरुपदेशः। स्मृतीनां वेदमूलतया तत्समीपवर्ति-त्वम्। अप्रत्यक्षश्रुतिमूलासु स्मृतिष्वपि सत्यं वदेत्यादिवाक्यार्थ एव मेवोपलभ्यते। येयं सत्यं वदेत्यादुरुक्तिः, सैषा वेदोपनिषत्; वेदरहस्यम्; विध्यर्थवादमन्त्रात्मके वेदे विधिरूपः सारभागः। यदेतत्सत्यं वदेत्यादिकं तदेतदनुशासन मीश्वरस्याज्ञा। श्रुति-स्मृती ममैवाज्ञे इत्येव मीश्वरेणोक्तत्वात्। यस्मात्सत्यवदना-दिकं श्रौतस्मार्तविधुरुक्तं वेदरहस्य मीश्वराज्ञारूपं च। तस्मा-देव मुक्तेन प्रकारेणोपासितव्य मनुष्ठातव्यम्। एव मु चैतदुपास्य मिति पुनर्वचन मादरार्थम्। उचेत्यव्ययसमुदायोऽवधारणार्थः। उक्तप्रकारेणैतदनुष्ठेय मेव; न तु कदाचिदपि परित्यक्तुं शक्यम्।

अत्र केचिदेव मादरं दृष्ट्वा कर्मभिरेव मोक्षं वर्णयन्ति; अपरे तु पुनर्ज्ञानकर्मसमुच्चयेन। तावेतौ पक्षावस्माभिः पूर्वोत्तर-काण्डसम्बन्धकथनप्रसङ्गेनैव निराकृतौ। कर्मणां साक्षान्मोक्ष-

हेतुत्वाभावेऽपि विविदिषोत्पादनद्वारेण तद्धेतुत्व मभिप्रेत्य विद्या-प्रकरणे तदनुशासन माम्नातम् ॥

विद्याफले मोक्षे कर्मनैरपेक्ष्यं तृतीयाध्यायस्य चतुर्थपादे चिन्तितम् * —

"आत्मबोधः फले कर्मापेक्षो नो वा ह्यपेक्षते ?
अङ्गिनोऽङ्गेष्वपेक्षायाः प्रयाजादिषु दर्शनात् ।
अविद्यातमसोर्ध्वस्तौ दृष्टं हि ज्ञानदीपयोः,
नैरपेक्ष्यं ततोऽत्रापि विद्या कर्मानपेक्षिणी ॥

विमतो ब्रह्मतत्त्वावबोधः स्वफलदाने स्वाङ्गभूतकर्मापेक्षो-ऽङ्गित्वात्प्रयाजाद्यपेक्षदर्शपूर्णमासादिवत् । यद्यपि प्रथमाधि-करणे विद्यायाः स्वतन्त्रपुरुषार्थत्वप्रतिपादनेन कर्माङ्गत्वं निवा-रितम्, तथाऽप्यङ्गित्वं न निवारितम् । अतो नासिद्धो हेतुः । अतः कर्मापेक्षो बोध इति प्राप्ते ब्रूमः । विमतं ब्रह्मज्ञानं स्वनिवर्त्त्यनिवर्त्तनेऽन्यापेक्षं न भवति, प्रकाशकत्वात्; प्रदीपवद्घटज्ञानवच्च । यत्त्वङ्गित्व मुक्तम्, तत्र कर्मणः कीदृश मङ्गत्वं भवतोऽभिप्रेतम् किं प्रयाजादिवत् फलोपकार्यङ्गत्व मुतावघाता-दिवत् स्वरूपोपकार्यङ्गत्वम् ? नाद्यः; मुक्तेः कर्मजन्यत्वे नानि-त्यत्वप्रसक्तेः । द्वितीये साध्यविकलो दृष्टान्तः, प्रयाजादीनां स्वरूपोपकार्यङ्गत्वाभावात् । तस्मादुत्पन्ना विद्या स्वफलप्रदाने कर्माणि नापेक्षते ।"—इति ( ३,४,५ ) ॥

विद्यायाः स्वोत्पत्तौ कर्मापेक्षाऽपि तत्रैव चिन्तिता † —

"उत्पत्तावनपेक्षैव मुत कर्माण्यपेक्षते ?

* 'अत एव चाग्नीन्धनाद्यनपेक्षा (अ० ३ पा० ४ सू० २५)'—इति वेदान्तसूत्र मवलम्ब्य ॥

† 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ( वे० ३,४,२६ )'—इत्यादि-सूत्रद्वय मवलम्ब्य ।

फले यथानपेक्षैव मुत्पत्तावनपेक्षता ।

यज्ञशान्त्यादिसापेक्षं विद्याजन्म श्रुतिद्वयात्,

हलेऽनपेक्षितोऽप्यश्वो रथे यद्वदपेक्ष्यते ॥

ब्रह्मविद्या स्वफले यथा कर्माणि नापेक्षते, तथा स्वोत्पत्तावपि ; अन्यथा क्वचिदपेक्षते क्वचिन्नापेक्षत इत्यर्धजरतीयन्यायः प्रसज्येतेति प्राप्ते ब्रूमः । नार्धजरतीयत्वदोषोऽस्ति । योग्यतावशेनैकस्यैव कार्यविशेषेष्वपेक्षानपेक्षयोरुभयोरुपपत्तेः । यथा लाङ्गलवहनेऽनपेक्षितोऽप्यश्वो रथवहनेऽपेक्ष्यते तद्वत् । न च विद्यायाः स्वोत्पत्तौ कर्मापेक्षायाः प्रमाणाभावः ; 'त मेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन दानेन तपसाऽनाशकेनेति प्रवृत्तिरूपाणां वेदानुवचनादीनां विविदिषेत्यादनद्वारा बहिरङ्गसाधनत्वावगमात् । शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येव आत्मानं पश्यतीति निवृत्तिरूपाणां शमदमादीनां विद्योत्पत्तौ साधनत्वेन विधीयमानतया अन्तरङ्गसाधनत्वावगमात् । तस्माद्यज्ञादीनि शमदमादीनि च विद्या स्वोत्पत्तावपेक्षते ।”—इति ( ३,४,६ ) ॥

विद्याहेतुभिरेवाश्रमसिद्धिश्च तत्रैव चिन्तिता * —

“विद्यार्थं माश्रमार्थं च द्विः प्रयोगोऽथवा सकृत् ?

प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते ।

श्राद्धार्थभुक्त्या तृप्तिः स्याद्विद्यार्थेनाऽऽश्रमस्तथा,

अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मतः ॥

यानि यज्ञादीनि विद्याहेतुत्वेन विविदिषावाक्ये विहितानि तान्येवाऽऽश्रमधर्मत्वेन पूर्वकाण्डे विहितानि, तेषां प्रयो-

* 'विहितत्वाच्चाश्रमकर्मापि ( वे० ३,४,३२ )'—इत्यादि-चतुःसूची मवलम्ब्य ।

जनहेविध्यादृ हिरनुष्ठान मिति प्राप्ते ब्रूमः।—यथा श्राद्धार्थ-भोजने तृप्तिर्नान्तरीयकतया सिध्यति, तथा विद्यार्थ मनुष्ठितैरा-श्रमधर्मैः सिध्यतु। न च विद्याहेतूनां काम्यत्वादाश्रमधर्माणां नित्यत्वाच्च सकृत्प्रयोगे नित्यानित्यसंयोगविरोध इति वाच्यम्; वचनद्वयबलेनैकस्यैव कर्मण आकारद्वयोपपत्तेः। यथा 'खादिरो यूपो भवति। खादिरं वीर्यकामस्य यूपं कुर्वीत'—इत्यत्र* वचन-द्वयेनैकस्य नित्यत्वकाम्यत्वे च तद्वत्। तस्मादुभयविधानां यज्ञा-दीनां सकृदेव प्रयोगः।"—इति (३,४,८)।

अनाश्रमिकर्मणा मपि विद्याहेतुत्वं तत्रैव† चिन्तितम्—

"नास्त्यनाश्रमिणो ज्ञान मस्ति वा? नैव विद्यते,

धीशुद्ध्यर्थाश्रमित्वस्य ज्ञानहेतोरभावतः।

अस्त्येव, सर्वसम्बन्धिजपादेश्चित्तशुद्धितः;

श्रुता हि विद्या रैक्कादेराश्रमे त्वतिशुद्धता॥

पूर्व माश्रमं समाप्य केनापि कारणेनोत्तर माश्रम मप्रति-पन्नः अनाश्रमी स्नातको विधुरादिस्तस्य तत्त्वज्ञानं न सम्भाव्यते। बुद्धिशुद्धिहेतोराश्रमस्याभावादिति प्राप्ते ब्रूमः।—सम्भवत्येव अनाश्रमिणा मपि ज्ञानम्; आश्रमनिरपेक्षस्य जपादेर्बुद्धिशुद्धि-हेतुत्वात्। "जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः"—इति (म० सं० २,८७) स्मृतेः। श्रुतश्च संवर्गविद्याया मधिकारोऽनाश्र-मिणोऽपि विवाहार्थिनो रैक्कस्य‡। एव माश्रमरहिता गार्ग्या-

---

* तै० सं० १, ३, ५; ६; ७, ९। शत० ब्रा० ३,६,२,१२। ऐत० ब्रा० २,१,१।

† 'अन्तरा चापि तु तद्दृष्टेः (३, ४, ३६)'—इत्यादिवेदान्तचतुःसूत्री मवलम्ब्य।

‡ छान्दोग्योपनिषदश्चतुर्थप्रपाठको द्रष्टव्यः।

इय उदाहार्याः। न चैवं सत्याश्रमवैयर्थ्यम्; शुद्धेरतिशयहेतुत्वात्। तस्मादनाश्रमिणोऽपि सम्भवति विज्ञानम्॥''—इति (३, ४, ८)॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरन्धरमाधवादेशतो भगवत्सायणाचार्येण
विरचिते वेदार्थप्रकाशनामयजुस्तैत्तिरीयारण्यकभाष्ये
सप्तमप्रपाठकीयैकादशोऽनुवाकः॥

[ ५ पृ० ] 'धी ज्योगामयावी'-इत्यादिक मातुकामेष्टिविधानं तै० सं २,३,११।

---

अथ,

## भगवत्सुरेश्वराचार्यकृतं वार्त्तिकम्।

---

अध्याप्य निखिलं वेद मन्तेवासिन मादरात्।
सत्यं वदेत्येवमादि गरीयाननुशास्ति हि॥ १॥

सङ्गतिं दर्शयित्वा वाक्य मवतारयति—अध्याप्येति। सत्यं वद धर्मं चरेत्याद्यनुशासनम्॥ १॥

यथोपलब्धं यद्वाक्यं हिंसाकल्कविवर्जितम्।
सर्वधर्मविदः प्राज्ञास्तत्सत्यं प्रतिजानते॥ २॥

तत्र सत्यशब्दार्थ माह—यथोपलब्धमिति। हिंसाकल्काभ्यां विवर्जितम्। कल्को भावदोषः॥ २॥

अग्निहोत्राद्यनुष्ठानं धर्म माहुर्विपश्चितः।
प्रमादं मा कृथास्तद्वत्स्वाध्यायं प्रति सर्वदा ॥ ३ ॥

धर्मशब्दार्थ माह—अग्निहोत्रादीति। स्वाध्यायादित्यादेरर्थ माह—प्रमादमिति। विहिताकरणं प्रमादः। तद्वत्सत्यवदनाद्यनुष्ठानवदित्यर्थः ॥ ३ ॥

तथाभिलषितां न्याय्या माचार्यायाथ दक्षिणाम्।
दत्त्वा दारांश्च माहृत्य माच्छेत्सीः सुतसन्ततिम् ॥ ४॥

आचार्यायेत्यादेरर्थ माह—तथेति। अध्ययननिर्वृत्त्याऽऽनन्तर्य मथशब्दार्थः ॥ ४ ॥

विस्मृत्याप्यनृतं नित्यं न च वक्तव्य मत्त्वपि।
इत्यस्य प्रतिपत्त्यर्थं सत्यादीति पुनर्वचः ॥ ५ ॥

सत्यान्न प्रमदितव्य मित्यस्यार्थं माह—विस्मृत्यापीति ॥५॥

एवं शिष्टेष्वपि ज्ञेयं प्रसिद्धार्थत्वकारणात्।
स्पष्टार्थ उत्तरो ग्रन्थः स्वय मेवावगम्यताम् ॥ ६ ॥

उक्तं न्यायं धर्मान्न प्रमदितव्य मित्यादिवाक्येष्वतिदिशति—एवमिति। तेष्वक्षरार्थो न वक्तव्यो ग्रन्थस्य स्पष्टार्थत्वेन व्याख्यानानपेक्षत्वादित्याह—प्रसिद्धार्थत्वेति ॥ ६ ॥

उक्तेभ्योऽन्यानि कर्माणि शिष्टाचारोपगानि तु।
अनाशङ्कितदोषाणि त्वया कार्याणि यत्नतः ॥ ७ ॥

यान्यनवद्यानीत्यादेरर्थं माह—उक्तेभ्य इति। सत्यादिभ्य इति यावत् ॥ ७ ॥

समाशङ्कितदोषाणि शिष्टैराचरितान्यपि ।
सावद्यानि न कार्याणि कर्माणीह कदाचन ॥ ८ ॥

नो इतराणीत्यस्यार्थ माह—समाशङ्कितेति ॥ ८ ॥

श्रुतिस्मृत्यविरुद्धानि शिष्टाचारोपगानि च ।
अस्मत्कर्माणि कार्याणि न विरोधीनि कर्हिचित् ॥९॥

यान्यस्माक मित्यादेरर्थं माह—श्रुतीति ॥ ९ ॥

अस्मत्तो ब्राह्मणा ये स्युः श्रेयांसः शास्त्रवेदिनः ।
तेषा मासनदानेन श्रमापनयनं कुरु ॥ १० ॥

ये के चास्मदित्यादेरर्थं कथयति—अस्मत्त इति । श्रेयांसः समा हीनाश्चेति द्रष्टव्यम् ॥ १० ॥

तेषा माख्यायिकायां वा न वाच्यं संभ्रमात्त्वया ।
तदुक्तसारं त्वादाय नापकार्यं यथाबलम् ॥ ११ ॥

तस्यैवार्थान्तर माह—तेषामिति । एतेषां कार्यविघाताय मम सामर्थ्य मस्तीति कृत्वा तेषा मपकाराय न प्रयतितव्य मित्याह—नापकार्यमिति ॥ ११ ॥

श्रद्धयैव हि दातव्य मश्रद्धाभाजनेष्वपि ॥ १२ ॥

श्रद्धया देय मित्यस्यार्थ माह—श्रद्धयैवेति । एवकारेण श्रद्धापूर्वकं दानं प्रशस्तं न त्वश्रद्धया दातव्यं तस्य फलविकलत्वादित्येतदुच्यते ॥ १२ ॥

श्रीर्विभूतिस्तया देयं देयं चापि सदा ह्रिया ।
भिया भयेन दातव्यं संविन् मैत्री तयाऽपि च ॥१३॥

श्रिया देय मित्यादेरर्थं माह—श्रीरिति । ह्रिया लज्जया

हीनधनेषु दानं दृष्ट्वा लज्जयेति यावत् । भिया राजादिभयेन । विवाहादौ प्रसिद्धो लौकिकसंव्यवहारः संविन्मैत्रीतिचोच्यते ॥ १३ ॥

एवं चेद्वर्त्तमानस्य श्रौतस्मार्तेषु कर्मसु ।
वृत्ते वा विचिकित्सा स्यात्संशयो मतिविभ्रमात् ॥
तस्मिन् कर्मणि वृत्ते वा विप्रा ये सूक्ष्मदर्शिनः ॥
स्वतन्त्रा अभियुक्ताश्च ऋजवः कामवर्जिताः ।
यथा ते तत्र वर्तन्ते वर्तेथास्त्वं तथैव च ॥ १४,१५ ।

अथ यदीत्यादेरर्थमाह—एवं चेदिति । श्रुतिस्मृत्यनुसारेण तत्र तत्र वर्तमानस्य कुतः संशयस्तत्राह—मतीति । सम्मर्शिन इत्यस्यार्थमाह—सूक्ष्मेति ॥ युक्तत्वं स्वातन्त्र्य मपरप्रयुक्तत्व मायुक्तत्व मभियुक्तत्व मलूक्षत्व मृजुत्व मक्रूरत्वं धर्म्मकामत्व मदृष्टार्थित्वम् ॥ १४, १५ ॥

तथा शङ्कितदोषेषु यथोक्त मुपपादयेत् ।
आदेशोऽत्र विधिर्ज्ञेय उपदेशः सुताय च ॥ १६ ॥

अथाभ्याख्यातेष्वित्यादेरर्थमाह—तथेति । अभिशस्तेष्वपि यथैवंविधाः पुरुषा वर्तन्ते, तथा त्वयापि वर्तितव्य मित्यर्थः । एष आदेश इत्यस्यार्थमाह—आदेशोऽत्रेति । सत्यं वदेत्यादिनोक्तोऽर्थो विधिरादेशोऽनुष्ठेय इत्यर्थः । एष उपदेश इत्यस्यार्थमाह—उपदेश इति ॥ १६ ॥

रहस्यं सर्ववेदानां वेदोपनिषदुच्यते ।
अनुशासन मीशस्य ज्ञेय मेतत्परात्मनः ॥ १७ ॥

एषा वेदोपनिषदिति व्याचष्टे—रहस्यमिति । एतदनुशासन मिति व्याकरोति—अनुशासनमिति ॥ १७ ॥

यस्मादेव मतः सद्भिर्यथोक्तं यत्र माश्रितैः ।
उपासितव्यं कर्त्तव्य मेवं चैतत्समाचरेत् ॥ १८ ॥

उपास्य मुपासितव्य मिति पदद्वयस्यार्थं कथयति—यस्मादिति। यथोक्त मादेशोपदेशाद्येवं यस्मादिदोक्तं तस्माद्यत्र माश्रितैः सद्भिरेतत्प्रागतं सत्यादुग्रपासितव्यं कर्तव्यतया बुद्धौ ध्यातव्यम् । ततश्च यथाव्याख्यातं तथा कुर्यादित्येतदुपास्य मित्यनेन विवक्षित मित्यर्थः ॥ १६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यभगवच्छङ्करस्वामिशिष्यस्य
श्रीमत्सुरेश्वराचार्यस्य कृतौ तैत्तिरीयभाष्यवार्त्तिके
शिक्षाध्यायीयैकादशानुवाकः समाप्तः ;

भगवदानन्दज्ञानविरचिता तट्टीका च समाप्ता ॥

---

## ॥ श्रीमत्सुरेश्वराचार्यस्य किञ्चित्परिचयः ॥

अथ कदाचिच्छङ्कराचार्याः * * * विरोधवादिगर्वाङ्कुरोन्मूलनार्थं दक्षिणां दिशं प्रतस्थिरे । ततः साधितकर्म्मकाण्डो भट्टपाद इति प्रथितः कुमारिलभट्ट एव प्रथमं जेय इति मनसि कृत्वा ते तीर्थराजं प्रयागं जग्मुः। तत्र त्रिवेणीतीरे कृतविश्रामा आचार्या गुरून्मथनप्रसक्तमहादोषमपाकरिष्णुर्भट्टपादस्तुषानलं प्रविष्ट इति लोकवार्तां शुश्रुवुः। तां वार्तां श्रुत्वाऽऽचार्याः सत्वरं गच्छन्तस्तुषराशिसंस्थं कुमार मद्राक्षुः। अथ भट्टपादोऽपि दृष्टिपथावतीर्णान् परमगुरून् दृष्ट्वा परितुष्टचित्तो भूत्वा शिष्यगणैस्तान् पूजयामास। अथ गृहीतसपर्या भगवन्तः कुमारिल मिद मूचुः—

भो भट्ट ! शुद्धाद्वैतमार्गप्रदर्शकोऽहं प्रसङ्गार्थं मागतोऽस्मीति । तन्निशम्य भट्टपादः प्राह —भो ! गुर्ववज्ञादोषनिरसनार्थं तुषाग्नि-देहदहनेऽहं गृहीतदीक्षोऽस्मि । वेदोक्तसङ्कल्पितव्रतत्यागेन यद्य-वकीर्णी भवेयं तर्हि सद्भिर्विनिन्द्यो भवितास्मि । यद्यद्वैतमार्ग-प्रकाशनैकहेतुर्भगवांस्तर्हि मण्डनमिश्रनामा विश्वरूप इत्या-ख्यया भुवि प्रसिद्धो ममाऽऽवुत्तो विजेयः । स च यायजूकपरि-षत्प्रमुखो महागृही कर्मवादी काण्वशाखीय उदग्देशेषु माहि-षत्याख्यायां नगर्यां प्रतिवसति । तस्मिञ्जिते सर्वं जगज्जितं भविष्यतीति । एव मुक्त्वा स भट्टपादः श्रीमच्छङ्कररूप मवेक्ष-माणः प्राणानत्यजत् ।

अथ त्यक्तमर्त्यलोके भट्टपादे मण्डनमिश्रं विजिगीषवः श्रीम-द्गुरवो माहिष्मतीं नगरीं ययुः । तत्र गत्वा मण्डनमिश्रगृहं पिहितद्वारं दृष्ट्वा व्योममार्गेणैव तत्राविशन् । अथ श्राद्धविधौ प्रवृत्तो मण्डनमिश्रस्तं यतीन्द्रं दृष्ट्वा संवृतद्वार मपि मद्गृहं प्राप्तोऽयं को भवेदिति मनसि कृत्वा तं यतिश्रेष्ठं साश्चर्यं पृष्टवान् को भवानिति । स मस्करीन्द्रो विवादभिक्षा मिच्छन् भवत्सन्निधि-मागतोऽस्मीति त मुवाच । अथ मण्डनमिश्रोऽपि तं तथा कर्तु-मनुमेने । ततः स यतीन्द्रो मण्डनमिश्रस्य वादोत्सुकतां विज्ञाय त मुवाच भो यद्यहं पराजितः स्यां तर्हि सन्न्यासं परित्यज्य गृहस्थाश्रमी भवेय मिति । अथ मण्डनमिश्रोऽपि तन्निशम्य भव-नामभ्युपेति मुवाच । भो यद्यहं पराजयभाग्भवेयं तर्हि सन्न्यास-समार्गं स्वीकुर्या मिति । एवं कृतप्रतिज्ञयोस्तयोर्विवदतोर्बहवो दिवसा व्यतीताः । अन्ते च शङ्कराचार्यैर्मण्डनमिश्रः पराजितः । अथ सम्प्राप्तपरिभवाय मण्डनमिश्राय तत्प्रतिज्ञानुसारेण मुमुक्षु-

सार्थवाहशङ्कराचार्याः सन्न्यासदीक्षां ददुः । तथा च माधवीये शङ्करविजये—

"सन्न्यासगृह्यविधिना सकलानि कर्मा-
ण्यङ्गाय शङ्करगुरुर्विदुषोऽस्य कुर्वन् ।
कर्णे जगौ किमपि तत्त्वमसीति वाक्यं
कर्णे जपन्निखिलसंसृतिदुःखहानेः ॥"—इति ।

तदाप्रभृत्येव मण्डनमिश्रः सुरेश्वराख्यां लब्ध्वा श्रीमच्छङ्कराचार्याणां शिष्यत्वं स्वीकृतवान् । अथ दिनेषु गच्छत्सु सुरेश्वराचार्येणाऽऽत्मगुरुं प्रणम्येदमवादि—भगवन् ! मम करणीयमस्ति तत्त्वं मामनुशाधीति । अथ तद्वचनं श्रुत्वा शङ्कराचार्यास्तं प्रत्यवोचन्—

* * * * * *

"सत्यं यदात्थ विनयिन्मम याजुषीया
शाखा, तदन्तगतभाष्यनिबन्ध इष्टः ।
तद्वार्तिकं मम कृते भवता प्रणेयं
सच्चेष्टितं परहितैकफलं प्रसिद्धम् ॥ १ ॥
तद्वत्त्वदीया खलु काण्वशाखा,
ममापि तत्रास्ति तदन्तभाष्यम् ।
तद्वार्तिकं चापि विधेयमिष्टं
परोपकाराय सतां प्रवृत्तिः ॥ २ ॥"—इति

एवं गुरुभिराज्ञप्तः सुरेश्वराख्यो मस्करीन्द्रो वार्तिकद्वयं चकार ॥

( 'लिलि' इत्युपनामवामनकृष्णकाशीनाथशास्त्रिलिखितग्रन्थादुद्धृतम् )

## यजुर्वेदस्य,

### तैत्तिरीयशाखीयसंहितातः

प्रथमकाण्डीय-प्रथमप्रपाठकस्य प्रथमानुवाकः।

॥ ॐ ॥

इषे त्वोर्जे त्वा वायव स्थोपायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्व मघ्निया देवभाग मूर्जस्वतीः पयस्वतीः प्रजावती रनमीवा अयक्ष्मा मा व स्तेन ईशत माघशꣳसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ १ ॥

इषे त्रिचत्वारिꣳशत् ॥ १ ॥

इति तैत्तिरीयसंहितायां प्रथमकाण्डे प्रथमप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

# यजुर्वेदस्य,

## तैत्तिरीयशाखीयब्राह्मणतः

तृतीयकाण्डीय-द्वितीयप्रपाठकस्य प्रथमानुवाकः।

॥ ॐ ॥

तृतीयस्या मितो दिवि सोम आसीत्। तं गायत्र्या-हरत्। तस्य पर्ण मच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्। ब्रह्म वै पर्णः। यत्पर्णशाखया वत्सानपाकरोति। ब्रह्मणैवैनानपाकरोति। गायत्रो वै पर्णः। गायत्राः पशवः॥ १॥

तस्मात्त्रीणि त्रीणि पर्णस्य पलाशानि। त्रिपदा गायत्री। यत्पर्णशाखया गाः प्रार्पयति। स्वयैवैना देवतया प्रार्पयति। यं कामयेतापशुःस्यादिति। अपर्णां तस्मै शुष्काग्रा माहरेत्। अपशुरेव भवति। यं काम-

येत पशुमान्त्स्यादिति। बहुपर्णां तस्मै बहुशाखा
माहरेत्। पशुमन्त मेवैनं करोति ॥ २ ॥

यत् प्राची माहरेत्। देवलोक मभिजयेत्। यदु-
दीचीं मनुष्यलोकम्। प्राची मुदीची माहरति। उभ
योर्लोकयोरभिजित्यै। इषे त्वोर्ज्जे त्वेत्याह। इष
मेवोर्ज्जं यजमाने दधाति। वायव: स्थेत्याह। वायुर्वा
अन्तरिक्षस्याध्यक्षा:। अन्तरिक्षदेवत्या: खलु वै
पशव: ॥ ३ ॥

वायव एवैनान् परिददाति। प्र वा एनानेतदाक-
रोति। यदाह। वायव: स्थेत्युपायव: स्थेत्याह। यजमा-
नायैव पशूनुपह्वयते। देवो व: सविता प्रार्पयत्वित्याह
प्रसूत्यै। श्रेष्ठतमाय कर्मण इत्याह। यज्ञो हि श्रेष्ठतमं

कर्म्म । तस्मा देव माह । आप्यायध्व मघ्निया देवभाग

मित्याह ॥ ४ ॥

वत्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाप्यायन्त ।
देवेभ्य एवैना इन्द्रायाप्याययति । ऊर्ज्जस्वतीः पय-
स्वतीरित्याह । ऊर्ज्ज९ हि पयः सम्भरन्ति । प्रजावती
रनमीवा अयक्ष्मा इत्याह प्रजात्यै । मा व स्तेन ईशत
माघश९स इत्याह गुप्त्यै । रुद्रस्य हेतिः परि वो वृण-
क्त्वित्याह । रुद्रा देवैनास्त्रायते । ध्रुवा अस्मिन् गोपतौ
स्यातबह्वीरित्याह । ध्रुवाएवास्मिन् बह्वीः करोति ॥५॥

यजमानस्य पशून् पाहीत्याह । पशूनां गोपी-
थाय । तस्मात् सायं पशव उप समावर्त्तन्ते । अनधः
सादयति । गर्भाणां धृत्या अप्रपादाय । तस्मा-



इन्र्भाः प्रजाना मग्रपाटुका: । उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै ॥ ६ ॥

पशवः करोति पशवो देवभागमित्याह करोति नव च ॥ १

इति तैत्तिरीयब्राह्मणे तृतीयकाण्डे द्वितीयप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

---

अथ

एतयोः संहिताब्राह्मणानुवाकयोः

( तै॰ सं॰ १ । १ । १ ; तै॰ ब्रा॰ ३ । २ । १ )

श्रीमत्सायणाचार्येण युगपत् कृतं भाष्यम् ।

दर्शयागश्चिकीर्षुरमावास्यायां प्रातर्नित्याग्निहोत्रं कृत्वा ततो दर्शयागार्थं "ममाग्ने वर्चः"— इत्यादिभिर्मन्त्रैर्वह्निषु समिदाधान-रूप मन्वाधानं कृत्वा * वत्सापाकरणार्थं मन्त्रेण पलाशशाखां

---

* "ममाग्ने वर्च इति ( ऋ॰ सं॰ १० । १० । १६ । १—९ ) प्रत्यृचं समिधोऽभ्यादध्यात्"— इति आ॰ श्रौ॰ ३ । ८ ॥

च्छिन्द्यात्। तदाह बोधायनः—'तान् छिनत्तीषे त्वोर्जे त्वा' इति। आपस्तम्बस्तु तदेतदभिधाय मन्त्रभेदपक्ष मपि कञ्चिदाश्रित्य विनियोगभेद माह—'इषे त्वोर्जेत्वेति ता नाच्छिनत्त्यपि वेषे त्वेत्याच्छिनत्त्यूर्जे त्वेति सन्नमयत्यनुमार्ष्टि वा' इति। सन्नमन मृजुकरणम्। अनुमार्जन मानुलोम्येन संलग्नधूल्याद्यपनयनम्। सोऽयं मन्त्रभेदपक्षो जैमिनिना द्वितीयाध्याये प्रथमपादे स्वीकृतः (४७ सू०। १५ अधि०)।

तत्र पलाशशाखायाः प्राशस्त्यं ब्राह्मणे समाम्नातं—"तृतीयस्या मितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्ण मच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्"—इति (२६पृ० ५प०)। द्युशब्दस्याकाशे प्रसिद्धत्वात् तत्परित्यागेन स्वर्गलोकविवक्षां दर्शयितु मितः पृथिवीत आरभ्य गणनया तृतीयस्यां दिवि सोमलता पूर्वं मासीदित्युक्तम्। गायत्र्याः सोमाहरणं 'कद्रूश्च वै सुपर्णी चेति (स० ६।१।६) अनुवाके, "सोमो वै राजा गन्धर्वेष्वासीत्"—इत्यस्मिन् बह्वृचब्राह्मणे (ऐ० ब्रा० १।५।१) च प्रपञ्चितम्। तदाहरणाभिघातेन सोमस्य पर्णं भूमौ पतितम्; पक्षिरूपाया गायत्र्याः पक्षः पतित इति चेत्, पतितस्य पर्णस्य पलाशवृक्षरूपेणाविर्भावात् तस्य वृक्षस्य पर्णनाम सम्पन्नम्। न चास्य पर्णस्य कथं वृक्षत्व मिति विस्मायितव्यम्। विधातुरीश्वरस्याचिन्त्यशक्तित्वात्। अन्यथा बीजवृक्ष इत्यत्रापि क्व बीजं कुत्र वा वृक्षः! इत्ययं विस्मयः केन वार्येत। सर्वत्र पर्णेभ्यो वृक्षः प्रसज्येतेत्यय मतिप्रसङ्ग ईश्वरसङ्कल्पाभावेन परिहर्तव्यः। स च सङ्कल्पः कार्यैकसमधिगम्यः। तस्माद्वेदार्थे कुतर्कैर्न चोदनीयम्।

शाखया वत्सापाकरणं विधत्ते—"ब्रह्म वै पर्णः। यत्पर्णशाखया वत्सानपाकरोति। ब्रह्मणैवैनानपाकरोति"—इति (२६पृ० ७पं०)। यथा जगन्निष्पादकं ब्रह्म प्रशस्तं, तथा यागनिष्पादकस्य पलाशस्य प्रशस्तत्वाद् ब्रह्मत्वेन स्तुतिः। वैशब्देनार्थवादान्तरोपपादिता पलाशस्य ब्रह्मसम्बन्धप्रसिद्धिः सूच्यते। देवेषु परस्परं ब्रह्मतत्त्वं निरूपयत्सु पलाशवृक्षः तत्त्व मशृणोदितिशतादृशो ब्रह्मसम्बन्धः। औपानुवाक्यकाण्डे दुशरूपं वर्णयित्वा विधिशेषोऽर्थवादे श्रूयते—"देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति"—इति (सं० ३।५।७।२)। एवं यत्रयत्रार्थवादे प्रसिद्धिसूचका वैशब्दहिशब्दादयः पठ्यन्ते, तत्र सर्वत्र सति सम्भवे लौकिकप्रसिद्धिः; अन्यथार्थवादान्तरप्रसिद्धिरिति द्रष्टव्यम्।

वत्सापाकरण इव गोप्रस्थापनेऽपि शाखां विनियुङ्क्ते—"गायत्रो वै पर्णः। गायताः पशवः। तस्मात्त्रीणि त्रीणि पर्णस्य पलाशानि। त्रिपदा गायत्री। यत्पर्णशाखया गाः प्रार्पयति। स्वयैवैना देवतया प्रार्पयति"—इति (२६पृ० ८पं०)। पर्णस्य गायत्रीसम्बन्धो वेदगम्यः सोमाहरणादारजः; स च पूर्व मुदाहृतः। अनुमानगम्योऽप्यपरः सम्बन्धोऽस्ति गायत्रीपादेष्विव पलाशपर्णेषु त्रित्वावगमात्। पशूनाञ्च गायत्रीदेवतत्वय मर्थोऽन्यत्र द्रष्टव्यः।

छेद्यायाः पलाशशाखायाः बहुपर्णत्वप्रागग्रत्वादिगुणान् विधत्ते—"यङ्कामयेतापशुः स्यादिति। अपर्णां तस्मै शुष्काग्रामाहरेत्। अपशुरेव भवति। यं कामयेत पशुमान्त्स्यादिति।

बहुपर्णां तस्मै बहुशाखा माहरेत्। पशुमन्त मेवैनं करोति। यत्प्राची माहरेत्। देवलोक मभिजयेत्। यदुदीचीं मनुष्यलोकम्। प्राची मुदीची माहरति। उभयोर्लोकयोरभिजित्यै" —इति (२६पृ० १२पं०)। यं यजमान मुद्दिश्याध्वर्युः कामयेत। स्पष्ट मन्यत्।

यथोक्तशाखाच्छेदने कं मन्त्रं पठेदित्याशङ्क्योदाहरति— "इषे त्वोर्जे त्वेत्याह" इति (२७पृ० ५पं०) अस्मिन्मन्त्रे विनियोगानुसारेण छिनद्मीति पद मध्याहृत्य वाक्यं पूरणीयम्। यदन्नं सर्वैः प्राणिभिरिष्यमाणत्वाद् बलहेतू रसः। ऊर्जबलप्राणनयोरिति धातुः। ऊर्ज्यते बलं सम्पाद्यते अनया रसरूपयेतूर्क्। हे पलाशशाखे! देवान्नरूप इष्यर्थं त्वा माच्छिनद्मि। तस्य देवस्य बलप्रद-रसार्थं त्वा माच्छिनद्मीति वाक्यार्थः। मन्त्रद्वयपक्षे विनियोगानुसारेणोर्जे त्वा मनुमार्ज्मीत्यध्याहर्त्तव्यम्।

एतन्मन्त्रस्तावक मर्थवाद माह—"इष मेवोर्जं यजमाने दधाति" इति (२७पृ० ५पं०)। एतन्मन्त्रं पठन्नध्वर्युः भोजनायान्नं बलाय रसञ्च यजमाने सम्पादयतीत्र। न चात्र प्रत्यक्षविरोध आशङ्कनीयः; 'ग्रावाणः प्लवन्ते'—इत्यादिवदस्यार्थवादस्य प्रशंसारूपगुणवादत्वाङ्गीकारात्॥

मन्त्रान्तरविनियोग माह बोधायनः—"तया वत्सानपाकरोति वायव स्थोपायव स्थ" इति। वान्ति गच्छन्तीति वायवो गन्तारः, उप समीपे यजमानगृहे पुनरायन्त्यागच्छन्तीत्युपायवः। हे वत्साः! तृणभक्षणाय प्रथमं मातृसकाशादपेत्य स्वेच्छयैवारण्ये गन्तारो भवत; सायं पुनर्यजमानगृहे समागन्तारो भवत। अथवा वत्सानां परम्परया वायुदेवताकत्वात् अभेद-

विवक्षया वायरूपत्वं ब्रुवन्नध्वर्युस्तद्वत्सार्थं वत्सान् वायुदेवतायैव समर्पयति।

अनेनैव प्रकारेण मन्त्रस्य पूर्वभागो ब्राह्मणेन व्याख्यायते—"वायव: स्थेत्याह। वायुर्वा अन्तरिक्षस्याध्यक्षा:। अन्तरिक्षदेवत्या: खलु वै पशव:। वायव एवैनान् परिददाति" इति (२७पृ० ६पं०)। अध्यक्षा इति वचनव्यत्यय:। वायु: स्वप्रचारेणान्तरिक्ष मधितिष्ठति। अन्तरिक्षे च विस्त्रम्भसञ्चाराय बहुल मवकाशं प्रयच्छन् वत्सान् पालयति। सेयं प्रत्यक्षप्रसिद्धिरर्थवादान्तरगतस्वस्वामिभावो वा वैखलुशब्दाभ्यां द्योत्यते। तस्यैव मन्त्रभागस्य प्रकारान्तरेणाभिप्राय माम्नायते—"प्र वा एतानितदाकरोति। यदाह। वायव: स्थेति" (२७पृ० ८पं०)। अध्वर्युरिमं भाग मुच्चारयति; यदेतेनोच्चारणेन वत्सान् वायुतादात्म्यलक्षणप्रकृष्टाकारवत: करोति। उत्तरभागं व्याचष्टे—"उपायव: स्थेत्याह। यजमानायैव पशूनुपह्वयते" इति (२७पृ० १०पं०)।

विनियोग माह बोधायन:—"अथैषां मातृ: प्रेरयति—'देवो व: सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्व मघ्निया देवभाग मूर्जस्वतो: पयस्वती: प्रजावती रनमीवा अयक्ष्मा मा व स्तेन ईशत माघशꣳसो रुद्रस्य हेति: परि वो वृणक्तु'—इति" (२५पृ० ५पं०) इति। आपस्तम्बस्तु चोनेतान्मन्त्रानभिप्रेत्य विनियोगत्रय माह—'देवो व: सविता प्रार्पयत्विति शाखया गोचराय गा: प्रस्थापयति; प्रस्थिताना मेकाꣳ शाखयोपस्पृशति, दर्भैर्दर्भपुञ्जीलैर्वा आप्यायध्व मिति; रुद्रस्य हेति: परि वो वृणक्त्विति प्रस्थिता अनुमन्त्रयते' इति।

हे गाव:! प्रेरको देवोऽन्तर्यामी परमेश्वरोऽत्यन्तश्रेष्ठायेन्द्राय

दधिरूपाय कर्म्मणे युष्मानरण्ये घास मत्तुं प्रार्पयतु। इति प्रथम-मन्त्रस्यार्थः ( २५पृ० ५पं० )॥ तस्य मन्त्रस्य पूर्वभागे स्थितस्य सवितृपदस्य तात्पर्यं व्याचष्टे—"देवो वः सविता प्रार्पयत्वित्याह प्रसूत्यै" इति ( २७पृ० ११पं० )। प्रेरणायेत्यर्थः। उत्तरभागं व्याचष्टे—"श्रेष्ठतमाय कर्म्मण इत्याह। यज्ञो हि श्रेष्ठतमं कर्म्म। तस्मादेव माह" इति ( २७पृ० १२पं० )॥ १॥

द्वितीयमन्त्रस्याय मर्थः। हे अघ्नियाः! गावः! देवस्येन्द्रस्य दधिरूपं भाग माप्यायध्वं प्रभूतघासभक्षणेन प्रवृद्धं कुरुत। युष्मानपहर्तुं स्तेनश्चोरो मेशत समर्थो मा भूत्। कीदृशीर्युष्मान्? अत्यन्तरसा अधिकक्षीरा बह्वपत्याः क्रिमिदोषरहिता रोगान्तर-हीनाश्च अघशंसो भक्षणादिना तीव्रपापेन घातको व्याघ्रादि-रपि समर्थो मा भूदिति (२५पृ० ६पं०)॥ अस्य मन्त्रस्य प्रथमभागे देवभागमितिपदतात्पर्यं व्याचष्टे—"आप्यायध्व मघ्निया देव-भाग मित्याह। वत्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाप्यायन्त। देवेभ्य एवैना इन्द्रायाप्याययति" इति (२८पृ० १पं०)। यागार्थ-प्रवृत्तेः पूर्वं गोग्रासेन वत्सभागो मनुष्यभागश्च प्रवृद्धो भवति। ऊर्द्ध्वं तु क्षीराज्यरूपो देवान्तरभागो दधिरूप इन्द्रभागश्च प्रव-र्धते। एवकारेण मनुष्यभागव्यावृत्तिः। द्वितीयं भाग मुपपा-दयति—"ऊर्ज्जस्वतीः पयस्वतीरित्याह। ऊर्ज्जं हि पयः सम्भ-रन्ति" इति ( २८पृ० ४पं० )। प्रभूतघासभक्षणेन रसाधिक्य-सम्पादनं क्षीराधिक्यसम्पादनञ्च लौकिकदोहे प्रसिद्ध मिति हि-शब्दस्यार्थः। तृतीयभागस्य प्रयोजन माह—"प्रजावती रनमीवा अयक्ष्मा इत्याह प्रजात्यै" इति ( २८पृ० ५पं० )। वन्ध्यात्वे क्रिमिदोषेण रोगान्तरे च नास्ति प्रजोत्पत्तिः; तदभावे तु

विद्यते। चतुर्थभागस्य प्रयोजन माह—"मा व स्तेन ईशत माघशꣳस इत्याह गुप्त्यै" इति (२८पृ० ६पं०)। चोरव्याघ्रादे- रशक्तौ गावो रक्षिता भवन्ति ॥ २ ॥

तृतीयमन्त्रस्याय मर्थः—रुद्रनामकस्य क्रूरदेवस्यायुधं युष्मान् परिहरत्विति (२५पृ० ८पं०)। एतन्मन्त्रपाठफल माह—"रुद्रस्य हेतिः परि वो वृणक्त्वित्याह। रुद्रादेवैनास्त्रायते"—इति (२८पृ० ७पं०)। बोधायनः—'ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यज- मान मीक्षते' इति। आपस्तम्बः—'ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते' इति। हे गाव! भवत्यो भवत्स्वामिनि यजमाने स्थिरा भवत; न तु अप्रीति- दानापहाराल्पायुभिर्यजमानं परित्यजत; अपत्यपरम्परया बह्व्यश्च भवत (२५पृ० ९पं०)। एतन्मन्त्रपाठं प्रशंसति—"ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरित्याह। ध्रुवा एवास्मिन् बह्वीः करोति" इति (२८पृ० ८पं० )।

बोधायनः—'अथैतां शाखा मग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्य मग्निष्ठेनसि, उत्तरार्धे वाग्न्या- गारस्योद्गूहति, यजमानस्य पशून् पाहि' इति। आपस्तम्बः— यजमानस्य पशून् पाहीत्यग्निष्ठेनस्यग्न्यागारे वा पुरस्तात् प्रतीचीꣳ शाखा मुपगूहति पश्चात् प्राचीं वा' इति। अग्निष्ठ मनो व्रीहिरूपस्य हविषो वाहकं शकटम्।

मन्त्रपाठप्रयोजन माह—"यजमानस्य पशून् पाहीत्याह। पशूनां गोपीथाय। तस्मात् सायं पशव उप समावर्तन्ते"— इति (२८पृ० १०पं०)। गोपीथो रक्षणं तस्माच्छाखाया रक्षितत्वाच्छाखाया भूमौ स्थापनं निवार्यते।

तन्निवावरणफल माह—"अनधः सादयति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजाना मप्रपादुकाः" इति (२८पृ० ११ पं०)। उच्चदेशस्थापनं तत्फलञ्चाह—"उपरीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" इति (२८पृ० ११पं०)। इवशब्द एवकारार्थः। समष्टिः सम्यग् व्याप्तिः॥ ३॥

अस्मिन् अनुवाके स्थितानां मन्त्राणां विनियोगः संगृह्यते—
इषे शाखाच्छिनत्यूर्जे मार्ष्टिवा एति वत्सकान्।
अपाकृत्याथ देवो गाः प्रस्थाप्याप्येति गां स्पृशेत्॥
रुद्रस्येत्यभिमन्त्र्यैतान् ध्रुवेति गृह मात्रजेत्।
यजेति शाखोपगूह इत्यष्टा वनुवाकगाः॥ इति॥

सूत्रद्वयं ब्राह्मणं च विरोधार्थ मुदाहृतम्।
सन्देहस्यापनुत्यर्थं मीमांसाप्यत्र वर्ण्यते॥

अथ मीमांसा। लोके तावद्विचारेण सन्देहनिवृत्तिः प्रसिद्धा; वेदेऽपि तत्र तत्र तत्त्वविचारपूर्वकं सन्देहापनयन मुपलभामहे।

तथा ह्यग्न्युपस्थानविषयविवादे विचारो यथा (तै० सं०) प्रथमकाण्डे पञ्चमप्रपाठके नवमे ऽनुवाके श्रूयते—"उपस्थेयोऽग्नी३र्नोपस्थेया३ * इत्याहुर्मनुष्या येऽन्वै योऽहरहराहृत्याथैनं याचति स इन्वैत मुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मात् नोपस्थेयोऽथो खल्वाहुराशिषेवैकं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्नि मुपतिष्ठते तस्मा दुपस्थेयः" इति। अस्याय मर्थः—प्रतिदिनं सायंप्रातरग्निहोत्र-मनुष्ठायोपप्रयन्तोऽध्वरमित्यादिभिर्मन्त्रैः (ऋ० सं० १, ७४, १) अग्नि-

* एवमादिषु सर्वत्रैव 'विचार्यमाणानाम् (पा० ८,२,९७)'-इति प्लुतिः।

प्रार्थनलक्षण मुपस्थानं कर्त्तव्यं न वेति संशयः। न कर्त्तव्य मिति तावत् प्राप्तम्। कुतः? उपस्थानेनाग्नेरुपद्रवप्रसङ्गात्। तथाहि —"आयुर्दा अग्नेऽस्यायुर्मे देहि, वर्चोदा अग्नेऽसि वर्चो मे देहि, तनूपा अग्नेऽसि तनुवं मे पाहि" इत्यादिषु उपस्थानमन्त्रेषु आयुरादीनि बहूनि याच्यन्ते। तत्र यजमानः स्वल्पं हविर्दत्वा बहूनि याचमानः कथ मग्निं न बाधेत। लोकेऽपि यः कश्चि-द्दरिद्रो मनुष्यो यत्किञ्चिज्जम्बीरफलादिकं मनुष्यायैव राज्ञे प्रतिदिन मुपायन मानीय दत्त्वा तं राजानं प्रति सहस्र-सङ्ख्याकं धनं याचति, स याचकस्तं राजानं पीडयत्येव। स च राजा तं कुप्यति। यदा मनुष्येष्वप्येवं तदा को नामाग्न्यादीन् देवान्महाप्रभावान् प्रतिदिनं याचितुं धृष्टो भवेत्? तस्मादग्नी-र्नोपस्थेय इति पूर्वपक्षे प्राप्ते, राद्धान्तोऽभिधीयते—इदं मे भूया-दिदं मे भूयादित्येवं स्वाभीष्ट मखिल माशासितु मेव यज-मानः प्रजापतिरूप मिम मग्निं यजते। आहिताग्नेर्यजमानस्य मन्त्रैरुपस्थान मेवार्थः। न चात्र हविषोऽल्पत्वं शङ्कनीयम्, मन्त्रसामर्थ्येन वर्धमानत्वात्। तथा च श्रूयते—"धान्य मसि धिनुहि देवानित्याह। एतस्य यजुषो वीर्येण। यावदेका देवता कामयते यावदेका। तावदाहुतिः प्रथते। न हि तदस्ति। यत्तावदेव स्यात्। यावज्जुहोति"—इति (ब्रा०२। २।६)। तस्मात् मनुष्याणां क्रयविक्रयाविव यजमानदेवतयो-र्याग-तत्फले विस्तरेण व्यवहर्तुं शक्यते। अतएव भगवद्गीतायां तृतीयाध्याये (११ श्लो०) कर्म्मानुष्ठानकर्त्तव्यताप्रसङ्गेन स्मर्यते —"देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भाव-यन्तः श्रेयः पर मवाप्स्यथ॥" इति।

तस्मादृविषो जम्बीरफलादिवेलचण्येनोक्तदोषाभावादग्नि-रूपस्थेय एवेति राद्धान्तः। एतदेव द्रढयितुं वाक्यशेषे राज्ञ इव देवताया: कोपप्रसङ्गो नास्तीत्यभिप्रेत्य श्रूयते—"न तत्र जाम्यस्तीत्याहुर्योऽहरहरुपतिष्ठते"—इति॥ यथा—पञ्चमकाण्डस्य पञ्चमप्रपाठके प्रथमानुवाकेऽग्निचयनगतस्य कस्यचित् पशोर्देवताविशेषो विचारितः—"वायव्यः कार्या:३ प्राजापत्या३ इत्याहुः"—इति। तत्रैव तृतीयानुवाके चीयमानस्याग्ने रधोमुखत्व मूर्ध्वमुखत्वं वेति विचारितम्—"ब्रह्मवादिनो वदन्ति न्यग्निश्चेतव्या३ उत्ताना३ इति"। षष्ठकाण्डस्य प्रथमप्रपाठके चतुर्थानुवाके होमो विचारितः—"ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३इ न होतव्या३ मिति"। तत्रैव नवमानुवाके क्रेतव्ये सोमे पतिततृणादिक मपनेयं वा न वेति विचारितम्—"ब्रह्मवादिनो वदन्ति विचित्याः सोमा३ न विचित्या३ इति"। तस्मिन्नेव काण्डे तृतीयप्रपाठकेऽष्टमानुवाकेऽध्वर्युयजमानयोः पशुस्पर्शो विचारितः—"ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वारभ्या३इति"। तत्रैव पञ्चमप्रपाठके नवमानुवाके सोमयागस्य तृतीयसवने हारियोजननामकग्रहं प्रति होमो विचारितः। "तं व्यचिकित्सज्जुहवानी३ माहौषा३ मिति"। तत्रैव षष्ठप्रपाठके द्वितीयानुवाके देवभागनामकं मुनिं प्रति सात्यहव्यनामको मुनिः पप्रच्छ—यज्ञाङ्गे देवा गातुविद इत्येतन्मन्त्रहोमे सोमयागं समापितवानसि यजमानो वेति प्रश्नार्थः। स प्रश्न एवं श्रूयते—"वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत् सृञ्जयान् बहुयाजिनोऽयीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३ विति स होवाच"। सप्तमकाण्डस्य

प्रथमप्रपाठके सप्तमानुवाके गर्गत्रिरात्रनामकस्य यागस्य दक्षिणारूपे गोसहस्रे चरमधेनोरनुगमनं पुरोगमनं वेति विचारितम्—"सहस्र७ं सहस्रतम्यन्वेती३ सहस्रतमी३७ं सहस्रा३मिति"। तत्रैव पञ्चमप्रपाठके सप्तमानुवाके गवामयनविकृतिरूपस्योत्सर्गिणा मयनस्य सम्बन्धि किञ्चिदहः परित्याज्यं न वेति विचारितम्—"उत्सृज्यां३ नोत्सृज्या३ मिति मीमा७ंसन्ते ब्रह्मवादिनः"—इति। एवं ब्राह्मणान्तरेष्वपि विचारा उदाहरणीयाः ॥

तदेवं वेदवादिनां विचारपूर्वकेऽर्थनिर्णये तात्पर्यातिशयदर्शनात् सर्वोऽपि वेदार्थो विचार्य निर्णेतव्य इत्यनुगम्यते। तथा सति पुनः संशयो नोदेष्यति; अन्यथा कदाचित् स्वबुद्धौ पूर्वपक्षयुक्तिप्रतिभाने सति विपरीतनिर्णयः संशयो वा प्रसज्येत। अतएवोक्तम्—

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति॥" इति।

स्मृतिरपि—"आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥" इति (म० १२।१०६)।

आर्षं ब्रह्मज्ञानम्। तस्माज्जैमिनिबादरायणाभ्यां मीमांसा वर्णिता। येषु वाक्येषु संशयो नास्ति, तेष्वपि मीमांसया किञ्चिदपूर्वं जन्यते। अतएव स्मर्यते—

"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ॥" इति।

तस्मादस्माभिस्तत्तदनुवाकेषु सम्भाविता मीमांसोदाह्रियते॥

* * * *

"इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे ।
असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात् ॥
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे ।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः ॥" इति (२।१।१५)।

इषे त्वोर्जे त्वेत्यत्र क्रियापदाभावेनोक्तप्रयस्येति मन्त्रवदर्थस्मारकत्वाभावाददृष्टार्थत्वे सत्येकादृष्टस्य कल्पने लाघवादेक एव मन्त्र इति चेत्? नैवम्; शाखान्तरे इषे त्वेत्याच्छिनत्त्यूर्जे त्वेत्यनुमार्ष्टीति विनियोगभेदश्रवणात्। तदनुसारेणापि त्वाच्छिनद्मि। ऊर्जे त्वाऽनुमार्ज्मीति क्रियापदेऽध्याहृते सत्यर्थद्वयस्मारकत्वाद् भिन्नोऽयं मन्त्रः ॥ * * *

न च "वत्सानपाकरोति"—इत्यत्र विधायकानां लिङ्लोट्तव्यप्रत्ययानामभावादविधित्वमिति शङ्कनीयम्; क्रत्वङ्गोपवीतापूर्वार्थत्वेन पञ्चमलकाराश्रयणे विधित्वसम्भवात्। तथाहि—

"उपन्यासे ऽनुवादो वा विधिर्वाऽऽद्यो यतः स्मृतौ ।
प्राप्तमेवमपूर्वत्वात् क्रतौ लेटा विधीयते ॥" इति (३।४।१)।

दर्शपूर्णमासप्रकरणे क्रत्वङ्गत्वेन वस्त्रस्योपवीतत्वमेवं समाम्नायते—"देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते" इति। तदिदं वाक्यमुपवीतत्वस्यानुवादकं वा विधायकं वेति संशयः। नित्योदकी नित्ययज्ञोपवीतीति स्मृत्या प्राप्तत्वात्, विधायकानां लिङादीनामभावाच्चानुवादकमिति प्राप्ते, ब्रूमः—पुरुषार्थस्य स्मृत्या प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात् पञ्चमलकारेण दर्शपूर्णमासाङ्गतया विधीयत इति राद्धान्तः॥ तेनैव न्यायेन वत्सानपाकरोतीत्ययं न प्रथमलकारः किन्तु पञ्चमलकारः। तस्य च विधायकत्वं लिङर्थे लेडिति (३।४।७पा०) सूत्रेण सिद्धम् ॥

नन्वेव मपि यत् पर्णशाखयेत्यनुवादकत्वगमकेन यच्छब्देन विधिशक्तिः प्रतिपाद्यते "देवांश्च याभिर्यजते"—इति वदिति चेत्, मैवम् ; विधारणन्यायेन यच्छब्दस्य बाधितत्वात् ।

स च न्यायस्तस्मिन्नेव पादेऽभिहितः [ ४ अधि० ]—

"धारयन्नुपरिष्टाद्धि देवेभ्य इति संस्तवः ।
विधिर्वाऽधोधृतेः पित्र्ये प्रोक्तायाः पूर्ववत् स्तुतिः ॥
ऊर्द्ध्वं विधारणं प्राप्तं समिधो नान्यमानतः ।
अतो हिशब्दसन्त्यागादपूर्वार्थो विधीयते ॥"—इति ।

तत्राग्निहोत्रे श्रूयते—"अधस्तात् समिधं धारयन्नुद्रवेदुपरिष्टाद्धि देवेभ्यो धारयति"—इति । अत्र पित्र्यं हविर्होतुं हस्ते धारयन् यदा द्रवति, तदानो मुहूर्तस्याधस्तात्समिधं धारयेदिति यद्विधीयते, तदैतद्देविकेनोपरिधारणेन स्तूयते । कुतः ? हिशब्देनानुवादत्वप्रतीतेः । तच्चत्वे पूर्वाधिकरणे—"प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति । ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रां स्तृणीयात्" इत्यस्मिन्नुदाहरणद्वये यज्ञोपवीतित्वोदगग्रत्ववाक्ययोर्हिशब्दयच्छब्दयुक्तयोर्विधायकत्व मपोह्य अर्थवादत्वं निर्णीतम् । तद्वदत्रापीति प्राप्ते, ब्रूमः । —विषमो दृष्टान्तः ; देविके यज्ञोपवीतित्वोदगग्रत्वयोर्मानान्तरप्राप्तत्वात् । हिशब्दयच्छब्दावबाधितत्वात् तत्रार्थवादत्वं वक्तु मुचितम्; उपरिधारणे त्वप्राप्तत्वाद्धिशब्दं परित्यज्य विधिरेवाभ्युपगन्तव्यः । एवं सति वत्सापाकरणस्याप्यपूर्वार्थत्वात् यच्छब्दपरित्यागेन विधिरेव युक्तः ॥

ननु लोके सायन्दोहार्थिभिः प्रातर्वत्सा गोभ्योऽपाक्रियन्ते, अतो लोकत एव प्राप्तत्वान्न वत्सापाकरणं विधेय मिति चेत्, मैवम् ; अवघातवन्नियमापूर्वहेतुत्वेन विधेयत्वात् ।

अवघातन्यायश्च द्वितीयाध्यायस्य प्रथमपादे वर्णितः [३अधि०]—

"अवघातादिनापूर्वं मुत्पाद्यं विद्यते न वा ।
यजत्यादिवदस्त्येव वाक्यवैयर्थ्य मन्यथा ॥
दृष्टे तुषविमोकेऽस्ति नापूर्वं द्रव्यतन्त्रता ।
स्याद्यजत्यादिवैषम्यं नियमापूर्वंकृद्वचः ॥" इति ।

यथा "समिधो यजति"—इत्यत्र यागजन्य मपूर्वं मस्ति, तथा "व्रीहीनवहन्यात्"—इत्यत्रापि तदभ्युपेयम् ; अन्यथा विधि-वाक्यवैयर्थ्यप्रसङ्गादिति चेत्, न ; दृष्टे सम्भवत्यदृष्टकल्पनस्या-न्याय्यत्वात् । न चात्र यजत्यादिविधिसाम्य मस्ति गुणकर्म्मत्वे-नावघातस्य द्रव्यतन्त्रत्वात् ॥ यागस्तु प्रधानकर्म्म । अयञ्च कर्म्मणां भेदो जैमिनिना सूत्रत्रयेण स्पष्टोक्तः—"तानि द्वैधं गुणप्रधान-भूतानि । यैर्द्रव्यं न चिकीर्ष्यते, तानि प्रधानभूतानि ; द्रव्यस्य गुणभूतत्वात् । यैस्तु द्रव्यं चिकीर्ष्यते, गुणस्तत्र प्रतीयेत ; तस्य द्रव्यप्रधानत्वात्"—इति ( २ । १ । ६,७,८ ) । यैस्तु कर्म्मभिर्द्रव्य मुत्पादयितुं संस्कर्त्तुं वेष्यते, तेषु कर्म्मसु गुणत्वम् । कुतः ? तस्य कर्म्मणो द्रव्यप्रधानत्वात् । द्रव्यं प्रधान मस्येति बहुव्रीहिः । यूपं तक्षत्यावहनीय मादधातीत्यादौ यूपाहवनीयादि द्रव्य मुत्पा-दयितु मिष्यते ; व्रीहीनवहन्ति तण्डुलान् पिनष्टीत्यत्र व्रीह्यादि-द्रव्यं संस्कर्त्तु मिष्टम् । आज्येन प्रयाजा इज्यन्त इत्यादिपुन-र्वैपरीत्यात् प्रधानकर्म्मत्वम् । अतो यजतिवैषम्यादवघातोऽपूर्व-जनकः ; न च विधिवाक्यवैयर्थ्यम् ; नखविदलनादिनापि तण्डु-लनिष्पत्तिसम्भवे सति अवघातेनैव तण्डुला निष्पादनीया इति तन्नियमजन्य मपूर्वं बोधयितुं विधेरपेक्षितत्वात् । तदच्छास्त्रीया-पाकरणेनैव सायं दोहः सम्पादनीय इति नियमविधिरस्तु ॥

उक्तेषु विधिसामान्यविचारेष्वेते निर्णयाः सम्पन्नाः—विधिरलौकिकधर्म्मबोधकः पञ्चमलकाराश्रयणेन विधायकत्वम् (४०पृ० ), अप्राप्तार्थे यच्छब्दादयो न विधिबाधकाः ( ४१ पृ० ), संस्कार कर्म्म दृष्टार्थे सम्भवेऽपि नियमापूर्वार्थ मपि ( ४२ पृ० ) इति ॥

शाखाहरणे तु चतुर्थाध्यायस्य द्वितीयपादे [२ अधि०] किञ्चिद्विचारितम्—"प्राची माहरतीत्यत्र दिक् शाखा वास्तु दिक्श्रुतेः।

आहार्य्यत्वं दिशो नास्ति, शाखा तेनोपलक्ष्यते ॥" इति ।

यत्प्राचीमाहरेदिति वाक्ये प्राचीशब्देन मुख्यार्थत्वाद्दिग्विवक्षितेति चेत्, न; दिश आहर्त्तुं मशक्यत्वेन दिक्सम्बन्धिन्याः शाखायाः उपलक्षणीयत्वात् ॥

तस्मिन्नेव पादेऽन्यद्विचारितम् [ ३ अधि० ]—

"शाखां छित्त्वोपवेषञ्च मूले कुर्वीत शाखया ।

तुद्देत्तान् कपालानि स्थापयेदुपवेषतः ॥

द्वयं प्रयोजनं छित्तेर्वत्सापाकृतिरेव वा ।

आद्योग्रमूलयोरत्र विभज्य विनियोगतः ॥

उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः ।

पूर्य्यतेऽतोऽनुनिष्पादि स तस्माद्युज्यतेऽन्तिमः ॥" इति ।

इदमाम्नायते—"मूलतः शाखां परिवास्योपवेषं करोति" इति । तस्याय मर्थः—येय मिषेत्वेति मन्त्रेणावच्छिन्ना शाखा, तां पुनर्मूले छित्त्वा तं मूलभाग मुपवेषं कुर्य्यादिति । अत्र तयोर्मूलाग्रयोः पृथग्विनियोग आम्नायते—"उपवेषेण कपालान्युपदधाति, शाखया वत्सानपाकरोति" इति । अत्र च वत्सापाकरणं कपालोपधानं चेत्युभयं शाखाच्छेदनस्य प्रयोजनम् । कुतः ? अग्रमूलयोः साम्येन विभज्य विनियोगादिति चेत्, मैवम्;

उपवेषं करोतीत्ययं विधिरुपवेषस्य प्रकृतिद्रव्य मपेक्षते। सा चापेक्षा मूलेन पूर्य्यते। तच्च मूलं शाखार्थं मिषे त्वोर्जेत्वेति ता माच्छिनत्तीत्यत्र छिन्नायाः समूलायाः शाखायाः सौकर्य्यार्थेन्। परिवासनवाक्ये न पुनर्मूलोपादानकं छेदनं श्रूयते; न चासति मूले मूलोपादानकं छेदनं सम्भवति। तस्माच्छाखार्थं मेव मूलं न तूपवेषार्थम्। अतोऽन्यार्थमूलानुनिष्पन्नोपवेषेण क्रियमाणं कपालोपधानं न शाखाच्छेदस्य प्रयोजकं किन्तु वत्सापाकरण मेव तत्प्रयोजकम्। तथा सति यत्र शाखायाः प्रथमच्छेदनेनैव सौकर्य्यं सम्पाद्यते, तत्रोपवेषसिद्धये पुनः प्रयत्नेन मूलं न सम्पादनीयं किन्तु लौकिकेनैव केनचित् काष्ठेन कपालान्युपधेयानीति विचारस्य फलं सिद्धम्॥ ॥

इषेत्वेत्यादिशब्दानां प्रक्रियां शब्दसङ्ग्रहे।
अवोचं स्वरमात्रन्तु वैशद्याय पुनर्ब्रुवे॥

इषिति प्रातिपदिकगत इकारः "फिषोन्त उदात्तः" (फि० १।१) इत्युदात्तः। फिडिति प्रातिपदिकस्य संज्ञा। इषित्यत्र षकारस्यान्तिमत्वेऽपि "स्वरविधौ व्यञ्जन मविद्यमानवत् (भा० ६।१।२२३)"-इत्युक्तत्वादिकार एव फिडन्तिमः। एकारस्य सुप्त्वात् "अनुदात्तौ सुप्पितौ" (पा० ३।१।४) इत्यनुदात्तत्वे प्राप्ते तदपवादः—"सावेकाचस्तृतीयादिर्विभक्तिः" (पा० ६।१।१६८); सप्तमीबहुवचने परतः स्थितं यत्प्रातिपदिक मेकाच्कं तस्मादुत्तरा तृतीयादिर्विभक्तिरुदात्ता भवति। "अनुदात्तं पद मेकवर्जम्" (पा० ६।१।१५८); उदात्तस्वरितौ वा यस्य वर्णस्य विधीयते, तं वर्जयित्वा शिष्टं पद मनुदात्तं भवति। तथाच अस्मिन् पदे एकारस्योदात्तत्वविधानादिकारोऽनुदात्तः। नन्वि-

कारस्यापि पूर्वं मुदात्तत्वं विहितम्, ततस्तं वर्जयित्वा विभक्ते रेवानुदात्तत्व मस्त्विति चेत्, मैवम्; प्रथमतः प्रातिपदिक-स्वरेऽवस्थिते सति पश्चाद्विधीयमानत्वेन विभक्तिस्वरस्य प्रबल-त्वात्; "सति शिष्टस्वरो बलीयान्"—इति हि मर्य्यादा (पा० ६।१।१५८ वा० १३)। तस्मादनुदात्तादिक मुदात्तान्त मिषे इति पदं सिद्धम्। त्वेति पद मनुदात्तम्; युष्मच्छब्दस्याष्टमिकापादा-दावादेशत्वात् (पा० ८।१।२०) "अनुदात्तं सर्व मपादादौ" (पा० ८।१।१८) इति हि तत्रानुवर्त्तते। संहितायां तूदात्तादेकारादुत्त-रत्वेन तस्य "उदात्तादनुदात्तस्य स्वरितः" (पा० ८।४।६६) इति स्वरितत्वम्। ततः स्वरितान्त मिदं वाक्यम्। एव मूर्जे त्वेति वाक्यं योज्यम्। तयोर्वाक्ययोस्संहितायाम् "आद्गुणः" (पा० ६।१।८७) इति ओकारे गुणे प्राप्ते "पूर्वत्रासिद्धम्" (पा० ८।२।१) इति स्वरितस्यासिद्धत्वात् अनुदात्तयोः पूर्वोत्तरवर्णयोः स्थाने विहित ओकारोऽनुदात्तः। तस्योदात्तादुत्तरत्वेन स्वरितत्वे प्राप्ते तदपवादः—"उदात्तस्वरितपरस्य सन्नतरः" (पा० १।२।४०); यस्मादनुदात्तात् परत उदात्तः स्वरितो वा वर्त्तते, तस्यानुदा-त्तस्यातिनीचोऽनुदात्तो भवति। एतावता यथाम्नात मिषे त्वोर्जे त्वेति सिद्धम्॥

"उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति (भा० १।१।६१) वायुशब्दस्य फिट्स्वरेणान्तोदात्तत्वादवशिष्ट आकारोऽनुदात्तः। विभक्तेः सुप्त्वादनुदात्तत्वे सत्युदात्तादुत्तरत्वेन स्वरितत्वम्। स्थशब्दस्य "तिङ्ङतिङः" (पा० ८।१।२८); अतिङन्तात् परं तिङन्तं निहन्यते। निघातो नामानुदात्तः। "स्वरितात् संहि-तायामनुदात्तानाम्" (पा० १।२।३९) इति स्थशब्दगतानुदात्तस्य

स्वरितादुत्तरत्वेनैकश्रुतिर्भवति। तां प्रचय इत्याचक्षतेऽध्यापकाः ॥

एव मुपायवश्चेति वाक्यं योज्यम्। तयोर्वाक्ययोः संहिताया मोकारः प्रचयः। यद्यप्यय मोकारः प्रचयानुदात्तयोरुभयोः स्थाने विहितः, तथापि द्वैरूप्यस्य युगपदसम्भवात् पर्यायेण तथात्वे स्थानिवद्भावादेवैकस्मिन् पक्षे प्रचयः ; पक्षान्तरे तु स्थानिवद्भावाभावादनुदात्तत्वे "स्वरितात् संहितायामनुदात्तानाम्" (पा० १।२।३९) इति प्रचयः। पाशब्दस्य सन्नतरत्वम्। देवशब्दस्य फिट्स्वरेणान्तोदात्तत्वात् संहिताया मोकारोऽनुदात्तः। युष्मच्छब्दादेशश्चानुदात्तः संहितायां स्वरितः। "चितः" (पा० ६।१।१६३); चित्प्रत्ययुक्तस्य समुदायस्यान्त उदात्तः स्यात्। ततः सवितृशब्दे तृच्प्रत्ययस्य चकारेत्त्वात् सवितृपदस्य कृदन्तत्वेन प्रातिपदिकत्वाद्वा अन्तोदात्तत्वम्। संहितायां सेत्यस्य प्रचयः। विशब्दस्योदात्तपरत्वादिकारः सन्नतरः। "उपसर्गाश्चाभिवर्जम्" (फि० ४।१३); अभिशब्दव्यतिरिक्ता उपसर्गा आद्युदात्ताः स्युः— इति प्रशब्द उदात्तः। अर्पयत्वस्य निघाते "एकादेश उदात्तेनोदात्तः" (पा० ८।२।५)। उदात्तेन सह य एकादेशः स उदात्तः स्यात्—इति सवर्णदीर्घ उदात्तः। तस्मादुत्तरेषां स्वरितप्रचयौ। तुशब्दस्य संहितायां सन्नतरत्वम्। श्रेष्ठतमायेत्यत्र "ञ्नित्यादिर्नित्यम्" (पा० ६।१।१९७)। ञिति निति च प्रत्यये परतः पूर्वस्यादिरुदात्तः स्यात्—इति श्रेष्ठशब्दगतस्येष्ठन्-प्रत्ययस्य नित्त्वाच्छ्रेष्ठशब्द आदिरुदात्तः। श्रेष्ठेत्यस्यानुदात्तस्वरितौ। तमपः पित्त्वात् विभक्तेः सुप्त्वाच्चानुदात्तत्वे सति पश्चात्प्रत्ययस्य सन्नतरत्वं पूर्ववत्। "नब्विषयस्यानिसन्तस्य" (फि० २।३); इसन्तव्यतिरिक्तस्य नपुंसकलिङ्गविषयस्य प्रातिपदिकस्यादि

रुदात्तः स्यादित्यनेन कर्मन्-शब्दस्यादिरुदात्तः। उत्तरयोर्यथा-योग मनुदात्तत्वे सति स्वरितप्रचयौ सन्नतरत्वञ्च पूर्ववत् ॥

आप्यायध्व मित्यत्रोपसर्ग उदात्तः। शिष्टस्य निघाते सति स्वरितप्रचयौ। "आमन्त्रितस्य च" (पा० ८।१।१९); पदादुत्तरस्यापादादिस्थस्य सम्बोधनान्तस्य सर्वस्यानुदात्तः स्यात्—इत्यघ्नियाशब्दस्य निघाते सति संहितायां पूर्वाभ्यां प्रचयाभ्यां सह प्रचयः। देवभागशब्दे "समासस्य" (पा० ६।१।२२३) इति अन्तोदात्ते सति विभक्त्या सहैकादेशस्वरः। स च संहिताया माद्यौ द्वौ प्रचयौ, तृतीयः सन्नतरः। ऊर्जस्-पयस्-शब्दयोर्नपुंसकत्वादाद्युदात्तत्वम्। मतुपो ङीपश्च पित्त्वादनुदात्तत्वम्। ततो यथायोगं स्वरितप्रचयसन्नतराः। प्रजाशब्दे प्रातिपदिक मन्तोदात्त टावनुदात्तः, तयोरेकादेश उदात्तः। शेषं पूर्ववत्। "नञ्सुभ्यां" (पा० ६।२।१७२); बहुव्रीहिसमासे नञ्-सु—इत्येताभ्या मुत्तरस्य पदस्यान्त उदात्तः स्यात्—इत्यनमीवा-यक्ष्मशब्दयोरन्तोदात्तत्वे सति शेष मुन्नेयम्। न च तत्र समासस्येत्यन्तोदात्तत्व सिद्धमिति; "बहुव्रीहौ प्रकृत्या पूर्वपदम्" (पा० ६।२।१) इत्युक्तम्, पूर्वपदप्रकृतिस्वरत्व मपवदितु नञ्-सुभ्या मितिसूत्रस्यापेक्षितत्वात्। "निपाता आद्युदात्ताः" (फि० ४।१२) इति माशब्द उदात्तः। व इत्येतत्पूर्ववत्। स्तेनशब्दस्य फिट्स्वरः। ईशतेत्यस्य निघातः। मेति पूर्ववत्। अघेन क्रौर्य्येण विशसनं वधो यस्य सोऽय मघशंसः। ततो बहुव्रीहिस्वरेण अघ इत्यन्तोदात्तः ॥

ध्रुवहेतिशब्दयोः फिट्स्वरः। परिशब्दो निपातत्वादाद्युदात्तः। वो इत्यस्मिति शब्दा वनुदात्तौ। ध्रुवशब्दस्य फिट्-

स्वरे सति टा-प्रत्ययेन विभक्त्या सहैकादेशस्वरः। अग्निनेत्यत्र विभक्तेः "साविकाचः" (पा० ६।१।१६८)—इत्युदात्तत्वम्। गोपतावित्यत्र "पत्यावैश्वर्ये" (पा० ६।२।१८); ऐश्वर्यार्थे पतिशब्दे परतः पूर्वपदस्य प्रकृतिस्वरत्वं भवति। ततो गोशब्द-स्याद्युदात्तत्वे सति शिष्टस्यानुदात्तस्वरितप्रचयाः। स्यादित्यस्य निघातप्रचयौ। बह्वीरित्यत्र ङीप्-प्रत्ययस्योदात्तत्वेन सवर्ण-दीर्घोऽप्युदात्तः यजमानस्येत्यत्र "धातोः" (पा० ६।१।१६२); धातोरन्त उदात्तः स्यात्—इति जकारात् पूर्वाकार उदात्तः। शपः पित्त्वादनुदात्तत्वम्। शानचः "चितः" (पा० ६।१।१६३) इत्यन्तोदात्तत्वे प्राप्ते तदपवादः—"तास्यनुदात्तेन्ङिददुपदे-शाल्लसार्वधातुकमनुदात्तमह्न्विङोः" (पा० ६।१।१८६); तासिप्रत्ययादनुदात्तेतो धातोर्ङितो धातोरकारोपदेशाच्चोत्तरस्य लकारस्य स्थाने विहितं लसार्वधातुकमनुदात्तं भवति, ह्नुङ् अपह्नवे, इङ् अध्ययने, इत्येतौ धातू वर्जयित्वा। अत्र शबन्तस्य यजेत्यस्यादुपदेशत्वात् तदुत्तरः शानच् अनुदात्तः। पशूनित्यत्र फिट्स्वर एकादेशस्वरश्च। पाहीत्यस्य निघाते सति स्वरित-प्रचयौ॥ सम्बन्धश्च श्रुतिव्याख्या मीमांसा व्याकृतिस्वरैः।

चतुःप्रकारैराद्योऽयमनुवाकः समापितः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरमाधवादेशतो भगवत्सायणाचार्येण, तैत्तिरीयशाखायाः संहिताद्यकाण्डीयाद्यप्रपाठकाद्यानुवा-कस्य ब्राह्मणतृतीयकाण्डीयद्वितीयप्रपाठकाद्यानुवाकस्य च, युगपत् कृतं वेदार्थप्रकाशनाम भाष्यं समाप्तम्॥

---

ऋग्वेद-

# ऋग्वेदस्य,

## शाकलशाखीयसंहितातः

प्रथममण्डलस्य द्वाविंशत्यनुवाकीयाष्टमसूक्तम्।

॥ ॐ ॥

अस्य वामस्येति द्विपञ्चाशदृचमष्टमं सूक्तं दैर्घतमसम्। अत्रेयमनुक्रमणिका। अस्य द्विपञ्चाशत् अल्पस्तवं त्वेतत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षादरप्रशंसा च पञ्चपादं साकञ्जानां यज्ञायतेऽयं स शिंक्ते सप्तार्द्धगर्भा गौरीरिति जगत्यः। एतदन्तं तु वैश्वदेवं तस्याः समुद्रा इति वाचः समुद्रा आपोऽक्षरं सा प्रस्तारपंक्तिः शकमयमिति शकधूम उक्षाणं पृश्निमिति सोमस्त्रयः केशिन इत्यग्निः सूर्यो वायुश्च केशिनश्चत्वारि वाग्वाच इन्द्रं मित्रं सौर्यौ द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनं यस्ते सरस्वत्यै यज्ञेन साध्येभ्यः परानुष्टुप्सौरी पर्जन्याग्निदेवता वान्त्या सरस्वति सूर्याय वेति॥ अत्र स्तुत्याबहुत्वेन स्तुतिभागस्याल्पीयस्त्वादिदं सूक्तमल्पस्तवनम्। न सूक्तान्तरवद्बहुस्तवम्। इदमेव वैलक्षण्यं तुशब्देन द्योत्यते। अस्मिन्सूक्ते प्रायेण संशयोत्थापनादयो बहवोऽर्थाः प्रतिपाद्यन्ते। अचिकित्वाञ्चिकितुष इत्यनया संशय उत्थाप्यते। पृच्छामि त्वेत्यत्र प्रश्नः प्रतीयते। इयं वेदिरित्यत्र प्रतिवचनम्। य ईं चकारेत्यादिना ज्ञानप्रशंसा प्रतिपाद्यते। अपश्यं गोपामित्या-

दिना ब्रह्मसाक्षात्काररूपस्य प्रशंसा। न क्षरतीत्यक्षरं ब्रह्म। द्वा सुपर्णेत्यादिना तस्य प्रशंसा। पञ्चपादं पितरं साकञ्जानां समयं यज्ञायज्ञे अधि अयं स शिंक्ते सप्तार्धगर्भा गौरीर्मिमायेति षट् जगत्यः। समानमेतदित्यनुष्टुप्। तस्याः समुद्रा इति प्रस्तारपंक्तिः। तल्लक्षणं छन्दोग्रन्थे सूचितम्। प्रस्तारपंक्तिः पुरत इति। पुरतः पूर्वार्धे द्वादशाक्षरौ जागतौ पादौ ततो द्वावष्टाक्षरौ गायत्रौ सा प्रस्तारपंक्तिरिति सूत्रार्थः। अनुक्रमण्यामप्युक्तम्। आद्यौ चेत्प्रस्तारपंक्तिरिति। शिष्टा अनादेशपरिभाषया त्रिष्टुभः। गौरीर्मिमायेत्येतदन्तानां विश्वे देवा देवता। तस्याः समुद्रा इत्यस्याः पूर्वार्धस्य वाग्देवता। उत्तरार्धस्यापः। शकमयमित्यस्याः पूर्वार्धस्य शकधूमः। उक्षाणं पृश्निमित्युत्तरार्धस्य सोमो देवता। त्रयः केशिन इत्यस्या अग्निसूर्यवायवः। चत्वारि वागित्येषा वाग्देवताका। इन्द्रं मित्रं वरुणं कृष्णं नियानमितिद्वे सूर्यदेवते। द्वादश प्रधय इत्यस्याः संवत्सरात्मा कालो देवता। यस्ते स्तन इत्यस्याः सरस्वती। यज्ञेनेत्यस्याः साध्या देवता। समानमेतदित्यस्याः सूर्यः पर्जन्यो वाग्नयो वा देवता। दिव्यं सुपर्णमित्यस्याः सरस्वान् सूर्यो वा देवता॥ कृत्स्नसूक्तस्य विनियोगं शौनक आह। स्तेयं कृत्वा द्विजो मोहात्त्रिरात्रोपोषितः शुचिः। सूक्तं जप्त्वास्य वामीयं क्षिप्रं मुच्येत किल्बिषादिति (ऋग्वि० १. २६)॥ महाव्रते वैश्वदेवशस्त्रे वैश्वदेवं निविद्धानं द्विप्रतीकं तत्रास्य वामस्येत्यादिकमेकचत्वारिंशदृचं प्रथमं प्रतीकम्। पञ्चमारण्यके सूचितम्। अस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशतम् (ऐ० आ० ५. १२.) इति॥

॥ तत्र प्रथमा ॥

अस्य वामस्य पलितस्य होतु-

स्तस्य भ्राता मध्यमो अस्त्यश्नः ।

तृतीयो भ्राता घृतपृष्ठो अस्या-

त्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥

अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्यक्रियार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । योऽयं दिवि द्योतते तस्यास्य वामस्य वननीयस्य संभजनीयस्यारोग्यार्थिभिः सर्वैः सेवनीयस्य पलितस्य पालयितुः प्रकामवृष्ट्यादिप्रदानेन पालकस्य । तथा योऽयं दिवि द्योतते तस्यास्य होतुर्ह्वातव्यस्याह्वानार्हस्यादित्यस्य मध्यमो मध्यमस्थानः । मध्ये भवो वायुरुच्यते । आदित्याग्नी अपेक्ष्यास्य मध्यमत्वम् । स चाश्नः सर्वत्र व्याप्तः । न हि वायुरहितः कश्चित्प्रदेशोऽस्ति । तादृशो भ्रातास्ति । भ्रातृस्थानीयो भवति । यथा लोके भ्राता पितृधनस्य भागं हरति तद्वत् । मध्यस्थान मन्तरिक्षलोकं हरतीति वा । वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्युच्यते । पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवतीति भ्राता । मध्यमो वायुरपि वृष्ट्यर्थं रसैर्भर्तव्यो भवति । किञ्च घृतपृष्ठः । घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशो भ्राता तस्य तृतीयोऽस्ति । भवति । त्रयाणां पूरणस्तृतीयः । उक्तोभयापेक्षया तृतीयत्वम् ।

भ्रातृत्वं प्रतिपादितप्रकारेणात्रापि द्रष्टव्यम् । रात्रौ सवितुस्तेजो-भागस्य हरणात् । दिवा स्वकीयतेजसो भागस्य तदर्थमेव भक्ष्य-त्वाद्वा भ्रातृत्वम् । अत्रैषु भ्रातृषु मध्ये पुरोदेशे वा विश्पतिं विशां प्रजानां पालयितारं सप्तपुत्रं सर्पणरश्मिपुत्रोपेतम् । ऐतिहासिक-पक्षेऽदितिः पुत्रकामेति प्रस्तुते मित्रवरुणादिष्वदितिपुत्रेष्वस्यादि-त्यस्य सप्तमपुत्रत्वम् । ईदृशं महानुभावमादित्यमपश्यम् । अद्रा-क्षम् । भावनयात्मत्वेन साक्षात्करोमीत्यर्थः । तथाऽहं सोऽसौ योऽसौ सोऽहमिति श्रुतिः ॥ एवं वा । अस्य वामस्य विश्वस्योद्गि-रितुः । स्रष्टुरित्यर्थः । पलितस्य पालयितुः स्वसृष्टजगत्पालन-शीलस्य होतुरादातुः । स्वस्मिन्संहर्तुरित्यर्थः । परमेश्वरस्य सृष्ट्या-दिकर्तृत्वं श्रुतिस्मृतिपुराणादिषु प्रसिद्धम् । तस्य तादृशस्य परमे-श्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति । जगद्धारकत्वेन वर्तते । स चाश्नो व्याप-नशीलः । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संरब्धानीति श्रुतेः । वक्ष्यमाणविराडपेक्षया वा मध्यमत्वम् । किञ्चास्य परमेश्वरस्य तृतीयो घृतपृष्ठः । घृत-मित्युदकनाम । तेन तत्कार्यं शरीरमुच्यते । तदेव पृष्ठं स्पर्शकं वा यस्य स तादृशः ॥ पृष्ठं स्पृशतेरिति निरुक्तम् । यद्वा प्रदीप्त-पृष्ठः । पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः । प्रकाशितशरीराभि-मानीत्यर्थः । न त्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत्स्पर्शना-विषयो भवति । अत्रैषु मध्ये विश्पतिं विशां प्रजानां पतिम् । उपलक्षणमेतत् । सर्वस्य पतिमित्यर्थः । सर्वस्य पतिः सर्वस्ये-शान इति श्रुतेः । सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशम् । स्वमायया सृष्टसर्वलोकमित्यर्थः । अपश्यम् । पश्येयम् । साक्षा-

त्करोमीत्यर्थः ॥ अयमर्थः । स्वाधीनमायाजगत्कारणभूतः परमेश्वर एकः । तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ । तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः । एवमुत्तरत्राप्यध्यात्मपरतया योजयितुं शक्यम् । तथापि स्वरसत्वाभावाद्ग्रन्थविस्तरभयाच्च न लिख्यते । यत्र द्वा सुपर्णेत्यादौ स्फुटमाध्यात्मिको ह्यर्थः प्रतीयते तत्र प्रतिपादयामः । अयं मन्त्रो यास्केन व्याख्यातः । अस्य वामस्य वननीयस्य पलितस्य पालयितुरित्यादिना । तच्च व्याख्यानमत्रानुसन्धेयं ( नि० ४.२६.) ॥ १ ॥

॥ अथ द्वितीया ॥

सप्त युञ्जन्ति रथमेकचक्रमेको

अश्वो वहति सप्तनामा ।

त्रिनाभि चक्रमजरमनर्वं यत्रेमा

विश्वा भुवनाधि तस्थुः ॥ २ ॥

एकचक्रमेकरथाङ्गोपेतम् । यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमित्युच्यते । रथं रंहणस्वभावं सूर्यस्य सम्बन्धिनं सप्तैतत्संख्याका अश्वा युञ्जन्ति । अनुबध्नन्ति । वह्न्यहोरात्रनिर्वाहाय । किं वस्तुतः सप्त नेत्याह । एकोऽश्वः

सप्तनामा। एक एव सप्ताभिधानः सप्तधा नमनप्रकारी वा। एक एव वायुः सप्तरूपं भूत्वा वहतीत्यर्थः। वायुर्वीनत्वादन्तरिक्षसञ्चारस्य। एकचक्रमित्युक्तं कीदृशं तदित्यत आह। त्रिनाभि। वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयोपेतम्। अजरम् अमरणधर्मकम्। अनर्वम्। अशिथिलम्। पुनस्तदेव विशिष्यते। यत्र यस्मिंश्चक्रे इमा विश्वा भुवना इमानि प्रसिद्धानि सर्वाणि भूतजातान्यधि आश्रित्य तस्थुः। तिष्ठन्ति। यद्वा एकचक्रमेकचारिणमसाहाय्येन सञ्चरन्तं रथमादित्यमण्डलं सप्त युञ्जन्ति। सर्पणस्वभावाः सप्तसंख्या वा रश्मयः सप्तप्रकारकार्या असाधारणाः परस्परविलक्षणाः षडृतवः। एकः साधारण इत्येवम्। अथवा मासद्वयात्मकाः षट् अपरोऽधिकमासात्मक इत्येवं सप्तर्तवो युञ्जन्ति। एतस्य कार्यं निर्वहन्तीत्यर्थः। स चैकोऽसहायोऽश्वो व्यापनशील आदित्यः सप्तनामा सप्त रसानां सन्नमयितारो रश्मयो यस्य तादृशः। सप्तर्षिभिः स्तूयमानो वादित्यो वहति। धारयति। भ्रमयतीत्यर्थः। किं। त्रिनाभि चक्रम्। तिस्रो नाभिस्थानीयाः सन्ध्याः सवना वा त्रय ऋतवो यस्य तत्तादृशम्। के ते। ग्रीष्मवर्षाहेमन्ताख्याः। तद्वा भूतभविष्यद्वर्तमानाख्यास्त्रयः कालास्त्रिनाभयः। तद्विशिष्टं चक्रं चक्रवत्पुनःपुनः परिभ्रममाणं संवत्सराख्यं चक्रमजरममरणम्। न हि कदाचिदपि कालो म्रियते। अनादिनिधनः काल इति स्मृतेः। अनर्वमप्रतिहतम्। ईदृशं संवत्सराख्यं चक्रं नानाकालावयवोपेतमयमादित्यः पुनरावर्तयति। संवत्सरादर्वाचीनानां तत्रैवान्तर्भावात् ततो युगादीनां तदावृत्तिसाध्यत्वात्संवत्सरस्य चक्रत्वेन निरूपणम्। पुनः कीदृशं तत्।

यत्र यस्मिंश्चक्र इमा विश्वा भुवना इमानि सर्वाणि भूतान्यधि तस्थुः। आश्रित्य तिष्ठन्ति। कालाधीनत्वात्सर्वस्य स्थितेः। ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् ज्ञानमोक्षाक्षरप्रशंसा चेत्यनुक्रमण्यामुक्तम्। अयमपि मन्त्रो यास्केन सप्त युञ्जन्ति रथमेकचक्रमेकचारिणमित्यादिना व्याख्यातः। तदत्राप्यनुसन्धेयम्। (नि॰ ४. २७.) ॥ २ ॥

॥ अथ तृतीया ॥

इमं रथमधि ये सप्त तस्थुः
सप्तचक्रं सप्त वहन्त्यश्वाः।
सप्त स्वसारो अभि सं नवन्ते
यत्र गवां निहिता सप्त नाम ॥ ३ ॥

इमसुक्तस्वरूपमादित्यमण्डलाख्यं संवत्सराख्यं वा रथं ये सप्त रश्मयोऽधितस्थुः। अधिष्ठिताः। संवत्सरपक्षेऽयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवा अधितिष्ठन्ति। कीदृशं रथम्। सप्तचक्रम्। चक्रनाच्चरणात् क्रमणाद्वा चक्राणि रश्मयः। ते सप्त यस्य रथस्य तादृशमुभयविधं रथं पूर्वोक्ता अधिष्ठिता अश्वा व्यापनशीलाः सप्त वहन्ति। निर्वहन्ति च। तादृशं रथं सप्त स्वसारः स्वयंसरणाः। स्वरादित्यः। तेन सारिताः। परस्परं स्वसृभूता वा सप्तसंख्याका रश्मय ऋतवश्चाभिसन्नवन्ते।

आभिमुख्येन सङ्गच्छन्ते । असाधारणाः परस्परविलक्षणकार्याः षडृतवः सर्वसाधारण एक इति सप्तत्वम् । यद्वैकरूपा मासद्वयात्मकाः षट् त्रयोदशमासात्मकः सप्तम इति सप्तत्वम् । कीदृशो रथ इति तदुच्यते । यत्र यस्मिन्नथ उभयविधे गवां वाचां स्तुतिरूपाणां सप्त सप्तविधानि नाम नमनानि सप्तस्वरूपाणि निहितानि । सप्तस्वरोपेतैः सामभिः स्तुत्यं रथमित्यर्थः । यद्वा गवामुदकानां सप्त सर्पणस्वभावानि नाम नमनानि यत्र यासु स्वसृषु निहिता । स्वसारः परस्परस्वसृभूता देवनद्योऽभिसन्नवन्ते ॥ ३ ॥

॥ अथ चतुर्थी ॥

को ददर्श प्रथमं जायमान-

मस्थन्वन्तं यदनस्था बिभर्ति ।

भूम्या असुरसृगात्मा क्व स्वित्को

विद्वांसमुप गात्प्रष्टुमेतत् ॥ ४ ॥

एवं प्रपञ्चस्य कालायत्ततां प्रतिपाद्य तस्य कारणभूतस्य परमेश्वरस्याविषयत्वमाह ॥ को ददर्श । को द्रष्टुं शक्नुयात् । कदा । प्रथमम् । सृष्टेः पूर्वम् । अव्याकृतावस्थायामित्यर्थः । किम् । जायमानम् । प्रथमभावविकारमापन्नम् । उत्पद्यमानं प्रपञ्चमित्यर्थः । दुर्ज्ञेयत्वे हेतुमाह । यद्यस्मादस्थन्वन्तमस्थि-

भन्तं सशरीरम्। उपलक्षणमेतत्। कार्यभावमापन्नमित्यर्थः। अनस्थाखिरहिताशरीरा सांख्यप्रसिद्धा प्रकृतिर्वेदान्तप्रसिद्धेश्वरायत्ता माया बिभर्ति। गर्भवद्धारयति। अव्याकृतावस्थायामनस्थोऽशरीरः परमेश्वरो बिभर्ति। यदा केवलः परमेश्वरो मायासम्वलितः सन् इदं जगन्निर्मितवानुत्पत्तिसमये देहादिसहितस्य कस्यचिदभावात्को ददर्श। तदानीं मनो नित्यमात्मा च नित्यः तत्संयोगात्कश्चिदात्मा जानातीति चेत् सोऽपि न सम्भवतीत्यत आह। भूम्याः सम्बन्धि पार्थिवं स्थूलशरीरम्। असुः प्राणः। तदुपलक्षितं सूक्ष्मशरीरम्। असृक् शोणितम्। एतत्सप्तधातूपलक्षकम्। यद्यपि शरीरं पञ्चभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात्तदपेक्षयोक्तम्। आत्मा तैः सम्बद्धश्चेतनः क्वस्वित्। क्वास्ते। न कश्चिदस्तीत्यर्थः। नान्यत्किञ्चन मिषदिति श्रुतेः। विद्वांसं जगत्कारणविषयज्ञानवन्तमन्यं गुर्वादिकमेतत्कारणं प्रष्टुं कः शिष्योऽस्यमतिरुपगात्। उपगच्छति। तादृशो देहेन्द्रियसङ्घातरूप आत्मा तस्मिन्समये कुतास्ति। प्रष्टा प्रतिवक्ता चोभावपि नास्तीत्यर्थः। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति श्रुतेः। यद्वा प्रथमं प्रथमभाविनं जगतः कारणभूतं को ददर्श। कः साक्षात्करोति। जायमानमस्थन्वन्तं मनुष्यमनस्थिकः परमेश्वरः शारीरमशरीरो यद्यस्माद्बिभर्ति। द्रष्टुरपि तत्कार्यत्वादिति भावः। शिष्टं समानम् ॥४॥

॥ अथ पञ्चमी ॥

पाकः पृच्छामि मनसाविजानन्देवानामेना निहिता पदानि।

वत्से बष्कयेऽधि सप्त तन्तून्वि

ततिरे कवय ओतवा उ ॥ ५ ॥

पाकः पक्तव्योऽपक्वमतिरहं मनसा संस्कृतेनाविजानन् अति-गहनं तत्त्वं विशेषेण ज्ञातुमशक्नुवन् पृच्छामि। प्रश्नं करोमि। अज्ञाने कारणमाह। एना एनानि पदानि सन्देहास्पदानि तत्त्वानि देवानां निहितानि। देवानामपि गूढानीत्यर्थः। यद्वा देवानां पदानि तत्त्वानि निधिवद्गोपयित्वा स्थापितानि। अतः पृच्छामि तत्त्वज्ञानोपयोगायेति शेषः। तानि कानी-त्युच्यते। वत्से सर्वस्य निवासभूते बष्कये। बडिति सत्यनाम। तत्कायतीति बष्कय आदित्यः। यद्वा बष्कयो नामैकहायनो वत्सः। पुनरपि वत्सशब्दस्य पृथक् निर्देशाद्बष्कयशब्देन तत्काल-मात्रं वक्ष्यते। तस्मिन्नादित्येऽधि अधिकं सप्त तन्तून् तायमानान् सप्त सोमसंस्थान्कवयो मेधाविनो यजमाना ओतवै जगद्रूप-तिर्यक्तन्तून्वेतुं वितत्निरे। वितन्वन्ति। यद्वा सप्त तन्तवः सप्त छन्दांसि। तानि वितन्वन्ति। किमर्थम्। ओतवै। सप्तसोम-संस्थारूपतिर्यक्तन्तुसन्तानाय। यज्ञनिर्माणायेत्यर्थः। यज्ञानां स्थितिः सूर्याधीनत्वादिति भावः। ईदृशं तत्त्वं पृच्छामीत्यर्थः ॥५॥

॥ अथ षष्ठी ॥

अचिकित्वाञ्चिकितुषश्चिदत्र कवी-

न्पृच्छामि विद्मने न विद्वान्।

वि यस्तस्तम्भ षडिमा रजांस्य-

जस्य रूपे किमपि स्विदेकम् ॥ ६ ॥

अचिकित्वान् देवतातत्त्वमजानन्नहं चिकितुषो विशेषेण तत्त्वं जानतः कवीन् क्रान्तदर्शिनोऽधिगतपरमार्थानत्रास्मिं-स्तत्त्वविषये पृच्छामि। किमर्थम्। विद्मने। वेदनाय। परमार्थज्ञानाय। किं जानन्नेव पराभवाद्यर्थं नेत्याह। विद्वान् न पृच्छामि अपि त्वज्ञानादेव। यः परमेश्वरस्तस्तम्भ स्तम्भितवान् नियमितवान्। अथ य आत्मा सेतुर्विधृतिरेषां लोकानामसम्भेदायेति श्रुतेः। किम्। इमा इमानि षड्रजांसि लोकान-ज्जनात्मकान्। लोका रजांस्युच्यन्त इति निरुक्तम्। यद्यपि लोकाः सप्त तथापि सत्यलोकस्य कर्मिणां सर्वेषां साधारणत्वा-भावात् षडित्युक्तम्। ननु षडेवोक्ताः सप्तमः किमिति न निर्दिष्ट इति उच्यते। अजस्य जननादिरहितस्य चतुर्मुखस्य ब्रह्मणो रूपे स्वरूप एकं सत्यलोकाख्यं पुनरावृत्तिरहितं स्थानं किमपि स्वित्। किंस्विदेव। तन्न केनाप्यधिगन्तुं शक्यमित्यर्थः। कैश्चि-देवोपासकैरर्चिरादिमार्गेण गन्तव्यत्वादिति भावः। यद्वा षड् जांसि विलक्षणाः षडृतवः। तान्यस्तम्भयत्तत्त्वम्। अजस्य गमनशीलस्य जन्मरहितस्य वादित्यस्य रूपे रूप्यमाणे दृश्यमाने मण्डल एकमद्वितीयं किमपि स्वित्। यत्किञ्चिद्वाङ्मनसगम्यं तत्त्वमस्ति तत्पृच्छामि। य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इत्यादिश्रुतिप्रतिपादितं तत्त्वमित्यर्थः। अथवा षडिमानि रजांसि त्रिविटान्भूलोकांश्च यस्तस्तम्भ। तिस्रो भूमीर्धारयन्

वींक्षत दूरमिति निगमः । तस्याजस्य परब्रह्मणो रूपे नानाविकारभाजि जगति किमपि स्विदेकमेकात्मकमस्तीति प्रश्नः । अविशेषणस्त्विनाममात्रमेकरूपमस्तीत्युत्तरविवक्षया प्रश्नः । अस्तीत्येवोपलब्धव्यमिति श्रुतिः ॥ ६ ॥

॥ अथ सप्तमी ॥

इह ब्रवीतु य ईमङ्ग वेदास्य

वामस्य निहितं पदं वेः ।

शीर्ष्णः क्षीरं दुह्रते गावो अस्य

वव्रिं वसाना उदकं पदापुः ॥ ७ ॥

इहेदानीमीमेतद्दृश्यमानं तत्त्वमङ्ग क्षिप्रमविचार्य ब्रवीतु । कः । यो वेद सः । कीदृशं तत् । अस्य पुरतो दृश्यमानस्य वामस्य वननीयस्य वेर्गन्तुरादित्यस्य पदं सर्वैर्गन्तव्यं स्वरूपं निहितं गूढं वर्तते । किञ्चास्यादित्यस्य शीर्ष्णः शिरोवदुन्नतस्य सर्वेषामुत्कृष्टस्य वा गावः केचन वर्षकालीना रश्मयः क्षीरमुदकं दुह्रते । क्षरन्ति । वव्रिम् । रूपनामैतत् । रूपं वसाना आच्छादयन्तोऽतिविस्तरेण तेजसा तपन्तः केचनास्य गावो रश्मय उदकं स्वपृष्टं पदा स्पृष्टेनैव मार्गेणापुः । पिबन्ति । भूमिं निरुदकां कुर्वन्तीत्यर्थः । तस्य स्वरूपं ब्रवीत्वित्यन्वयः ॥ ७ ॥

॥ अथाष्टमी ॥

माता पितरमृत आ बभाज

धीत्यग्रे मनसा सं हि जग्मे ।

सा बीभत्सुर्गर्भरसा निविद्धा

नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥

माता सर्वस्य निर्मात्री पृथिवी पितरं पालकं द्युलोकं तत्स्थं द्युलोकस्थमादित्यमित्यर्थः । तमाबभाज । आभजते । किमर्थम् । ऋते । उदके यज्ञे वा निमित्तभूते सति । केन द्वारेण । धीती । धीत्या कर्मणा यागादिरूपेण । स्वकीयेनाज्यसोमादिहविषा तर्पयतीत्यर्थः । अग्रे ततः पूर्वं पिता च मनसास्यामभिप्रायवता चेतसा सञ्जग्मे हि । संश्लिष्टो वर्त्तते खलु । वृष्टिमकरोदित्यर्थः । अनन्तरं सा माता बीभत्सुर्गर्भबन्धनेच्छावती गर्भरसा गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन निविद्धा नितरां विद्धासीत् । यद्वा गर्भं रस ओषध्यादुत्पादनसमर्थमुदकं यस्याः सा तादृश्युदकेनात्यन्तं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरां विदारिता भवति बीजावापार्थम् । अत्रायं समाधिः । या काचन योषिदपत्यार्थं स्वपतिं युवानं यौति । स च तस्यामनुरागयुक्तः सङ्गतो भवति । सा चान्तर्वती सती पुत्राञ्जनयतीति तद्वदत्रापि । अनन्तरं नमस्वन्त इत्

भाविन्नीर्ह्विप्रियंवाद्यन्तवन्त एवोपवाकमुपेत्य वचनं परस्परं सम्य-
गभिवृद्धानि सस्यानीति वचनमीयुः । प्राप्नुवन्ति । यद्वा हवि-
र्लक्षणान्नवन्त उपेत्य वचनं प्रैषादिरूपमीयुः । क्वष्टौ सत्यां सस्या-
दिद्वारा यागमनुतिष्ठेयुरित्यर्थः ॥ ८ ॥

॥ अथ नवमी ॥

युक्ता मातासीद्धुरि दक्षिणाया

अतिष्ठद्गर्भो वृजनीष्वन्तः ।

अमीमेद्वत्सो अनु गामपश्य-

द्विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥

माता । निर्मीयन्तेऽस्मिन्भूतानीति माता द्यौः । दक्षि-
णाया अभिमतपूरणसमर्थाया पृथिव्या धुरि निर्वहणे युक्तासीत् ।
वर्षणाय समर्थाभूदित्यर्थः । कथमिति तदुच्यते । गर्भो गर्भ-
स्थानीय उदकसङ्घो वृजनीषूदकवत्सु मेघपंक्तिष्वन्तर्मध्येऽतिष्ठत् ।
तिष्ठति । अनन्तरं वत्सः पुत्रस्थानीय उदकसङ्घस्त्रिषु योजनेषु
मेघरश्मिवायुसंयुक्तेषु सत्स्वमीमेत् । वर्षणसमये शब्दयति ।
अनन्तरं विश्वरूप्यं विश्वरूपवतीं गामन्वपश्यत् । अनुक्रमेण
पश्यति । वर्षतीत्यर्थः । यद्वा त्रिषु योजनेषु सत्सु वत्सो मेघो
वर्षणाय गां भूमिं प्रत्यमीमेत् । अनन्तरं सर्वो जनोऽनुक्रमेण
विश्वरूप्यं सस्यादिभिर्नानारूपवतीं भूमिमपश्यत् । पश्यति ॥९॥

॥ अथ दशमी ॥

तिस्रो मातॄस्त्रीन्पितॄन्बिभ्रदेक

ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति ।

मन्त्रयन्ते दिवो अमुष्य पृष्ठे

विश्वविदं वाचमविश्वमिन्वाम् ॥ १० ॥

एकः प्रधानभूतोऽसहायो वा पुत्रस्थानीय आदित्यः संवत्सराख्यः कालो वा तिस्रो मातॄः सस्यवृष्ट्यादुत्पादयित्रीः । क्षित्यादिलोकत्रयमित्यर्थः । तथा त्रीन्पितॄन् जगतां पालयितॄन् लोकत्रयाभिमानिनोऽग्निवायुसूर्याख्यान्बिभ्रत् सन् ऊर्ध्वस्तस्थौ । उन्नतोऽत्यन्तदीर्घस्तिष्ठति भूतभविष्यद्रूपात्मना । सूर्यपक्षे सर्वस्य उन्नतः । ईमेनं नावग्लपयन्ति । ग्लानिं नैव कुर्वन्ति । न हि काल आदित्यो वान्येन पराभूयते । दिवः पृष्ठे द्युलोकस्योपर्यन्तरिक्षे मन्त्रयन्ते । गुप्तं परस्परं भाषन्ते देवाः । किम् । विश्वविदं विश्ववेदनसमर्थां विश्वैर्वेदनीयां वाविश्वमिन्वामसर्वव्यापिनीं वाचं गर्जितलक्षणाम् । अमुष्यादित्यस्य सम्बन्धिनीं मन्त्रयन्त इत्यर्थः ॥ १० ॥

॥ अथैकादशी ॥

द्वादशारं नहि तज्जराय

वर्वर्ति चक्रं परि द्यामृतस्य ।

आ पुत्रा अग्ने मिथुनासो अत्र

सप्त शतानि विंशतिश्च तस्थुः ॥ ११ ॥

ऋतस्योदकस्य सत्यात्मकस्य वादित्यस्य चक्रं पुनःपुनः क्रमणशीलं मण्डलाख्यं रथचक्रं वा वर्वर्ति। पुनःपुनर्वर्तते। सञ्चरति। कुत्र। द्यां परि। द्युलोकस्यान्तरिक्षस्य परितः। कीदृशं तत्। द्वादशारम्। द्वादशसङ्ख्याकमेषादिराश्यात्मकैर्वारै रथाङ्गावयवैर्युक्तम्। किञ्च तच्चक्रं नहि जराय। नैव खलु जरायै भवति। हे अग्ने सर्वदागमनयुक्तादित्य। यद्वा अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वादसावप्यग्निरित्युच्यते। अत्रास्मिन्त्वदीये चक्रे मिथुनासः स्त्रीपुंसरूपेण परस्परमिथुनभूताः सप्त शतानि विंशतिश्च विंशत्युत्तरसप्तशतसंख्याकाः पुत्राः पुत्रवदुत्पद्यमानाः प्राणिनां दुःखात्त्रातारो वाहोरात्ररूपास्तस्थुः। तिष्ठन्ति। निष्पद्यन्ते। षष्ट्यधिकशतत्रयसंख्याकान्यहानि तावत्य एव रात्रय इत्येव तद्विभागः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहः समान इत्यारण्यकम् ॥ ११ ॥

॥ अथ द्वादशी ॥

पञ्चपादं पितरं द्वादशाकृतिं

दिव आहुः परे अर्धे पुरीषिणम्।

अथेमे अन्य उपरे विचक्षणं

सप्तचक्रे षळर आहुरर्पितम् ॥ १२ ॥

पञ्चपादं पञ्चसंख्याकर्त्वात्मकपादोपेतम् । एतद्धेमन्त-शिशिरयोरेकत्वाभिप्रायम् । पितरं सर्वस्य प्रीणयितारम् द्वादशा-कृतिं द्वादश मास एवाकृतयो यस्य तादृशं पुरीषिणं वृष्ट्यु-दकेन तद्वन्तं प्रीणयितारं वा । पुरीषमित्युदकनाम । उक्त-लक्षणं संवत्सरचक्रं दिवो द्युलोकस्य परेऽर्धे । तात्स्थ्यात्त-च्छब्दम् । परस्मिन्नर्धेऽन्तरिक्षलक्षणेऽवस्थित आदित्य इत्यर्थः । तस्मिन्नर्पितमाहुः । एतदुत्तरस्थितमनाप्यनुषज्यते । यच्चा-र्पितं तत्तदधीनं अतः संवत्सरं परायत्तमाहुरित्यर्थः । अथे-मेऽपि चान्ये केचन वेदवादिन एवमाहुः । किमिति । उपरे । उपरमन्तेऽस्मिन् उपरताः प्राणिनोऽत्रेति वोपरः संवत्सरः । तस्मिन्कीदृशे । सप्तचक्रे । सप्तादित्यरश्मयस्तद्द्वारेण चक्रस्थानीया यस्य स तथोक्तः । यद्वा अयनर्तुमासपक्षाहोरात्रमुहूर्तानि सप्त सप्त चक्राणि पुनःपुनः क्रममाणानि यस्य तादृशे । षळरे । षडृतव एवारा नाभौ प्रत्यृताः सम्बद्धा यस्य तथोक्तलक्षणे संव-त्सरे रथे विचक्षणं विविधदर्शनकरमादित्यमर्पितमाहुः । एत-दुक्तं भवति । अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेस्तीव्रमन्दादि-भावस्य च कालाधीनत्वात्तदधीनमाहुः । अन्ये तु संवत्सरा-द्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात्तदायत्तत्वमाहु-रिति ॥ १२ ॥

॥ अथ त्रयोदशी ॥

पञ्चारे चक्रे परिवर्तमाने

तस्मिन्ना तस्थुर्भुवनानि विश्वा ।

तस्य नाक्षस्तप्यते भूरिभारः

सनादेव न शीर्यते सनाभिः ॥ १३ ॥

पञ्चारे पञ्चर्तुरूपैररैर्युक्ते चक्रे संवत्सरात्मके परिवर्तमाने संवत्सरपरिवत्सरादिरूपेण पुनःपुनरावर्तमाने सति तस्मिन् कालचक्रे विश्वा भुवनानि सर्वाणि भूतजातानि वर्तन्त इत्यर्थः । किञ्च तस्य चक्रस्य मध्ये वर्तमानोऽक्षो भूरिभारः सकलभुवनवहनेन प्रभूतभारोऽपि न तप्यते । न पीड्यते । किञ्च सनादेव सनातन एव सनाभिः समाननाभिकः सर्वदैकरूपनाभिरसौ न शीर्यते । न भिद्यते । यथा लौकिकरथाक्षो भारेण भग्नो भवति अक्षघातेन च नाभिर्विहृता भवति तद्वदत्रापि नास्तीत्यर्थः ॥ १३ ॥

॥ अथ चतुर्दशी ॥

सनेमि चक्रमजरं वि वावृत

उत्तानायां दश युक्ता वहन्ति ।

सूर्यस्य चक्षू रजसैत्यावृतं

तस्मिन्नार्पिता भुवनानि विश्वा ॥ १४ ॥

सनेमि समाननेम्येकप्रकारवह्निर्वलयमक्षीणनेमि चक्रं संवत्सराख्यमजरं सदातनमपि जरारहितं विवव्रते। पुनःपुनर्विशेषेण वर्तते। उत्तानायामूर्ध्वंतनायामीषायामुपरिविस्तृतभूम्यां वा दशेन्द्रादयः पञ्च लोकपाला निषादपञ्चमाश्चत्वारो ब्राह्मणादयो वर्णा मिलित्वा दशसंख्याका युक्ताः स्वस्वव्यापारयुक्ता वहन्ति। निर्वहन्ति। कृत्स्नं जगन्निर्वहन्तीत्यर्थः। तन्निर्वाहार्थत्वात्कालस्य। किञ्च सूर्यस्यादित्यस्य चक्षुस्थानस्वभावं सर्वस्य चक्षुःस्थानीयं वा मण्डलम्। चक्षुः ख्यातेर्वा चष्टेर्वेति निरुक्तम्। ( ४. ३. )॥ रजसा वृष्ट्युदकेनावृतं व्याप्तमेति। गच्छति॥ उदकं रज उच्यत इति यास्कः। ( नि० ४. १९. )॥ तादृशे मण्डले विश्वा भुवनानि सर्वाणि भूतजातान्यार्पिता। अर्पितानि। तदधीनत्वात्तेषाम् ॥ १४ ॥

॥ अथ पञ्चदशी ॥

साकञ्जानां सप्तथमाहुरेकजं

षळिद्यमा ऋषयो देवजा इति ।

तेषामिष्टानि विहितानि धामशः

स्थात्रे रेजन्ते विकृतानि रूपशः ॥ १५ ॥

साकञ्जानामेकस्मादादित्यात्सहोत्पन्नानां समानामृतूनां मध्ये समर्थं सप्तममृतुम् । थट् च छन्दसि । ( पा॰ ५. २. ५०. ) इति थट् ॥ एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः । चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसन्ताद्याः षडृतवो भवन्ति । अधिकमासेनैक उत्पद्यते सप्तमर्तुः । न च तादृशो मास एव नास्तीति मन्तव्यम् । अस्ति त्रयोदशो मास इत्याहुरिति श्रुतेः । तदेवोच्यते । षडिद्यमाः । इच्छब्द एवकारार्थः । षडेव ऋतवो मासद्वयरूपा ऋषयो गन्तारः । ते च देवजाः । देवादादित्याज्जाता इतित्रयमाहुः । सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः । निःसूर्योऽधिकमासो मण्डलं तपते रविरित्यादिस्मृतेः । तस्मात् षडेव देवजा अदेवज एकः । तेषामृतूनां स्वरूपाणीष्टानि सर्वलोकाभिमतानि धामशस्तत्तत्स्थाने विहितानि पृथक् पृथक् स्थापितानि रूपशो रूपभेदेन विकृतानि विविधाकृतियुक्तानि । स च रूपभेदस्तैत्तिरीयैराम्नातः स रसमह वसन्ताय प्रायच्छश्यवं ग्रीष्मायेत्यादि । स्थात्रेऽधिष्ठात्रे तदर्थाय रेजन्ते । चलन्ति । जगद्व्यवहाराय पुनःपुनरावर्तन्त इत्यर्थः ॥ १५ ॥

॥ अथ षोडशी ॥

स्त्रियः सतीस्ताँ उ मे पुंस आहुः

पश्यदक्षण्वान्न वि चेतदन्धः ।

कविर्यः पुत्रः स ईमा चिकेत

यस्ता विजानात्स पितुष्पितासत् ॥ १६ ॥

मे मदीया या दीधितयः स्त्रियः संस्थानवत्यो योषितः सतीः सत्यः। योषिद्वदुदकरूपगर्भधारणात्स्त्रीत्वम्। एषां रश्मीनामाविष्टलिङ्गत्वात्स्त्रीलिङ्गता। तान् उ तानश्मीनेव पुंस आहुः। प्रभूतवृष्ट्युदकसेक्तॄन् पुरुषानाहुः। प्रतिनिर्देशापेक्षया पुंलिङ्गता। अमुमर्थमत्यन्तनिगूढमक्षवान् ज्ञानदृष्ट्युपेतः कश्चिन्महान्पश्यत्। जानाति। अन्धोऽतथारूपः स्थूलदृष्टिर्न विचेतत्। न विचेतयति। न जानाति। किञ्च यः कविः क्रान्तदर्शी पुत्रः स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः पुरु जगतां त्राता वृष्ट्युदकलक्षणोऽस्ति स ईं स एव पुत्रः। यद्वा ईमेनमर्थं स्त्रीणां सतीनां पश्चात्पुरुषभावमाचिकेत। सर्वतो जानाति। पित्रोः स्थितिं पुत्र एव जानाति नान्यः। यः कश्चित्ता तानि विजानात् स्त्रीपुरुषपुत्ररूपाणि जानीयात् स पितुः पितासत्। पिता वृष्ट्या जगत्पालको रश्मिसमूहः। तस्यापि पितादित्यः। स भवति। स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति। पुत्रपौत्रादिसहितश्चिरकालं जीवी भवति। इत्यधिदैवतम्॥ अथाध्यात्मम्। या इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ता आहुर्लौकिकाः तानु तानेव मे मह्यं पुंसः पुरुषानाहुः। प्रतिपादयन्ति तत्त्वज्ञाः। कथमन्यस्यान्यभावः। उच्यते। एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनस्तत्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः॥ श्रूयते हि

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारीत्यादि। स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति। श्रुतिरपि तदभावं बोधयति। नैव स्त्री न पुमानेष नैव चायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स चोद्यत इति। द्वितीयः पादः पूर्ववत्। किञ्च पुत्रो वयसाल्पोऽपि यः कविः क्रान्तप्रज्ञो ज्ञानी स्यात् ईमिममर्थं स चिकेत। जानाति। एवमुक्तलक्षणस्य परमात्मनस्तानि स्त्रीत्वपुंस्त्वादीनि यो विजानात्। औपाधिकानि जानीयात्। स पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पितासत्। पितृवत्पूज्यो भवति। उक्तमर्थमभिप्रेत्य। ताण्डकब्राह्मणम्। शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयत तं पितरोऽब्रुवन्नधर्मं करोषि यो नः पितॄन्त्सतः पुत्रका इत्यामन्त्रयसे इति सोऽब्रवीदहं वाव वः पितास्मि यो मन्त्रकृदस्मीति ते देवेष्वपृच्छन्त ते देवा अब्रुवन् एष वाव पिता यो मन्त्रकृदिति। तद्वै स उदजयदिति मन्त्रद्रष्टुरेव किल पितृत्वम्। तत्त्ववित् पितुः पितासदिति किमाश्चर्यमित्यभिप्रायः ॥ १६ ॥

॥ अथ सप्तदशी ॥

अवः परेण पर एनावरेण
पदा वत्सं बिभ्रती गौरुदस्थात्।
सा कद्रीची कं स्विदर्धं परागा-
त्क्व स्वित्सूते नहि यूथे अन्तः ॥ १७ ॥

अत्राग्नौ हूयमानाहुतिर्गोरूपेण स्तूयते । गौर्गोरूपा गमनशीलैषाहुतिसङ्घेन पोष्यं वत्सं वत्सस्थानीयमग्निमवोऽवस्ताद्धोदेशे परेण पदा पादद्वयेन स्वावयवेनाकृष्य बिभ्रती धारयन्ती तथा परः परस्तादुपरिदेश एनानेनावरेण च पदा पादद्वयेनाकृष्य तमेव वत्सं बिभ्रत्युदस्थात् । सूर्यं प्रत्युत्तिष्ठति । अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठत इति स्मृतेः । अथैवं कृतवती साहुतिः कद्रीची क्व गतेत्यनिश्चयगमनादित्यं प्राप्तवतीत्यर्थः । कं स्वित् कं फलभाजं पुरुषं प्रत्यर्द्धमर्द्धमार्गमागत्य यद्वा अर्द्धमृद्धं परागात् । परागच्छति । आगत्य च क्व स्वित्सूते । कुत्र प्रदेशे फलमुत्पादयति । नहीतरगोवदियं यूथेऽन्तः सजातीयगोमध्ये सूते । साधारण्येन यत्रक्वचिन्न सूते । अपि तु कस्मिंश्चिदनुष्ठातरि । अतः स महान् को नु खल्विति । यद्वा आदित्यरश्मिसमूह एव गोरूपेण स्तूयते । गौरुक्तलक्षणा रश्मिरूपा गौर्वत्सं वत्सवद्रक्षणीयं यजमानमुत्क्रमेण बिभ्रत्युदस्थात् । अथ तथा कृत्वा सा कद्रीच्यदृश्यगमना सती कं स्विदर्द्धमृद्धमर्द्धस्थानभाजं वा कंस्वित्पुरुषमादित्यं परागात् । अप्रतिनिवृत्ता गता । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवास इति श्रुतेः । तथा कृत्वा च क्व स्वित्सूते । कस्मिन्निन्द्रादिलोके जनयति । न सर्वत्र । शिष्टं समानम् ॥ १७ ॥

॥ अथाष्टादशी ॥

अवः परेण पितरं यो
अस्यानुवेद पर एनावरेण ।

कवीयमानः क इह प्र वोच-

द्देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥

अवोऽवस्तात्स्थितमस्य पितरमेतल्लोकपालकमग्निं परेणादित्येन सह योऽनुवेद । अनुक्रमेण जानाति । तथा परः परस्तात्स्थितमादित्यमस्य पितरं पालकम् । सोऽपोनमेव लोकं वृष्ट्यादिना पालयति । तादृशमादित्यमेनानेनावरेणाग्निना सह योऽनुवेद । अग्न्यादित्यौ व्यतिहारेणोपास्ते । यद्वा अभिभूतरजस्तमस्कावुद्बुद्धसत्त्वौ अत एव स्वाधीनमायावितानिकत्वेन वाधिगच्छति । स तादृशः पुरुषः कवीयमानः कविवदाचरन् क्रान्तदर्शित्वमात्मनः ख्यापयन् क इहास्मिन् लोके प्रवोचत् । प्रब्रवीति । किञ्च देवं द्योतमानं देवविषयमलौकिकं वा मनः कुतः कस्माद्दृष्टविशेषादधि आधिक्येन प्रजातम् । उत्पन्नम् । उभयमपि दुर्लभमित्यर्थः ॥ १८ ॥

॥ अथैकोनविंशी ॥

येऽअर्वाञ्चस्ताँ उ पराच आहुर्ये

पराञ्चस्ताँ उ अर्वाच आहुः ।

इन्द्रश्च या चक्रथुः सोम तानि

धुरा न युक्ता रजसो वहन्ति ॥ १९ ॥

ये सूर्यसोमयोश्चक्रे वर्तमाना रश्मयो ग्रहादयश्च तत्परि-भ्रमणवशेनार्वाञ्चोऽर्वागञ्चना अधोमुखाः सन्ति । तां ३ तानेव पराच आहुः । पराङ्मुखाञ्चनानूर्द्ध्वानाहुः कालविदः । तथा प्रथमं ये पराञ्चः परागञ्चनास्तां ३ तानेवार्वाच आहुः । हे सोम त्वमिन्द्रः परमेश्वर इरां भूमिं दृष्ट्या धारक आदित्यः । यद्वा द्वादशादित्यानां मध्य इन्द्रोऽप्येकः । विवस्वदिन्द्रयुता इतुग्र-त्वादयमपीन्द्रः । स च युवां वा यानि मण्डलपरिभ्रमणानि चक्रथुः । कृतवन्तौ । तानि रजसो रञ्जनात्मकस्य लोकस्य ॥ कर्मणि षष्ठी ॥ लोकं वहन्ति । निर्वहन्ति । तत्र दृष्टान्तः । धुरा शकटादौ धुरि युक्ताः सम्बद्धा अश्वादयो यथा धुरं वहन्ति तद्वत् । यद्वैतत्पूर्वार्द्धे दृष्टान्तितम् । धुरा युक्ताः । धुरि स्थितं चक्रमपि धुर्शब्देनोच्यते । तत्र युक्ताः समर्पिताः पुरुषास्त-त्परिभ्रमणवशेनार्वाञ्चोऽपि पराञ्चः पराञ्चोऽप्यर्वाञ्चो भवन्ति तद्वत् ॥ १९ ॥

॥ अथ विंशी ।

द्वा सुपर्णा सयुजा सखाया

समानं वृक्षं परि षस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्य-

नश्नन्नन्यो अभि चाकशीति ॥ २० ॥

अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ स्तूयेते। यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ सयुजा समानयोगौ सखाया समानख्यानौ समानं वृक्षं परिषस्वजाते। एकमेव वृक्षं परिष्वजाते। आश्रयतः। तयोरन्य एकः पिप्पलं पक्वं स्वादुतरमत्ति अपरोऽनश्नन् अभिचाकशीति। अभिपश्यति। तद्वत् द्वौ सुपर्णस्थानीयौ जीवपरमात्मानौ सयुजा समानयोगौ। योगो नाम सम्बन्धः, स च तादात्म्यलक्षणः। स एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मन स तदात्मा। एवमन्यस्यापि स एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः। एवमेकात्मरूपावित्यर्थः। अनेन भास्करमतानुसारिणोऽतिरेकिणाऽन्यो जीवात्मा परमात्मनो नान्यः। स च परमात्मा जीवादन्यो जीवाश्रयत्वादिति मतं निरस्तं भवति। ननु सम्बन्धो द्विष्ठः। स च पक्षिणोरेव भेदमपेक्षते। अतः कथमैकात्म्यमिति। न। औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः। अत एव सखायौ समानख्यानौ। नान्यख्यानौ। नन्वेकस्य यादृशं ख्यानं तादृशमेवान्यस्येति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति। कथं तादात्म्यमुच्यत इति न वक्तव्यम्। नात्र परस्परदृष्टान्तो दार्ष्टान्तिकभावः। अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनस्तदेव ख्यानमितरस्यापि जीवात्मन इति सखायावित्युच्यते। एकरूपप्रकाशावित्यर्थः। अत उपपन्नमैकात्म्यम्। अनेन वास्तवभेदोऽपि निरस्तः। समानं वृक्षं परिषस्वजाते इत्यत्र यथान्यवान्तराभावादुभयोरेकाश्रयत्वमभ्युपगन्तव्यं तद्वत्सयुजा सखायावितुरभयमाध्येकयोगख्याने आश्रयणीये। वृश्चत इति वृक्षो देहः। स चोभयोः समान एक एव। जीवस्य भोगार्थत्वात् परमात्मना सृष्टमेवा-

भूतैरारब्धत्वात्तस्योपलब्धिस्थानत्वाच्चोभयोरपि समानः। तादृशं समानं वृक्षं परिषस्वजाते। परिष्वजतः। आश्रयतः। न च जीवस्य वस्तुत ईश्वरत्वे कथं जीवबुद्ध्या संसारशोकाविति वाच्यं तयोर्मोहकृतत्वात्। तथा चाथर्वणिका अनुमन्त्रमाम्नायास्य सन्देहनिवर्तकमुत्तरं मन्त्रमेवमामनन्ति। समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमी-शमस्य महिमानमिति वीतशोक इति। अस्यायमर्थः। एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वय-मपीश्वरोऽप्यनीशत्वबुद्ध्या मुह्यमानो मूढः सन् शोचति। संसार्यहं कर्ता सुखी दुःखीति जननमरणे अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतमीशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति। तदा वीतशोको देहाद्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन् अस्य महिमानमिति। निरस्तसमस्तौपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वे-श्वरत्वादिमहिमानमिति। एति प्राप्नोति। न च तद्भावान्यत्र तन्महिमा प्राप्यते। अतस्तद्रूपो भवतीत्यर्थः। तस्माद्वस्तुत एक एव। भेदस्तु मोहकृत इति प्रसिद्धम्। अनुभवदशायां लौकिक-बुद्ध्या भेदमभ्युपेत्योच्यते। तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति। भुंक्ते। यस्य यदुपार्जितं तत्तस्य स्वादु भवति। अन्यः परमात्मानश्नन् आप्तकामत्वेनाभुञ्जानः स्पृहाया अभा-वात्। आप्तकामस्य का स्पृहेति स्मृतेः। तस्माद्वास्तवभेद-मुपजीव्य तयोरन्य इत्युक्तम्। वस्तुतस्त्वनीशया शोचति मुह्य-मान इत्युक्तत्वादभेद एव। तादृशः परमात्मा स्वात्मन्यध्यस्तं जगत्साक्षित्वेनेक्षते। अत्र द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारा-

वित्यादि निरुक्ते गतमस्य मन्त्रस्य व्याख्यानमनुसन्धेयम्। (नि० १४. ३०.) ॥ २० ॥

॥ अथैकविंशी ॥

यत्रा सुपर्णा अमृतस्य भाग-
मनिमेषं विदथाभिस्वरन्ति।
इनो विश्वस्य भुवनस्य गोपाः
स मा धीरः पाकमत्रा विवेश ॥ २१ ॥

यत्रादित्यमण्डले सुपर्णाः सुपतनाः शोभनगमना रश्मयोऽमृतस्योदकस्य भागं भजनीयमंशमादायानिमेषमनवरतं विदथा वेदनेन ज्ञानेनास्माभिरेवं कर्तव्यमिति बुद्ध्याभिस्वरन्ति। अभिप्रापयन्ति। यश्च विश्वस्य भुवनस्य भूतजातस्येनः स्वामी तथा तस्यैव गोपा गोपायिता रक्षितायमादित्यः परमेश्वरो धीरो धीमान् प्राण्यनुग्रहबुद्धियुक्तः सन् मा मां पाकं पक्तव्यमपक्वप्रज्ञमत्रास्मिन्स्वकीयमण्डल आविवेश। प्रवेशयति। अत्रास्मदीये देहे वा नियामकतया प्रविष्ट इत्यधिदैवतपक्षे ॥ अथाध्यात्मपक्षे ॥ यत्र यस्मिन्नात्मनि सुपर्णाः शोभनपतनानि स्वस्वविषयग्रहणाय गमनकुशलानीन्द्रियाणि चक्षुरादीन्यमृतस्य भागम्। अत्र विषयावच्छिन्नचैतन्यममृतमित्युच्यते। तस्य भागं भजनीयं स्वांशमनिमेषं निमेषरहितमनारतं विदथा वेदनेन

वृत्त्यवच्छिन्नचैतन्येनावरुद्धान्यभिस्वरन्ति । अभिप्रयन्ति । आवरणापगमनेन स्फोरयन्ति । किञ्च यस्विनः स्वाम्यस्य देहस्य विश्वस्य भुवनस्य गोपा गोपायिता रक्षिता । यद्वा विश्वस्य भुवनस्य भूतजातस्य स्वाम्यस्य देहस्य गोपाः । अनेन तत्त्वपदार्थयोरेकत्वं प्रतिपादितं भवति । स परमेश्वरो धीरः समाधिनिष्ठः सर्वदाविक्रियो मा मां पाकं परिपक्कमनस्कं यागदानादिनापगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं मामाविवेश । उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः । यद्वा-परिपक्कमना अहं पूर्वमज्ञानदशायां मदन्य ईश्वरोऽस्तीत्यविद्वान् ततः परमस्ति कश्चित्सर्वज्ञः सर्वेश्वरः सत्यज्ञानादिलक्षण इति निश्चित्य पश्चाद्गुरुशास्त्राभ्यां स एवाहमस्मीति मत्वा एवं पारम्पर्येणावगत्यासम्भावनाविपरीतभावने व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्माभूवमित्यर्थः । अयमेव स मा धीरः पाकमत्राविवेशेत्यनेनोच्यते । नन्वनवच्छिन्नस्य परमात्मनः सर्वत्र व्याप्तत्वात्प्राप्तिरेव नोपपद्यते । सम्प्रत्यत्र प्राप्तिर्हि द्विविधा प्राप्तप्राप्तिरप्राप्तप्राप्तिश्चेति । प्राप्तस्यापि कण्ठे चामीकरन्यायेनावरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते । अस्य मन्त्रस्य यन्निरुक्तं यत्र सुपर्णाः सुपतना आदित्यरश्मय इत्यादिकं तदत्र द्रष्टव्यम् । ( नि० ३. १२. ) ॥ २१ ॥

॥ अथ द्वाविंशी ॥

यस्मिन्वृक्षे मध्वदः सुपर्णा

निविशन्ते सुवते चाधि विश्वे ।

तस्येदाहुः पिप्पलं स्वाद्वग्रे
तन्नोन्नशद्यः पितरं न वेद ॥ २२ ॥

अत्र वृक्षरूपकल्पना। अधिदैवं आदित्यमध्यात्म आत्मानं च प्रशंसति। यस्मिन्नादित्ये वृक्षे वृक्षवत्सर्वफलाश्रयभूते मध्वदः। मध्वितुरदकनाम। तददन्तीति मध्वद उदकस्यात्तारः सुपर्णाः सुपतना रश्मयो निविशन्ते। प्रविशन्ति रात्रौ। सुवते च। पुनरुदयकाले प्रकाशं जनयन्ति च यस्मादादित्यात्। कुत्र। अधि विश्वे। विश्वस्योपरि। तस्यादित्यवृक्षस्य पिप्पलं पालकं फलं स्वादु रसवदग्र उपरि उपासनानन्तरमाहुः। कथयन्ति तत्त्वविदः। यद्वा सर्वस्मादुपरि वर्तमानमाहुः। ईदृशं पितरं जगतः पालयितारं यो नरो न वेद। नोपास्ते। स तन्नोन्नशत्॥ नशतिर्गतिकर्मा॥ तत्फलं न प्राप्नोति। वेदितुस्त्वग्रे पिप्पलमाहुरित्यर्थः। इत्यधिदैवपक्षे॥ अथाध्यात्मपक्षे। यस्मिन् परमात्मनि वृक्षे वृक्षवद्भ्रमनादिरहितेऽविक्रिये सुपर्णाः शोभनगमनानीन्द्रियाणि मध्वदो मधुनो ज्ञानस्यात्तॄणि। तज्ज्ञानेन ज्ञानभाञ्जीत्यर्थः। निविशन्ते। स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तान्यात्मनिवृत्त्या लीयन्ते। पुनः प्रबोधकालेऽधि विश्वे विश्वस्योपरि सुवते च। उद्यन्ति। स्वस्वविषयान् लभन्त इत्यर्थः। तस्य परमात्मनः पिप्पलं पालकं संसारत उद्धारकं स्वाद्वास्वादनीयममृतत्वलक्षणं ज्ञानम्। यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवन्ति। तद्धि स्वादुतमम्। इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वादापातस्वादूनि। तत्-

फलमग्र्यं स्वरूपज्ञानोत्तरकालमाहुः । यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारमात्मानं वा न वेद । न जानाति गुरु-शास्त्रात् । स तत्फलं नोन्नशत् । न प्राप्नोति । अत आत्मानं यो वेद स एव तन्मोक्षफलं प्राप्नोतीत्यर्थः । यद्वा चर्मवदाकाश-मित्यादिश्रुतेर्ज्ञानादन्योपायस्यामृतत्वप्राप्तिं निवारयति ब्रह्म वेद ब्रह्मैव भवतीत्यादिकानुज्ञाप्राप्तिमाह । तस्मादीदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थः ॥ २२ ॥

॥ अथ त्रयोविंशी ॥

यद्गायत्रे अधि गायत्रमाहितं

त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत ।

यद्वा जगज्जगत्याहितं पदं

य इत्तद्विदुस्ते अमृतत्वमानशुः ॥ २३ ॥

गायत्रे अधि गायत्रमाहितम् । प्राथम्यात्सर्वैः स्तुत्यत्वाच्च गायत्री भूः । तदीयं स्थानं गायत्रम् । अधि उपरि तत्र गायत्रमाग्नेयं पदमाहितम् । प्रथमसृष्टत्वात् गायति त्रायति च व्युत्पत्त्या च प्रजापतेर्मुखाद्गायत्र्या सहोत्पन्नत्वाद्गत्याग्निरपि गायत्रः । गायत्रोऽग्निरिति श्रुतेः । भूम्यामग्निः स्थापित इति वदन्ति । तथा त्रैष्टुभात् द्वितीयत्वाद्वृष्टिपर्जन्यविद्युद्रूपत्रिस्तोभ-युक्तादन्तरिक्षात् त्रैष्टुभं स्तोभयुक्तमूर्ध्वाधस्तिर्यग्लक्षणस्तोभत्रयो-

पेतं वायुं निरतक्षत । साधु सम्पादितवन्तो देवा इति यद्दस्ति । वा अथवा जगति सर्वैर्गन्तव्ये उन्नततमे वा तृतीयभूते द्युलोके जगद्गमनशीलमादित्याख्यं पदमाहितमिति यदस्ति । तदिदं त्रिषु स्थानेषु त्रयाणामग्न्यादीनां पदाधानं य इत् य एव नरा विदुर्जानन्ति । त एवामृतत्वमानशुः । अमरणरूपं पदमाप्नुवन्तीत्यधिलोकम् ॥ अथाधियज्ञम् ॥ गायत्रे प्रातःसवनेऽधि उपरि गायत्रं छन्दः पदमाहितमिति यत् । तथा त्रैष्टुभान्माध्यन्दिनात्सवनात्त्रैष्टुभं छन्दो निरतक्षत । तत्र आहितमिति यत् । वा किञ्चेत्यर्थः । जगति तृतीयसवने जगत् जागतं पदमाहितमिति यत् तत्तादृशं सवनत्रयेषु छन्दस्त्रयसंस्थानं ये नरा विदुः । यजमाना विदुर्जानन्ति । तेऽमृतत्वं ज्ञानानुष्ठानद्वारेण मोक्षमानशुः । आप्नुवन्ति । अथवा गायत्रे प्रातःसवने । त्रिषु सवनेषु छन्दस्त्रयपरिमाणात् सवनान्यपि तत्तच्छन्दःशब्देनोच्यन्ते । गायत्रं प्रातःसवनं त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवनमिति श्रुतेः । तादृशे प्रातःसवनेऽधि उपरि गायत्रमष्टाक्षरात्मकमाहावप्रतिगररूपं गायत्रं पदमाहितम् । तद्यथा होता शोंसावोमिति त्र्यक्षरेण तथा शंसामोदैवोमिति पञ्चाक्षरेणाध्वर्युः प्रतिगृणाति । ( आ० ५. ८. ) । तन्मिलित्वाष्टाक्षरं सम्पद्यते । तच्चाष्टाक्षरं गायत्रीसदृशं तस्या अपि पादस्याष्टाक्षरत्वात् । इदमेकं प्रातःसवनरूपे गायत्रपदप्रतिष्ठापनम् । तथा सवनान्तेऽपि शंसनानन्तरमुक्थं वाचीति चतुरक्षरमाह । ओमुक्थशा इति चतुरक्षरमध्वर्युः । तदष्टाक्षरं सम्पद्यते । एतदेकं परं गायत्रे गायत्रस्थापनम् । तथा त्रैष्टुभान्माध्यन्दिनसवनात्त्रैष्टुभमाहावप्रतिगरणरूपं पदं निरतक्षत ऋत्विजः ।

तद्यथा माध्यन्दिनसवने होताध्वर्यो शोंसावोमित्याह्वयते षड-
क्षरेण अध्वर्युश्च शंसामोदैवोमिति पञ्चाक्षरेण प्रतिगृणाति।
तन्मिलित्वैकादशाक्षरं सम्पद्यते। इदमेकं माध्यन्दिनसवनादौ
त्रैष्टुभे त्रैष्टुभाधानम्। तथा सवनान्तेऽपि शंसनानन्तरमुक्थं
वाचि इन्द्रायेति समाक्षरमाह। अध्वर्युश्चोमुक्थशा इति चतुर-
क्षरेण प्रतिगृणाति। तन्मिलित्वैकादशाक्षरं सम्पद्यते। इदम-
परं त्रैष्टुभे त्रैष्टुभस्थापनम्। तथा तृतीयसवने होताध्वर्यो
शोंशोंसावोमिति समाक्षरेणाह्वयते शंसामोदैवोमिति पञ्चा-
क्षरेणाध्वर्युः प्रतिगृणाति। द्वादशाक्षरं भवति। तदिदं प्रथमं
जागते जागतोत्पादनम्। तथा पश्चादपि शंसनानन्तरमाह
उक्थं वाचीन्द्राय देवेभ्य इति। एतदेवैकादशाक्षरं भवति।
अध्वर्युश्चोमित्येकाक्षरेण प्रतिगृणाति। तदुभयं मिलित्वा
द्वादशाक्षरं भवति। तदिदमपरं जागते जागतपदस्थापनम्।
एवं त्रिषु छन्दःसु त्रिषु गायत्र्यादिसवनेषु गायत्र्यादिच्छन्दस्त्रय-
पदप्रतिष्ठापनम्। एतत्सर्वमैतरेयब्राह्मणे देवविशः कल्पयि-
तव्या इति खण्डे विस्पष्टमाम्नातम्। (१. ८.)॥ तत्तादृशं
छन्दसि छन्दःस्थापनं य इत्तद्विदुः। य एव जानन्ति। त एवा-
मृतत्वमानशुः। प्राप्नुवन्त्यनुष्ठानद्वारा। एवमजानन्तोऽनुष्ठाने-
नापि फलं न प्राप्नुवन्तीत्यर्थः। तस्य साकल्याभावादिति
भावः॥ २३॥

॥ अथ चतुर्विंशी॥

गायत्रेण प्रति मिमीते अर्क-

मर्केण साम त्रैष्टुभेन वाकम्।

वाकेन वाकं द्विपदा चतुष्पदा-

क्षरेण मिमते सप्त वाणीः ॥ २४ ॥

गायत्रेण गायत्रच्छन्दसार्कमर्चनसाधनं मन्त्रं प्रतिमिमीते। प्रत्येकं परिच्छिनत्ति॥ अर्को मन्त्रो भवति यदेनेनार्चन्तीति निरुक्तम्॥ प्रतिमन्त्रं गायत्रेण छन्दसोपनिबद्धं करोति। उपलक्षणमेतदन्येषां छन्दसाम्। यद्वेतरेषां छन्दसामसैव चतुश्चतुरक्षराधिक्येन तत्तच्छन्दोभिः प्रतिमिमीत इत्यर्थः। यद्वा प्रतिशब्दः समित्येतस्मिन्नर्थे। छन्दोभिर्मन्त्रान् सम्मितं करोतीत्यर्थः। अर्केण साम। उक्तलक्षणेन मन्त्रेण साम गायत्ररथन्तरसंज्ञकं साम प्रतिमिमीते। नन्वेकं साम तृचे क्रियत इति तिसृष्वेकं साम विहितम्। अतोऽर्कैः सामेति वक्तव्यम्। कथमुच्यतेऽर्केणेति। न। वस्तुत एकं सामैकस्यामृच्यारूढम्। पश्चादन्योन्यां तदुत्तरयोर्गायतीत्यतिदेशतः प्राप्तं तिसृषु गानम्। अत एकवचनमविरुद्धम्। त्रैष्टुभेन वाकम्। अत्र त्रिष्टुबुपादानमितरच्छन्दःप्रदर्शनार्थम्। अथवा अनादेशे सर्वत्र त्रिष्टुभो ग्रहणाआचुर्याभिप्रायेणेदमुक्तम्। त्रैष्टुभेन द्विवारत्रिवारावृत्तेन तृचदृचरूपं वाकं वक्तव्यमेकैकं छन्दः प्रतिमिमीते। अथवा वाकं सूक्तमेतावद्भिस्त्रिष्टुब्भिरुपनिबद्धमिदं सूक्तमिति। तादृशेन वाकेन वाकं वाकवर्गमनुवाकं वा मिमीते। कीदृशेन वाकेनेति स विशेष्यते। द्विपदा चतुष्पदा। पादद्वयबद्धविराडादिच्छन्दोनिबद्धमन्त्ररूपेण चतुष्पदा पादचतुष्टयोपेतेनानुष्टुबादिमन्त्ररूपेणेति। इयतोभिर्द्विपदाभिर्वर्गः इयतोभिश्चतुष्पदाभिरुपेता

वर्गः । ईदृग्द्विपदरूपैर्वर्गैः ईदृक्चतुष्पदरूपैर्वर्गैश्च परिमितोऽनु-
वाक इति । सूक्तपक्ष एतावद्भिः सूक्तैरयमनुवाक इति । किञ्चा-
क्षरेणाक्षरेणैव सप्त वाणीर्वागधिष्ठितानि सप्त छन्दांसि मिमते ।
निर्माणं कुर्वन्ति । अष्टाक्षरा गायत्री एकादशाक्षरा त्रिष्टुप्
द्वादशाक्षरा जगतीति । अक्षरैः पादाः परिमीयन्ते । परि-
मितैः पादैश्छन्दांसि । ततः पादानां छन्दसामक्षरं मूलमिति ।
तथा ऋग्वर्गसूक्तानुवाकादीनां चाक्षरं मूलमित्यक्षरप्रशंसा ॥२४॥

॥ अथ पञ्चविंशी ॥

जगता सिन्धुं दिव्यस्तभाय-
द्रथन्तरे सूर्यं पर्यपश्यत् ।
गायत्रस्य समिधस्तिस्र आहु-
स्ततो मह्ना प्र रिरिचे महित्वा ॥ २५ ॥

जगतीछन्दस्कायामृच्युत्पन्नं साम जगत् । तेन ब्रह्मा सृष्टि-
काले सिन्धुं स्यन्दनशीलमुदकस्य स्यन्दकं वादित्यं दिवि द्युलोके-
ऽस्तभायत् । स्तम्भितवान् । जागतो वा एष य एष तपतीति
श्रुतिः । रथन्तर एतन्नामके साम्नि स्तम्भितं सूर्यं पर्यपश्यत् ।
परिदृष्टवान्प्रजापतिः । तदाधारभूतायामृचि । ( ऋ० ७.३२.
२२. ) । स्वर्दृशमिति सूर्यप्रतिपादकशब्ददर्शनात् । असौ वाव
स्वर्दृगिति हि श्रुतिः । अत एव तत्र सूर्यदर्शनं विधीयते । रथ-

न्तरे प्रस्तूयमाने सम्मीलयेत् स्वर्दृशं प्रति वीक्षेतेति साम-ब्राह्मणेन । गायत्रस्य गायत्र्यामुत्पन्नस्य साम्नः समिधः समिन्धना-स्तिस्रो विभक्तीराहुः । पादत्रयमाहुरित्यर्थः । अथवा तिस्र ऋच आहुः । ततो हैतीर्मह्ना बलेन महित्वा महित्वेन प्ररि-रिचे । प्ररिच्यते । अन्यानि सामानि पृथक् पृथक् निर्मितवान् । यद्वा गायत्रमत्र च्छन्दोवाची । तस्य तिस्रो मूर्तीराहुः क्रमेणा-ष्टाक्षरैकादशाक्षरद्वादशाक्षरैर्गायत्रीत्रिष्टुब्जगत्यात्मिकाः । यस्मा-देवं ततस्तस्माद्गायत्री छन्दसां कनिष्ठा सती मह्ना बलेन महत्त्वेन प्ररिरिचे । सर्वाणि छन्दांस्यतिक्रामति । येनैव बलेन सोममाहृतवती तादृशेनैव भवति ॥ २५ ॥

प्रवर्ग्ये घर्मधुगाह्वानकाल उपह्वय इत्यादिके द्वे ऋचौ । उपह्वये सुदुघां धेनुमेतामिति द्वे । ( आ० ४. ७. ) । इति सूचितत्वात् ॥—

॥ सैषा षड्विंशी ॥

उप ह्वये सुदुघां धेनुमेतां

सुहस्तो गोधुगुत दोहदेनाम् ।

श्रेष्ठं सवं सविता साविषन्नो-

ऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥ २६ ॥

अहं होतोपह्वये । उपेत्याह्वयामि । किं । एतां धेनुम् । आगच्छन्तीं क्षीरेण प्रीणयित्रीं गां प्रवर्ग्यार्थां । पुनः कीदृशीम् ।

सुदुघाम् ! सुष्ठु दोग्ध्रीम् । उत अपि च एनामुक्तलक्षणां गां सुहस्तः शोभनहस्तो दोहनकुशलो गोधुक् गोदोग्धाध्वर्युर्दोहत् । दोग्धि । यस्मादेवं तस्मादुपह्वय इत्यर्थः । तदर्थं सविता सर्वस्यानुज्ञाता परमेश्वरो नोऽस्मदीयं श्रेष्ठं प्रशस्यं सवं सोमयागं चीरं वा साविषत् । अनुजानातु । कथमेवम् । तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यद्यस्माद्धर्मः प्रवर्ग्यः । यद्धर्म इत्यतपत्तद्धर्मस्य घर्मत्वमिति तैत्तिरीयकम् । तत्ताहशोऽभीद्धोऽभिदीप्तः । तदुशब्द एवकारार्थः । तस्मादेव कारणात्सु प्रवोचम् । सुष्ठु ब्रवीमि । उपह्वय इति । यद्वा एतां पुरतो दृश्यमानां धेनुं दृष्ट्वा प्रीणयित्रीं मेघलक्षणां धेनुमुपह्वये । आह्वयामि वर्षदोहाय । किञ्चैनां धेनुं सुहस्तः शोभनदोहनकुशलहस्तोपेतो गोधुक् गोदोग्धादित्यो वा वायुर्दोहत् । दोग्धि । तदधीनत्वाद्वर्षणस्य । किञ्च तदर्थं सविता प्रेरकः परमेश्वरोऽस्मदर्थमस्मदुपभोगादृष्टमपेक्ष्य साविषत् । अनुजानातु । प्रतिबन्धं मा करोत्वित्यर्थः । किमितीदृमुच्यत इति उच्यते । घर्मो ग्रीष्मोऽवर्षणजनितः सस्यशोषोऽभीद्धः प्रवृद्धः । तदु षु प्रवोचम् । तस्मादेव कारणाद्ब्रवीमि ॥ ब्रवीतेर्लुङि वचादेशेऽस्यतिवक्तीत्यादिना च्लेरङ् । छान्दसोऽडभावः ॥ २६ ॥

॥ अथ सप्तविंशी ॥

हिङ्कृण्वती वसुपत्नी वसूनां

वत्समिच्छन्ती मनसाभ्यागात् ।

दुहामश्विभ्यां पयो अघ्न्येयं

सा वर्धतां महते सौभगाय ॥ २७ ॥

यथाहूता गौर्हिंकृण्वती वत्सं प्रति हिङ्कारं कुर्वती वसूनां वसुपत्नी क्षीरदध्याज्यादिबहुधनानां सर्वदा पालयित्री। इत्यवृत्तिभ्यां वसुनः पालयित्रीत्वम्। तस्यैवाविक्यं च प्रतिपाद्यते। पुनः कीदृशी। मनसा वत्समिच्छन्ती। ईदृशी साभ्यागात्। अभ्यागमत्। इयमागताघ्न्या। गोनामैतत्। अहननीया गौरश्विभ्यां ताभ्यामर्थाय पयः क्षीरं दुहाम्। दुग्धाम्। सा तादृशी महते सौभगाय प्रवृद्धाय सौभाग्याय वर्धताम्। प्रवृद्धा भवतु। यद्वास्मै सौभगाय क्षीरं वर्धयताम्॥ अत्रापि वृष्टिपरत्वेन यथायोगं योज्यम्। हिङ्कृण्वती वर्षणाय शब्दयन्ती वसूनां गोसस्यादिधनानां बहूनां वसुपत्नी तेषामेव पालयित्री वत्सं लोकं वत्सवत्पोषणीयं मनसेच्छन्ती प्रीणयितुमभ्यागात्। अभिगच्छति मेघरूपा। सा चाघ्न्याहन्तव्या। प्रस्तुत्येत्यर्थः। पय उदकमश्विभ्यां व्याप्ताभ्यां स्थावरजङ्गमाभ्यामर्थाय। यद्वा अश्विनौ वाय्वादित्यौ। ताभ्यां सकाशाद्दुहाम्। दुग्धाम्। तौ हि वृष्टेर्मोचयितारौ। शिष्टमविशिष्टम् ॥ २७ ॥

प्रवर्ग्येऽभिष्टवे दोहनसमये वत्से मातुः सकाशादपनीयमाने गौरमीमेदित्येषा। सूत्रितं च। गौरमीमेदनु वत्सं मिषन्तं नमसेदुपसीदत। ( आ॰ ४. ७. )। इति ॥—

॥ सैषाष्टविंशी ॥

गौरमीमेदनु वत्सं मिषन्तं

मूर्द्धानं हिङ्ङ्कृणोन्मातवा उ ।

सृक्वाणं घर्ममभि वावशाना

मिमाति मायुं पयते पयोभिः ॥ २८ ॥

गौर्धेनुर्मिषन्तं निमीलिताक्षं वत्समनु प्राप्यामीमेत्। शब्दं करोति ॥ मीमयतिः शब्दकर्मा ॥ यद्वा उक्तं वत्समनु आत्मानं प्रक्षिपति। किञ्च तस्य वत्सस्य मूर्द्धानं मातवै मातुं निर्मातुं लेहनेन शोधयितुम् ॥ उशब्दोऽवधारणे ॥ हिङ्ङ्कृणोत् । हिङ्कारमकरोत् । करोति । किञ्च सृक्वाणं वत्सस्य शब्दवदनशान्तं फेनस्य स्रष्टारं घर्मं क्षीरस्य क्षरणशीलं वत्समभि अभिलक्ष्य वावशाना भृशं कामयमाना मायुं शब्दं मिमाति । निर्माति । करोति । तादृशी सती पयोभिः प्रभूतैः क्षीरैः पयते । प्यायते । आप्यायनं करोति वत्सम् ॥ अत्रापि मेघपरतया योजनीयम् । एवमाहूता मेघरूपा गौर्धेनुर्मिषन्तं वृष्टिरूपक्षीराभावेन निमीलिताक्षलोकाख्यं पुत्रमनु अनुसृत्यामीमेत् । गर्जनशब्दं वर्षणचिह्नरूपं करोति । मूर्द्धस्थानीयां भूमिं मातवा उ निर्मातुमेव सस्यादियुक्तां कर्तुं हिङ्ङ्कृणोत् । हिङ्कारकरूपं शब्दमकरोत् । प्रतिपादनभेदादपुनरुक्तिः । किञ्च

स्वकार्यं फलस्य स्रष्टारं घर्मं दीप्तं पुत्रमभिवावश्यानाभिमुख्येन कामयमाना पयोभिरुदकैः पयते। प्यायते। आप्यायनं करोति ॥ २८ ॥

॥ अथैकोनत्रिंशी ॥

अयं स शिंक्ते येन गौरभीवृता

मिमाति मायुं ध्वसनावधि श्रिता।

सा चित्तिभिर्नि हि चकार मर्त्यं

विद्युद्भवन्ती प्रति वव्रिमौहत ॥ २९ ॥

सोऽयं वत्सः शिंक्ते। अव्यक्तध्वनिं करोति। येन वत्सेन गौर्माताभीवृता। आगत्याभितो वेष्टिता भवति। किञ्च सा गौर्मायुं शब्दं मिमाति। निर्मिमाति। कुत्र स्थिता। ध्वसनावधि श्रिता। ध्वसनस्थाने गवां निवासाश्रयेऽधिष्ठिता। सा तादृशी चित्तिभिर्ज्ञानैस्तत्पूर्वकैः कर्मभिर्वा मर्त्यं नि चकार हि। नीचैः करोति। ज्ञानविशिष्टा मनुष्या यथा बालकस्यादनस्तनपानादिस्नेहं कुर्वन्ति। वव्रिं स्वकीयं रूपम्। वव्रिरिति रूपनाम। रूपं प्रत्यौहत। प्रकाशयति। यद्वा वत्सस्नेहातिशयस्वरूपं विद्युद्भवन्ती विद्युदिव शीघ्रदर्शनौहत। अयमेकार्थः॥ अर्थान्तरं च। शाकपूर्णिर्नाम निरुक्ताचार्यः सकलमन्त्रदेवता जानामीत्यभिमानितवान्। दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ

जानाति किलैनं व्यामोहयामीति मनसि कृत्वा सन्दिग्धोभयलिङ्गा देवता प्रादुरासीदथ तस्य पुरतः। स च तां न बुबुधे। बुभुत्सया च तां स्वरूपं प्रदर्शयेति पप्रच्छ। सा चायं स शिङ्क्त इत्येषा मद्देवता तत्र प्रतीयमानं मत्स्वरूपमित्युपदिदेश। (नि० २.८.)। कथमत्रोभयलिङ्गत्वं वस्तुत उभयलिङ्गत्वे कथं दैवतैक्यमिति उच्यते। अत्रोभयलिङ्गत्वमुभयथा सम्भवति स्त्रीपुंलिङ्गद्वयेन मध्योत्तमलिङ्गद्वयेन च। तत्कथम्। अयं स येनेति पुंलिङ्गवाचिना शब्दद्वयेन मेघः प्रतीयते। अधिश्रिता सेत्यादिना स्त्रीलिङ्गवाचकेन माध्यमिका वाक्। अत उभयलिङ्गत्वम्। तथा विद्युद्भवन्तीत्यन्तं मध्यमलिङ्गं तत्र मेघस्तनितयोर्माध्यमिकयोः प्रतीतिः। तथा सति वव्रिमोहतेत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्या रसं प्रत्याहरत इत्ययमर्थो विवक्षितः। स चादित्यव्यापार इत्युत्तमलिङ्गत्वम्। तर्हि वस्तुत उभयलिङ्गत्वप्रतीतेरुभे अपि देवते यल्लिङ्गं सा देवतेति न्यायात्। अतः कथमेकदेवतासिद्धिरिति अयं स येनेत्यत्रैषां व्यत्ययाश्रयणेन सर्वदेवतानामधिष्ठात्मिकाया एकत्वश्रवणेन वा सर्वफलदात्रात्मन एकत्वाश्रयणेन वा दैवतैक्योपपत्तेः। अनेन मध्यमोत्तमभेदेनोभयलिङ्गत्वपक्षेऽपि दैवतैक्यमुक्तं भवति। अत एकैव वा महानात्मा देवतेत्युक्तत्वाद्वस्तुतो दैवतैक्यं अधिष्ठात्रधिष्ठानभेदेन भेदश्च न विरुध्यते॥ अयं स शिङ्क्ते। इयं सा माध्यमिकाया वाचोऽधिष्ठात्री देवता शिङ्क्ते। अव्यक्तध्वनिं करोति। येन गौरभीवृता। गौरिति वाङ्नाम। माध्यमिका वाक् ययाभिवृता। अभितो व्याप्ता। अधिष्ठितेत्यर्थः। सेयं शिङ्क्ते। अथवा अयं स शिङ्क्त इति नैव माध्यमिका वाक् निर्दिश्यते अपि तु मेघः। तस्यां

वाचि शिञ्जानायां स एव शिंक्त इत्युपचर्यते मञ्चाः क्रोशन्तीतिवत्। अयं स मेघः शब्दं करोति येन माध्यमिका वागभिव्याप्ता। शब्दने प्रकार एवोच्यते। मिमाति मायुम्। स्तनितलक्षणं शब्दं करोति। अथ वायुम्। लुप्तोपमा। मिनोति क्षिपति। सर्वत्र प्रक्षिपतीति मायुरादित्यः। तमिवातिदीप्तं करोतीत्यर्थः। अथवा सामर्थ्यादात्मानमादित्यसदृशं निर्मिमीते। क्व स्थिता। ध्वसनावधिश्रिता। ध्वंसने मेघेऽधिश्रिता। सा ईदृशी चित्तिभिः। कर्मनामैतत्। स्वकर्मभिर्वृष्टिरूपैर्मर्त्यं मरणधर्माणं स्थावरजङ्गमरूपं कृत्स्नं जगन्नि हि चकार। नीचैः करोति। मनुष्यान् प्रणतान् करोति। ओषध्यादिकं फलैरवनतं करोति। अथवा चित्तिभिर्द्योतनलक्षणैः कर्मभिः। विद्युति विद्योतमानापद्यमाना प्रति वव्रिमौहत। वव्रिरिति रूपनाम। ऊहतिरत्र सामर्थ्यादुपसंहारवाची। प्रत्युपसंहरति। उदकलक्षणं रूपं पुनरादत्ते। रश्मिद्वारा दृष्टमुदकं पुनर्वर्षकाल आदत्ते। एकस्यैव ज्योतिषस्त्रेधाकरणाद्विद्युतः सूर्यरश्मिभाव उपपद्यते। तमू अकृण्वन् त्रेधा भुवे कमिति वक्ष्यमाणत्वात्। स्तनितस्य विद्युद्भावो मेघविद्युत्स्तनितानामभेदाभिप्रायेण ॥ २९ ॥

इदं शरीरं जीवावस्थायाम्। अनेन देहस्यासारता देहस्यानित्यत्वं च प्रतिपाद्यते ॥ —

॥ अथ त्रिंशी ॥

अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम्।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ३०

अनत् प्राणनं कुर्वत् जीवं जीवनवत्तुरगातु स्वव्यापाराय तूर्णगमनं सदेजच्छये । शेते वर्तते । पश्चात्प्राणायामानन्तरमुक्त-विलक्षणं सत् ध्रुवमविचलितं सत् पस्त्यानां गृहाणां मध्ये । अथैतेष्वा स्थाणुर्वत्तिष्ठति । आकारः पूरणो वा । जीवस्य वैल-क्षण्यमाह । मृतस्य शरीरस्य सम्बन्धी जीवो मर्त्येन मरणधर्म-केन शरीरेण सयोनिः । पूर्वं समानोत्पत्तिस्थानः । यद्यपि जीवस्य न जन्मास्ति तथापि वपुषस्तत्सद्भावात्तत्सम्बन्धेनोपचर्यते । तदेवाह । अमर्त्योऽमरणस्वभावः । जीवापेतं वाव किलेदं म्रियत इति श्रुतेः । उक्तस्वभावो जीवः स्वधाभिश्चरति । पुन-र्मृतैः स्वधाकारपूर्वकदत्तैरन्नैश्चरति । वर्तत इत्यर्थः ॥ ३० ॥

प्रवर्ग्येऽभिष्टवेऽपश्यं गोपामित्यृक् विनियुक्ता । सूत्रितं च । अपश्यं गोपामनिपद्यमानं स्वर्ग इत्यस्य । आ० ४. ६. । इति ॥ —

॥ सैषा सूक्त एकत्रिंशी ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।

स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥३१

अहं गोपां सर्वस्य लोकस्य दृष्टिप्रकाशादिना गोपायितार-मनिपद्यमानं कदाचिदप्यविपन्नम् । तथा पथिभिर्विचित्रैर्मार्गै-रन्तरिक्षरूपैराचरन्तं च परा चरन्तं च । उदयप्रभृत्या मध्याह्न-मागच्छन्तं मध्याह्नप्रभृत्या सायं पराङ्मुखं गच्छन्तम् । एवं

महानुभावमादित्यमपश्यम्। योगबलेन पश्येयम्। किञ्च स आदित्यः सध्रीचीः सहाञ्चतीर्विषूचीर्विष्वगञ्चती रात्रावपि चन्द्रभौमादित्यानां प्रकाशयित्रीस्त्विषो वसान आच्छादयन् भुवनेषु भुवनैकदेशेषु लङ्कादिप्रदेशेष्वन्तर्मध्य आवरीवर्ति। उदयास्तमयं कुर्वन् पुनःपुनरावर्तते। तमपश्यमित्यर्थः। एष वै गोपा एष हीदं सर्वं गोपायतीत्याद्यत्रब्राह्मणम्। अपश्यं गोपामित्याह असौ वा आदित्यो गोपा स हीमाः प्रजा गोपायतीत्यादि तैत्तिरीयकं च द्रष्टव्यम्॥ २१॥

॥ अथ द्वात्रिंशी ॥

य ईं चकार न सो अस्य वेद

य ईं ददर्श हिरुगिन्नु तस्मात्।

स मातुर्योना परिवीतो अन्त-

र्बहुप्रजा निर्ऋतिमा विवेश॥ ३२॥

अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहारायात्मा ज्ञातव्य इत्यर्थात्प्रतिपाद्यते। यः पुमान् पुत्रार्थमीमिनं गर्भं चकार। करोति विक्षिपति वा। तत्कारणभूतस्य विक्षेपद्वारेण न स पुमानस्य तत्त्वं वेद॥ कर्मणि षष्ठी वा॥ एनं गर्भं न जानाति। कथम्भूतः कथं वा केन प्रयोजनेनेति सर्वात्मना न जानातीत्यर्थः। यस्तु मातुरुदरस्थं ददर्शोदरद्वारान्ययानुत्प-

त्यानुमानेन वा दर्शयति तस्माद्द्रष्टुः सकाशात् हिरुक् नु ॥ हिरुगित्यन्तर्हितनाम । इच्छब्द एवकारार्थः । नु निश्चये ॥ अत्यन्तमन्तर्हित एव खलु ॥ यद्वा यः संसारावस्थायामीमेनं कृषिवाणिज्यवेदाध्ययनादिकं चकार सोऽस्य एतन्न वेद लोकान्तरे जन्मान्तरे वा । तथा य ईमेनं ददर्श गिरिनदीसमुद्रवन्ध्यादिकं ददर्श जीवसमये । तस्माद्दृष्टाद्धिरुगिन्नु । पृथगेव । अत्रानुभूतं सर्वं न जन्मान्तरे लोकान्तरे वानुभवतीत्यर्थः । स तादृशो मातुर्जनन्या योना योनावन्तः परिवीत उल्बजरायुभ्यां परितो वेष्टितः सन् बहुप्रजाः । बहुजन्मभाक् । अथवा उत्पन्नः सन् स्वयमप्यपत्योत्पादनेन बहुप्रजाः । एवं गर्भदुःखमनुभवन् निर्ऋत्यभिधानं प्रदुःखमनुभवति यावत् स्वरूपभूतात्मज्ञानम् । अतस्तत्परिहारायात्मा ज्ञातव्य इत्युक्तं भवति । एवमात्मविदामभिप्रेतोऽर्थः ॥ नैरुक्तानां तु मते य ईं चकार मध्यस्थानो वायुर्मेघो वैतद्वृष्ट्युदकं करोति । सोऽस्य तत्त्वमिति शेषः । अथवा एतत्कर्म न जानाति तयोरचेतनत्वादिति भावः । यस्तु ईमेतद्ददर्श पश्यति तस्मादपि हिरुक् अन्तर्हितः । प्राणिकर्मवशेन काले वर्षिता परमेश्वर आदित्यात्मनि गूढ इत्यर्थः । य ईं हिरुक् अन्तर्हितमीमेतद्ददर्श पश्यति स दृष्टिलक्षणः पुत्रो मातुर्निर्मातुरन्तरिक्षस्य योना योनिवदुत्पत्त्याधारभूतेऽन्तरिक्षे । उभयोरप्यन्तरिक्षनामत्वात्सामान्यविशेषभावो द्रष्टव्यः । अन्तरिक्षैकदेशे योन्यामन्तर्मध्ये बहुप्रजाः । बहुप्रजातात्मा बहुप्राणुपकारी । अथवा जनिरन्तर्भावितण्यर्थः । बहूनां धाराणां सस्यनिष्पादनद्वारेण प्राणिनां वा प्रजनयिता सन् निर्ऋतिं निरमणसाधनां भूमिमाविवेश । प्रविशति प्राप्नोतीत्यर्थः ॥ २२ ॥

॥ अथ त्रयस्त्रिंशी ॥

द्यौर्मे पिता जनिता नाभिरत्र

बन्धुर्मे माता पृथिवी महीयम्।

उत्तानयोश्चम्वोऽर्योनिरन्तरत्रा

पिता दुहितुर्गर्भमाधात् ॥ ३३ ॥

दीर्घतमा ब्रवीति मे मम द्यौर्द्युलोकः पिता पालकः। न केवलं पालकत्वमात्रं अपि तु जनिता जनयितोत्पादयिता। तत्रोपपत्तिमाह। नाभिरत्र। नाभिभूतो भौमो रसोऽत्र तिष्ठतीति शेषः। ततश्चान्नं जायते अन्नाद्रेतः रेतसो मनुष्य इत्येवं पारम्पर्येण जननसम्बन्धिनो हेतो रसस्यात्र सद्भावात्। अनेनैवाभिप्रायेण जनितेत्युच्यते। अत एव बन्धुर्बन्धिका तथेयं मही महती पृथिवी मे माता मातृस्थानीया व्रीह्योषध्यादिनिर्मात्रीत्यर्थः। किञ्च उत्तानयोरुत्तनयोश्चम्वोः सर्वस्यावरोभोगसाधनयोर्द्यावापृथिव्योरन्तर्मध्ये योनिः सर्वभूतनिर्माणाश्रयमन्तरिक्षं वर्तत इति शेषः। अत्रास्मिन्नन्तरिक्षे पिता द्युलोकः। अधिष्ठानाधिष्ठात्रोरभेदेनादित्यो द्यौरुच्यते। स्वरश्मिभिः। अथवा इन्द्रः पर्जन्यो वा। दुहितुर्दूरे निहिताया भूम्या गर्भं सर्वोत्पादनसमर्थं वृष्ट्युदकलक्षणमाधात्। सर्वतः करोति ॥ ३३ ॥

आश्वमेधिके मध्यमेऽहनि ब्रह्मोद्ये होतादयः पृच्छामि त्वेत्यनया यजमानं पृच्छेयुः। तथा च सूत्रितम्। एकैकशो यजमानं पृच्छन्ति पृच्छामि त्वा परमन्तं पृथिव्या। (आ० १०. ९.)। इति ॥—

॥ सैषा चतुस्त्रिंशी ॥

पृच्छामि त्वा परमन्तं पृथिव्याः

पृच्छामि यत्र भुवनस्य नाभिः।

पृच्छामि त्वा वृष्णो अश्वस्य रेतः

पृच्छामि वाचः परमं व्योम ॥ ३४ ॥

हे यजमान त्वा त्वां पृच्छामि। प्रश्नं करोमि। किम्। पृथिव्याः परमन्तम्। उत्कृष्टां काष्ठाम्। यत्र सर्वा पृथिवी समाप्यते तत्पृच्छामि। तथा त्वामन्यत्पृच्छामि। किं तदिति उच्यते। यत्र भुवनस्य भूतजातस्य नाभिः सन्नाहो बन्धनम्। यत्र सर्वं सम्बद्धं भवति तमित्यर्थः। किञ्च त्वा त्वां वृष्णो वर्षकस्याश्वस्य व्याप्तस्यादित्यस्य। असौ वा आदित्यो वृषाश्व इति तैत्तिरीयकम्। तस्य रेतो रेतोवत्कारणं तत्किमिति पृच्छामि। तथा वाचः सर्वस्य वाग्जातस्य परमं निरतिशयं व्योम स्थानं सर्वस्य वचसः कारणम्। एतत्प्रश्नचतुष्टयं पृच्छामि ॥ ३४ ॥

अथैवं पृष्टो यजमान इयं वेदिरित्यनया प्रतिब्रूयात् । इयं वेदिः परो अन्तः पृथिव्या इति मन्त्राह । ( आ० १०, ८. )। इति सूचितत्वात् ॥—

॥ सैषा पञ्चत्रिंशी ॥

इयं वेदिः परो अन्तः पृथिव्या
अयं यज्ञो भुवनस्य नाभिः ।
अयं सोमो वृष्णो अश्वस्य रेतो
ब्रह्मायं वाचः परमं व्योम ॥ ३५ ॥

पृथिव्याः प्रथनवत्या भूम्याः परो अन्तः परमन्तं पर्यवसान-मियं वेदिः । न हि वेद्यतिरिक्ता भूमिरस्ति । एतावती वै पृथिवी यावती वेदिरिति श्रुतेः । तथायं यज्ञो भुवनस्य भूत-जातस्य नाभिः सन्नहनम् । तत्रैव वृष्ट्यादिसर्वफलोत्पत्तेः सर्व-प्राणिनां बन्धकत्वात् । अथ वृष्णो वर्षकस्यादित्यस्य रेतोऽयं सोमो रसात्मकः । अग्नौ हुतः सोमरस आदित्यं प्राप्य वृष्ट्यादिफलं जनयति । अयं ब्रह्मा प्रजापतिरेव वाचो मन्त्रादिरूपायाः परमं व्योम । उत्कृष्टं रक्षकं स्थानम् । तत्रैवोत्पत्तेस्तत्रैव पर्यवसानाच्च ॥ ३५ ॥

॥ अथ षट्त्रिंशी ॥

सप्तार्द्धगर्भा भुवनस्य रेतो

विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।

ते धीतिभिर्मनसा ते विपश्चितः

परिभुवः परि भवन्ति विश्वतः ॥ ३६ ॥

सप्त सर्पणस्वभावाः सप्तसंख्या वा रश्मयोऽर्द्धगर्भाः संवत्सरस्यार्द्धं गर्भं गर्भस्थानीयमुदकं धारयमाणाः । यद्वा ब्रह्माण्डस्यार्द्धं मध्येऽन्तरिक्षे गर्भवद्वर्त्तमानाः । भुवनस्य लोकस्य रेतः सारम् । वृष्टिप्रदत्वेन रेतोभूताः । तादृशा रश्मयो विष्णोर्व्यापकस्यादित्यस्य विधर्म्मणि जगद्धारणव्यापारे प्रदिशा प्रदेशेन तिष्ठन्ति । वर्त्तन्ते । किञ्च ते धीतिभिः प्रज्ञाभिर्मनसा जगदुपकारः कर्त्तव्य इति बुद्ध्या च विश्वतः सर्वतः ॥ द्वितीयार्थे तसिः । विश्वं परिभवन्ति । परितो भावयन्ति । कृत्स्नं जगद्व्याप्नुवन्तीत्यर्थः । यस्मादेवं तस्मात्ते त एव विपश्चितो बुद्धियुक्ताः परिभुवः सर्वत्र व्याप्ताश्च । यद्वा सप्तार्द्धगर्भाः । सप्त महदहङ्कारौ पञ्च तन्मात्राणीति मिलित्वा सप्तसंख्यानि तत्त्वानि । अर्द्धगर्भाः । अविकृतिरूपाया विकाराश्रयाया मूलप्रकृतेः प्रकृतिविकृतेरुदासीनस्यात्मनश्चोत्पन्नत्वादर्द्धांशेन प्रपञ्चाकारेण परिणामादर्द्धगर्भाः पुरुषांशस्याविक्रियत्वादित्यभिप्रायः । अत एव

तेषां प्रकृतिविकृतित्वम् । यस्मादेवं तस्माद्भुवनस्य रेतः कारणम् । कारणभूतानि तान्येव विष्णोर्व्यापिन्य पुरुषस्य विधर्म्मणि प्रदिशा प्रदेशेन तिष्ठन्ति । इतरत्समानम् ॥ ३६ ॥

॥ अथ सप्तत्रिंशी ॥

न वि जानामि यदिवेदमस्मि

निण्यः सन्नद्धो मनसा चरामि ।

यदा मागन्प्रथमजा ऋतस्या-

दिद्वाचो अश्नुवे भागमस्याः ॥ ३७ ॥

अहं यदिवेदं यदपीदं विश्वमस्मि । कृत्स्नः प्रपञ्चोऽप्यहमेवास्मि । नामरूपांशं परमार्थं त्यक्त्वा सर्वत्रानुगतोऽस्मि । योऽयं सच्चिदानन्दाकारोऽस्ति सोऽहमस्मीति न विजानामि । विशिष्य नाज्ञासिषम् । परं शास्त्रजनितमिदमहमस्मीति ज्ञानं जातम् । अविविक्तमहमित्यर्थः । कार्यकारणयोरभेदात् । कृत्स्नप्रपञ्चस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपञ्चजातमपि स्वस्वरूपमेव भवति । इदं सर्वं यदयमात्मा ब्रह्मैवेदं सर्वं आत्मैवेदं सर्वं स ईक्षत बहु स्यां प्रजायेयेत्यादिश्रुतिभ्य एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । तदनन्यत्वमारम्भणशब्दादिभ्य इत्याद्युपपत्तिभिश्च प्रपञ्चस्य ब्रह्मानन्यत्वं सिद्धम् ॥ यद्वा इवशब्द उपमार्थः । यदिव यत्परोक्षज्ञानं सर्वैकात्म्यरूपमानुभाविकमस्ति । तदिव

तद्वदेवाहमस्मि। इदं सर्वमहमस्मीति ज्ञानं मे जातम्। अपि त्वेतद्दार्ष्टान्तिकभूतम्। आनुभविकं सार्वात्म्यं यदस्ति तन्न विजानामि। न प्राप्तोऽस्मि। शास्त्रजनितं सार्वात्म्यं जातं न त्वानुभाविकमित्यर्थः। तत्र कारणमाह। यतोऽहं निण्यः। अन्तर्हितनामैतत्। अन्तर्हितो मूढचित्तः। चित्तप्रत्यक्प्रवणाभावेन परिच्छिन्न इत्यर्थः। तत्रोपपत्तिमाह। सन्नद्धोऽविद्याकामकर्मभिः सम्यक् बद्धो वेष्टितः। अत एव मनसा युक्तो भावनासहिष्णुना बहिर्मुखेन विक्षिप्तेन चेतसा युक्तः सञ्चरामि संसारे। अथवा मनसा सन्नद्धश्चरामि। इन्द्रियपरवश एव सन् संसारे दुःखमनुभवामि। न सार्वात्म्यं जानामीति परिदेवते। यास्कोऽपीमं परिदेवनार्थत्वेनोदाजहार। अथापि परिदेवना कस्माच्चिद्भावात् न वि जानामि यदिवेदमस्मि। (नि० ७. ३.)। इति। बहिर्मुखचेतसः स्वरूपापरिज्ञानजनितं दुःखमन्यत्र श्रूयते। पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराक् पश्यन्ति नान्तरात्मन्निति। तर्हि कदैतद्भवतीत्याह। यदा मागन् आगमिष्यति तदा। किं तदित्युच्यते। ऋतस्य परमार्थस्य परस्य ब्रह्मणः प्रथमजाः प्रथमोद्भवः प्रथमोत्पन्नश्चित्तप्रत्यक्प्रवणजनितोऽनुभावः। स यदा मा मां प्राप्नोति आदित् अनन्तरमेवाव्यवधानेनास्या वाच ऐकात्म्यप्रतिपादिकाया उपनिषद्वाचो यदिवेदमस्मीत्युक्ताया वा भागं भजनीयं शब्दब्रह्मणा व्याप्तव्यं परं ब्रह्मपदमश्नुवे। प्राप्नोमि। चित्तस्य बहिर्मुखतां परित्यज्यान्तर्मुखतैवादुःसम्पाद्या। सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति। पश्चाद्विलम्बाभावात् यथा गिरिशिखरात्पतन् पाषाणोऽविलम्बेन पतति तद्वत्।

चित्तप्रत्यक्सुखत्वस्य दुःखकत्वमपि तत्रैव श्रूयते। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्निति ॥ ३७ ॥

॥ अथाष्टत्रिंशो ॥

अपाङ् प्राङेति स्वधया गृभीतो-
ऽमर्त्यो मर्त्येना सयोनिः।
ता शश्वन्ता विषूचीना वियन्ता
न्य१न्यं चिक्युर्न नि चिक्युरन्यम् ॥ ३८ ॥

अमर्त्योऽमरणधर्मायमात्मा मर्त्येन मरणधर्मिणा भूतात्मना देहेन सयोनिः। समानस्थानः। यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठन्नित्यर्थः। यद्वा समानोत्पत्तिः। सहवासेन स्वस्मिन्नप्युत्पत्तिरुपचर्यते। एवम्भूतः सन् स्वधयान्नो-पलक्षिततद्भोगेन गृभीतः। यद्वा स्वधाशब्देनान्नमयं शरीरं लक्ष्यते। तेन गृहीतः सन्नपाङेति। अशुक्लं कर्म कृत्वाधो गच्छति। प्राङेति। स्वर्गादिलोकं प्राप्नोति। परमात्मैव सूक्ष्म-शरीरोपाधिकः सन् नानाविधकर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा शरीरत्रयेण सम्बद्धो लोकान्तरेषु सञ्चरति। स्थूलसूक्ष्मो-भयशरीरपरिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते। गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति

स्वकर्मभिरिति। इदानीमुभयप्राधान्येनाह। ते तौ भूतात्मकर्मात्मानौ अस्त्रन्ताविभागेन सर्वदा वर्तमानौ। यद्वा सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते। स्थूलशरीरपक्षेऽपि सात्त्विकजातेः। तत्कारणानां भूतसूक्ष्माणां सद्भावात्तत्र शरीरसम्बन्ध उपपद्यते। विषूचीना। इह लोके सर्वत्रगमनौ। वियन्ता तत्तत्फलोपभोगाय सर्वलोकान्तरेषु गच्छन्तौ वर्तेते। तत्र नरा अन्यं भूतात्मानं निचिक्युः। नितरां विशेषेण पश्यन्ति जानन्ति। अन्यमपरं देहवच्छायातिरिक्तं न निचिक्युः। न जानन्ति। केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्तीत्यनुमिमते। न कोऽपि देहत्रयव्यतिरिक्तमात्मानं जानन्ति। अतो दुर्लभमात्मज्ञानमित्यर्थः॥ ३८॥

॥ अथैकोनचत्वारिंशी॥

ऋचो अक्षरे परमे व्योमन्य-

स्मिन्देवा अधि विश्वे निषेदुः।

यस्तन्न वेद किमृचा करिष्यति

य इत्तद्विदुस्त इमे समासते॥ ३९॥

पूर्वमन्त्रे देहात्मजीवात्मानावुक्तौ। तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति तदत्रोच्यते। ऋचो अक्षरे। अत्र ऋक्-

शब्देन ऋक्प्रधानभूताः साङ्गापरविद्यात्मकाश्चत्वारो वेदा उच्यन्ते। ऋगादीनामपरविद्यात्वं मुण्डके श्रूयते। द्वे विद्ये वेदितव्ये इति प्रतिज्ञाय तत्रापरा ऋग्वेदो यजुर्वेदः सामवेद इत्यादिना। तस्याः सम्बन्धिन्यक्षरेऽदृश्यादिगुणके क्षरणरहिते-ऽनश्वरे नित्ये सर्वत्र व्याप्ते ब्रह्मणि। अक्षरशब्दस्य ब्रह्मवाचकत्वमेतद्वै तदक्षरस्य प्रशासने गार्गि यया तदक्षरमधिगम्यते येनाक्षरं पुरुषं वेद सत्यमित्यादिश्रुतिषु प्रसिद्धम्। ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। सर्वैर्वेदैः खलु ब्रह्माधिगम्यते। तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतिः। ननूपनिषद्भागानां तथास्तु। इतरेषां तु कथं ब्रह्मविषयत्वमिति उच्यते। यद्यपीतरभागानां यागादिविषयत्वं तथापि बुद्धिःशुद्ध्युत्पादनद्वारा वेदसाधनत्वेन ब्रह्मविषया भविष्यति वेदानुवचनेन ब्राह्मणा विविदिषन्तीत्यादिश्रुतिः। तदेव विशिष्यते। परमे उत्कृष्टे निरतिशये व्योमन् व्योमनि व्योमसदृशे। अलेपत्वनीरूपत्वव्यापित्वादिसादृश्येन व्योमेत्युक्तम्। यद्वा विशेषेण सर्वस्य रक्षके। निरधिष्ठानं कस्यचिदस्ति स्वाध्यस्तस्य सर्वस्याधिष्ठानत्वेन रक्षकत्वात्। तादृशे तत्त्वे सर्वमध्यस्तमित्यर्थः। पुनस्तदेव विशिष्यते। यस्मिन्परमात्मनि विश्वे सर्वे देवा अधि निषेदुः। निषीदन्ति। आश्रित्य तिष्ठन्ति। तस्मिन्। यद्वोक्तलक्षणे वस्तुनि ऋगुपलक्षिताः सर्वे साङ्गा वेदाः पर्यवसिता इत्यर्थः। यः यो मर्त्यस्तत्तादृशं देवादीनां स्वरूपलाभास्पदं कृत्स्नवेदैस्तात्पर्येण प्रतिपाद्यं यद्वस्तु न वेद न जानाति। स मर्त्य ऋचा पूर्वोक्तेन ऋगादिशब्दजालेन किं करिष्यति। वेदनसाधनेन वेदेन वेद्यमविदित्वा किं साधयतीत्यर्थः। प्रयोजनाभावात्सर्वस्यापि वेदस्य

वैफल्यादिति भावः। अथवा योऽक्षरमविदित्वा कर्मणां कर्ता भवति यागादीननुतिष्ठति तेन किञ्चिदपि कर्म कृतं न भवतीत्यर्थः। य इत् य एव तत्तत्त्वं विदुर्जानन्ति त इमे समासते। त एवेमे ज्ञातारः समासते। सम्यक् तिष्ठन्ति। अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम्। यद्वा ये विदुरित् ये जानन्त्येव नानुतिष्ठन्ति। इच्छब्दोऽवधारणे। त इमे त एव समासते। गवामयनादिसहस्रसंवत्सरसत्रपर्यन्तानि सहोपयन्ति। सहार्थे सम्शब्दः। सत्रादधिकानां यागानामभावात् तेषामपि फलमेतज्ज्ञानेनैव प्राप्तं भवतीत्यर्थः। कर्तॄणां बहुत्वाद्बहुवचननिर्देशः॥ अन्ये त्वन्यथा वर्णयन्ति। ऋचः। ऋगर्चनीय आदित्य आदित्यमण्डलमृगादिमयं वा। ऋग्भिः पूर्वाह्णे दिवि देव आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋच इत्यादिश्रुतेः। तस्य सम्बन्धिन्यक्षरे परमे व्योमन्नितुरक्तलक्षणे ब्रह्मणि य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इत्यादिश्रुतुरक्तस्वरूपे यस्मिन् सर्वे देवा द्योतमाना रश्मयो निषेदुः। वर्तन्ते। य एतन्न वेद स केवलया ऋचा किं करिष्यति। ये जानन्ति भाववन्ति त एव विद्वांसः समासते। भूम्यां सुखेन रोगादिरहिता भोगिनः सन्तश्चिरकालं जीवन्ति॥ अपरे प्रकारान्तरेण प्रतिपादयन्ति। ऋचोऽक्षरे ऋगुपलक्षितसर्ववेदसम्बन्धिन्यक्षरे प्रणवरूप ओङ्कारेऽविनाशिनि सर्ववेदेषु व्याप्ते वा। प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते। तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति। तानेकधा समभरत् तदेतदोमितीति। परमे निरतिशये। न हि प्रणवादधिकं किञ्चिन्मन्त्रजातमस्ति त्रिकालातीतस्य ब्रह्मणः प्रति-

पादकत्वात्। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ओमिति ब्रह्मेत्यादिश्रुतेः। वेदानां प्रणवस्य स्थानप्रतिनिधिभावः सम्बन्धो य ऋचोऽधीत इत्याद्युपक्रम्य यः प्रणवमधीते स सर्वमधीते ओमिति प्रतिपाद्यते। एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्प-रममक्षरमित्यादिश्रुतेः। यस्मिन्विश्वे सर्वे देवा अधि निषेदुः। प्रणवस्य सर्वमन्त्रात्मकत्वात् मन्त्रेषु सर्वदेवतानां निवासात् सर्व-देवनिवासत्वम्। ब्रह्माधिष्ठानत्वाद्वा ब्रह्मणि सर्वदेवानां निवा-सात्। शिष्टमविशिष्टम्॥ अयं मन्त्रो निरुक्ते व्याख्यातः। (नि० १३. १०.)॥ अपरे त्वपरथा वर्णयन्ति। ऋचः। ऋगर्चनीयो जीवः। तस्य सम्बन्धिन्यक्षरेऽविनाशे व्याप्ते वा परमात्मनीत्यर्थः। अत एव जीवापेक्षया परमे उत्कृष्टे निरुपाधिके व्योमन् विशेषेण सर्वाधिष्ठानत्वेन रक्षके व्योमसदृशे वा। यस्मिन्परमात्मनि देवा गमनवन्तो व्यवहरन्तो वेन्द्रियसंज्ञका विश्वे सर्वेऽप्यधि-निषेदुः। निषीदन्ति। आश्रित्य वर्तन्ते। यस्तन्न वेद न जानाति। उपाधंग्रपरित्यागे तदेव स्वरूपमिति न पश्यति स्थूलो जनः किमृचा करिष्यति। केवलेन जीवेन जीवभावेन किं फलं प्राप्स्यति। जननमरणादिक्लेशस्यात्यागादिति भावः। ये तत्त्वं विदुस्त इत्यादि सिद्धम्॥ ३८॥

अग्निहोत्राया धेनुर्यदि कुत्सितं शब्दं कुर्यात्तदानीं सूय-वसादित्यनया यवसादिकं प्रयच्छेत्। तथा च सूचितम्। वाश्य-मानायै यवसं प्रयच्छेत् सूयवसाद्भगवती हि भूयाः। (आ० ३. ११.)। इति॥ प्रवर्ग्येऽभिष्टव एषैव परिधानीया। सूचितं च। सूयवसाद्भगवती हि भूया इति परिदध्यात्। आ० ४. ७.। इति॥ —

॥ सैषा चत्वारिंशी ॥

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।

अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥४०॥

हे अघ्न्ये । गोनामैतत् । अहननीये हे गौस्त्वं सूयवसात् । शोभनयवसस्य तृणादिकस्यात्त्री भगवती । भग इति धननाम । सर्वैर्भजनीयप्रभूतक्षीरादिधनवती भूयाः । भव । हिः पूरणः प्रसिद्धो वा । लोके यवसादिभक्षणेन क्षीरादिसमृद्धिः प्रसिद्धा । अथोऽनन्तरमेव वयं यजमाना अपि भगवन्तः प्रभूतेन धनेन तद्वन्तः स्याम । अथैकवारं पूर्वमुक्तमिदानीं सर्वदा कर्तव्यमिति प्रार्थ्यते । विश्वदानीं विश्वकालं सर्वदा तृणमद्धि । भक्षय । आचरन्ती सर्वतो निर्गच्छन्ती शुद्धं निर्मलमुदकं पिब । अयं मन्त्रो यास्केनैवं व्याख्यातः । सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरन्ती ( नि० ११. ४४. ) इति ॥ ४० ॥

॥ अथैकचत्वारिंशी ॥

गौरीर्मिमाय सलिलानि तक्ष-

त्येकपदी द्विपदी सा चतुष्पदी ।

अष्टापदी नवपदी बभूवुषी

सहस्राक्षरा परमे व्योमन् ॥ ४१ ॥

गौरीर्गरणशीला माध्यमिका वाक्। सुलोपाभावश्छान्दसः। मिमाय। शब्दयति। किं कुर्वती। सलिलानि बहून्युदकानि तक्षती। सम्यक् सम्पादयित्री। एकपदी। एकपादोपेतैकाधिष्ठाना मेघे वर्तमाना गमनसाधनेन वायुनैकपदी वा। द्विपदी। मेघान्तरिक्षाख्यद्वयाधिष्ठाना। आदित्यो वा द्वितीयः। तथा सा चतुष्पदी। पादचतुष्टयोपेता दिक्चतुष्टयाधिष्ठाना। अष्टापदी। अवान्तरदिगपेक्षयाष्टपादोपेताष्टाधिष्ठाना। नवपदी। उपरिदिगपेक्षया सूर्येण वा नवदिगधिष्ठाना। बभूवुषी एवंभूता। भवेश्छान्दसः क्वसुः। ततो ङीपि वसोः सम्प्रसारणम्॥ किमनया परिगणनया। सहस्राक्षरा। अपरिमितवचनोऽयम्। अपरिमितव्याप्तियुक्ता। बहुव्यापनशीलोदकवतीत्यर्थः। कुत इति तदुच्यते। परमे व्योमन्। उदकाश्रयत्वेनोत्कृष्टेऽन्तरिक्षे। केचिदेवमाहुः। गौरीर्गरणशीला शब्दब्रह्मात्मिका वाक् मिमाय। मिमेति। प्रतिष्ठार्थो धातुः। प्रतिष्ठितानि घटादिद्रव्याणि तक्षती। तत्तद्वाचकत्वेन निष्पादयन्ती। एकपदी। अव्याकृतत्वेनैकप्रतिष्ठानैकरूपा वात्मना। द्विपदी। सुप्तिङ्भेदेन पादद्वयवती। चतुष्पदी। नामाख्यातोपसर्गनिपातभेदेन। अष्टापदी। आमन्त्रितसहिताष्टभेदेनाष्टपदी। नवपदी बभूवुषी। साव्ययैस्तैरष्टभिर्नवपदी। अथवा सनाभिकपूरःकण्ठादिषु नवसु पदेषु भवन्ती पश्चाद्बहुविधाभिव्यक्तिमुपेयुषी परमे

व्योमन् उत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्तानेकध्वनिप्रकारा भवतीत्यर्थः ॥ अयं मन्त्र आचार्यैरेवं व्याख्यातः । "गौरीर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चा-वान्तरदिग्भिश्च नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने ( नि० ११. ४०. )"— इति ॥ ४१ ॥

॥ अथ द्विचत्वारिंशी ॥

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः।

ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥ ४२ ॥

तस्या उक्ताया गोः सकाशात्समुद्रा वृष्ट्युदकसमुन्दनाधि-करणभूता मेघा अधि अधिकं प्रभूतमुदकं विक्षरन्ति । विविधं क्षरन्ति । तेनोदकेन प्रदिशश्चतस्रः । प्रशब्दो वीत्यर्थः । विदि-शश्चतस्रो दिशश्च । अथवा प्रकृष्टा दिशो मुख्याश्चतस्रः । तत्-स्थेषु तात्स्थ्व्द्यम् । तत्स्थाः पुरुषा जीवन्ति । ततः पश्चात्त-दक्षरमुदकं क्षरति । सस्यादिकमुत्पादयतीत्यर्थः । तत् सस्या-दिकं विश्वं जगदुपजीवति ॥ अयमपि यास्केन व्याख्यातः । तस्याः समुद्रा अधिविक्षरन्ति वर्षन्ति मेघास्तेन जीवन्ति दिगा-श्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युप-जीवन्ति ( नि० ११. ४१. ) इति ॥ ४२ ॥

॥ अथ त्रिचत्वारिंशी ॥

शकमयं धूममारादपश्यं

विषूवता पर एनावरेन ।

उक्षाणं पृश्निमपचन्त वीरा-

स्तानि धर्माणि प्रथमान्यासन् ॥ ४३ ॥

शकमयं शकृन्मयं शुष्कगोमयसम्भूतं धूममारात् नातिदूर अपश्यम् । दृष्टवानस्मि । दिवा धूमस्य दूरे दृश्यमानत्वात्स एव दर्शनविषयतयोक्तः । विषुवता व्याप्तिमतैनानेनावरेण निकृष्टेन धूमेन परः परस्तात्तत्कारणभूतमग्निमपश्यम् । अहं यजमान इत्यर्थः । किञ्चोक्षाणं फलस्य सेक्तारं पृश्निं शुक्लवर्णम् । प्राश्नुते तेन फलमिति स्वयं प्राश्नुत इति वा पृश्निर्वल्लीरूपः सोमः । तं वीरा विविधैरणकुशला ऋत्विजोऽपचन्त । अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः । स च क्रियासामान्यवचनोऽत्रौचित्यादभिषवेण सम्पादितवन्त इत्यर्थः । तानि तत्साधनानि धर्म्माण्यनुष्ठानानि प्रथमानि प्रतमानि प्रकृष्टानि फलपर्यवसानीयान्यासन् । सम्पादितान्यभवन् । यद्वा सोम उक्षाभवत् पूर्वं तं देवाः प्रकृतापचन्यज्ञार्थं तद्भवो धूमो मेघ आसीत् तदुच्यते । तत्परत्वेन वा मन्त्रो व्याख्येयो विचक्षणैः ॥ ४३ ॥

॥ अथ चतुश्चत्वारिंशी ॥

त्रयः केशिन ऋतुथा वि चक्षते

संवत्सरे वपत एक एषाम् ।

विश्वमेको अभि चष्टे शचीभि-

र्ध्राजिरेकस्य ददृशे न रूपम् ॥ ४४ ॥

केशस्थानीयप्रकृष्टरश्मियुक्तास्त्रयोऽग्न्यादित्यवायवः । ते च ऋतुथा काले काले विचक्षते । विविधलक्षणां भूमिं पश्यन्ति । तेषां पृथक् पृथक् कार्यमाह । एषां मध्य एकोऽग्निः संवत्सरेऽतीते सति संवत्सरं वपते । दाहेन केशस्थानीयौषधिवनस्पत्यादिकच्छेदनेन नापितकार्यं करोति । एक अन्य आदित्यो विश्वं सर्वं जगत् शचीभिः स्वकीयैः प्रकाशवृष्ट्यादिकर्मभिरभिचष्टे । सर्वतः पश्यति । एकस्य वायोर्ध्राजिर्गतिर्ददृशे । दृश्यते सर्वैः । न रूपम् । अप्रत्यक्षत्वात् स्पर्शशब्दध्वनिकम्पलिङ्गैर्गम्यत इति हि न्यायविदो वदन्ति ॥ अयमपि मन्त्रो यास्केनैवं व्याख्यातः । त्रयः केशिन ऋतुथा विचक्षते कालेऽभिविपश्यन्ति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति । सर्वमेकोऽभिपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य ( नि० १२. २७. ) इति ॥ ४४ ॥

वाग्देवते पशौ चत्वारि वागिति हविषोऽनुवाक्या । चत्वारि

वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन् (आ० ३. ८.) इति सूचितत्वात् ॥ —

॥ सैषा पञ्चचत्वारिंशी ॥

चत्वारि वाक् परिमिता पदानि

तानि विदुर्ब्राह्मणा ये मनीषिणः ।

गुहा त्रीणि निहिता नेङ्गयन्ति

तुरीयं वाचो मनुष्या वदन्ति ॥ ४५ ॥

वाक् वाचः शब्दजातस्य पदानि चत्वारि वाक्परिमिता परिमितानि । लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः । तानि पदानि ब्राह्मणा वेदविदो मनीषिणो मनस ईषिणो मेधाविनो विदुः । जानन्ति । तेषां मध्ये त्रीणि गुहा गुहायां निहिता स्थापितानि नेङ्गयन्ति । न चेष्टन्ते । न प्रकाशन्त इत्यर्थः । वाचस्तुरीयं पदं मनुष्या अज्ञास्तज्ज्ञाश्च वदन्ति । व्यक्तमुच्चारयन्ति । व्यवहरन्ति । कानि तानि चत्वारीत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति । सर्ववैदिकवाग्जालस्य संग्रहरूपा भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात्तासां व्याहृतीनामेव सारसंग्रहभूतत्वादकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदन्ति ॥ अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन । क्रियाप्रधानमा-

ख्यातम्। द्रव्यप्रधानं नाम। प्रागुपसृज्यत आख्यातपदस्ये-तुरुपसर्गः प्रादिः। उच्चावचेष्वर्थेषु निपतनान्निपातोऽपितु-चेत्यादिः। एतेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात्। वाग्वै पराच्यव्याकृतावदत्तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यत इति श्रुतेः॥ अन्ये तु याज्ञिका मन्त्राः कल्पो ब्राह्मणं चतुर्थी लौकिकीति। याज्ञिकैः समाम्नातोऽनुष्ठेयार्थप्रकाशको वेदभागो मन्त्राः। मन्त्रविधानप्रतिपादको वेदभागः "इति मन्त्राः कल्पोऽत ऊर्द्धम्" —इत्यादिनोक्तः कल्पः। मन्त्रतात्पर्यार्थप्रकाशको वेदभागो ब्राह्मणम्। भोगविषया गामानयेत्यादिरूपा व्यावहारिकी। एष्वेव सर्वा वाङ् नियमितेति याज्ञिकाः। ऋग्यजुःसामानि चतुर्थी व्यावहारिकीति नैरुक्ताः॥ सर्पाणां वाग्वयसां क्षुद्र-सरीसृपस्य च चतुर्थी व्यावहारिकीतैरतिहासिकाः॥ पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः॥ अपरे मातृकाः प्रका-रान्तरेण प्रतिपादयन्ति। परा पश्यन्ती मध्यमा वैखरीति चत्वारीति। एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेतुरुच्यते। नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदय-गामिनी पश्यन्तीतुरुच्यते योगिभिर्द्रष्टुं शक्यत्वात्। सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेतुरुच्यते। मध्ये हृदयाख्य उदीय-मानत्वान्मध्यमायाः। अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादि-व्यापारेण बहिर्निर्गच्छति तदा वैखरीतुरुच्यते। एवं चत्वारि वाचः पदानि परिमितानि। मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा वाच्यस्य शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः। जानन्ति तेषु मध्ये

त्रीणि परादीनि गुहा निहितानि। हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति। व्याकरणप्रसिद्धानामाख्यातादिपदी मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञा वाग्योगविदस्तानि पदानि जानन्ति। अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदन्ति। व्यवहरन्ति। अर्थप्रकाशनाय प्रयुञ्जते। अयं मन्त्रो निरुक्ते व्याख्यातः। सोऽत्राप्यनुसन्धेयः (नि० १३. ९.)॥ अथापि ब्राह्मणं भवति सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम्। या पृथिव्यां साग्नौ सा रथन्तरे। यान्तरिक्षे सा वायौ सा वामदेव्ये। या दिवि सादित्ये सा बृहति सा स्तनयित्नावथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः। तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणामिति ॥ ४५ ॥

॥ अथ षट्चत्वारिंशी ॥

इन्द्रं मित्रं वरुणमग्निमाहु-

रथो दिव्यः स सुपर्णो गरुत्मान्।

एकं सद्विप्रा बहुधा वदन्त्यग्निं

यमं मातरिश्वानमाहुः ॥ ४६ ॥

अमुमादित्यमैश्वर्यविशिष्टमिन्द्रमाहुः। तथा मित्रं प्रमीतेर्मरणात्त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः। वरुणं पापस्य निवारकं रात्र्यभिमानिनं देवमाहुः। तथाग्निमङ्गनादिगुणविशिष्टमेतन्नामकमाहुः। अथो अपि चायमेव दिव्यो दिवि भवः सुपर्णः सुपतनो गरुत्मान् गरणवान् पक्षवान्वा। एतन्नामको यः पक्ष्यस्ति सोऽप्ययमेव। कथमेकस्य नानात्वमिति उच्यते। अमुमेवादित्यमेकमेव वस्तुतः सन्तं विप्रा मेधाविनो देवतातत्त्वविदो बहुधा वदन्ति। तत्तत्कार्यकारणैरिन्द्राद्यात्मानं वदन्ति। एकैव वा महानात्मा देवता सूर्य इत्याचक्षत इत्युपक्रमात्। किञ्च तमेव वृष्ट्यादिकारणं वैद्युताग्निं यमं नियन्तारं मातरिश्वानमन्तरिक्षे श्वसन्तं वायुमाहुः। सूर्यस्य ब्रह्मणोऽनन्यत्वेन सर्वात्म्यमुक्तं भवति। अत्र ये केचिदग्निः सर्वा देवता इत्यादिश्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्त्वाग्नेरेव सर्वात्म्यप्रतिपादकोऽयं मन्त्र इति वदन्ति। तत्पक्षे प्रथमोऽग्निशब्द उद्देश्यः। तमग्निमुद्दिश्येन्द्राद्यात्मकत्वकथनम्। अयं मन्त्रो निरुक्ते एवं व्याख्यातः। इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्ति इन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम्। दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा (नि० ७. १८.) इति ॥ ४६ ॥

वर्षकामेष्ट्यां तिस्रः पिण्डी होतव्याः। तत्र कृष्णं नियानमिति तृतीयस्यानुवाक्या। कृष्णं नियानं हरयः सुपर्णा नियुत्वन्तो यामजितो यथा नरः (आ० २. १३.) इति ॥—

॥ सैषा सप्तचत्वारिंशी ॥

कृष्णं नियानं हरयः सुपर्णा

अपो वसाना दिवमुत्पतन्ति ।

त आववृत्रन्त्सदनादृतस्या-

दिद्घृतेन पृथिवी व्युद्यते ॥ ४७ ॥

कृष्णं कृष्णवर्णं नियानं नियमेन गच्छन्तं मेघं हरय उदकस्य हर्तारः सुपर्णाः शोभनपतना रश्मयोऽपो वसाना उदकानि वासयन्तो मेघेषु । अद्भिर्मेघान्पूरयन्त इत्यर्थः ॥ अन्तर्भावितण्यर्थाद्द्विकर्मकत्वम् ॥ यद्वा कृष्णं नियानम् । नियमनं रात्रिः । देवानां हि रात्रिर्दक्षिणायनम् । तत्प्रति । तस्मिन् वर्षकाले इत्यर्थः । एवं कुर्वन्तो दिवं द्युलोकं तदाश्रितमादित्यं वोद्दिश्योत्पतन्ति । ऊर्ध्वं गच्छन्ति । ते रश्मय ऋतस्य सदनात् उदकस्य स्थानादादित्यमण्डलादाववृत्रन् । आवर्तन्ते । अर्वाञ्च आगच्छन्ति । आदित् अनन्तरमेव यदार्वाग् गच्छन्ति तदानीमेव घृतेनोदकेन पृथिवी व्युद्यते । विविधं क्लिद्यते ॥ कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मय इत्यादि निरुक्तं द्रष्टव्यम् ( नि० ७. २४, ) ॥ ४७ ॥

॥ अथाष्टचत्वारिंशी ॥

द्वादश प्रधयश्चक्रमेकं

त्रीणि नभ्यानि क उ तच्चिकेत ।

तस्मिन्त्साकं त्रिशता न शङ्कवो-

ऽर्पिताः षष्टिर्न चलाचलासः ॥ ४८ ॥

द्वादश एतत्संख्याकाः प्रधयः परिधयः । प्रहिता वर्तन्ते । तत्स्थानीया द्वादश मासा एकमद्वितीयं चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रमाश्रिताः । तथा त्रीणि त्रिसंख्याकानि नभ्यानि नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यान्याश्रितानि । यथा सूर्यरथचक्रस्य द्वादश परिधयो नाभ्यरिहाणि त्रीणि फलकानि सन्ति तद्वत्कालचक्रस्यापि । क उकोऽपि महान् तच्चक्रं चिकेत । जानाति । तस्मिंश्चक्रे साकं सह शङ्कव इव । अत्र पुरस्तादुपचारोऽपि नशब्दः सामर्थ्यादुपमार्थीयः । तस्मिन्नपि संवत्सरचक्रे त्रिशता एतत्संख्याकाः षष्टिर्न । नशब्दश्चार्थे । षष्टिश्चारा अरस्थानीयान्यहान्यर्पिता । अर्पितानि । कीदृशानि तानि । चलाचलासः । एकश्चलशब्दो द्विर्भावमाप्तः । चलाः चलनस्वभावानीत्यर्थः ॥ चरिचलिपतिवदीनामच्याक् चाभ्यासस्य ( पा० ६. १. १२. २. ) इति द्विर्वचनमागागमश्च ततोऽसुक् । षष्टिश्च ह वै त्रीणि च शतानि संवत्सर-

स्याह्वानीति ब्राह्मणम्। द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानादित्यादि निरुक्तम् ( नि० ४, २७. ) ॥ ४८ ॥

प्रवर्ग्येऽभिष्टवे यस्ते स्तन इत्येका। सूचितं च। यस्ते स्तनः शशयो यो मयोभूर्गौरमीमेदनु वत्सं मिषन्तम् ( आ० ४. ७. ) इति ॥ एषैव सारस्वते पशौ हविषो याज्या। सूचितं च। यस्ते स्तनः शशयो यो मयोभूस्त्वं सोम प्र चिकितो मनीषेति द्वे ( आ० ३. ७. ) इति ॥—

॥ सैषैकोनपञ्चाशी ॥

यस्ते स्तनः शशयो यो मयोभू-

र्येन विश्वा पुष्यसि वार्याणि।

यो रत्नधा वसुविद्यः सुदत्रः

सरस्वति तमिह धातवे कः॥ ४९ ॥

हे सरस्वति ते तव सम्बन्धी यः स्तनः स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारो लौकिकवैदिकसुशब्दरूपः स्तनः शशयः शयानः। तव देहे वर्तमानः। यश्च स्तनो मयोभूः। रसास्वादिनां सुखस्य भावयिता। येन स्तनेन विश्वा सर्वाणि वार्याणि वरणीयान्यभिमतरूपाणि धनानि पुष्यसि भोक्तृभ्यः। यश्च स्तनो रत्नधा बहुविधरमणीयरत्नानां धारयिता वसुवित् वसूनां वासयितॄणां धनानां वेत्ता लब्धा वेदयिता वा। किञ्च

यः स्तनः सुदत्रः शोभनदानः। सुदत्रः कल्याणदान इति निरुक्तम् (६. १४.)। अत्रासत्त्वद्यच्छब्दश्रवणं स्तनस्यातिप्रशस्तत्वज्ञापनार्थम्। हे देवि तं तादृशं सर्वप्राण्युपकारकं सूक्तमयं स्तनमिहास्मिन् कर्मणीदानीं वा धातवेऽस्माभिर्धातुं पातुं पानाय कः। कुरु ॥ ४९ ॥

अग्निमन्थने यज्ञेन यज्ञमित्येषा परिधानीया। यज्ञेन यज्ञमयजन्त देवा इति परिदध्यात् ( आ० २. १६. ) इति सूत्रितत्वात् ॥—

॥ सैषा पञ्चाशी ॥

यज्ञेन यज्ञमयजन्त देवा-

स्तानि धर्माणि प्रथमान्यासन्।

ते ह नाकं महिमानः सचन्त

यत्र पूर्वे साध्याः सन्ति देवाः ॥ ५० ॥

देवा व्यवहर्तारो यजमाना यज्ञेन निर्मथ्याग्निना यज्ञं होमसाधनमाहवनीयमयजन्त। पूजितवन्तः। अनुष्ठानाय संयोजितवन्त इत्यर्थः। अग्निं मथित्वा प्रहरति तेनैवाग्निनातिथ्यं चियत इति हि तैत्तिरीयकम्। तानि धर्माण्यग्निसाधनानि कर्माणि प्रथमानि। प्रथम इति मुख्यनाम। प्रतमानि

प्रकृष्टतमान्यासन्। फलप्रसवसमर्थान्यभवन्नित्यर्थः। ते ह ते च यजमाना नाकम्। नास्मिन्नकमस्तीति नाकः स्वर्गः। तं महिमानो माहात्म्ययुक्ताः सचन्त। सङ्गताः। कीदृशं नाकम्। यत्र यस्मिन्नाके पूर्वे पूर्वतनाः साध्याः साधना यज्ञादिसाधनवन्तः कर्मदेवा इत्यर्थः। ते सन्ति। निवसन्ति। तं सचन्त। तस्मादिदानीमपि मनुष्यैरेवं कर्तव्यमित्यर्थः। यद्वा देवा इदानीं देवभागमापन्नाः पूर्वं यज्ञेनाग्निना पशुभूतेन यज्ञं यष्टव्यमग्निमयजन्त। पूजितवन्तः। अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्वं च द्रष्टव्यम्। अग्निः पशुरासीत्तमालभन्त तेनायजन्तेति श्रुतेः। शिष्टं पूर्ववत्। यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्या देवाः साधनाच्छन्दोऽभिमानिनः। आदित्या अङ्गिरसश्च साध्या देवा उच्यन्ते। छन्दांसि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजन्त। ते स्वर्गलोकमायन्नादित्याश्चैवेहासन्नङ्गिरसश्च। तेऽग्रेऽग्निनाग्निमयजन्त। ते स्वर्गं लोकमायन्निति ब्राह्मणम्। एते देवाः स्वर्गे सन्ति भवन्ति। स्वर्गप्राप्ता इत्यर्थः। यद्वा यज्ञेन ज्ञानादियज्ञेन यज्ञं विष्णुमयजन्त। पूजयन्ति। ते नाकं विष्णुलोकं महानुभावाः सचन्त। सङ्गच्छन्ते। यत्र पूर्वे साध्यादयो देवाः सन्ति तत्स्थानम्। अग्निनाग्निमयजन्त देवा इत्यादि निरुक्तमनुसन्धेयम् ( नि० १२. ४१. ) ॥ ५० ॥

॥ अथैकपञ्चाशी ॥

समानमेतदुदकमुच्चैत्यव चाहभिः।

भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥ ५१ ॥

एतत्प्रसिद्धमुदकं समानम्। एकरूपमित्यर्थः। अहभिः केश्चिद्दहोभिर्ग्रीष्मकालीनैरुच्चैति। ऊर्ध्वं गच्छति। तथाहभिर्वर्षकालीनैरेव तदुदकमव चैति। अवाङ्मुखं च गच्छति। चवायोगे प्रथमेति प्रथमा विभक्तिर्न निहन्यते। रश्मिनाड्यैव भूमिं प्राप्नोति। तदेवोच्यते। पर्जन्याः प्रीणयितारो मेघा भूमिं जिन्वन्ति। उदकसंस्त्यायेन सस्याद्युत्पादनद्वारा भूमिष्ठान् प्रीणयन्ति। तथाग्नय आहवनीयाद्याः स्वे हुते दिवमादित्यादिद्युलोकस्थान्देवाञ्जिन्वन्ति प्रीणयन्ति ॥ ५१ ॥

सरस्वद्देवताके पशौ दिव्यं सुपर्णमिति वपायाज्या। दिव्यं सुपर्णं वायसं बृहन्तं स वाद्यचे नर्यौ योषणासु ( आ० ३. ८. ) इति सूत्रितत्वात्। अन्वारम्भणीयायां सरस्वद्यागे एषैव याज्या। सूत्रितं च। दिव्यं सुपर्णं वायसं बृहन्तमा सवं सवितुर्यथेति ॥ —

॥ सैषा द्विपञ्चाशी ॥

दिव्यं सुपर्णं वायसं बृहन्त-

मपां गर्भं दर्शतमोषधीनाम्।

अभीपतो वृष्टिभिस्तर्पयन्तं

सरस्वन्तमवसे जोहवीमि ॥ ५२ ॥

दिव्यं दिवि भवं सुपर्णं शोभनगमनं वायसं गमनशीलं बृहन्तं महान्तमपां गर्भं वृष्ट्युदकानां गर्भवदुत्पादकम्। ओषधीनामोषधीर्दर्शतं दर्शनाय दर्शयन्तमित्यर्थः। यद्वा ओषधीनां गर्भं दर्शतमिति पृथग्विशेषणम्। किञ्च अभीपत आनुकूल्येन वृष्टिभिस्तर्पयन्तम्। जगत्प्रीणयन्तम्। यद्वा अभीपतोऽभिगमनवतः सलिलाधारान् तटाकादीन् तर्पयन्तम्। अथवाभिगन्तारं सरस्वन्तमुदकवन्तम्। सर इत्युदकनाम। देवं सूर्यं वायसे रक्षणाय जोहवीमि। पुनःपुनराह्वयामि ॥ ५२ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-
श्रीवीरवुक्कभूपालसाम्राज्यधुरन्धरमाधवादेशतो
भगवत्सायणाचार्येण विरचिते
ऋग्वेदीय-शाकलशाखायाः संहिताभागस्य
प्रथममण्डल-द्वाविंशत्यनुवाकीयाष्टमसूक्तस्य
वेदार्थप्रकाशे नाम भाष्ये समाप्तम्॥

# ऋग्वेदस्य,

## शाकलशाखीयैतरेयब्राह्मणतः,

प्रथमपञ्चिकायाः प्रथमोऽध्यायः ।

तत्र,

## ॥ सायणभाष्यभूमिका ॥

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।  
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥  
यस्य निःश्वसिता वेदा यो वेदेभ्योऽखिलं जगत्—  
निर्ममे, त मह वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥  
तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।  
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥  
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।  
कृपालुर्माधवाचार्यो वेदार्थं वक्तु मुद्यतः ॥ ४ ॥

ननु कोऽयं वेदो नाम ? के वा तस्य विषयप्रयोजनसम्बन्धाधिकारिणः ? कथं वा तस्य प्रामाण्यम् ? न खल्वेतस्मिन् सर्वस्मिन् असति वेदो व्याख्यानयोग्यो भवति । अत्रोच्यते—

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिक मुपायं यो ग्रन्थो वेदयति स वेदः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते । अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्व मौषधादेरनिष्टपरिहारहेतुत्वं प्रत्यक्षतः सिद्धम्, स्वेनानुभविष्यमाणस्य पुरुषा-

न्तरगतस्य च तथानुमानगम्यम्। एवं तर्हि भाविजन्मगत मप्यनुमानगम्य मिति चेत्, न ; तद्विशेषस्यानभिगमात्। न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः—कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमु मर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति। तस्माद् अलौकिकोपायबोधको वेद इति लक्षणस्य नातिव्याप्तिः। अतएवोक्तम्—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता॥"—इति।

स एवोपायो वेदस्य विषयः। तद्बोध एव प्रयोजनम्। तद्बोधार्थी चाधिकारी। तेन सहोपकार्योपकारकभावः सम्बन्धः।

नन्वेवं सति स्त्रीशूद्रसहिताः सर्वेऽपि वेदाधिकारिणः स्युः। इष्टं मे स्यादनिष्टं मा भूदित्याशिषः सार्वजनीनत्वात्? मैवम्; स्त्रीशूद्रयोः सत्यप्युपायबोधार्थित्वे हेत्वन्तरेण वेदाधिकारस्य प्रतिबद्धत्वात्; उपनीतस्यैवाध्ययनाधिकारं ब्रुवच्छास्त्र मनुपनीतयोः स्त्रीशूद्रयोर्वेदाध्ययन मनिष्टप्राप्तिहेतुरिति बोधयति। कथं तर्हि तयोस्तदुपायावगमः? पुराणादिभिरिति ब्रूमः।

अतएवोक्तम्—

"स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
इति भारत माख्यानं मुनिना कृपया कृतम्॥"-इति।

तस्मादुपनीतैरेव त्रैवर्णिकैर्वेदस्य सम्बन्धः। तत्प्रामाण्यं तु बोधकत्वात् स्वत एव सिद्धम्। पौरुषेयवाक्यं तु बोधक मपि सत् भ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाण मपेक्ष्यैव प्रमाणम्। न तु वेदो मूलप्रमाण मपेक्षते; तस्य नित्यत्वेन कर्तृदोषशङ्काया अनुदयात्। एतदेव जैमिनिना सूत्रितम्—

"तत्प्रमाणं वादरायणस्यानपेक्षत्वात्"—इति ।

ननु वेदोऽपि कालिदासादिवाक्यवत्पौरुषेय एव; ब्रह्म-कार्यत्वश्रवणात्;—"ऋचः सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत"–इति हि श्रुतिः। अतएव भगवान् वादरायणः "शास्त्रयोनित्वात्"–इतिसूत्रेण ब्रह्मणो वेदकारणत्व-मवोचत्? मैवम्; श्रुतिस्मृतिभ्यां नित्यत्वावगमात्। "वाचा विरूपनित्यया"–इति श्रुतिः, "अनादि निधना नित्या वागु-त्सृष्टा स्वयम्भुवा"–इति स्मृतिः। वादरायणोऽपि देवताधिकरणे सूत्रयामास –"अतएव च नित्यत्वम्"–इति। तर्हि परस्पर-विरोध इति चेत्, न; नित्यत्वस्य व्यावहारिकत्वात्। सृष्टेरूर्ध्वं संहारात् पूर्वो व्यवहारकालः। तस्मिन्नुत्पत्तिविनाशादर्शनात्। कालाकाशादयो यथा नित्याः एवं वेदोऽपि व्यवहारे कालिदास-वाक्यवत् पुरुषविरचितत्वाभावान्नित्यः। आदिसृष्टौ तु काला-काशादिवद्वेदोत्पत्तिराम्नायते। अतो विषयभेदान्न परस्पर-विरोधः। ब्रह्मणो निर्दोषत्वेन वेदस्य कर्त्तृदोषासम्भवात् स्वतः सिद्धं प्रामाण्यं तदवस्थम्। तस्माल्लक्षणप्रमाणसद्भावात् विषयप्रयोजनसम्बन्धाधिकारिसद्भावात् प्रामाण्यस्य सुस्थितत्वात् वेदो व्याख्यातव्य एव॥

ननु वेदार्थावबोधे विध्यभावाद् बोधसाधनं व्याख्यानं व्यर्थ-मिति चेत्, न; अध्ययनविधेर्बोधपर्यवसायित्वात्। एतच्च भट्ट-गुरुमतानुसारिभिर्बहुधा प्रपञ्चितम्। आम्नायते च—

"यदधीत मविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।
स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।

योऽर्थज्ञ इत्सकलं भद्र मश्नुते नाक मेति ज्ञानविधूतपाप्मा ॥"

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च"-इति।

एवं तर्हि ज्ञानस्य पृथग् विधानादध्ययनं पाठमात्र मिति चेत्, अस्तु नाम ; वर्णयन्त्येव मेव शाङ्करदर्शनानुसारिणः ।

कर्तुर्विधिव्यतिरेकेणानुष्ठानान्यथानुपपत्त्या वेदार्थज्ञानस्य प्रापितत्वान्नैतद्विधेय मिति चेत्, तर्हि तद्विधिबलाद् वेदनमात्रेण स्वतन्त्रं किञ्चिदपूर्व मस्तु ; श्रूयते ह्यनुष्ठानज्ञानयोः स्वतन्त्रं पृथक् फलम्—"तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैन मेवं वेद"-इति । अल्पप्रयाससाध्येन वेदेन न तत्सिद्धौ बह्वायाससाध्य मनुष्ठानं व्यर्थ मिति चेत्, न ; तरणीयाया ब्रह्महत्यायाः मानसकायिकत्वादिभेदेन तारतम्योपपत्तेः । मनसा सङ्कल्पिता वाचाऽभ्यनुज्ञाता, परहस्तेन कारिता, स्वयङ्कृता, पुनःकृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्या अनेकविधा । अतस्तत्तरण मप्यनेकविधं यथा स्वर्गो बहुविधस्तद्वत् । 'अग्निहोत्रं जुहुयात् स्वर्गकामः', 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'ज्योतिष्टोमेन स्वर्गकामो यजेत'-इत्याद्युच्चावचकर्मणा मेकविधफलासम्भवात् । स्वर्गो बहुविध इति पापनिवृत्तेरपि बहुविधत्वाद् वेदनेनापि काचित् ब्रह्महत्या निवर्त्तत इति योग्यतानुसारेण कल्प्यताम् । किञ्च तत्तद्विधिसमीपे "य एवं वेद"-इतिवचनानि वेदनफलं ब्रुवते । तान्यर्थवाद इति चेत्, अस्तु नाम सहामहे एवैत मपराधम्, तेषां वचनानां विधेयार्थप्रशंसापरत्वात् । तर्हि 'यत्परो शब्दः स शब्दार्थः'-इति न्यायेन स्वार्थे प्रामाण्यं नास्तीति चेत्, महातात्पर्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयत्वानिवारणात् । 'ग्रावाणः प्लवन्ते'—इत्याद्यर्थवादस्यापि

स्वार्थे प्रामाण्यं प्रसज्येतेति चेत्, न ; प्रमाणान्तरबाधितत्वात् । 'द्विः सम्वत्सरस्य पच्यते'-इत्याद्यर्थवादस्य तु बाधाभावेऽप्यनुवादत्वात् न स्वार्थे प्रामाण्यम् । वेदे फलवचनानि तु नानुवादकानि, नापि बाधकानि, नापि बाध्यानि । तस्मादर्थवादत्वेऽप्यस्त्वेषां स्वार्थे प्रामाण्यम् ; अन्यथा मन्त्रार्थवादादिभ्यो देवादीनां विग्रहादिमत्त्वं न सिद्ध्येत् । अतएवोक्तम्—

"विरोधे गुणवादः स्या दनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥"-इति ।

किं बहुना विद्यत एवावश्यं वेदनमानादपूर्वम् । अतो वेदनाय वेदो व्याख्यायते ॥

तस्य च वेदस्य भागद्वयं कल्पसूत्रकारैरुदाहृतम्—"मन्त्रब्राह्मणयोर्वेदनामधेयम्"—इति । तत्र मन्त्रविचाराः संहिताव्याख्याने द्रष्टव्याः । ब्राह्मणलक्षणं तु द्वितीयाध्यायस्य प्रथमपादे विचारितम्—

"नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा ?
नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ।
मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः,
अन्यद् ब्राह्मण मितिग्तद्भवेद् ब्राह्मणलक्षणम् ॥"–इति ।

चातुर्मास्येष्विद माम्नायते—"एतद् ब्राह्मणान्येव पञ्च हवींषि"–इति । तत्र ब्राह्मणस्य लक्षणं नास्ति, कुतः ? वेदभागाना मियत्तावधारणेन ब्राह्मणभागेष्वन्यभागेषु च वाक्यलक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितु मशक्यत्वादिति चेत्, न ; भागद्वयाङ्गीकारेण मन्त्रव्यतिरिक्तो भागो ब्राह्मण मिति लक्षणस्य निर्दोषत्वात् । ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता

इतिहासादयो भागा आम्नायन्ते,—"यद् ब्राह्मणानि इति-हासान् पुराणानि कल्पान् गाथा नाराशंसीः"—इति ? मैवम्; विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवान्तरभेदाना मेवेतिहासा-दीनां पृथगभिधानात्। "देवासुराः संय्यता आसन्"—इत्यादय इतिहासाः। "इदं वा अग्रे नैव किञ्चनासीन्न द्यौरासीत्"-इत्या-दिकं जगतः प्रागनवस्थान मुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणम्। कल्पस्तु अरुणकेतुकचयनप्रकरणे समाम्नायते "इति मन्त्राः कल्पोऽत ऊर्ध्वं यदि बलिं हरेत्"—इति। अग्निचयने "गाथाभिः परिगायति"-इति विहिता मन्त्रविशेषा गाथाः। मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः। तस्मान्मन्त्र-ब्राह्मणव्यतिरिक्तवेदभागाभावान्मन्त्रव्यतिरिक्तं ब्राह्मण मितीर-तल्लक्षणं सुस्थितम्॥

तस्य लक्षणस्य "अग्निर्वै देवाना मवमः"—इत्यादिग्रन्थे विद्यमानत्वादिदं ब्राह्मणम्। तच्चेश्वरानुग्रहादितरायाः पुत्रेण लब्धत्वा दैतरेयक मित्युच्यते। महर्षीणां तत्तद्वेदभागलाभः स्मर्यते—'युगान्ते तर्हि तान्वेदान् सेतिहासान्महर्षयः। लेभिरे तपसा पूर्व मनुज्ञातान् स्वयंभुवः'—इति। प्रकृतस्य तु ब्राह्मणस्य ऐतरेयकत्वे सम्प्रदायविद एता माख्यायिका माचक्षते।—'कस्य चित् खलु महर्षेर्बह्व्यः पत्न्यो विद्यन्ते स्म। तासां मध्ये कस्या-श्चिदितरेति नामधेयम्। तस्या इतरायाः पुत्रो महिदासाख्यः कुमारः। एतच्चारण्यकाण्डे समाम्नायते—"एतद्ध स्म वै तद्वि-द्वान्महिदास ऐतरेयः"। तदीयस्य तु पितुर्भार्यान्तरपुत्रेष्वेव स्नेहातिशयः, न तु महिदासे। ततः कस्यां चिद्यज्ञसभायां स महिदास मवज्ञायान्यान् पुत्रान् स्वोत्सङ्गे स्थापयामास। तदानीं

खिन्नवदनं महिदास मवगतैतराख्या तन्माता स्वकीयकुलदेवतां भूमि मनुसस्मार। सा च भूमिर्देवता दिव्यमूर्त्तिधरा सती यज्ञ-सभायां समागत्य महिदासाय दिव्यं सिंहासनं दत्त्वा तत्रैन मुपवेश्य सर्वेष्वपि कुमारेषु पाण्डित्याधिक्य मवगमय्यैतद् ब्राह्मण प्रतिभासनरूपं वरं ददौ। तदनुग्रहात् तस्य महिदा-सस्य मनसा 'अग्निर्वै देवाना मवमः'–इत्यादिकं 'स्तृणुते'–इत्यन्तं चत्वारिंशदध्यायोपेतं ब्राह्मणं प्रादुरभूत्। तत ऊर्ध्वम् 'अथ महाव्रतम्'–इत्यादिकम् 'आचार्याः'-इत्यन्त मारण्यकव्रतरूपं च ब्राह्मण माविरभूत्'-इति।

तस्यैतरेयस्य प्रादुर्भूते चत्वारिंशदध्यायोपेते ब्राह्मणे चतुः-संस्थो ज्योतिष्टोमः प्रथमं विधीयते; ततो गवामयनम्; तत आदित्यानामयनम्; ततोऽङ्गिरसामयनम्; ततो द्वादशाहः; ततोऽन्यत्सर्वं प्रासङ्गिक मिति द्रष्टव्यम्। गोष्टोमायुष्टोमादिषु सोमयागेषु ज्योतिष्टोमस्य प्राथम्य मुक्तम्—"एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः"–इति श्रुतेः। तस्य ज्योतिष्टोमस्य सप्तसंस्थोपेतस्याग्निष्टोम उक्थ्यः षोडश्यतिरात्रश्चे त्येताश्चतस्रः संस्थाः अत्रानुक्रमेण वक्ष्यन्ते। तस्मिन्नपि चतुष्टये अग्निष्टोमः प्रकृतिः; कृत्स्नस्यानुष्ठेयस्य तस्मिन्नग्निष्टोमे प्रत्यक्षश्रुत्यैवोपदिष्ट-त्वात्। 'प्रकर्षेण क्रियते साकल्येनानुष्ठेय मुपदिश्यते यस्यां सा प्रकृतिः'—इति हि तच्छब्दव्युत्पत्तिः। उक्थ्यादयस्तु विकृतयः; विशेषस्यैव तत्र प्रत्यक्षोपदेशेन सम्पादितत्वात्। अवशिष्टं तु सर्वं मनुष्ठेयं 'प्रकृतिवद्विकृतिः कर्त्तव्या'—इति न्यायेनैव सम्पाद्यते। अतएवोपजीव्यत्वादग्निष्टोम एवादौ वक्तव्यः।

यद्यपि तस्याग्निष्टोमस्य प्रक्रमेऽवश्य मृत्विग्वरणं वक्तव्यम्;

'सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीत'—इत्याप-स्तम्बेनाभिधानात्, तथापि ऋग्वेदस्य हौत्रवक्तव्यप्रतिपाद-कत्वात्,—ऋत्विग्वरणस्य तु हौत्रत्वाभावात्तदपेक्ष्येष्टिरादौ विधीयते। ऋग्वेदस्य हौत्रत्वं समाख्याबलात् तृतीयाध्यायस्य तृतीयपादे विचारितम्।—

"वेदत्रयोक्तधर्म्माणां कृत्विग्भिः सङ्करस्त्रिभिः,
अनित्यो नित्या वाऽनियतिर्वाऽनिरूपणात् ?
हौत्रत्वादि समाख्यानं नियतेर्गमकं स्वतः।
निर्बाधं चान्यवत्तच्च तेनात्र विनियोजकम् ॥"—इति।

याज्यापुरोनुवाक्यादयो धर्मा ऋग्वेदे प्रोक्ताः, दोहननिर्वा-पादयो यजुर्वेदे, आज्यस्तोत्रपृष्ठस्तोत्रादयः सामवेदे, तत्र-स्यैते धर्मा इति नियामकस्य दुर्निरूपत्वादेकेन केनाप्यृत्विजा यः कोऽपि धर्म्म इच्छया सङ्कीर्य्यत इति चेत्, मैवम् ; हौत्र माध्वर्यव मौद्गात्र मिति समाख्यानेन नियतिर्बोध्यते ; न च समाख्यानस्य बाधकं किञ्चित्पश्यामः। तस्मादबोधकत्वबाधितत्वयोरप्रामाण्य-कारणयोरभावाच्छ्रुतिलिङ्गादिपञ्चकवत्प्रमाणेन समाख्यानेन धर्म्मा व्यवस्थाप्यन्ते ॥

नन्विष्टेरप्यध्वर्य्युकर्तृकत्वाद्यजुर्वेदे कर्तव्यता, न त्वत्रेति चेत्, सत्यम्। तथापीष्टिगतयोर्याज्यानुवाक्ययोर्हौत्रत्वेनात्र वक्त-व्यत्वादिष्टेरनुक्तौ याज्यानुवाक्ये कुत्रत्ये इति विशेषसम्बन्धस्य ज्ञातु मशक्यत्वात् तदवबोधाय प्रथम मिष्टिर्विधातव्या ॥

— — —

॥ अथ प्रथमखण्डः ॥

॥ ॐ ॥

अग्निर्वै देवाना मवमो विष्णुः परम स्तदन्तरेण सर्वा अन्या देवता आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीय मेकादशकपालं सर्वाभ्य एवैनं तद्देवताभ्यो ऽनन्तरायं निर्वपन्त्यग्निर्वै सर्वा देवता विष्णुः सर्वा देवता एते वै यज्ञस्यान्त्यो तन्वौ यदग्निश्च विष्णुश्च तद्यदाग्नावैष्णवं पुरोडाशं निर्वपन्त्यन्तत एव तद्देवान्नुभुवन्ति तदाहुर्यदेकादशकपालः पुरोडाशो द्वा वग्नाविष्णू कैनयोस्तत्र क्लृप्तिः का विभक्तिरित्यष्टाकपाल आग्नेयोऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्द-स्त्रिकपालो वैष्णवस्त्रिर्हीदं विष्णुर्व्यक्रमत सैनयोस्तत्र क्लृप्तिः सा विभक्तिर्घृते चरुं निर्वपेत यो ऽप्रतिष्ठितो मन्येतास्यां वाव स न प्रतितिष्ठति यो न प्रतितिष्ठति तद्यद्घृतं तत् स्त्रियै पयो ये तण्डुलास्ते पुंसस्तन्मिथुनं मिथुनेनैवैनं तत् प्रजया पशुभिः प्रजनयति प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेदारब्धयज्ञो वा एष आरब्धदेवतो यो दर्शपूर्णमासाभ्यां यजत आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेतैषो एका दीक्षा सप्तदश सामिधेनी रनुब्रूयात् सप्तदशो वै प्रजापति

**द्वादश मासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन तावान्त्संवत्सरः संवत्सरः प्रजापतिः प्रजापत्यायतनाभिरेवाभो राध्नोति य एवं वेद ॥ १ ॥**

अतस्तामिष्टिं विधातुं तद्देवतारूपमग्निं विष्णुञ्चादौ प्रशंसति—"अग्निर्वै देवानामवमो विष्णुः परम स्तदन्तरेण सर्वा अन्या देवताः"—इति। योऽयम् 'अग्निः' अस्ति, सोऽयं देवतामध्ये 'अवमः' प्रथमो द्रष्टव्यः। यस्तु 'विष्णुः' सोऽयं 'परमः' उत्तमः, 'वै' शब्द उक्तार्थे मन्त्रप्रसिद्धिद्योतनार्थः। "अग्निर्मुखं प्रथमो देवतानां सङ्गतानामुत्तमो विष्णुरासीत्"—इति हि मन्त्र आम्नायते। यद्वा 'वै' शब्द उपपत्तिप्रसिध्यर्थः। उपपत्तिश्चैवं योजनीया—यद्यपि देवशब्दः साधारणत्वात् सर्वदेवतावाची, तथाप्यत्र प्रकरणबलादग्निष्टोमाङ्गेषु शास्त्रेषु प्रतीयमानाः प्रधानदेवता विवक्ष्यन्ते। शस्त्राणि च द्वादश। तेष्वाज्यशस्त्रं प्रथमम्; तस्मिंश्च 'भूरग्निर्ज्योतिरित्यग्निराम्नातः। अग्निमारुतं शस्त्रमन्तिमम्; तस्मिन् 'विष्णोर्नुकमिति विष्णुराम्नातः। एव मग्निष्टोमसंस्थायां शस्त्रपाठापेक्ष मग्नेः प्राथम्यं विष्णोरुत्तमत्वं च। यद्वा, सर्वासु संस्थासूक्तन्यायेनाग्नेः प्राथम्यम्; विष्णोरुत्तमत्व मन्तिमसंस्थाया मासोर्यामाख्यायां त्रयस्त्रिंशत्स्तोत्रशस्त्रोपेताया मन्तिमं स्तोत्रं शस्त्रं च वैष्णव मिति तदपेक्षया द्रष्टव्यम्। यद्वा, प्रथमायां दीक्षणीयेष्टावग्निरिज्यते; अन्तिमाया मुदवसानीयेष्टौ वैष्णवी पूर्णाहुतिर्वाजसनेयिभिराम्नाता। सर्वथापि स्तोतव्यान् यष्टव्यांश्च देवानपेक्ष्याग्नेः प्राथम्यं विष्णोरुत्तमत्वं च युक्तम्। 'तदन्तरेण' तयोः प्रथमोत्तमयोरग्नाविष्णोर्मध्ये तत्तच्छस्त्रप्रतिपाद्याः 'अन्याः'

इन्द्रवाय्वादयः 'सर्वाः' 'अप्रधानदेवताः'। देवताना मुभयतो रथचक्रवदवस्थिता वग्नाविष्णू प्रशस्ता वित्यर्थः ॥

सौमिकेषु यष्टव्यासु स्तोतव्यासु च सर्वासु देवतास्वग्नाविष्णू प्रशस्य तद्देवताका मिष्टिं विधत्ते—"आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीय मेकादशकपालम्"—इति। अग्निश्च विष्णुश्चाग्नाविष्णू ता वुभौ परस्परव्यासक्तौ यस्य पुरोडाशस्यैका देवता सोऽय माग्नावैष्णवः; यथोक्तदेवतां प्रति हविष्ट्वेन प्रदेयद्रव्यरूपः पक्वः पिष्टपिण्डः पुरोडाश इतुच्यते। डकारस्यात ठकारः एतच्छाखाध्ययनसम्प्रदायेन प्रापितः। शकटावस्थापितव्रीहिसङ्घान्निष्कृष्य मुष्टिचतुष्टयपरिमितानां व्रीहीणां शूर्पे प्रक्षेपो निर्वापः। तत्र तत्पूर्वको यागोऽत्र निर्वापेणोपलक्ष्यते। 'आग्नावैष्णवं पुरोडाश मिति सामानाधिकरण्येनावगतस्य द्रव्यदेवतासम्बन्धस्य याग मन्तरेणानुपपन्नत्वात्, सति तु यागे सम्बन्ध उपपद्यते; उद्दिश्य देवतां द्रव्यत्यागो यागो विधीयत इति यागलक्षणस्य पूर्वाचार्यैरुक्तत्वात्। 'निर्वपन्तीति शब्दो न वर्तमानार्थः किन्तु विध्यर्थः। स च लकारो 'लिङर्थे लेडिति सूत्रेण विध्यर्थो द्रष्टव्यः एवञ्च सति शाखान्तरेण संवादो भवति। तथाच तैत्तिरीया विस्पष्टं विधि मामनन्ति—"आग्नावैष्णव मेकादश कपालं निर्वपेद्दीक्षिष्यमाणः"—इति। तत्रैकप्रयोगापेक्ष मेक वचनम्; अत्र तु बहुप्रयोगगतं वा यजमानबहुत्व मपेक्ष्य निर्वपन्तीति बहुवचनम्। यद्वा छान्दसो वचनव्यत्ययः। सोमयागे प्रवृत्तस्य यजमानस्य संस्कारो दीक्षा, तस्य च संस्कारस्य हेतुः कर्मविशेषो दीक्षणीयशब्दवाच्यः। तस्य च कर्मविशेषस्य वाचकेन शब्देन तत्कर्मसाधन मुपलक्ष्यते। ततो दीक्षणीयाख्यकर्म-

साधनं पुरोडाश मिति सामानाधिकरण्य मुपपन्नम् । एकादशसु कपालेषु संस्कृतः पुरोडाशः एकादशकपालः ॥

अत्र प्रथमोत्तमयो रग्नाविष्ण्वोः पुरोडाशदेवतात्वे फलितं दर्शयति—"सर्वाभ्य एवैनं तद्देवताभ्यो ऽनन्तरायं निर्वपन्ति"—इति। 'तत्' तेनाग्नावैष्णवत्वेन तयोरग्नाविष्ण्वोर्मध्यवर्तिनीनां सौमिकीनां सर्वासां देवताना मुपलक्षितत्वात् 'अनन्तरायं' निरवशेषं काचिदपि देवता विशिष्टा यथा न भवति तथैनं पुरोडाशं यजमानाः 'निर्वपन्ति' एव। अनेन निर्वापेण सर्वा देवता तृप्यन्तीत्यर्थः। यथा वैय्याकरणाः प्रत्याहारेष्वाद्यन्तयोर्वर्णयोर्ग्रहणेन मध्यपातिनां सर्वेषां वर्णानां ग्रहण मिच्छन्ति ; न्यायस्तदीय एवं व्यवक्रियते-'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति। यथा वा लोके भुञ्जानाना मेकपंक्तावुपविष्टाना माद्यन्तयोः ब्राह्मणयोः परितोषेण मध्यवर्त्तिनः सर्वे परितुष्टा इति निश्चितम् ; तद्वदन्द्रष्टव्यम् ॥

नन्वग्नाविष्ण्वोरेव निर्वापसम्बन्धः श्रूयते न तु मध्यवर्तिदेवतानां तत्कथं तासां तृप्तिरित्याशङ्का तत्सिद्ध्यर्थं तयोरेव सर्वदेवतान्तर्भाव दर्शयति—"अग्निर्वै सर्वा देवता विष्णुः सर्वा देवताः"—इति। अग्नेः सर्वदेवतारूपत्वे श्रुत्यन्तरप्रसिद्धिद्योतनार्थो वै-शब्दः। तथा च तैत्तिरीयाः पौरोडाशिके काण्डे समामनन्ति—"ते देवा अग्नौ तनूः समदधत तस्मादाहुरग्निः सर्वा देवता इति"—इति। सौमिकेऽपि काण्डे श्रूयते—"देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशत तस्मादाहुरग्निः सर्वा देवता इति"—इति। 'विष्लृ व्याप्ता'वित्यस्माद्धातोरुत्पन्नो विष्णुशब्दः। व्याप्तिश्च सर्वजगदुपादानकारणत्वेन

सर्वात्मकत्वादुपपद्यते। अतएव स्मरन्ति—"भूतानि विष्णु-र्भुवनानि विष्णुरिति ॥

सर्वदेवतात्मकत्वेनाग्नाविष्णू प्रशस्य प्रकारान्तरेण पुनः प्रशंसति—"एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च तद्यदाग्ना-वैष्णवं पुरोडाशन्निर्वपन्त्यन्तत एव तद्देवानृध्नुवन्ति"—इति। अग्निश्च विष्णुश्चेत्यनयोर्देवतयोर्यत् शरीरद्वय मस्ति 'एते' उभौ 'तन्वौ' 'यज्ञस्यान्त्ये', सोमयागस्यादावन्ते च वर्त्तमाने। आद्या चान्त्या चेति विवक्षाया मेकशेषेणान्त्ये इति भवति; यथा माता च पिता चेत्यत्र पितराविति एकशेषः, तद्वत्। आद्यन्तवर्त्तित्वं चाग्निर्वै देवाना मवम इत्यत्रैवोपपादितम्। 'तत्' तथा सत्या-द्यन्तवर्तित्वे सति तादृशदेवताकं 'पुरोडाशं निर्वपन्ति'—इति यदस्ति' 'तत्' तेन यथोक्तनिर्वापेण 'अन्ततः' यागस्यादावन्ते च 'देवान्' सर्वान् 'ऋध्नुवन्त्येव' परिचरन्त्येव। त मेतं सार्थवादं दीक्षणीयेष्टिविधिं तैत्तिरीया अपि विस्पष्ट मामनन्ति—आग्ना-वैष्णव मेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञांश्चारभते ऽग्निरवमो देवानां विष्णुः परमो यदाग्नावैष्णव मेकादशकपालं निर्वपति देवता एवो-भयतः परिगृह्य यजमानो ऽवरुन्धे"—इति।

इदानीं यथोक्तविधौ ब्रह्मवादिचोद्य मुद्भावयति—"तदा हुर्यदेकादशकपालः पुरोडाशो द्वावग्नाविष्णू कैनयोस्तत्र क्लृप्तिः का विभक्तिरिति"—इति। 'तत्' तत्र कपालसङ्ख्यायां ब्रह्मवादिनः 'आहुः' चोदयन्ति। एकादशसु कपालेषु संस्कृतः पुरोडाशः एक मेव द्रव्यम्, तस्य भोक्तारौ 'द्वौ' देवौ। अनयोः द्वयोः सम-प्रधानत्वेन विषमांशस्यायुक्तत्वात् तत्र द्रव्ये 'का क्लृप्तिः' विभाग-

कल्पनानिमित्तं किं स्यात् ? 'का विभक्तिः' निमित्तविशेषाभावे नैमित्तिको विभागविशेषः कथं घटेत ? 'इति'—शब्दश्चोद्यसमाप्त्यर्थः ॥

ब्रह्मवादिष्वेव मध्ये अभिज्ञानां चोद्यपरिहार मुद्भावयति—"अष्टाकपाल आग्नेयो अष्टाक्षरा वै गायत्री गायत्र मग्नेश्छन्दस्त्रिकपालो वैष्णवस्त्रि हीदं विष्णुर्व्यक्रमत सैनयोस्तत्र क्लृप्तिः सा विभक्तिः"—इति। अष्टसु कपालेषु संस्कृतः पुरोडाशभागोऽग्नेः सम्बन्धी। स च सम्बन्धः छन्दोद्वारा द्रष्टव्यः। गायत्र्याख्यं छन्दोऽग्नेः सम्बन्धि तयोरग्निगायत्र्योः प्रजापतिमुखजन्यत्वसाम्यात् एतच्च मुखजन्यत्वं तैत्तिरीयाः सप्तमकाण्डे पठन्ति—"प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत त मग्निर्देवतान्वसृज्यत गायत्रीच्छन्दः"–इति। तस्याश्च गायत्र्याः पादाक्षरेष्वष्टत्वं संख्या दृश्यते। सोऽयं यथोक्तपुरोडाशभागस्याग्नेश्च सम्बन्धः। त्रिषु कपालेषु संस्कृतः पुरोडाशभागो विष्णोः सम्बन्धी। "हि" यस्मात् कारणाद्विष्णुरिदं सर्वं जगत् 'निर्व्यक्रमत्' त्रिरावृत्तेन स्वकीयपादविक्षेपेण व्याप्तवान्। तथा च मन्त्र आम्नायते—"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्"—इति, "त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्य"—इति च। 'सा' यथोक्ता अष्टसंख्या त्रिसंख्या च 'एनयोः' देवयोः 'तत्र' पुरडाशे 'क्लृप्तिः' विभागकल्पनाहेतुः। तदनुसारेण 'विभक्तिः' तादृशो विभागो अवगन्तव्यः।

इत्थं सार्थवादेन विधिना दीक्षणीयेष्टिं विधाय तस्यामेवेष्टौ प्रतिष्ठाकामस्य पुरोडाश मपोद्य द्रव्यान्तरं विधत्ते—"घृते चरुं निर्वपेत यो ऽप्रतिष्ठितो मन्येत"—इति। घृतादि

प्रजया गवादिपशुभिश्च रहितत्व मप्रतिष्ठितत्वं तादृशोऽह मिति मन्यमानः यजमानः प्रतिष्ठार्थं घृतेन तण्डुलैश्चरुं निष्पादयेत् ॥

अप्रतिष्ठितस्यात्यन्तिकं दोषत्वं दर्शयति—"अस्यां वाव स न प्रतितिष्ठति यो न प्रतितिष्ठति"—इति। यो यजमानः प्रजापशुरूपया प्रतिष्ठया वर्जितः, सोऽस्यां वाव कृत्स्नाया मप्येतस्यां भूमौ 'न प्रतितिष्ठति' श्लाघ्यो न भवति। तस्मादप्रतिष्ठा परिहर्तव्येत्यर्थः ॥

घृताचरणात् तत्परिहारं दर्शयति—"तद्यद्घृतं तत् स्त्रियै पयो ये तण्डुलास्ते पुंसस्तन्मिथुनेनैवैनं तत्प्रजया पशुभिः प्रजनयति प्रजात्यै"—इति। 'तत्' तत्र 'घृतम्' चरौ 'यद्' घृत मस्ति, 'तत्' 'स्त्रियै पयः' स्त्रियाः शोणितम्; द्रवत्वसाम्येन पयःशब्दः शोणित मुपलक्षयति, विलीनस्य घृतस्य ईषद्रक्तत्वसाम्येन योषिद्बीज मुपचर्यते। चरौ 'ये तण्डुलाः' सन्ति, 'ते पुंसः' रेतः इति शेषः। श्वेतत्वं तत्र साम्यम्। 'तद्' घृततण्डुलोभयात्मकं चरुं द्रव्यं मिथुनसदृशम् 'तत्' तस्मात्कारणात् मिथुनरूपेणैव चरुद्रव्येणैव 'एनं' यजमानं पुत्रादि-'प्रजया' गवादि-'पशुभिः' च 'प्रजनयति' प्रवर्धयति। तस्मादिदं चरुद्रव्यं 'प्रजात्यै' प्रजननाय दीक्षणीयाया स्तन्त्रम् ॥

"प्रजायते प्रजया पशुभिर्य एवं वेद"—इति। तावेतौ पुरोडाशचरुपक्षौ वापस्तम्बेन दर्शितौ—"प्रक्रमयत्याग्नावैष्णव मेकादशकपाले निर्वपत्याग्नावैष्णवं वा घृते चरुं पुरोडाशो ब्रह्मवर्चसकामस्य घृते चरुः प्रजाकामस्य वादित्ये घृते चरुं द्वितीयं पशुकामस्यैके समामनन्ति"—इति ॥

उक्ताया दीक्षणीयेष्टेः कालं विधत्ते—"आरब्धयज्ञो वा एष आरब्धदेवतो यो दर्शपूर्णमासाभ्यां यजत आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेतैषो एका दीक्षा"—इति। 'यः' पुमान् 'दर्शपूर्णमासाभ्यां यजते' तेन सर्वोऽपि यज्ञः प्रारब्धः; सर्वस्य तदपेक्षत्वात्। सोमयागस्य दर्शपूर्णमासविकृतित्वाभावे ऽप्यङ्गादीनां दीक्षणीयाप्रायणीयादीनाम् इष्टीनां तद्विकृतत्वात् अस्ति तदपेक्षा। अग्निहोत्रस्य तदङ्गानां च तन्निरपेक्षत्वेऽप्याहवनीयाद्यग्निसापेक्षत्वादग्नीनां च पवमानेष्टिसाध्यत्वादिष्टीनां दर्शपूर्णमासविकृतित्वादस्ति परम्परया तदपेक्षा। अतस्तदनुष्ठानेन सर्वस्यापि यज्ञस्य प्रारम्भः सिध्यति। यद्यपि यज्ञारम्भेणैव तदीयदेवतानां पूजयितु मारम्भः सिद्ध एव, तथापि प्राधान्यख्यापनार्थ मारब्धदेवत इति पुनर्देवताभिधानम्। यस्माद् दर्शपूर्णमासयाजिना सर्वोऽपि यज्ञ आरब्धप्रायः, अतएव देवतानां पूजा प्रारब्धप्राया। तस्मादारब्धस्य सोमयागस्यानुष्ठेयत्वाद् दर्शपूर्णमासानुष्ठानादूर्ध्वं 'दीक्षेत' दीक्षणीयेष्टिं कुर्यात्। अमावास्याकाले कर्तव्यं हवि रामावास्यम्, तद्वत् पौर्णमासञ्च हविःशब्दोऽत्र यज्ञ मुपलक्षयति। वा-शब्दौ समुच्चयार्थौ। अमावास्यादिसम्बन्धिना पौर्णमासीसम्बन्धिना च यज्ञेनेष्ट्वा दीक्षेत। उक्तार्थ एव तस्मिन्नित्यादिना प्रपञ्च्यते। हविःशब्दवत् बर्हिःशब्दोपि यज्ञोपलक्षकः। तस्मिन्नामावास्याख्ये हविषि यज्ञे, तस्मिन् पौर्णमासाख्ये बर्हिषि यज्ञे, अनुष्ठिते सति पश्चादेव दीक्षेत। तदाह आश्वलायनः—"दर्शपूर्णमासाभ्या मिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन"—इति; यजेतेति शेषः। इष्टिराग्रय-

मेष्टिः। पशुर्निरूढपशुबन्धः। आपस्तम्बोऽप्याह—"अथ दर्शपूर्णमासावारभते, ताभ्यां सञ्चर मिष्ट्वा सोमेन पशुना वा यजते"—इति। एतच्छब्दादुत्तर उकारोऽपिशब्दपर्यायः; एषाप्येका दीक्षा। एव मुक्ते सत्यन्यापि काचिद्दीक्षास्तीति सूचितं भवति। अतएव आश्वलायनः इष्टिपूर्वत्वं चेतुरभौ पक्षावुदाजहार—"ऊर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके प्रागपि सोमिनैके"—इति। उपपत्तिः द्रव्यादिसम्पत्तिस्ता मनतिक्रम्येति यथोपपत्तिः। दर्शपूर्णमासाभ्या मूर्ध्वं द्रव्यादिसम्पत्तौ सत्यां सोमेन यजेतेति केषांचिन्मतम्। ताभ्यां प्रागपि सम्पत्तौ सोमयाग इत्यपरेषां मतम्। तैत्तिरीयास्त्विष्टिपूर्वत्व मभिप्रेत्य वसन्तादिकालविशेषेष्वाधान माम्नाय पुनः सोमपूर्वत्व मभिप्रेत्य कालनियम मन्तरेणाधान मभिप्रेत्य वसन्तादिकालविशेषप्रतीक्षां वारयति—"नर्तून्त्सूर्क्ष्येन्न नक्षत्रम्"—इति। तस्मात् पक्षद्वयम्॥

चोदकप्राप्तां पञ्चदशसंख्या मपवदितुं संख्यान्तरं विधत्ते—"सप्तदश सामिधेनीरनुब्रूयात्"—इति। 'प्र वो वाजा अभिद्यवः'-इत्याद्या एकादश संख्याका ऋचो वह्निसमिन्धनहेतुत्वात्सामिधेन्य इत्युच्यन्ते। तासु "त्रिः प्रथमा मन्वाह त्रिरुत्तमाम्"—इतिवचनात् ताः पञ्चदश सम्पद्यन्ते। प्रकृतावेव विहितासु पञ्चदशस्वृक्षु चोदकप्राप्तासु ये समिध्यमानसमिद्धवत्यौ द्वे ऋचौ तयोर्मध्ये धाय्याभिधेये ऋचौ प्रक्षेप्तव्ये। तथाच आश्वलायनः—"दीक्षणीयायां धाय्ये विराजौ"—इति। तत्र, 'पृथुपाजा अमर्त्यः'—इत्येका, 'तत्सबाधो यत स्रुचः'—इति द्वितीया। एतच्च प्रयोगसंग्रहकारेणोदाहृतम्—"अथ दीक्षणीयायां धाय्ये भवतः शोचिष्केशस्तमीमहे पृथुपाजास्तत्सबाधः"

—इति। "अग्नये समिध्यमानायानुब्रूहि"—इत्येवमध्वर्युणा प्रेषितो होता सामिधेनीः सप्तदश अनुब्रूयात् ॥

तामेतां संख्यां प्रशंसति—"सप्तदशो वै प्रजापतिर्द्वादश मासाः पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन तावान्त् संवत्सरः संवत्सरः प्रजापतिः"—इति। सप्तदश चावयवा यस्य प्रजापतेः सोऽयं सप्तदशः। तस्मिन्नर्थे वैशब्दोक्तप्रसिद्धिर्द्वादशेत्यादिना स्पष्टीक्रियते। चैत्राद्या मासा द्वादश प्रसिद्धाः। यद्यपि षड् ऋतव इति श्रुत्यन्तराल्लोकप्रसिद्धेश्च वसन्ताद्याः षट्संख्याकाः, तथापि शीतत्वसाम्येन हेमन्तशिशिरावेकीकृत्य पञ्चसंख्योच्यते। द्वादशभिर्मासैस्तन्मेलनात्मकपञ्चभिः ऋतुभिश्च यावान् कालो भवति, तावान् कालः संवत्सर इत्युच्यते। स च संवत्सरः, तत्तदृतूचितवर्षादिनिष्पादनेन प्रजानां पालकत्वात् प्रजापतिः। तदीयत्वेन सप्तदशसंख्या प्रशस्तेत्यर्थः ॥

सप्तदशसंख्यावेदनं प्रशंसति—"प्रजापत्यायतनाभिरेवाभी राध्नोति य एवं वेद"—इति। संवत्सरात्मकः प्रजापतिः आयतन माश्रयो यासां सामिधेनीनां प्रजापत्यायतनाः। तदीयसङ्ख्योपेतत्वात् तदायतनत्वम्। तादृशीभिः सामिधेनीभिः वेत्ता 'राध्नोति' समृद्धो भवति; सति वेदने तदनुष्ठानप्रवृत्तेः फलप्राप्ति रुपपद्यते ॥ १ ॥

अत्र मीमांसोदाह्रियते। पञ्चमाध्यायस्य चतुर्थपादे इदं चिन्तितम्—

"दर्शादीष्ट्वा सोमयागः क्रमोऽयं नियतो न वा।
उक्तेराद्यो न सोमस्याधानानन्तरताश्रुतेः ॥

दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेति क्त्वाप्रत्ययेनावगम्यमानः

क्रमो नियतः ? इति चेन्नैवम् ; सोमेन यक्ष्यमाणोऽग्नीनादधीतेत्याधानानन्तरताया अपि श्रवणात्। तस्मादिष्टिसोमयोः पौर्वापर्यं न नियतम् ॥

विप्रस्य सोमपूर्वत्वं नियतं वा न वाग्रिमः।
उत्कर्षतो मैव मग्नीषोमीयस्यैव तच्छ्रुतेः॥

इष्टिपूर्वत्वं सोमपूर्वत्वं च विकल्पितम्—इति यदुक्तम्, ब्राह्मणस्य सोमपूर्वत्वं नियतम्। कुतः ? उत्कर्षश्रवणात् "आग्नेयो वै ब्राह्मणो वै देवतया सोमेनेष्ट्वाग्नीषोमीयो भवति यदेवादः पौर्णमासं हविस्तत्तदनुनिर्वपेत्तर्हि स उभयदेवतो भवति"—इति। अस्यायमर्थः। प्रजापतेर्मुखादग्निः ब्राह्मणश्चेतुभावुत्पन्नौ, ततो ब्राह्मणस्याग्निरेक एव देवतेत्याग्नेय एव ब्राह्मणो न तु सौम्यः ; सोमस्य तद्देवतात्वाभावात्। यदा स ब्राह्मणः सोमेन यजेत ;—यदा सोमोऽपि देवतेत्यग्नीषोमीयो भवति,—तस्याग्नीषोमीयस्य ब्राह्मणस्यानुरूपं पौर्णमास मग्नीसोमीयपुरोडाशरूपं हविः सोमादूर्ध्व मनुनिर्वपेत्, तदा स ब्राह्मणो देवताद्वयसम्बन्धी भवतीति। यद्यप्यत्र कर्मान्तरं किञ्चित् विधीयत इति कश्चित् मन्यते, तथापि पौर्णमासं हविरिति विस्पष्टप्रत्यभिज्ञानान्न कर्मान्तरं किं तु दर्शपूर्णमासयोः सोमादूर्ध्व मुत्कर्षः। तस्माद् विप्रस्य सोमपूर्वत्व मेव नियत मिति प्राप्ते ब्रूमः ;—नात्र दर्शशब्दः पूर्णमासशब्दो वा कश्चिद्यागवाची श्रूयते ; पौर्णमास मितेरतत् तद्धितान्तं हविर्विशेषणत्वेनोपन्यस्यते, तच्च हविरग्नीषोमीयपुरोडाशरूप मिति देवताद्वयेन संस्तवादवगम्यते। तस्मादेकस्यैव हविष उत्कर्षः ; न तु कृत्स्नयोः दर्शपूर्णमासयोः। तथा सति ब्राह्मणस्यैकस्मिन्ने-

वाग्नीषोमीयपुरोडाशसोमपूर्वत्वनियमः । इतरत्र त्वनियमेऽस्य-योरिवाख्यापीष्टिपूर्वत्वसोमपूर्वत्वे विकल्प्येरते ॥”—इति ।

तृतीयाध्यायस्य षष्ठे पादे चिन्तितम्—

“सामिधेनीः सप्तदश प्रकृतौ विकृतावुत ।
पूर्ववत् प्रकृतौ पाञ्चदश्येनैतद्विकल्प्यते ॥
विकृतौ साप्तदश्यं स्यात् प्रकृतौ प्रक्रियाबलात् ।
पाञ्चदश्याविरुद्धत्वादाकाङ्क्षाया निवृत्तता ॥

अनारभ्य श्रूयते—“सप्तदश सामिधेनीरनुब्रूयात्”—इति । 'प्र वो वाजाः'-इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेन्यः । तासां साप्तदश्यं पूर्वन्यायेन प्रकृतिगतम् । यदि प्रकृतौ “पञ्चदश सामिधेनीरन्वाहेति पाञ्चदश्यस्यैव विधिः स्यात्, तर्हि विकृतौ विकल्प्येत; पाञ्चदश्यावरुद्धायाः सामिधेनीनां सङ्ख्याकाङ्क्षाया अभावात् । न च पाञ्चदश्यसाप्तदश्ययोः समानबलत्वादवरोधाभाव इति शङ्कनीयम्; पाञ्चदश्ये प्रकरणानुग्रहस्याधिकत्वात् । तस्मात् मित्रविन्दाध्वरकल्पादिविकृतौ साप्तदश्यमवतिष्ठते । न चात्र पूर्वन्यायोऽस्ति; साप्तदश्यस्य चोदकप्राप्त्यभावेन पुनर्विधाने दोषाभावात् ॥

साप्तदश्यन्तु वैश्यस्य विकृतौ प्रकृतावुत ।
पूर्ववच्च न सङ्कोचो नित्यनैमित्तिकोक्तितः ॥
गोदोहनेन प्रणयेत्कामीत्यन्यदुदाहरन् ।
भाष्यकारस्तदप्यस्तं न्यायस्यात्र समत्वतः ॥

'सप्तदशानुब्रूयाद् वैश्यस्य'—इति श्रुतं वैश्यनिमित्तकं साप्तदश्यं पूर्वन्यायेन विकृतिगत मिति चेत्, मैवम्; नैमित्तिकेनानेन वचनेन प्रकृतिगतस्य नित्यस्य पाञ्चदश्यस्य वैश्यव्यति-

क्तिविषयतया सङ्कोचनीयत्वात्। नित्यं सामान्यरूपतया सावकाशत्वेन दुर्बलम्; नैमित्तिकं तु विशेषरूपत्वनिरवकाशत्वाभ्यां प्रबलम्; तस्माद् वैश्यनिमित्तकं साप्तदश्यं प्रकृताववतिष्ठते। अत्र भाष्यकारोऽन्यदुदाजहार।—'चमसेनापः प्रणयेद्गोदोहनेन' —इत्यस्य चमसस्य निष्कामविषयतया सङ्कोचनीयत्वात् प्रकृतावेव गोदोहनमिति राद्धान्तः॥"—इति।

दशमाध्यायस्याष्टमपादे च चिन्तितं सामिधेनी-साप्तदश्यं वैमृधे—

"पुनर्वाक्येन संख्यार्थमनारभ्यादावपूर्वगीः।
संहतिर्वोपकारस्य क्रमाद्वस्याज्यभागवत्॥
सामिधेनीश्चोदकाप्ताः साप्तदश्यन्तु वैमृधे।
पुनर्वाक्येन संख्यार्थमनारभ्योक्तिचोदितम्॥

अनारभ्य किञ्चिदाम्नायते—'सप्तदश सामिधेनीरनुब्रूयात्' —इति। तथा वैमृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायामाग्रयणेष्ट्यादौ च पुनः साप्तदश्यं विहितम्। यद्यप्यनारभ्याधीतानां प्रकृतिगामित्वं न्याय्यम्, तथापि श्रुतेन पाञ्चदश्येनावरुद्धत्वाद्विकृतिष्वेव निविशते। तथा सति वैमृधादिषु विकृतिष्वनारभ्यवादप्राप्ताः सप्तदश सामिधेन्यः प्राकरणिकेन विधिना पुनर्विधीयमाना गृहमेधीयाज्यभागवत् क्रमोपकारत्वे नेतिकर्त्तव्यताकाङ्क्षां पूरयन्त्यश्चोदकं लोपयन्त्यो वैमृधादेरपूर्वदेवतां गमयन्ति; साप्तदश्यन्त्वनारभ्यवादप्राप्त मनूद्यत इति प्राप्ते ब्रूमः;—वैमृधादिषु सामिधेन्य आज्यभागवत् न विधीयन्ते किन्तु चोदकप्राप्ता अनूद्य साप्तदश्यं विधीयते; तच्च साप्तदश्यं वैमृधादिप्रकरणेष्वाम्नातैर्विधिभिः कासुचिदेव विकृतिषु प्राप्तम्, अनारभ्यवादेन तु सर्वासु

विकृतिषु ; तत्रानारभ्यवादो विलम्बते । प्रथमं विधेयस्य साप्तदश्यस्य सामिधेनीसम्बन्ध मवबोध्यम्, तत्सम्बन्धान्यथानुपपत्त्या क्रतुप्रवेशं परिकल्प्य प्रकृतौ पाञ्चदश्यपराहतत्वेन विकृतिषु सर्वासु निवेशः क्रियत इति विलम्बः। प्राकरणिकैर्विधिभिः सामिधेनीसम्बन्ध एव बोधनीयः। विकृतौ तद्विशेषे च प्रवेशो न कल्पनीयः; प्रत्यक्षप्रकरणे पाठेनैव तत्सिद्धेः। तत्र साप्तदश्यस्य वैश्यादिविकृतिविशेषसम्बन्धे सहसा प्रतिपन्ने सति तद्विरोधात्, सर्वप्रकृतिसम्बन्धो न कल्पयितुं शक्यः। अनारभ्यवादस्तु चोदकप्राप्तस्य पाञ्चदश्यस्य बाधकः। सर्वथापि चतुर्धाकरणवदुपसंहारो न त्वाज्यभागवदपूर्वं कर्म"—इति ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणस्य प्रथमाध्याये प्रथम खण्डः ॥ १ ॥

यज्ञो वै देवेभ्य उदक्रामत्त मिष्टिभिः प्रैष मैच्छन् यदिष्टिभिः प्रैष मैच्छंस्तदिष्टीना मिष्टित्वं त मन्वविन्दन्ननुवित्तयज्ञो राध्नोति य एवं वेदाहूतयो वै नामैता यदाहुतय एताभिर्वै देवान् यजमानो ह्वयति तदाहुतीना माहूतित्व मूतयः खलु वै नाम याभिर्देवा यजमानस्य हव मायन्ति ये वै पन्थानो या स्रुतयस्ता वा ऊतयस्त उ एवैतत् स्वर्गयाणा यजमानस्य भवन्ति तदाहुर्यदन्यो जुहोत्यथ योऽनु चाह यजति च कस्मात्तं होतेत्याचक्षत इति यद्वाव स तत्र यथाभाजनं देवता अमु मावहामु मावहेत्यावाहयति तदेव होतु-

हौत्रत्वं होता भवति होतृत्वेन मा यज्ञते य एवं वेद ॥ २ ॥

दीक्षणीयेष्टिं निरूप्य तत्प्रशंसार्थमिष्टिशब्दनिर्वचनं दर्शयति—"यज्ञो वै देवेभ्य उदक्रामत् त मिष्टिभिः प्रैष मैच्छन् यदिष्टिभिः प्रैष मैच्छंस्तदिष्टीना मिष्टित्वं त मन्वविन्दन्निति। ज्योतिष्टोमाभिमानी 'यज्ञः' पुरुषः, केनापि निमित्तेन 'देवेभ्यः' अपक्रान्तवान्। 'तं' देवं यज्ञं दीक्षणीया-प्रायणीयादिभिः 'इष्टिभिः' 'प्रैषम्' अन्वेष्टुम् 'ऐच्छन्' इच्छन्ति। यज्ञमाभिरिच्छन्तीतीष्टिशब्दस्य व्युत्पत्तिः। यजतिधातोरिष्टिशब्दः सर्वत्र प्रसिद्धः; अत्र त्विच्छतिधातोरिति विशेषः। अन्विष्यन् तं यज्ञ मनुक्रमेण लब्धवन्तः॥

तल्लाभवेदनं प्रशंसति—"अनुवित्तयज्ञो राध्नोति य एवं वेदेति। तदनुष्ठानेन लब्धयज्ञः फलेन समृद्धो भवति॥

पुनरपि दीक्षणीयादीष्टिप्रशंसार्थं—तास्विष्टिषु विद्यमानाना माहुतीनां वाचकं शब्दं निर्वक्ति—"आहूतयो वै नामैता यदाहुतय एताभिर्वै देवान् यजमानो ह्वयति, तदाहुतीना माहुतित्व मिति। आहुतय इत्युकारेण ह्रस्वेन, आहूतय इत्येवं दीर्घेण युक्तं द्रष्टव्यम्। ह्वयत्याभिरिति तद्व्युत्पत्तिः। जुहोतिधातोरुत्पन्नः शब्दः पूर्वं प्रसिद्धः; अयं तु ह्वयतिधातोरुत्पन्न इति विशेषः॥

इष्टीराहूतीश्च मिलित्वा प्रकारान्तरेण प्रशंसति—"ऊतयः खलु वै ता नाम याभिर्देवा यजमानस्य हव मायन्ति ये वै पन्थानो याः स्रुतयस्ता वा ऊतयस्त उ एवैतत् स्वर्गयाणा यजमानस्य भवन्तीति। हूयन्ते देवा अभिरिति हवोऽत्र सोम-

यागः। याभिरिष्टिभिस्तन्त्राभिराहुतिभिश्च निमित्तभूताभि-र्देवा यजमानस्य यज्ञमागच्छति, ता इष्टय आहुतयश्चोतय इत्येतन्नाम प्रतिपद्यन्ते। ऊतुशब्दो वैशब्दश्च प्रसिद्धार्थः। अवन्ति रक्षन्तीत्यवतेर्धातोरूतिशब्दः प्रसिद्धः; आयन्त्यागच्छन्ति याभिरित्याङ्पूर्वस्यायतिधातोर्वा वर्णविकारेणोतिशब्दः। यद्वा, तस्मादेव धातोः स्वर्गप्रापकत्वाभिप्रायेणोतिशब्दो व्युत्पाद्यते। ये केचित् पन्थान इष्टिरूपाः स्वर्गस्य प्रौढमार्गाः सन्ति, याश्च सृतयस्तन्मार्गावयवरूपा आहुतयः सन्ति; तद्द्विविधा ऊतयः इत्युच्यन्ते। 'तदु एवैतत्' तदेवैते द्विविधा अपि मार्गाः 'यज-मानस्य' 'स्वर्गायणाः' स्वर्गप्रापकाः 'भवन्ति'॥

पुनरपीष्टिप्रशंसार्थं तदङ्गभूतयोर्याज्यानुवाक्ययोर्वक्तरि प्रयु-ज्यमानं होतृशब्दं निर्वक्तुं ब्रह्मवादिनां प्रश्नमवतारयति—

"तदाहुर्यदध्वर्युर्जुहोत्यथ योऽनु चाह यजति च कस्मात् तं होतेत्याचक्षत इतीति। 'तत्' तास्विष्टिषु किञ्चिद्वोद्यम् 'आहुः'— 'यद्' यस्मात् कारणात् होतुः 'अध्वः' अध्वर्युः 'जुहोति', तस्मात् तत्कारणात् तद्धातुनिष्पन्नो होतृशब्दस्तस्याध्वर्योः युक्तः; याज्ञि-कास्तु न तमध्वर्युं होतेति नाचक्षते; 'अथ' 'यः' पुमान् 'अनु चाह' पुरोऽनुवाक्यां चानुब्रूते, 'यजति च' याज्यां च पठति 'तं' पुमांसं अनुवक्तीति यष्टीति चानभिधाय 'कस्मात्' कारणात् 'होतेत्याचक्षते'? 'इति'-शब्दः प्रश्नसमाप्त्यर्थः॥

अभिज्ञाना अभिप्रेतं प्रश्नस्योत्तरं दर्शयति—"यदाव स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति तदेव होतु-र्होतृत्वं होता भवतीति। 'यदाव' यस्मादेव कारणाद्याज्यानु-वाक्ययोर्वक्ता 'सः' पुमान् 'तत्र' यागे 'यथाभाजनं' यथास्थानं सर्वाः

'देवताः' 'आवाहयति' 'असुम्' अग्निम् 'आवह', 'अमुं' सोमम् 'आवह' 'इति'; 'तदेव' तस्मादेव कारणाद्याज्ञिकप्रसिद्धस्य होतु-स्तन्नाम सम्पन्नम्। अत्र ण्यन्तस्य वहधातोश्छान्दस्या प्रक्रियया निष्पत्तिः; न तु जुहोतिधातोः। तस्माद्धोमकर्तृत्वाभावेऽप्यावाह-यितृत्वसद्भावात् 'होतृत्वम्' उपपन्नम्। 'इति' अयं याज्यानुवाक्य-योर्वक्तापि 'होता' भवत्येव॥

होतृत्ववेदनं प्रशंसति—"होतेत्येन माचक्षते य एवं वेदेति। याज्ञिका एवं वेदितारं होतारं मुख्यो होतेति कथयन्ति; हौत्रे कर्मणि कुशलो भवतीत्यर्थः॥ २॥

इति श्रीमत्सायणार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमाध्याये द्वितीयः खण्डः॥२॥

---

पुनर्वा एत मृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्त्य-द्भिरभिषिञ्चन्ति रेतो वा आपः सरेतस मेवैनं तत् कृत्वा दीक्षयन्ति नवनीतेनाभ्यञ्जन्त्याज्यं वै देवानां सुरभि घृतं मनुष्याणा मायुतं पितॄणां नवनीतं गर्भाणां तद्यन्नवनीतेनाभ्यञ्जन्ति स्वेनैवैनं तद्भाग-धेयेन समर्धयन्त्याञ्जन्त्येनं तेजो वा एतदक्ष्योर्यदाञ्जनं सतेजस मेवैनं तत् कृत्वा दीक्षयन्त्येकविंशत्या दर्भ-पिञ्जूलैः पावयन्ति शुद्ध मेवैनं तत्पूतं दीक्षयन्ति दीक्षितविमितं प्रपादयन्ति योनिर्वा एषा दीक्षितस्य यद्दीक्षितविमितं योनि मेवैनं तत् स्वां प्रपादयन्ति

तस्माद् ध्रुवाद्योने रास्ते च चरति च तस्माद् ध्रुवा-द्योनेर्गर्भा धीयन्ते च प्र च जायन्ते तस्माद्दीक्षितं नान्यत्रदीक्षितविमितात्प्रादित्योऽभ्युदियादाभ्यस्तमियाद्वापि वाभ्याश्रावयेयुर्वाससा प्रोर्णुवन्त्युल्बं वा एतद्दीक्षितस्य यद्वास उल्बेनैवैनं तत्प्रोर्णुवन्ति कृष्णाजिन मुत्तरं भवत्युत्तरं वा उल्बाज्जरायु जरायुणैवैनं तत् प्रोर्णुवन्ति मुष्टीकुरुते मुष्टी वै कृत्वा गर्भोऽन्तः शेते मुष्टीकृत्वा कुमारो जायते तद्यन् मुष्टीकुरुते यज्ञञ्चैव तत्सर्वाश्च देवता मुष्टयोः कुरुते तदाहुर्न पूर्वदीक्षिणः संसवोऽस्ति परिगृहीतो वा एतस्य यज्ञः परिगृहीता देवता नैतस्यार्तिरस्त्यपरदीक्षिण एव यथा तथेत्यु-न्मुच्य कृष्णाजिन मवभृथ मभ्यवैति तस्मान्मुक्ता गर्भा जरायोर्जायन्ते सहैव वाससाभ्यवैति तस्मात्सहैवोल्बेन कुमारो जायते ॥ ३ ॥

इत्थ मिथ्याहुतूरतिहोत्रशब्दानां निर्वचनेन दीक्षणीयेष्टिं प्रशंस्य तयेष्ट्या दीक्षितस्य संस्कारविशेषान्विधातुं प्रस्तौति — "पुनर्वा एत मृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्तीति। यं यजमानं दीक्षणीयेष्ट्या दीक्षितं कुर्वन्ति, तं यजमानं पुरा मातापितरौ कञ्चित्कालं गर्भं कृतवन्तौ पुनरप्येन मिदानी मृत्विजो यज्ञकाले गर्भं कुर्वन्ति गर्भवदसौ संस्कारैः पालनीय इत्यर्थः ॥

एकं संस्कारं विधत्ते —"अद्भिरभिषिञ्चन्तीति। आप, आप-

यन्तीत्यर्थः। एतदेवाभिप्रेत्य तैत्तिरीया यजमानस्य वपनादूर्ध्वं स्नान मामनन्ति — "अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन् अप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे" — इति। यजमानस्य स्नानकर्तृत्वेऽपि ऋत्विजां स्नपयितृत्व मभिप्रेत्या-भिषिञ्चन्तीत्युक्तम् ॥

उक्ताना मपां प्रशंसा माह — रेतो वा आपः सरेतस मेवैनं तत् कृत्वा दीक्षयन्तीति। कार्यकारणयोरभेदादपां रेतस्त्वम्; वैराजदेहगताद्रेतस आप उत्पन्नाः। तथाचारण्यके सृष्टि-प्रकरणे समाम्नायते — "शिश्नाद्रेतो रेतस आपः" — इति। यद्वा मनुष्यादिशरीरगतं रेतो मूत्रादिक मपां कार्यम्। तच्च गर्भोप-निषद्याम्नातम् — "अस्मिन् पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी, यद्द्रवं तदापः" — इति। तत् तेनाभिषेचनेनैनं यज-मानं सरेतसं पुत्रोत्पादनसमर्थं कृत्वा संस्कुर्वन्ति ॥

संस्कारान्तरं विधत्ते — "नवनीतेनाभ्यञ्जन्तीति। सर्वस्मि-न्नपि शरीरेऽनुलेपयन्तीत्यर्थः ॥

नवनीतस्य गर्भस्थानीययजमानयोग्यतां दर्शयति — "आज्यं वै देवानां सुरभि घृतं मनुष्याणा मायुतं पितृणां नवनीतं गर्भाणां तद्यन्नवनीतेनाभ्यञ्जन्ति स्वेनैवैनं तद्भागधेयेन समर्ध-यन्तीति। आज्यघृतयोर्भेदः पूर्वाचार्यैरुदाहृतः — 'सर्पिर्विलीन माज्यं स्याद्घनीभूतं घृतं विदुः' — इति। ईषद्विलीन मायुतं सुरभि योग्यं प्रेय मित्यर्थः। घृतायुते नवनीतेष्वप्येतत्पद मनुवर्त्तते। ननु तैत्तिरिया घृतस्य देवप्रियत्व मामनन्ति — "घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणा मिति। ईषद्विलीनं मस्तु; निःशेषेण विलीनं निष्पक्वम्। नायं दोषः; उभयत्र नव-

नीतप्रशंसारूपार्थवादत्वेन घृताज्ययोः व्यत्ययेन पाठेऽपि विरोधाभावात्। तथा सति नवनीतस्य गर्भयोग्यत्वे सति यदि नवनीतेनाभ्यङ्गं कुर्युः, तदानीमेनं यजमानं स्वोचितेनैव भागेन समृद्धं कुर्वन्ति ॥

नेत्रयोरञ्जनेन संस्कारं विधत्ते—"आञ्जन्त्येनमिति।

अक्ष्णोर्दृष्टिप्रसादहेतुत्वेनाञ्जनं प्रशंसति—"तेजो वा एतदक्ष्णोर्यदाञ्जनं सतेजसमेवैनं तत् कृत्वा दीक्षयन्तीति। आञ्जनस्याक्षितेजस्त्वं लोके सिद्धम्। तत्प्रकारविशेषः शाखान्तरे "दक्षिणां पूर्वमाह"—इत्यादिना विहितः ॥

संस्कारं विधत्ते—"एकविंशत्या दर्भपिञ्जूलैः पावयन्तीति। दर्भपिञ्जूल-शब्देन कुशसङ्घा उच्यन्ते। तैरेकविंशतिसंख्याकैः यजमानं मार्जयित्वा शुद्धं कुर्युः ॥

यद्यप्यसावभिषेकेणैव शुद्धः, तथापि अतिशयेन शुद्धिरित्येवमभिप्रायं दर्शयति—"शुद्धमेवैनं तत्पूतं दीक्षयन्तीति। पूर्वमपि शुद्धमेव सन्तमेतं यजमानं पुनरपि तत्तेन कुशसङ्घमार्जनेन पूतं कृत्वा संस्कुर्वन्ति। यद्यपि शाखान्तरे—"द्वाभ्यां पावयति त्रिभिः पावयतीत्यादिना सङ्ख्यान्तरविषया बहवः पक्षा उपन्यस्ताः, तथाप्येते सर्वे एकविंशतावन्तर्भावादनुवादरूपाः प्रशंसार्थाः। अतएव तत्रान्तिमे पर्याये एकविंशत्या पावयतीत्युपसंहारः कृतः ॥

उक्तैः संस्कारैः संस्कृतस्य दीक्षितस्य प्राचीनवंशाख्यशालाप्रवेशं विधत्ते—"दीक्षितविमितं प्रपादयन्तीति। दीक्षितस्य प्रवेशार्थं विशेषेण निर्मितः प्राचीनवंशो दीक्षितविमितः, तं प्रवेशयेयुः ॥

पूर्वत्र दीक्षितस्य गर्भत्वाभिधानाद्दीक्षितत्वेन प्राचीनवंशं योनित्वेन प्रशंसति—"योनिर्वा दीक्षा एषा दीक्षितस्य यद्दीक्षितविमितं योनि मेवैनं तत् स्वाम्प्रपादयन्ति"—इति। प्राचीनवंशस्य योनित्वोपचारात्तत्तेन प्राचीनवंशप्रवेशेन स्वकीययोनिप्रवेशः सम्पाद्यते। सोऽयं प्रवेशः शाखान्तरे विस्पष्ट माम्नायते—"बहिः पावयित्वान्तः प्रपादयति मनुष्यलोक एवैनं पावयित्वा पूर्वं देवलोकं नयतीति। आपस्तम्बो ऽप्याह—"आ वो देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश्येतेति॥

तस्य दीक्षितस्य कश्चिन्नियमं विधत्ते—"तस्माद् ध्रुवाद् योने रास्ते च चरति चेति। अत्र तिस्रः पञ्चम्यः सप्तम्यर्थे द्रष्टव्याः। तस्मिन् दीक्षितार्थं निर्मिते देवयजनाख्ये स्थिरस्थाने स दीक्षित उपवेशनं सञ्चरणं च कुर्यात्॥

विहित मर्थं प्रशंसति—"तस्माद् ध्रुवाद्योनेर्गर्भा धीयन्ते च प्र च जायन्त इति। यस्माद् गर्भस्थानीयस्य दीक्षितस्य स्थिरे देवयजनस्थाने योनिरूपे उपवेशनं सञ्चरणं च, तस्माल्लोकेऽपि स्थिरे योनिमध्ये नवसङ्ख्याकान् मासान् गर्भा धीयन्ते। तस्मादेव स्थिरात् योनिमध्यात् उत्पद्यन्ते॥

तस्य दीक्षितस्य देवयजनात् बहिर्निर्गमनं निषेधति—"तस्माद् दीक्षितं नान्यत्र दीक्षितविमितादादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वापि वाभ्याश्रावयेयुरिति। यस्माद् दीक्षितस्योपवेशनसञ्चरणयोर्देवयजन मेव स्थानम्, तस्मात्कारणात् दीक्षितविमिताद्देवयजनदेशादन्यत्र बहिर्देशे दीक्षित मभि लक्ष्य आदित्यो नोदियान्नास्तमियाच्च। किञ्च ऋत्विजो बहिरवस्थितं दीक्षित मभिलक्ष्याश्रावणादिकं न कुर्युः। यद्यपि ध्रुवाद्योनेरास्ते-

चरतिविधानादेवाय मर्थः सिद्धः, तथापि मूत्रविसर्गाद्या-वश्यककार्यार्थं कदाचिद्बहिर्निर्गमन मभ्युपगम्य तत्र विशेषा-भिधान मेतत्। कालान्तरे कथञ्चिद्गमनेऽप्युदयास्तमयाश्रव-णादिकालेषु सर्वथा न निर्गच्छेदित्यर्थः। तदेतद् दृष्टान्तपुरःसरं प्रपञ्चितम्—'गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमिता नित्यं वसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तत्र प्रवस्तव्य मात्मनो गोपीथायेति ॥

संस्कारान्तरं विधत्ते—"वाससा प्रोर्णुवन्ति उल्बं वा एतद्दीक्षितस्य यद्वास उल्बेनैवैनं तत्प्रोर्णुवन्तीति। उल्बशब्देन गर्भस्याभ्यन्तरं चर्मवेष्टन मुच्यते। अथ मर्थः शाखान्तरे स्पष्टी-कृतः—"गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्माद्गर्भाः प्रावृता जायन्त इति ॥

वाससो बहिर्वेष्टनान्तरं विधत्ते—"कृष्णाजिन मुत्तरं भवतीति ॥

बहिर्वेष्टनत्वसाम्येन कृष्णाजिनस्य जरायुरूपत्वं दर्शयति—"उत्तरं वा उल्बाज्जरायु जरायुणैवैनं तत्प्रोर्णुवन्तीति ॥

संस्कारान्तरं विधत्ते—"मुष्टीकुरुत इति। यजमानो हस्त-योर्मुष्टिं कुर्यात्। तत्प्रकार आपस्तम्बेन स्पष्ट मभिहितः—अथाङ्गुलीर्न्यञ्चति स्वाहा यज्ञ मनसेति द्वेऽङ्गुली स्वाहा दिव इति द्वे स्वाहा पृथिव्या इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा यज्ञं वातादारभ इति मुष्टीकरोतीति ॥

गर्भसामान्ये यज्ञस्य सर्वदेवतानां च धारणेन प्रशंसति—"मुष्टिवै कृत्वा गर्भोऽन्तः शेते मुष्टीकृत्वा कुमारो जायते तद्य-न्मुष्टीकुरुते यज्ञञ्चैव तत्सर्वाश्च देवता मुष्ट्योः कुरुत इति।

गर्भस्य मुष्टिद्वये शास्त्रप्रसिध्यर्थो वैशब्दः। जायमानस्य मुष्टिद्वयं लोके प्रसिद्धम्। मुष्टिमध्ये यज्ञधारणं शाखान्तरेऽप्याम्नातम्—"मुष्टीकरोति वाचं यच्छति यज्ञस्य धृत्या इति ॥

प्रकारान्तरेण मुष्टिद्वयं प्रशंसति—"तदाहुर्न पूर्वदीक्षिणः संसवोऽस्ति परिगृहीतो वा एतस्य यज्ञः परिगृहीता देवता नैतस्यार्त्तिरस्त्यपरदीक्षिण एव यथा तथेतीति। तत्र मुष्टीः करणे ब्रह्मवादिनः किञ्चिद्गुण माहुः। द्वयोर्बहूनां वा यजमानानां सम्भूय सोमाभिषवः, स च महान् दोषः; तस्मिन्नेव देशे तस्मिन्नेव काले मत्सरग्रस्तैर्यजमानैः प्रवर्त्तितत्वात्। ग्रावा पर्वतेन वा व्यवधानरहितयोः समीपवर्तिनोः परस्परमन्त्रध्वनिश्रवणयोग्य-योर्देशयोः स्पर्द्धमानाभ्यां यजमानाभ्यां प्रवर्तितौ यौ सोमयागौ तयोरयं संसवाख्यो दोषः। तथाच सूत्रकार आह—"संसवो ऽनन्तर्हिते पुनर्ग्रावा पर्वतेन वेति। सोऽयं दोषः पूर्वदीक्षिणो नास्ति। एकस्मिन्नेव दिवसे द्वयोर्यजमानयोर्मध्ये यः पूर्वं दीक्ष-णीयेष्टिं करोति, स पूर्वदीक्षी। एतस्य मुष्ट्योर्मध्ये यज्ञः परि-गृहीतः, सर्वाश्च देवताः परिगृहीताः; तदानी मितरसम्ब-न्धिनी यज्ञस्याप्रवृत्तत्वेन 'तत्र गच्छामः'—इत्येवं यज्ञस्य देवतानां वालोचनाभावात् पश्चाद्दीक्षणीयेष्टिं कुर्वाणस्यापरदीक्षितस्य यज्ञो देवताश्च सुलभा न भवन्ति; पूर्वं मन्येन यजमानेनावरुद्ध-त्वात्। तस्मादपरदीक्षिणः 'आर्त्तिः' विनाशो यथास्ति, तथा पूर्वदीक्षिण आर्त्तिर्नैवास्ति। "संवेशाय त्वोपवेशायत्वे त्यादि-मन्त्रेण येयं संसवप्रायश्चित्ताहुतिः, सेय मपरदीक्षिणैव कर्तव्या; न पूर्वदीक्षिणीत्यर्थः। 'इति'-शब्दो ब्रह्मवादिवचनसमाप्त्यर्थः ॥

यदेतत् कृष्णाजिनवेष्टनं विहितं तस्यावभृथगमनात् प्रागे-

वोन्मोचनं विधत्ते—"उन्मुच्य कृष्णाजिन मवभृथ मभ्यवैति तस्मान् मुक्ता गर्भा जरायोर्जायन्त इति। योनिस्थानीयाद्देवयजनदेशा-न्निर्गत्यावभृथगमनं गर्भरूपस्य दीक्षितस्य जन्मस्थानीयम्। जन्म च लोके जरायुरूपवेष्टने च्छिन्ने सति पश्चात्सम्पद्यते, तस्मादत्रापि जरायुस्थानीयं कृष्णाजिन मुन्मुच्य जन्मस्थानीय मवभृथदेश-गमनं कुर्यात्॥

कृष्णाजिनवद्वाससोऽपि प्रसक्त मुन्मोचनं वारयति—"सहैव वाससाभ्यवैति तस्मात् सहैवोल्बेन कुमारो जायत इति। उल्बाख्यस्याभ्यन्तरवेष्टनस्य जन्मकालेऽप्यनिवृत्तिदर्शनात् उल्ब-स्थानीयवस्त्रस्यावभृथगमनकालेऽप्यनुवृत्तिर्द्रष्टव्या॥

अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—

"इष्टिदण्डादिभिर्दीक्षा किं वेष्टैरवोक्तितोऽग्रिमः।

युक्तः संस्कार इष्ट्यैव दण्डादिव्यञ्जकत्वतः॥

ज्योतिष्टोमे श्रूयते—"आग्नावैष्णव मेकादशकपालं निर्वपे-द्दीक्षिष्यमाणः"—इति। अन्यदपि श्रुतम्—"दण्डेन दीक्षयति, कृष्णाजिनेन दीक्षयति"—इति। अतेष्टिवद् दण्डादीना मपि साधनत्वविधानात् सर्वैरियं दीक्षेति चेत्, मैवम्; इष्टेः क्रिया-रूपत्वात् संस्कारहेतुत्वं हि युक्तम्; दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति। न चैवं दण्डादेर्वैयर्थ्यम्; दीक्षितोऽय मित्य-भिव्यक्तिरूपस्य दृष्टप्रयोजनस्य सद्भावात्। तस्मादिष्ट्यैव दीक्षा सिध्यति"—इति॥ ३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

ऐतरेयब्राह्मणस्य प्रथमाध्याये तृतीयः खण्डः॥ ३॥

---

त्व मग्ने सप्रथा असि सोम यास्ते मयोभुव इत्याज्यभागयोः पुरोऽनुवाक्ये अनुब्रूयाद्यः पूर्व मनीजानः स्यात्तस्मै त्वया यज्ञं वितन्वत इति यज्ञ मेवास्मा एतद्वितनोत्यग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वय मिति यः पूर्व मीजानः स्यात् तस्मै प्रत्न मिति पूर्वं कर्माभिवदति तत्तन्नादृत्य मग्निर्वृत्राणि जङ्घनत् त्वं सोमासि सत्पतिरिति वार्त्रघ्नावेव कुर्याद्वृत्रं वा एष हन्ति यं यज्ञ मुपनमति तस्माद्वार्त्रघ्नावेव कर्त्तव्या वग्निर्मुखं प्रथमो देवताना मग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवत आग्नावैष्णव्यौ रूपसमृद्धे एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाण मृगभिवदत्यग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ तौ दीक्षाया ईशाते तद्यदाग्नावैष्णवं हविर्भवति यौ दीक्षाया ईशाते तौ प्रीतौ दीक्षां प्रयच्छतां यौ दीक्षयितारौ तौ दीक्षयेता मिति त्रिष्टुभौ भवतः सेन्द्रियत्वाय ॥ ४ ॥

विवक्षितस्य हौत्रस्योपोद्घातत्वेन दीक्षणीयेष्टिं विधाय तां च बहुधा प्रशस्य प्रसङ्गाद् दीक्षितसंस्कारा विहिताः; अथ विवक्षितं हौत्रं विधत्ते—"त्व मग्ने सप्रथा असि सोमयास्ते मयोभुव इत्याज्यभागयोः पुरोऽनुवाक्ये अनुब्रूयाद्यः पूर्वं मनी-

जानः स्यात्तस्मा इति। यो यजमानः इतः पूर्वं सोमयागं न कृतवान् इदानीं क्रियमाण एव प्रथमः प्रयोगः, तस्मै यजमानाय तदर्थं दीक्षणीयेष्टौ प्रथमस्याज्यभागस्य त्व मग्न इति पुरोऽनुवाक्या; द्वितीयस्य सोमपास्त इति पुरोऽनुवाक्या। तदुभय मध्वर्युणा प्रेषितो होता अनुब्रूयात् ॥

उक्तस्य प्रथममन्त्रस्य प्रथमप्रयोगानुकूल्यं दर्शयति—"त्वया यज्ञं वितन्वत इति यज्ञ मेवास्मा एतद्वितनोतीति"—इति। तस्मिन् मन्त्रे त्वयेत्यादिस्तृतीयः पादः; तस्याय मर्थः —हे अग्ने! क्रियमाण मस्मद्यज्ञ मिमं ऋत्विजस्त्वया त्वत्प्रसादेन वितन्वते विस्तारयन्तीति 'एतत्' एतेन मन्त्रवचनेन 'अस्मै' यजमानाय 'यज्ञं वितनोत्येव' पूर्व मविस्तारित मपि यज्ञ मिदानीं विस्तारयत्येव ॥

अधिकारविशेषेण प्रकारान्तरं विधत्ते—"अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वय मिति यः पूर्व मीजानः स्यात्तस्मा इति। यो यजमानः पूर्वं सोमयागं कृतवान्, तस्मै यजमानार्थं पुनः सोमयागप्रयोगे दीक्षणीयेष्टावग्निः प्रत्नेनेति प्रथमस्याज्यभागस्य पुरोऽनुवाक्या, सोम गीर्भिरिति द्वितीयस्याः ॥

तत्र प्रथममन्त्रस्य पुनःप्रयोगानुकूल्यं दर्शयति—"प्रत्न मिति पूर्वं कर्माभिवदतीति। तस्मिन् मन्त्रे यत्प्रत्न मिति पदं तेन पदेन पूर्वं मनुष्ठितं सोमयागाख्यं कर्माभिधीयते ॥

'पुराणे प्रतन-प्रत्न-पुरातन-चिरन्तनाः'—इति प्रत्न-शब्दस्याभिधानकारैः पुरातनपर्य्यायत्वाभिधानादीजानानीजानभेदेन व्यवस्थितं यन्मन्त्रचतुष्टय मुक्तं सोऽयं पूर्वः पक्षः इत्यभिप्रेत्य दूषयति—"तत्तन्नादृत्य मिति। 'तत्' तत्र दीक्षणीयेष्टिगतयो

राज्यभागयोस्त्वमग्नइत्यादिक मनुब्रूया दिति यन्मत मस्ति, तन्मतं नादरणीयम् ॥

किं तर्ह्यादरणीय मित्याशङ्क्याह—“अग्निर्वृत्राणि जङ्घनत्-त्वं सोमासि सत्पति रिति वार्त्रघ्नावेव कुर्यादिति। वृत्रं शत्रुं हन्तीति वृत्रहा, वृत्रघ्नः सम्बन्धिनौ मन्त्रौ वार्त्रघ्नौ ; ‘वृत्राणि जङ्घनदिति तल्लिङ्गात्तत्सम्बन्धित्वम्। अग्निर्वृत्राणीति प्रथम-स्याज्यभागस्य पुरोनुवाक्या, त्वं सोमासीति द्वितीयस्य ॥

एतयोर्मन्त्रयो रानुकूल्यं दर्शयति—“वृत्रं वा एष हन्ति यं यज्ञ उपनमति तस्माद्वार्त्रघ्नावेव कर्तव्याविति। यं यजमानं यज्ञ उपनमति सोमयागे प्रेरयति, एष यजमानो वृत्रं पापरूपं शत्रुं हन्त्येव ; तस्मात् कारणात् वृत्रहत्यासम्बन्धिनावेव मन्त्रौ कर्तव्यौ। यथा प्रथममन्त्रे ‘वृत्राणि जङ्घनत्’—इति लिङ्ग मस्ति, तथा द्वितीयेऽपि ‘त्वं राजोत वृत्रहा’—इति लिङ्गं विद्यते। तस्मादुभयोरपि तत्सम्बन्धित्वं पूर्वोक्तयोस्तु पक्षयोः वित-न्वते। प्रत्न मित्यानुकूल्य लिङ्गं प्रथमयोरेव मन्त्रयोर्दृश्यते न तूत्तरयोः, तस्मात् तन्नादरणीय मिति दूषयित्वा उभयलिङ्ग-सद्भावादयं पक्षः स्वीकृतः ॥

आज्यभागरूपेऽङ्गकर्मणि पुरोनुवाक्या-युग्मं विधाय प्रधान-कर्मणि हविषि याज्यानुवाक्ये विधत्ते—“अग्निर्मुखं प्रथमो देवताना मग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवत इति। प्रथमनिर्दिष्टत्वादग्नि-र्मुख मित्येषा पुरोनुवाक्या ; पश्चान्निर्दिष्टत्वादग्निश्चेति याज्या-नुवाक्ये भवत इति। प्रथमनिर्दिष्टत्वादग्निर्मुख मित्येषा-ऽनुवाक्यायाज्ये भवत इति विधातव्यं तथाप्यल्पाच्तर

मिति व्याकरणसूत्रानुसारेण याज्या-शब्दस्य पूर्वनिपातो द्रष्टव्यः ॥

तयोः ऋचोः कर्मानुकूल्यं दर्शयति—"आग्नावैष्णव्यौ रूप-समृद्धे एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाण-मृगभिवदतीति। अग्निश्च विष्णुश्च ययोः ऋचोः प्रतिपाद्ये देवते भवतः, ते उभे ऋचौ आग्नावैष्णव्यौ। ते च कर्मानुकूलेन रूपेण समृद्धे। न च रूपसमृद्धं मावैयर्थ्यं शङ्कनीयं कर्मणो यदङ्गं रूपसमृद्धं भवति। एतदेव यज्ञस्याङ्गेषु समृद्धं सम्पूर्णम्, न तु तस्मिन् किञ्चिदपि वैकल्यमस्ति केयं रूपसमृद्धिरिति चेत्, पठ्यमानेय ऋगनुष्ठीयमानं कर्माभिवदति साकल्येन ब्रवीति ॥

एषैव रूपसमृद्धिः मन्त्रप्रतिपाद्यदेवताप्रशंसाद्वारेण पुनरपि मन्त्रौ प्रशंसति—"अग्निश्च ह वै विष्णुश्च देवानां दीक्षापालौ तौ दीक्षाया ईशाते तद्यदाग्नावैष्णवं हविर्भवति यौ दीक्षाया ईशाते तौ प्रीतौ दीक्षां प्रयच्छतां यौ दीक्षयितारौ तौ दीक्षयेता मितीति। योऽयमग्निः सर्वेषां देवानां प्रथमः, यश्च विष्णुः सर्वेषा मुत्तमः; तावुभौ देवानां मध्ये दीक्षाख्यस्य च व्रतस्य पालयितारौ; तावुभौ दीक्षाया ईशाते स्वामिनौ भवतः; तस्मात्तयोर्दीक्षापालकत्वं युक्तम्। तथा सति यदाग्नाविष्णुदेव-ताकं हविर्दीक्षणीयेष्टौ भवति, तदानीं यौ दीक्षायाः स्वामिनौ देवौ, तौ प्रीतौ यजमानाय दीक्षां प्रयच्छतः। उक्तस्यैव व्याख्यानं यौ दीक्षयितारौ इत्यादिकम्। 'इति'—शब्दोऽभिप्रायपरा-मर्शार्थः। अनेनाभिप्रायेणाग्नावैष्णवं हविः क्रियते। तस्मान्मन्त्र-प्रतिपाद्या वग्नाविष्णू प्रशस्तावित्यर्थः ॥

अनेनाभिप्रायेण मन्त्रगतं छन्दः प्रशंसति — "त्रिष्टुभौ भवतः सेन्द्रियत्वायेति । त्रिष्टुप्छन्दस इन्द्रियसाधनत्वं श्रुत्यन्तरे श्रुतम्— "इन्द्रियं वै त्रिष्टुबिति । अतो मन्त्रगतं छन्दो यजमानस्य सेन्द्रियत्वाय भवति ॥

अथ मीमांसा । द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"पुरोनुवाक्यया याज्या विकल्प्यरा वा समुच्चिता ।
परैवाद्या समाख्यानाद्वचनाच्च समुच्चयः ॥

देवन-प्रकाशनकार्यस्यैकत्वात् युग्मयोर्यथा विकल्पस्तथैवैक-युग्मगतयोरिति चेत्, नैवम्; पुरोऽनुवाक्येतिसमाख्याया उत्तर-कालीनयाज्या मन्तरेणानुवाक्यानुपपत्तेः । किञ्च 'पुरोऽनु-वाक्या मनूच्य याज्यया जुहोतीतिप्रत्यक्षवचनेन देवतोपलक्षण-हविःप्रकाशनकार्यभेदोक्तिपुरःसरं साहित्यं विधीयते । तस्मात् समुच्चयः ॥ ४ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमाध्याये चतुर्थः खण्डः ॥ ४ ॥

---

गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामस्तेजो वै ब्रह्मवर्चसङ्गायत्री तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गायत्र्यौ कुरुत उष्णिहा वायुष्कामः कुर्वीतायुर्वा उष्णिक् सर्व मायुरेति य एवं विद्वानुष्णिहौ कुरुतेऽनुष्टुभौ स्वर्ग-कामः कुर्वीत द्वयोर्वा अनुष्टुभोश्चतुःषष्टि रक्षराणि

त्रय इम ऊर्ध्वा एकविंशा लोका एकविंशत्यैकविंशत्यै-वेमांल्लोकान् रोहति स्वर्ग एव लोके चतुःषष्टितमेन प्रतितिष्ठति प्रतितिष्ठति य एवं विद्वाननुष्टुभौ कुरुते बृहत्यौ श्रीकामो यशस्कामः कुर्वीत श्रीर्वै यशश्छन्दसां बृहती श्रिय मेव यश आत्मन् धत्ते य एवं विद्वान् बृहत्यौ कुरुते पङ्क्ती यज्ञकामः कुर्वीत पाङ्क्तो वै यज्ञः उपैनं यज्ञो नमति य एवं विद्वान् पङ्क्ती कुरुते त्रिष्टुभौ वीर्यकामः कुर्वीतौजो वा इन्द्रियं वीर्यं त्रिष्टुबोजस्वीन्द्रियवान् वीर्यवान् भवति य एवं विद्वांस्त्रिष्टुभौ कुरुते जगत्यौ पशुकामः कुर्वीत जागता वै पशवः पशुमान् भवति य एवं विद्वान् जगत्यौ कुरुते विराजावन्नाद्यकामः कुर्वीतान्नं वै विराट् तस्माद्यस्यैवेह भूयिष्ठ मन्नं भवति स एव भूयिष्ठं लोके विराजति तद्विराजो विराट्त्वं वि स्वेषु राजति श्रेष्ठः स्वानां भवति य एवं वेद ॥ ५ ॥

प्रधानस्य हविषो याज्यानुवाक्ये विधाय स्विष्टकृद्रूपस्य यागस्य फलविशेषाय छन्दोविशेषयुक्ते याज्यानुवाक्ये विधातु-कामः प्रथमं द्वे ऋचौ विधत्ते—"गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः"—इति । 'स हव्यवाडमर्त्यः' —इत्येका गायत्री, 'अग्निर्होता पुरोहितः'—इत्यपरा गायत्री ;

ते उभे स्विष्टकृद्यागस्य संयाज्ये कुर्यात्। कीदृशोऽधिकारी? तेजः शरीरकान्तिः, ब्रह्मवर्चसं श्रुताध्ययनसम्पत्तिः, तदुभयकामोऽत्राधिकारी। संयाजशब्दार्थं माश्वलायन आह— 'स्विष्टकृतः संयाजे कुर्वीत तेजस्कामो ब्रह्मवर्चसकाम इति'— इत्युक्ता सौविष्टकृती प्रत्ययादिति स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये इत्यर्थः॥

गायत्र्या उक्तफलसाधनत्व मुपपादयति—"तेजो वै ब्रह्मवर्चसङ्गायत्रीति। 'तत्सवितुर्वरेण्यम्'—इत्यस्या ऋचि यद्गायत्रीच्छन्दस्तस्य तेजोब्रह्मवर्चससाधनत्वेन तद्रूपत्वं लोके प्रसिद्धम्। स्नानधौतवस्त्रदर्भतिलकधारणपुरःसरं गायत्रीं जपमानस्य ब्राह्मणस्य देहे काचिदाकारशोभा दृश्यते, तदिदं तेजः। स च जपिता वेद मधीते तदर्थं च शृणोति॥

तदिदं ब्रह्मवर्चसं वेदनपुरःसर मनुष्ठातुः फलं दर्शयति— "तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गायत्र्यौ कुरुत इति। यद्यपि विधिवाक्ये ऽनुष्ठानमात्रात् फल मुक्तम्, तथापि वेदनपूर्वकानुष्ठाने तस्मिन्नेव फले कश्चिदतिशयो द्रष्टव्यः॥

फलान्तराय छन्दोऽन्तरं विधत्ते—"उष्णिहा वायुष्कामः कुर्वीतेति। गायत्र्या अध्यक्षरचतुष्टयेनोष्णिक्छन्दसोऽधिकत्वादायुर्वृद्धिहेतुत्वं युक्त मित्यभिप्रेत्योष्णिगायुषो रभेद माह— "आयुर्वा उष्णिगिति। पूर्ववद्वेदनं प्रशंसति—"सर्व मायुरेति य एवं विद्वानुष्णिहौ कुरुत इति॥

फलान्तराय छन्दोऽन्तरं विधत्ते—"अनुष्टुभौ स्वर्गकामः कुर्वीतेति। अनुष्टुभोः स्वर्गहेतुत्व मुपपादयति—"द्वयोर्वा अनु-

ष्टुभोश्चतुःषष्टिरक्षराणि त्रय इम ऊर्ध्वा एकविंशा लोका एकविंशत्यैकविंशत्यैवेमांल्लोकान् रोहति स्वर्ग एव लोके चतुःषष्टितमेन प्रतितिष्ठतीति। श्रुत्यन्तरे द्वात्रिंशदक्षरानुष्टुबित्यभिधानात् द्वयोरनुष्टुभोर्मिलित्वा चतुःषष्टिसङ्ख्याकान्यक्षराणि सम्पद्यन्ते। 'इमे' पृथिव्यन्तरिक्षस्वर्गरूपाः, एकैकस्मादूर्ध्वत्वेन वर्तमानाः, प्रत्येक मेकविंशत्यवयवसमूहरूपा लोकास्त्रयो विद्यन्ते। तेष्वेकैकं लोक मेकैकाक्षरगतयैकविंशतिसङ्ख्यया यजमान आरोहति, अन्तिमेन चतुःषष्टितमेनाक्षरेण तृतीये स्वर्ग एव लोके यजमानः प्रतितिष्ठति स्थिरोऽवतिष्ठते। वेदनं प्रशंसति— "प्रतितिष्ठति य एवं विद्वाननुष्टुभौ कुरुत इति॥

फलान्तराय छन्दोऽन्तरं विधत्ते—'बृहत्यौ श्रीकामो यशस्कामः कुर्वीतेति। श्रीर्धनधान्यादिसम्पत्तिः; यशः सत्कुलदानादिजन्या कीर्तिः। 'एना वो अग्नि मिति द्वे बृहत्यौ श्रीयशसोः कारणत्वेन। बृहत्यास्तदुभयरूपत्वं दर्शयति— श्रीर्वै यशश्छन्दसां बृहतीति। गायत्र्यादीनां छन्दसां मध्ये येषा बृहती, सैव श्रीरूपा यशोरूपा च सर्वेषां छन्दसां पशुसम्पादनमात्सर्ये सति बृहती विजय मात्मा पशुरूपत्वाच्छ्रीरूपत्वम्। तथाच तैत्तिरीया आमनन्ति—"छन्दांसि पशुष्वाजि मयुस्तान् बृहत्यजयत्तस्माद्बार्हताः पशव उच्यन्त इति। इतरच्छन्दोभिराश्रितत्वादपि श्रीरूपत्वं त एवामनन्ति—"यानि छन्दांस्यत्यरिच्यन्त, यानि च नोदभवन्, तानि निर्वीर्याणि हीनान्यमन्यन्त, साब्रवीद् बृहती, मा मेव भूत्वा, मा मुपसंश्रयतेति"— इति। मध्यं ह्येषा मङ्गाना मात्मा, मध्यं छन्दसां बृहतीति। मध्यत्वेन प्रशंसनाद्यशोरूपत्व मपि द्रष्टव्यम्। वेदनं प्रशंसति—

"श्रिय मेव यश आत्मन् धत्ते य एवं विद्वान् बृहत्यौ कुरुत इति। 'एव'-कारः श्रीयशसोः समुच्चयार्थः ॥

अहीनसत्त्रादुत्तरयज्ञप्राप्तिकामस्य छन्दोऽन्तरं विधत्ते— "पंक्ती यज्ञकामः कुर्वीतेति । 'अग्निं तं मन्ये'-इति द्वे पंक्ती। यज्ञस्य पंक्तिसम्बन्धित्वं दर्शयति—"पांक्तो वै यज्ञ इति ॥

वीर्यप्राप्तयर्थं छन्दोऽन्तरं विधत्ते—"त्रिष्टुभौ वीर्यकामः कुर्वीतेति। 'द्वे विरूपे चरत.'-इति त्रिष्टुभौ। त्रिष्टुप्छन्दसो वीर्यसाधनत्वेन तद्रूपत्वं दर्शयति—"ओजो वा इन्द्रियं वीर्यं त्रिष्टुबिति। वीर्यं शरीरबलम्। तच्चौजस इन्द्रियस्य चोप-लक्षणम्। ओजो बलहेतुरष्टमो धातुः, इन्द्रियं चक्षुरादि-पाटवम्। वेदनं प्रशंसति—"ओजस्वीन्द्रियवान् वीर्यवान् भवति य एवं विद्वांस्त्रिष्टुभौ कुरुत इति ॥

गवादिपशुप्राप्तये छन्दोऽन्तरं विधत्ते—"जगत्यौ पशुकामः कुर्वीतेति। 'जनस्य गोपाः'-इति द्वे जगत्यौ। पशूनां जगती-च्छन्दःसाध्यत्वेन तत्सम्बन्धं दर्शयति—"जागता वै पशव इति। वेदनं प्रशंसति—"पशुमान् भवति य एवं विद्वान् जगत्यौ कुरुत इति ॥

अत्तुं योग्य मन्नं कामयमानस्य छन्दोऽन्तरं विधत्ते— "विराजावन्नाद्यकामः कुर्वीतेति। 'प्रेद्धो अग्ने'-'इमो अग्ने'-इति द्वे विराजौ। अन्नस्य विराजनहेतुत्वेन विराड्रूपत्व माह— "अन्नं वै विराडिति। "तस्माद्यस्यैवेह भूयिष्ठ मन्नं भवति, स एव भूयिष्ठं लोके विराजति तद्विराजो विराट्त्व मिति। यस्मादन्नस्य विराजनहेतुत्वं तस्मात्कारणादिह लोके यस्यैव पुरुषस्यान्नं प्रभूतं भवति, स एव जनमध्ये अत्यन्तं शोभते।

तस्माद्विराजत्वनेनेति व्युत्पत्त्या विराट्शब्दो निष्पन्नः। वेदनं प्रशंसति—"वि स्वेषु राजति श्रेष्ठः स्वानां भवति य एवं वेदेति। यः पुमान् विराजो महिमानं वेत्ति, सः पुमान् स्वकीयेषु ज्ञातिषु मध्ये विशेषेण राजति लौकिकसामर्थ्येन शोभते; तथा स्वीयानां ज्ञातीनां मध्ये हस्तविद्याविनयादिभिः श्रेष्ठो भवति ॥ ५ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमाध्याये पञ्चमः खण्डः ॥ ५ ॥

---

अथो पञ्चवीर्यं वा एतच्छन्दो यद्विराड् यत्त्रिपदा तेनोष्णिहा गायत्र्यौ यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुब् यत्त्रयस्त्रिंशदक्षरा तेनानुष्टुभ् न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यां यद्विराट् तत्पञ्चमं सर्वेषां छन्दसां वीर्यमवरुन्धे सर्वेषां छन्दसां वीर्यमश्नुते सर्वेषां छन्दसां सायुज्यं सरूपतां सलोकतामश्नुतेऽन्नादोऽन्नपतिर्भवत्यश्नुते प्रजयान्नाद्यं य एवं विद्वान् विराजौ कुरुते तस्माद् विराजावेव कर्त्तव्ये प्रेद्धो अग्न इमो अग्न इत्येते ऋतं वाव दीक्षा सत्यं दीक्षा तस्माद्दीक्षितेन सत्यमेव वदितव्यमथो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या

इति विचक्षणवतीं वाचं वदेच्चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीत्येतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षु स्तस्मादाचक्षाण माहु रद्रागिति स यद्यदर्श मित्याहाथास्य श्रद्दधति यद्यु वै स्वयं पश्यति न बहूनाञ्चनान्येषां श्रद्दधाति तस्माद्विचक्षणवती मेव वाचं वदेत्सत्योत्तरा हैवास्य वागुदिता भवति भवति ॥६॥

॥ इत्यैतरेयब्राह्मणे प्रथमपञ्चिकायां प्रथमोऽध्यायः ॥

काम्ये संयाजे नानाविधे विधाय नित्ये संयाजे विधातुं विराट् छन्दः प्रशंसति—"अथो पञ्चवीर्यं वा एतच्छन्दो यद्विराडिति। 'अथो' काम्यसंयाजकथनानन्तरं नित्यसंयाज्ये कथ्यते इति शेषः। विराडाख्यं यच्छन्दोऽस्ति, एतच्छन्दः पञ्चविधवीर्योपेतत्वेन प्रसिद्धम्। तदेव विस्पष्टयति—"यत्त्रिपदा तेनोष्णिग्गायत्री यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुब् यत्त्रयस्त्रिंशदक्षरा तेनानुष्टुम् न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यां यद्विराट् तत्पञ्चम मिति। यस्मात्कारणादियं विराट् पादत्रयोपेता तेन कारणेनोष्णिग्रूपा गायत्रीरूपा च भवति; तयोरपि पादत्रयोपेतत्वेन समत्वात्। अतस्तयोः उभयोर्वीर्यं विराजस्ति। यस्मात्कारणादियं त्रयस्त्रिंशदक्षरा विराडिति श्रूयते, तदस्या विराजः पादा एकादशाक्षरोपेताः, तेन कारणेनेयं त्रिष्टुब्रूपा भवति तदीयं वीर्यं प्राप्नोति। यस्मात्कारणादियं त्रयस्त्रिंशदक्षरा विराडिति श्रूयते; तत्र, 'प्रेद्धो अग्ने'-इत्यस्या ऋचि एकोनत्रिंशदक्षराणि, 'इमो अग्ने'-इत्यस्या ऋचि

द्वात्रिंशदक्षराणि; अतस्तयोः न विराट्त्व मिति चेत्, मैवम्; न वा एकेनाक्षरेणेति वाक्येनैव परिहृतत्वात्। यस्मात् विराट् तस्मादेतद्वीर्यं पञ्चमं वीर्य मस्ति॥

एवंविधविराट्वेदनं प्रशंसति—"सर्वेषां छन्दसां वीर्य मवरुन्धे, सर्वेषां छन्दसां वीर्य मश्नुते, सर्वेषां छन्दसां सायुज्यं सरूपतां सलोकता मश्नुते, अन्नादोऽन्नपतिर्भवत्यश्नुते, प्रजयाऽन्नाद्यं य एवं विद्वान् विराजौ कुरुत इति। गायत्र्युष्णिक्त्रिष्टु-बनुष्टुब्विराड्रूपाणां सर्वेषां छन्दसां यत्सामर्थ्य मस्ति तदयं वेदिता 'अवरुन्धे' अभिमुखीकरोति; कृत्वा च 'अश्नुते' प्राप्नोति। तथा सर्वच्छन्दोभिमानिदेवानां 'सायुज्य' सहभावं, 'सरूपतां' समानरूपत्वं, 'सलोकताम्' एकस्थाननिवासञ्च प्राप्नोति। 'अन्नादः' अन्नभक्षणसमर्थो नीरोगः, अन्नपतिर्बह्वन्न-स्वामी, भवति। न केवलं स्वय मेव; किं तु स्वकीयया पुत्रादि-प्रजया सह अन्नाद्य मश्नुते॥

इत्थं छन्दः प्रशस्येदानीं विधत्ते—"तस्माद्विराजावेव कर्त्तव्ये" —इति। यस्माद्विराजोऽत्युत्तमहिमास्ति तस्माद्विराज्यर्थः। तयोः प्रतीकद्वयं दर्शयति—'प्रेद्धो अग्ने', 'इमो अग्ने'—इत्येते इति॥

दीक्षणीयेष्टौ स्विष्टकृतः संयाज्ये विधाय दीक्षितस्य सत्य-वदनं विधत्ते—"ऋतं वाव दीक्षा सत्यं दीक्षा तस्माद्दीक्षितेन सत्य मेव वदितव्य मिति। मनसा यथावस्तुचिन्तन मृतशब्दा-भिधेयम्; वाचा यथावस्तुकथनं सत्यशब्दाभिधेयम्। तदुभ-यात्मिका दीक्षा; तद्वैकल्ये विनश्यति। यस्मादेवं तस्माद्दीक्षि-तेन सत्य मेव वदितव्यं न तु किञ्चिदप्यनृतं वदेत्। तदशक्या-भिधान मित्यनुजिघृक्षया प्रकारान्तरं विधातुं प्रस्तौति—

"अथो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इतीति। प्रकारान्तरारम्भार्थोऽय मथोशब्दः। ब्रह्मवादिन एव माहुः खलु मनुष्यः को नाम सर्वं वाक्यं सत्यं वदितु मर्हति ? न कश्चिदपि तथा कर्त्तुं शक्नोति; देवा एव सत्यसंहिताः, सत्ये तात्पर्यवन्तः; मनुष्यास्तु प्रायेणानृते तात्पर्ययुक्ताः। 'इति'-शब्दो ब्रह्मवादिवचनसमाप्त्यर्थः॥

इदानीं सत्यवदनफलसिद्ध्यर्थं प्रकारान्तरं विधत्ते—"विचक्षणवतीं वाचं वदेदिति। विचक्षणेत्यक्षरचतुष्टयात्मकोऽयं मन्त्रः; तद्युक्तं वाक्यं प्रयुञ्जीत—'देवदत्त! विचक्षण! गा मानय', 'यज्ञदत्त! विचक्षण! गां बधानेत्येवं तत्प्रयोगः। तदाहापस्तम्बः—"चनसित-विचक्षण इति नामधेयान्तेषु दधाति; चनसितेति ब्राह्मणं विचक्षणेति राजन्यवैश्याविति॥

विचक्षणेतिमन्त्रस्य सत्यवदनपूर्तिहेतुत्वं प्रतिपादयति—"चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीति"-इति। चक्षुरिन्द्रिय मेव विचक्षणशब्दवाच्यं तदेव स्पष्टीक्रियते—'चक्षिङ् दर्शने'—इत्यस्माद्धातोरयं शब्दो निष्पन्नः; तथा सति विशेषेण वस्तुतत्त्व मनेनाचष्टे पश्यतीति विचक्षणं नेत्रम्। तस्माच्चक्षुर्विचक्षण मिति पर्यायौ। उक्तनिर्वचनप्रदर्शनार्थः 'इति'-शब्दः॥

अस्त्वेवं तयोः पर्यायत्वम्, कथ मेतावता सत्यसंपूर्तिसिद्धि रित्याशङ्क्याह—"एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुरिति। प्रत्यक्षानुमानादिप्रमाणानां मध्ये प्रत्यक्षप्रमितिसाधनं यच्चक्षुरिन्द्रिय मस्ति, एतदेव मनुष्येषु सर्वेषु सत्यं निहितं यथावस्तु-

ज्ञानसाधनत्वेनाभिमतम्, तस्माच्चक्षुःपर्यायविचक्षणशब्दप्रयोगेण सत्यसंपूर्तिर्भवति। अन्वयव्यतिरेकाभ्यां चक्षुषो यथावस्तुदर्शनसाधनत्वं साधयति—'तस्मादाचक्षाण माहुरद्रागिति स यद्यदर्शं मित्याहाथास्य श्रद्दधति यद्युवै स्वयं पश्यति न बहूनाञ्चनान्येषां श्रद्दधातीति। यस्माच्चक्षुस्तत्वदर्शनहेतुत्वं मनुष्याणामभिप्रेतं तस्माल्लोके सभाया मागत्य काञ्चिद्वार्ता माचक्षाणं पुरुषं प्रति सभ्या एव माहुः—'अद्रागिति' किं त्व मेव मद्राक्षीः? इत्यर्थः। स च पुरुषो यद्यह मेव मद्राक्ष मिति ब्रूयात्, तदा अस्य वचनं सत्य मिति सभ्याः सर्वे 'श्रद्दधति' विश्वासं कुर्वन्ति। तदिद मेक मुदाहरणम्। 'यद्युवै'—इत्ययं निपातसमूहः उदाहरणान्तरप्रदर्शनार्थः। अथवा कश्चित् पुमान् स्वय मेव चक्षुषा स्कन्धमूलादुपेतं स्थाणुं पश्यति, अन्ये बहवः पुरोवर्तिनो पश्यन्तः पुरुषोऽय मित्याचक्षते। 'चन'-शब्दोऽपि-शब्दार्थः; बहूना मप्यनेषां वचन मयं पुरुषो न श्रद्दधाति किन्तु स्वकीयं चाक्षुषदर्शन मेव श्रद्दधाति। वाजसनेयिनोऽप्यामनन्ति—"द्वौ विवदमानावेयातां मह मदर्श मह मश्रौष मिति, य एव ब्रूया दह मदर्श मिति तस्मा एव श्रद्दध्यामेति। तैत्तिरीयाश्चामनन्ति—"अनृतं वै वाचा वदति अनृतं मनसा ध्यायति चक्षुर्वै सत्य मद्रागित्याहाह मदर्श मिति तत्सत्य मिति॥

तथाविधचक्षुःपर्यायस्य विचक्षणशब्दस्य सत्यसंपूर्तिहेतुत्व मुपपाद्य पूर्वोक्तं विधि मुपसंहरति—"तस्माद्विचक्षणवती मेव वाचं वदेत्सत्योत्तरा हैवास्य वागुदिता भवति भवतीति। अस्य विचक्षणशब्दोपेतवचनवादिनो या वागस्ति,सा 'सत्योत्तरा' स्वरूपेणानृतापि विचक्षणेतिमन्त्रसामर्थ्यात् सत्यभूयिष्ठैव भवति,

अनृतदोषो न स्पृशतीत्यर्थः । 'भवति'-शब्दस्याभ्यासोऽध्याय-समाप्त्यर्थः ॥ ६ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
ऐतरेयब्राह्मणस्य प्रथमाध्याये षष्ठः खण्डः ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवादेशतो
भगवत्सायणाचार्येण विरचितं
ऋग्वेदीयशाकलशाखाया ऐतरेयब्राह्मणस्य
प्रथमपञ्चिकायाः प्रथमस्याध्यायस्य
वेदार्थप्रकाशं नाम भाष्यं समाप्तम् ॥

---

# ऋग्वेदस्य,

## शाकलशाखीयैतरेयारण्यकात्

द्वितीयारण्यकस्याद्याध्यायीयाद्यखण्डी ।

तत्र,

## ॥ सायणभाष्यभूमिका ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे ; तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रथमारण्यके कर्म्म महाव्रत मुदीरितम् ।
संवत्सराख्यसत्रस्य शेषः पूर्णोऽत्र तावता ॥ २ ॥
तदीया विकृतिः सर्व्वा प्रोक्तैवेति मनीषया ।
कर्म्मकाण्डं समापय्य वेदो ज्ञानं विवक्षति ॥ ३ ॥
आरण्यकं द्वितीयं यत् तृतीयञ्च तदात्मकम् ।
ज्ञानकाण्डं ततः सोपनिषदित्यभिधीयते ॥ ४ ॥
करोम्युपनिषद्व्याख्यां शङ्कराचार्य्यवर्त्मना ।
आचार्य्यस्य प्रसादेन संसारान् मुच्यते बुधैः ॥ ५ ॥

उपनिषच्छब्दो ब्रह्मविद्या माचष्टे । स हि विविदिषुं पुरुष मुपेत्य नितरा मविद्यां सीदति विशीर्णां करोति । यद्वा ब्रह्मतां गमयति । अथवा रागद्वेषाववसादयति शिथिलीकरोति । ततः 'षद्लृविशरणगत्यवसादनेषु'-इति प्रोक्तं धातोरर्थत्रयम् । तस्मिन्नुपनिषच्छब्दो विद्यते । तथाविधाया ब्रह्मविद्यायाः

उत्पादकत्वात् ग्रन्थोऽप्युपनिषदित्युच्यते। तस्योपनिषद्ग्रन्थस्य विषयप्रयोजनाधिकारिसम्बन्धप्रामाण्यप्रमेयस्वरूपाणि निरूप्यन्ते।

अद्वैतमात्मतत्त्वं विषयः; अनन्यलभ्यत्वात्। न ह्येतत् तत्त्वमुपनिषदो विना अन्येन केनापि प्रमाणेनोपलभ्यते। न तावच्चक्षुरादिजन्यं बाह्यं प्रत्यक्षं तत्त्वे प्रमाणम्; तत्त्वस्य रूपरसादिरहितत्वात्। नाप्यहं मनुष्य इति वा, कर्त्ता भोक्ताऽहमिति वा मानसप्रत्यक्षं तत्त्वबोधकम्; तयोः क्रमेण स्थूलसूक्ष्मदेहविषयत्वात्। यत्त्वहं ब्रह्मेति मानसं प्रत्यक्षम्, तच्छास्त्रजन्यत्वान्नोपनिषदो व्यतिरिक्तम्। नाप्यनुमानं तत्त्वे प्रवर्तते; तद्गतस्य लिङ्गस्य कस्याप्यभावात्। न हि निर्धर्मके तत्त्वे किञ्चिल्लिङ्गं सम्भवति; अनुमानस्य यस्य कस्यापि लिङ्गस्य पक्षधर्मत्वाभावेनासिद्धत्वप्रसङ्गात्। आगमेऽपि कर्मकाण्डे तत्त्वं न प्रतीयते। तस्मादुपनिषदेव परिशिष्यते। अत एव श्रुतिप्रत्यक्षादिगम्यत्वं निराकृत्य उपनिषदेकगम्यत्वं दर्शयति। "नावेदविन्मनुते तं बृहन्तम्"—इति, "तन्त्वौपनिषदं पुरुषं पृच्छामि"—इति च। तथासत्यनन्यलभ्य मौषधादिकं यथा चिकित्सादिशास्त्रस्य विषयः, तथा तत्त्व मद्वैत मुपनिषदो विषयः॥

प्रयोजनञ्चात्मतत्त्वाविर्भावादिकम्। तत्सर्वात्मकपरब्रह्मस्वरूपात्माविर्भावः प्रथमं फलम्; "आत्मन्येवात्मानं पश्यति सर्वात्मानं पश्यति"—इति श्रुतेः। तत ऊर्ध्व मविद्याग्रन्थिर्विकीर्यते; "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य"—इति श्रुतेः। निवृत्ताया मावरणाविद्याया मन्तःकरणतादात्म्यग्रन्थिभेदचिद्रूपजडरूपत्वादिसंशयच्छेदोपाधिजन्महेतुकर्मक्षयाश्च भवन्ति; "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व-

संशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥"—इति-श्रुतेः। इह लोकेऽपि हर्षशोकपरित्यागो भवति; अध्यात्मयोगाधिगमेन हि "एवं मत्वा धीरो हर्षशोकौ जहाति"—इतिश्रुतेः। तथा काम्यमानस्य तत्त्वस्य प्राप्तत्वान्नियमितान्तःकरणत्वेन विषय-दर्शनाभावाच्च कामप्रविलयो भवति; "पर्य्याप्तकामस्य कृता-त्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः"—इतिश्रुतेः। तथा तस्य दूरतादिस्थानीया क्रीडाप्यात्मन्येव,—सन्ध्यावन्दनाद्यग्निहोत्रा-दिरूपा क्रियाप्यात्मन्येव; "आत्मक्रीड़ आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः"—इतिश्रुतेः। ईदृशस्तु लौकिकवैदिककर्तव्या-भावादयं कृतकृत्यः; "यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवति"—इतिश्रुतेः, "ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः। नैवास्ति किञ्चित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥"—इतिस्मृतेश्च। तादृशस्य योगिनः सर्वथा मनसि विद्यानिमित्त आनन्द आविर्भवति; "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी-भवति"—इतिश्रुतेः। सेय मुपनिषदः प्रयोजनपरम्परा सुप्रसिद्धा द्रष्टव्या ॥

सम्बन्धस्तु कर्म्मकाण्डेन सह साध्यसाधनभावः। उपनिषदि साध्यं तत्त्वज्ञानं प्रतिपाद्यते, कर्म्मकाण्डे तु चित्तसंस्काराय पापक्षयेण विविदिषोत्पादनेन वा साधनान्यग्निहोत्रादि-कर्म्माणि प्रतिपादितानि।

तत्रैवं यथोक्तं सम्बन्धमसहमानाः प्रतिवादिनो बहुधो-त्तिष्ठन्ति। तेषां मध्ये, (१)केचिद् ब्रह्मज्ञाननैरपेक्ष्येणैव मोक्षं वर्णयन्ति,—निषिद्धकाम्ययोः कर्म्मणोः सर्वात्मना परित्यागेन भाविनोरुत्तमाधमजन्मनोरसम्भवात् नित्यनैमित्तिकयोरनुष्ठानेन

प्रत्यवायानुदयात् प्रारब्धकर्म्मणो भोगेन विनाशाद्देहान्ते मुक्तिरेव परिशिष्यत इति, तदयुक्तम्; अनन्तयोर्निषिद्धकाम्ययोः सर्वात्मना परित्यागासम्भवान्नित्यनैमित्तिकयोरपि फलसद्भावश्रवणा-ज्जन्मान्तरकृतानाञ्च बहुजन्महेतूनां सम्भवान्नास्ति ज्ञान मन्तरेण मुक्तिः। (२)अन्ये तु ज्ञानप्राधान्येन कर्म्मप्राधान्येन वोभयप्राधान्येन वा ज्ञानकर्म्मणोः समुच्चयो मुक्तिहेतुरित्याहुः, तदयुक्तम्; परस्परविरुद्धयो समुच्चयासम्भवात्। निर्विकारात्मबुद्धिर्ज्ञानम्, अहं कर्त्ता ममेदं फल मिति भ्रान्त्या कर्मप्रवृत्तिरिति तयोर्विरोधः। (३)अपरे पुनर्ज्ञानस्यैव मुक्तिहेतुत्वेऽपि सोपानपङ्क्त्या हर्म्याधिरोहणन्यायेन सन्ध्यावन्दन मारभ्य सहस्रसंवत्सरसत्रान्तेषु वैदिकेषु कर्मस्वनुष्ठितेषु पश्चाज् ज्ञानाधिकार मिच्छन्ति, तदप्ययुक्तम्; अल्पायुषां मनुष्याणां तदसम्भवात्। (४)अपरे पुनः प्रपञ्चप्रविलापनेन कर्मकाण्डस्योपयोग मिच्छन्ति,—स्वर्गकामो यजेतेत्युक्ते सत्यर्थाद्देहात्मभावस्य प्रविलाप्यमानत्वादिति, तदप्यसत्; वकबन्धप्रयासप्रसङ्गात्। यथा वकबन्धकामस्तत्समीपे गत्वा तदानी मबध्वा शिरसि नवनीतं प्रक्षिप्यातपेन नवनीतस्य विलीनस्य चक्षुःप्रवेशे सति निमीलितचक्षुष्कं वकं पश्चाद् बध्नाति, तथायं प्रपञ्चप्रविलापनवादी साक्षाद्विलापक मस्थूल मनणु इत्यादिक मुपनिषद्वाक्य मुपेक्ष्य विलापनस्यानभिधायकेन स्वर्गकामपदेनार्थाद्विलापयतीति व्यर्थोऽयं प्रयासः। (५)ये तु वेदोक्तकृत्स्नकर्मभिस्तत्फलेषु भुक्तेषु कामे प्रलीने सति पश्चात् ज्ञानाधिकार इति वर्णयन्ति, तदप्ययुक्तम्; भोगेन कामलयस्यासम्भवात्। तथा च स्मर्यते—"न जातु कामः कामाना मुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥"-इति।

तस्मात् मतान्तराणां मयुक्तत्वात् ज्ञानकर्म्मणोः साध्यसाधनरूप-
त्वात् तत्प्रतिपादकत्व मेव तयोः सम्बन्धः ॥

अधिकारी तत्त्वजिज्ञासुरेव ; न तु चिकीर्षुः । यस्तु चिकी-
र्षोरधिकारं मन्यते स प्रष्टव्यः ।—वेदान्ताधिकारी यत् कार्य्यं
चिकीर्षति, तत् किं कार्य्यसामान्य किं वा कार्य्यविशेषः ?
नाद्यः ; कार्य्यसामान्यस्य वेदान्तेष्वप्रतीतेः,—सत्यज्ञानादि
वाक्येषु कुर्य्यादितिपदस्यादर्शनात् । विशेषपक्षेऽपि कोऽसौ
कर्त्तव्यो विशेषः ?—किं वासनासन्निरोधः, किं वा मनसो
निरोधः, उत प्रतिपत्तिः, आहोस्वित् प्रसङ्ख्यानम् ? सर्वथापि
वेदान्तानां कार्य्यपरत्वन्नोपपद्यते ; सत्यज्ञानादिवाक्येषु यथोक्त-
वासनामनोनिरोधादिविधेरप्रतिभासात् । अनर्थनिवारकत्वेन
सुषुप्त्यादौ दृष्टत्वात् वासनामनोनिरोधावपेक्षिताविति चेत्,
एवन्तर्हि सुषुप्त्यादिदृष्टान्तेनान्वयव्यतिरेकसिद्धत्वान्नैतौ शास्त्रेण
विधातव्यौ । नापि तृतीयः ; कर्त्तुमकर्त्तुमन्यथाकर्त्तुमशक्-
यत्वात् पुरुषतन्त्रायाः प्रमाणैकजन्यायाः प्रतिपत्तेर्विध्यसम्भ-
वात् । नापि चतुर्थः ; शब्दयुक्त्या वृत्तिरूपस्य प्रसङ्ख्यानस्य
साक्षात्कारहेतुत्वाभावात् । यथा प्रथमप्रवृत्ते शब्दयुक्ती साक्षा-
त्कारं न जनयतः, एवमसकृदावृत्ते अपि । तस्मात् कार्य्य-
सामान्यस्य कार्य्यविशेषस्य वा वेदान्तैरप्रतिपाद्यत्वान्न चिकी-
र्षोरत्राधिकारः । किन्तु सिद्धब्रह्मतत्त्वस्यैव प्रतिपाद्यत्वात्
जिज्ञासोरेवात्राधिकार इति स्थितम् ॥

ननु जिज्ञासोरपि वेदान्ताः प्रमितिं न जनयन्ति ; तत्प्रामाण्य-
स्यैवाभावादिति चेत्,—तत्र वक्तव्यम् ;—किं साधकाभावात्
प्रामाण्याभावः, आहोस्विदप्रामाण्यहेतुसद्भावात् ? नाद्यः ; स्वतः

प्रामाण्याङ्गीकारेण साधकानपेक्षत्वात्। द्वितीयेऽपि किं मबोधकत्वादप्रामाण्यम्, उत बाधितत्वात्, अथवानुवादकत्वात्? नाद्यः; "आत्मा वा इद मेक एवाग्र आसीदित्याद्यवान्तरवाक्यानां "प्रज्ञानं ब्रह्मेत्यादि महावाक्यानाञ्च, श्रवणमात्रेण बोधोपलम्भात्। कर्म्मकाण्डोक्तज्योतिष्टोमादिवाक्यवत् पदार्थानां संसर्गएवात्रावबुध्यते; न त्वखण्डार्थ इति चेत्,—मैवम्; "स एष नेति नेत्यात्मे त्यादित्वम्पदार्थशोधकवाक्यैः, "अस्थूल मनणु इत्यादितत्पदार्थशोधकवाक्यैश्च शोधिततत्त्वम्पदार्थस्य पुरुषस्याखण्डार्थतत्त्वावबोधात्। नापि द्वितीयः; प्रत्यक्षानुमानविधिनिषेधशास्त्रादीनां मायाकल्पितभेद माश्रित्य चरितार्थानां वास्तवाद्वैतबोधिवेदान्तबाधकत्वासम्भवात्। अतएवान्यत्रोक्तम् —वास्तवे ब्राह्मणे स्वप्ने कल्पिता शूद्रता यथा। न विरुद्धा तथा भेदो नाद्वैतेन विरुध्यते॥"—इति। नापि तृतीयः; आत्मतत्वविषयस्य पुरोवादिनः प्रमाणान्तरस्याभावेनानुवादकत्वासम्भवात्। वेदान्तसिद्धान्त मजानद्भिर्वादिभिर्लौकिकैश्चाहं मनुष्य इत्यादिभिः प्रमाणैः स्वस्वात्मग्रहणात् अस्ति पूर्ववादिप्रमाण मिति चेत्,—न; तेषां देहादिविषयत्वेनात्मतत्त्वगोचरत्वं नास्तीति पूर्वमेवानन्यलभ्यं विषयं निरूपयद्भिरस्माभिः प्रतिपादितत्वात्। तस्मादप्रामाण्यकारणाभावात् यद्वेदान्तानां स्वतः सिद्धं प्रामाण्यं तत् सुस्थितम्॥

एव मप्यात्मनः स्वप्रकाशत्वेन घटादिवत् प्रमेयत्वं नास्तीति चेत्,—मैवम्; घटादिग्राहकेष्वपि सर्वेषु ज्ञानेषु न्यायतो विचार्य्यमाणेष्वात्मन एव प्रमेयत्वात्, तथा हि—यत् प्रमातु मर्हन्तत् प्रमेयम्, तदर्हत्वं चाज्ञातत्वादात्मन एव युज्यते, न तु घटादेः।

अज्ञानेनावृतत्वं अज्ञातत्वम् । घटादयस्तु अज्ञानकार्यत्वान्ना-ज्ञानेनावृताः । अतएवान्यत्रोक्तम्—

"अज्ञातरज्जुकार्यस्य सर्पस्याज्ञातता न हि ।
अज्ञातब्रह्मकार्यस्य जड़स्याज्ञातता कुतः ॥
रज्जुसर्पं न जानामि बोद्धु मिच्छामि मानतः ।
इति व्यवहृतिं प्राज्ञा नाङ्गीकुर्वन्ति केऽपि च ॥

किञ्च,—अज्ञाततत्त्वतो लभ्यं तिरोधानं न चेतरत् ।
स्वय मेव तिरोभूते जड़े कान्या तिरोहितिः ॥
आविर्भूते स्वरूपे च चैतन्येऽज्ञाननिर्मितात् ।
तिरोधानाद्विशेषोऽस्ति शुभ्रवस्त्रे मसी यथा ॥
चन्द्रं मलिनयेद्राहुर्नीलमेघं न तु क्वचित् ।
एवं चैतन्य मज्ञातं जड़न्त्वज्ञानदेहकम् ॥
अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः ।
अक्षादीनां स्वतः सिद्धौ यत्र तेषां प्रमाणता ॥
अनुभूतिग्रहायैव प्रवृत्तान्यपि दुष्टया ।
सामग्र्याखिलमानानि गृह्णते जड़संयुताम् ॥
शुक्तिकाग्रहणायैव प्रवृत्त मपि लोचनम् ।
गृह्णाति रजतोपेतं शुक्त्यंशन्दोषयोगतः ॥
वेदान्तेतरसामग्री दुष्टैषा चक्षुरादिका ।
तज्जा धीरन्न गृह्णाति स्फूर्त्तिं रूपादिसंयुताम् ॥
एवञ्च सति विभ्रान्तः कल्पिते रजते धियम् ।
प्रमाणं मनुते यद्वद्रूपादौ मनुजास्तथा ॥
ब्रह्मण्यक्षादिमानत्व मिति न्यायविदां मतम् ।
रूपादावेव तन्मान मिति मूढ़धियो जगुः ॥"—इति ।

नन्वेवं सति विषयत्वनिरूपणाय पूर्वोक्तं मनन्यलभ्यत्वं विपर्यतीति चेत्,—न ; मूढ़ान् प्रत्यनन्यलभ्यत्वोपन्यासात्। ब्रह्मविद्दृष्ट्या तु सर्वैरपि प्रमाणैः ब्रह्मैव प्रतीयते। अतः प्रमेयत्वं तस्य युक्तम्। किञ्चानन्दरूपत्वेन पुरुषार्थत्वादपि प्रमेयत्वं युक्तम्।

तदेवं विषयप्रयोजनसम्बन्धाधिकारिप्रामाण्यप्रमेयाणां सद्भावाद्व्याख्यातुं योग्येयुपनिषद्व्याख्या मारभते ॥

---

॥ अथ प्रथमखण्डः ॥

॥ ॐ ॥

एष पन्था एतत् कर्मैतद् ब्रह्मैतत् सत्यं तस्मान्न प्रमाद्येत्तन्नातीयान्न ह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवु स्तदुक्त मृषिणा प्रजा ह तिस्रो अत्याय मीयुर्न्यन्या अर्क मभितो विविश्रे बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति प्रजा ह तिस्रो अत्याय मीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्याय मायं स्तानीमानि वयांसि वङ्गावगधाश्चेरपादा न्यन्या अर्क मभितो विविश्र इति ता इमाः प्रजा अर्क मभितो निविष्टा इम मेवाग्निम्बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद्भुवनेष्वन्तरसावादित्यः पवमानो हरित आविवेशेति वायुरेव पवमानो दिशो हरित आविष्टः ॥ १ ॥

तत्रादौ परमपुरुषार्थकामिनां श्रोतॄणां तत्साधनरूपं मार्ग मुपदिशति—"एष पन्था एतत् कर्मैतद् ब्रह्मैतत् सत्यम्"-इति। एतच्छब्दः सन्निहित मर्थं परामृशति। स च द्विविधः,—अतीतः आगामी चेति। 'एषः' उभयविधोऽपि 'पन्थाः' पुरुषार्थस्य मार्गः, साधन मित्यर्थः। कोऽय मतीतः? कश्चागामी?—इत्य-पेक्षायां तदुभयं विस्पष्टं निर्दिश्यते—"अग्नि मीळे पुरोहित मित्यारभ्य "अङ्गो रूप मङ्गो रूप मित्यन्तेन अतीतसन्निहित-ग्रन्थेन यत् प्रतिपादितं तत् 'एतत्', 'कर्म्म'। "उक्थ मुक्थ मिति वै प्रजा वदन्तीत्यारभ्य "आचार्या आचार्या इत्यन्तेन सन्निहितेनारण्यकद्वयरूपेण उत्तरग्रन्थेन प्रतिपादितं यत् सगुणं निर्गुणञ्च तत् 'एतत्', 'ब्रह्म'। एतदुभय मपि पुरुषार्थसाधनम्। तत्र कर्म्मशब्देन तद्विषयं ज्ञानपूर्वक मनुष्ठानं विवक्षितम्, ब्रह्म-शब्देन तु तद्विषयं ज्ञानमात्रम्। अत एव मीमांसाभाष्ये भाष्यकारा आहुः—'अभ्युदयफलं धर्मज्ञानं तच्चानुष्ठानापेक्षं, निःश्रेयसफलन्तु ब्रह्मज्ञानं न चानुष्ठानान्तरापेक्षम्'-इति। अतीतानागतग्रन्थयोः कर्म्मब्रह्मणोरुभयोरपि पुरुषार्थहेतुत्वे कुतः काण्डभेद इत्याशङ्क्य वैलक्षण्यं विषयभेदादितुरुच्यते—यदेतदु-त्तरकाण्डप्रतिपाद्यं ब्रह्म, तत् 'एतत्' 'सत्यम्' अबाध्यम्; न हि तस्यान्यद् बाधकं प्रमाणं पश्यामः। पूर्वकाण्डोक्तन्तु कर्म्म, मिथ्यात्वाद् बाध्यम्। बाधकप्रमाणञ्च 'नेह नाना'-इत्या-दिकं बहुल मुपलभ्यते। मिथ्यात्वेऽपि बाधासिद्धिहेतुत्वादुपादेय मेव॥

यथोक्तस्योभयस्य मार्गत्वं दृढयितुं अयोगव्यावृत्ति मन्य-योगव्यावृत्तिञ्च विधत्ते—'तस्मान्न प्रमादेत्तत्रातीयात्'—

इति। 'तस्मात्' उभयविधादाम्नायमार्गात् प्रमादं 'न' कुर्य्यात्। कर्म्मानुष्ठानब्रह्मज्ञानयोरसम्पादनं प्रमादः। तथा सम्पादयितुं प्रवृत्तेनाप्यालस्यादिना तत्परित्यागोऽपि प्रमाद एव। तदुभयं न कुर्य्यात्। अनेनायोगव्यावृत्तिरुक्ता। कृषि-वाणिज्यादौ वा शास्त्रान्तरसिद्धे चैत्यवन्दनादौ वा पुरुषार्थ-साधनबुद्धा प्रवृत्तिस्तस्य पूर्वोक्तमार्गात् पथः सोऽय मन्ययोगः तद्व्यावृत्तिः 'तन्नातीयात्'—इत्यनेन उच्यते। 'तत्' पूर्वोक्त-मार्गरूप मुभयं 'न' अतिक्रमेत् ॥

त मेवानतिक्रमं स्वपक्षसाधनपरपक्षदूषणाभ्यां द्रढयति—"न ह्यत्यायन् पूर्वे येऽत्यायंस्ते पराबभूवुः"-इति। 'पूर्वे' महर्षयो व्यासवसिष्ठादयः, त मुक्तं पन्थानं 'न ह्यत्यायन्' नैवात्यक्रामन्। 'ये' तु नास्तिकाः, 'अत्यायन्' अत्यक्रामन्, 'ते' 'पराबभूवुः' पराभूताः, पुरुषार्थाद् भ्रष्टाः ॥

ब्राह्मणेनोक्तस्यार्थस्य दार्ढ्याय मन्त्र मुदाहरति—"तदुक्त मृषिणा प्रजा ह तिस्रो अत्याय मीयुर्न्यन्या अर्क मभितो विविश्रे बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति"-इति। 'तत्' पूर्वोक्तमार्गातिक्रमानतिक्रमयोर्बाधाबाधावित्येतदर्थजातम् 'ऋषिणा' केनचिन्मन्त्रदर्शिना पुरुषेण, तन्मन्त्ररूपया वाचा कयाचिदृचा प्रोक्तम्। 'प्रजा ह' इत्यादिको मन्त्रः। ब्राह्मण-क्षत्रियविट्शूद्राः प्रजाः। तासां भागचतुष्टये सति भागत्रय-वर्तिन्यः 'तिस्रः' 'प्रजाः', वैदिकमार्गं श्रद्धारहिताः सत्यो यथो-क्तस्य मार्गस्य 'अत्यायम्' अतिक्रमम् 'ईयुः' प्राप्ताः। लोके हि गुरुशास्त्रोपदेशरहितानां बाहुल्य मुपलभ्यते। तत्प्रसिद्धिद्योत-नार्थः 'ह'-शब्दः। चतुर्थभागे व्यवस्थितानां प्रजानां मध्ये

'अन्याः' काश्चित् प्रजाः, 'अर्कम्' अर्चनीय मग्निम् 'अभितः' 'निविविश्रे' निविष्टाः, तदुपासने प्रवृत्ता इत्यर्थः। 'भुवनेष्वन्तः' सर्वेषु लोकेषु मध्ये 'बृहत्' प्रौढं सर्वजगत्प्रकाशकं 'ह' प्रसिद्धम् आदित्यमण्डलं 'तस्थौ'। तन्मण्डलमध्यवर्तिन मप्यन्याः काश्चित् प्रजा अभितो निविष्टा इत्यन्वयः। 'पवमानः' जगतः शुद्ध्यर्थं सर्वदा सञ्चरन् वायुः, 'हरितः' सर्वा दिशः 'आविवेश'। त मप्यन्या अभितो निविष्टा इत्यन्वयः। 'इति'-शब्दो मन्त्र-समाप्त्यर्थः॥

तस्या ऋचः प्रथमपादं व्याचष्टे—"प्रजा ह तिस्रो अत्याय मीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्याय मायंस्तानी-मानि वयांसि वङ्गावगधाश्चेरपादाः"—इति। 'ताः' पूर्वोक्ताः, 'इमाः' अस्माभिर्दृश्यमानाः अत्रोरहितास्त्रिविधाः 'प्रजाः' काश्चिद्वैदिकस्यातिक्रमं प्राप्ताः। 'तानि' तथाविधप्रजानां शरीराणि, तद्दोषफलं भोक्तुं प्रवृत्तानि 'इमानि' अस्माभिर्दृ-श्यन्ते। सामान्यतः प्रोक्तानां पुनः 'वयांसि'-इत्यादिना विशेष-निर्देशः। 'वयांसि' पक्षिणः काकगृध्रादयः, आकाशे दृश्यन्ते। सोऽयं पक्षिसङ्घस्त्रिविधानां प्रजाना मेको भागः। 'वङ्गाः' वन-गता वृक्षाः। 'अवगधाः' अवन्ति रक्षन्ति मनुष्यादीन्, गृध्यन्ते-ऽभिकाङ्क्ष्यन्त इति व्रीहियवाद्या ओषधयः, अवगधाः। 'गृधु अभिकाङ्क्षायामितिधातोर्गधशब्दो निष्पन्नः। सोऽय मोषधि-वनस्पतिरूपः प्रजानां द्वितीयो राशिर्भूमौ वर्त्तते। 'इरपादाः' उरःपादाः सर्पा भूविलवासिनः, सोऽयं तृतीयो राशिः। तदेतत् प्रजात्रयं वैदिकातिक्रमदोषजन्यन्नरक मनुभवति॥

द्वितीयपादं व्याचष्टे—"न्यन्या अर्क मभितो विविश्र इति

ता इमाः प्रजा अर्क मभितो निविष्टा इम मेवाग्निम्'' —इति।
योऽग्निराहवनीयादिरूपो दृश्यते, अय मेवार्चनीयत्वात् 'अर्कः'॥

तृतीयपादं व्याचष्टे—"बृहद्व तस्थौ भुवनेष्वन्तरित्यद उ
एव बृहद्भुवनेष्वन्तरसावादित्यः''—इति। बृहच्छब्देनाकाशे
दृश्यमानं 'अदः' तेजोमण्डल मेव, विवक्षितम्। सर्वजगत्-
प्रकाशकत्वेन प्रौढत्वात्तेन मण्डलेन तत्रावस्थितः 'असावादित्यः'
उपलक्षितः॥

चतुर्थपादं व्याचष्टे—"पवमानो हरित आविवेशेति वायु-
रेव पवमानो दिशो हरित आविष्टः"—इति। पादप्रक्षालन-
निष्ठीवनादिप्रदेशस्य शोषणेन शुद्धिहेतुत्वादयं 'वायुरेव', पव-
मान इत्युच्यते। 'दिशः' प्राच्यादिदिशः। तत्तत्कर्मसु विहिताः
सत्योऽनुष्ठानवैकल्यं हरन्तीति 'हरित्'-शब्देनोच्यन्ते। वायो-
र्दिक्षु सञ्चारात्तत्र आविष्टत्वम्॥

वैदिकातिक्रमं कृतवत्यः प्रजास्त्रिविधा अपि पक्ष्यादिरूपेण
नरकजन्मानुभवन्ति। चतुर्थभागवर्त्तिन्यः श्रद्धायुक्ताः सत्य उत्तम-
लोकप्राप्त्यर्थं मग्निवाय्वादिदेवता उपासत इत्येवं ज्ञानहेतुर्मं-
न्त्रेणोक्तत्वात्, वैदिक मेतं पन्थानं सर्वथा नातिक्रमेदित्यर्थः॥१॥

उक्थ मुक्थ मिति वै प्रजा वदन्ति तदिद मेवोक्थ
मिय मेव पृथिवीतो हीदं सर्व मुत्तिष्ठति यदिदं किञ्च
तस्याग्निरर्कोऽन्न मशीतयोऽन्नेन हीदं सर्व मश्नुते ऽन्त-
रिक्ष मेवोक्थ मन्तरिक्षं वा अनुपतन्त्यन्तरिक्ष मनु
धावयन्ति तस्य वायुरर्कोऽन्न मशीतयोऽन्नेन हीदं सर्व

मश्नुते ऽसावेव द्यौरुक्थ ममुतः प्रदानाद्धीदं सर्व मुत्तिष्ठति यदिदं किञ्च तस्यासावादित्योऽर्कोऽन्न मशीतयोऽन्नेन हीदं सर्व मश्नुत इत्यधिदैवत मथाध्यात्मम् पुरुष एवोक्थ मय मेव महान् प्रजापतिरह मुक्थ मस्मीति विद्यात् तस्य मुख मेवोक्थं यथा पृथिवी तथा तस्य वागर्कोऽन्न मशीतयोऽन्नेन हीदं सर्व मश्नुते नासिके एवोक्थं यथान्तरिक्षं तथा तस्य प्राणोऽर्को ऽन्न मशीतयोऽन्नेन हीदं सर्व मश्नुते तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकाग्रे विनत मिव ललाट मेवोक्थं यथा द्यौस्तथा तस्य चक्षुरर्कोऽन्न मशीतयोऽन्नेन हीदं सर्व मश्नुते समान मशीतयोऽध्यात्मञ्चाधिदैवतञ्चान्न मेवान्नेन हीमानि सर्वाणि भूतानि समनन्तीं३ अन्नेनेमं लोकं जयत्यऽन्नेनामुन्तस्मात्समान मशीतयोऽध्यात्मञ्चाधिदैवतञ्चान्न मेव तदिद मन्नमन्नाद मिय मेव पृथिवीतो हीदं सर्व मुत्तिष्ठति यदिदं किञ्च यद्ध किञ्चेदं प्रेतीं३ तदसौ सर्व मत्ति यदु किञ्चातः प्रैतीं३ तदियं सर्व मत्ति सेय मित्याद्यानी३ अत्ता ह वा आद्यो भवति न तस्येशे यन्नाद्यादद्धैनं नाद्युः ॥ २ ॥

पूर्वोत्तरकाण्डार्थरूपो द्विविधो मार्ग उपदिष्टस्तत्र त मेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । यज्ञेन दानेनेत्येवं विवि-

दिषाहेतुत्वश्रवणात्। प्रथम मनुष्ठेयत्वेन पूर्वकाण्डे यज्ञादीनि कर्म्माण्युक्तानि। तैः कर्म्मभिरुत्पन्नाया मपि विविदिषायां दृश्यते त्वग्र्यया बुद्धेरति श्रुतेरैकाग्रचित्तस्यैव ब्रह्मदर्शनहेतुत्वात्तदैकाग्र्य-सिद्ध्यर्थ मस्मिन् काण्डे प्रथम मुपासन मभिधीयते। तच्चोपासनं द्विविधम्। ब्रह्मोपासनं प्रतीकोपासनञ्चेति। ब्रह्मण एव गुण-विशिष्टत्वेन चिन्तनं ब्रह्मोपासनम्। प्रबललौकिकपदार्थवासनो-पेतस्य तत्परित्यागेन ब्रह्मणि चित्तस्याप्रवेशाद् ब्रह्मभावनया लौकिकवस्तुनश्चिन्तनं प्रतीकोपासनम्। तत्र प्रतीकं द्विविधम्। यज्ञाद्बहिर्भूतं यज्ञाङ्गञ्चेति। तत्र महाव्रताङ्गे बहुविधयज्ञ-वासनावासितस्य यज्ञाङ्गे सहसा चित्तं प्रविशतीति मत्वा उक्थ मुक्थ मित्यादिना अङ्गावबद्ध मुपासन मुच्यते॥

एतेषु अङ्गावबद्धेषूपासनेषु पञ्च विचारा मीमांसायां प्रवृत्ताः। (१) ऋत्विज एवात्राधिकारी न यजमानस्येत्येको विचारः। (२) कर्म्माङ्गेषु प्रतीकेष्वेव पृथिव्यादिदेवतादृष्टिर्न तु देवताया मङ्गदृष्टिरिति द्वितीयः। (३) यस्यां शाखायां यद् ध्यानं विहितं तच्छाखागत एवाङ्गे तदिति नास्ति नियमः; किन्तु शाखा-न्तरगतेऽप्यङ्गे इति तृतीयः। (४) यावन्त्यङ्गावबद्धान्युपासनानि सन्ति तावन्ति सर्वाण्यनुष्ठेयानीति नास्ति नियमः; किन्तु एकं बहूनि वा स्वेच्छयेति चतुर्थः। (५) कर्म्मानुष्ठानकाले अङ्गा-वबद्धोपासनान्यवश्य मनुष्ठेयानीति नास्ति नियमः; किन्तु स्वेच्छया तदनुष्ठान मिति पञ्चमः। तत्र,

प्रथमो विचारस्तृतीयाध्यायस्य चतुर्थपादेऽभिहितः—

'अङ्गध्यानं याजमान मार्त्विज्यं वा यतः फलम्।
ध्यातुरेव श्रुतं तस्मात् याजमान मुपासनम्॥

ब्रूयादेवंविदुद्गातेत्यात्विंज्यन्तु श्रुतं स्फुटम् ।
क्रीतत्वादृत्विजस्तेन कृतं स्वामिकृतं भवेत् ॥'—इति ।

अङ्गावबद्धेषूपासनेषु यजमान एवानुष्ठाता न ऋत्विक्; ध्यातुः फलश्रवणात् । फलन्तु यजमानस्यैवोचितं स्वामित्वात् । तस्मात् फलिनो यजमानस्यैव ध्यातृत्व मिति प्राप्ते, ब्रूमः,—एवंविदुद्गाता ब्रूयादिति वाक्यशेषः । उद्गातुरुपासकत्वं स्पष्टं श्रूयते; तस्य युक्तञ्चैतत् । ऋत्विजा मशेषकर्त्तव्यतानुज्ञा वा । यजमानेन क्रीतत्वात् । तस्मादृत्विक्कृत मपि यजमानेनैव कृत मिति फलितत्वोपपत्तेरुपासन मृत्विजाङ्कर्म ॥

द्वितीयो विचारश्चतुर्थाध्यायस्य प्रथमपादे दर्शितः—

'आदित्यादावङ्गदृष्टिरङ्गे वादित्यधीरुत ।
नोत्कर्षो ब्रह्मजत्वेन द्वयोस्तेनैच्छिकी मतिः ।
आदित्यादिधियाङ्गानां संस्कारे कर्म्मणः फले ।
युज्यतेऽतिशयस्तस्मादङ्गेष्वर्कादिदृष्टयः ॥'—इति ।

'य एवासौ तपति त मुद्गीथ मुपासीतेत्यत्रादित्यदेवतां प्रतीकं कृत्वा कर्माङ्गभूतोद्गीथदृष्टिः कर्त्तव्या, विपर्ययेण वा कर्माङ्गे आदित्यदृष्टिः? आदित्योद्गीथयोरुभयोर्ब्रह्मकार्यत्वेन पूर्वाधिकरणोत्कर्षन्यायावतारेण नियामकाभावादिति प्राप्ते, ब्रूमः;—आदित्यदृष्ट्या कर्माङ्गं संस्कर्त्तव्यम् । तथासति दृष्टिभिः संस्कृतस्य कर्म्मणः फलातिशयसम्भवात् । विपर्यये तु कर्माङ्गैरादित्यदेवतायां संस्कृतायां किन्तत्करिष्यति; न ह्यक्रियात्मिका देवता फलस्य साधनं भवति । अन्यथासिद्धत्वादेव देवतायाः साधारणत्वेन यजमानायजमानयोः फलसाम्यप्रसङ्गात् । तस्मादङ्गेष्वादित्यादिदृष्टयः कर्त्तव्याः ॥

तृतीयो विचारस्तृतीयाध्यायस्य तृतीयपादे दर्शितः—

'उक्थादिधीः स्वशाखाङ्गेष्वेवान्यत्रापि वा भवेत् ।
सान्निध्यात् स्वस्वशाखाङ्गेष्वेवासौ व्यवतिष्ठते ॥
उक्थोद्गीथादिसामान्यलक्षच्छब्दैः प्रतीयते ।
श्रुत्या च सन्निधेर्बाधस्ततोऽन्यत्रापि यात्यसौ ॥'—इति ।

अङ्गावबद्धेषूपासनेषु उक्थशस्त्राख्ये कर्माङ्गे पृथिव्यादि-दृष्टिरैतरेयोपनिषदि श्रूयते । उक्थन्तु कौषीतक्यादिशाखा-न्तरेष्वपि विहितम् । तत्र पृथिवीदृष्टिरैतरेयगतोक्थ एव व्यव-तिष्ठते, उत कौषीतक्यादिष्वनुवर्त्तते ? इति सन्देहे सति सन्नि-हितत्वात्तु स्वशाखाया मेव व्यवस्थितेति प्राप्ते, ब्रूम ;—उक्थ-शब्दस्तावन्मुख्यया वृत्त्या सर्वशाखागत मुक्थसामान्य माचष्टे । तत उक्थश्रुतिवशात् सर्वशाखागतोक्थेषु अनुवृत्तिः प्राप्ता । श्रुतिः सन्निधेर्बलीयसी । तस्मात् क्वचिद्विहिता धीः शाखा-न्तरेष्वनुगच्छति ॥

चतुर्थो विचारस्तत्रैव दर्शितः—

'समुच्चयोऽङ्गबद्धेषु याथाकाम्येन वा मतिः ।
समुच्चितत्वादङ्गानां तद्बद्धेषु समुच्चयः ॥
ग्रहं गृहीत्वा स्तोत्रस्यारम्भ इत्यादिवन्न हि ।
श्रूयते सहभावोऽत्र याथाकाम्यन्तथा भवेत् ॥'—इति ।

द्विविधानि प्रतीकानि ; लौकिकानि कर्म्मांगानि च । तत्र लौकिकेषु प्रतीकेषु निर्णयः पूर्वोक्तः । अत्र कर्म्मांगेषु समुच्चये याथाकाम्यं विचार्यते । तत्र कर्माणि कर्म्मांगानि समुच्चित्यैवा-नुष्ठेयतया प्रयोगविधिप्राप्तानि । तथा चांगतन्त्रत्वादंगावबद्धो-पासनाना मपि समुच्चयनियम इति प्राप्ते, ब्रूमः ;—'ग्रहं वा

गृहीत्वा चमसं वीक्षीय स्तोत्र मुपाकुर्यात्', 'स्तुत मनुशंसति'— इत्यादौ यथा ग्रहस्तोत्रशंसनादीनां नियतपौर्वापर्येण सहभावः श्रुतः, न तथोपासनेषु श्रूयते। तस्मात् विकल्पसमुच्चयौ- यथाकाम्यम् ॥

पञ्चमो विचारस्तत्रैव दर्शितः।

'नित्या अङ्गावबद्धाः स्युः कर्म्मस्वनियता उत।
पर्णवत् क्रतुसम्बन्धो वाक्यान्नित्यास्ततो मताः॥
पृथक्फलश्रुतेर्नैता नित्या गोदोहनादिवत्।
उभौ कुरुत इत्युक्तेः कर्मोपास्त्यनुपासिनोः॥'—इति।

उद्गीथादिषु कर्म्मांगेषु प्रतिमादिवत् प्रतीकभूतेषु विधी- यमाना देवतोपास्तयोऽङ्गावबद्धा यास्ताः कर्मस्वनुष्ठीयमानेषु कर्म्मांगवन्नियमेनानुष्ठातव्याः ; कर्म्मप्रकरण मारभ्याध्ययनाभावे- ऽपि वाक्यात् क्रतुसम्बन्धोपपत्तेः। यथा 'यस्य पर्णमयी जुहूर्भवति' —इत्यनारभ्याधीतस्याव्यभिचरितजुहूद्वारा वाक्यात् क्रतुसम्बन्धः। तथा 'य एवं विद्वानुद्गायति', 'य एवं विद्वान् साम गायति'— इत्यादिष्वव्यभिचरितक्रतुसम्बन्धिसामोद्गीथादिद्वारा तदुपास- नानां क्रतुसम्बन्धः प्रतीयते। तस्मात् कर्म्मसु नियता उपास्तय इति प्राप्ते, ब्रूमः ;—गोदोहनादिवदनियता उपास्तयः। यथा 'चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य' इत्यप्प्रणयनमाश्रित्य विधीयमान मपि गोदोहन मक्रत्वर्थत्वादैच्छिकम् ; न तु प्रणय- नादिवन्नियतम्। तथा कर्म्मांगान्याश्रित्य विधीयमाना उपास्तयो न क्रत्वर्थाः ; किन्तु पुरुषार्थाः ; कर्मफलात् पृथक्फलश्रवणात्। 'वर्षति हास्मै'—इति पञ्चविधे सामनि वृष्टिदेवता मुपासीनस्य कामवृष्टिः ; क्रतुफलात् पृथक्फलत्वेन श्रूयते। किञ्च 'तेनोभौ

कुरुतो यश्चैतदेवं वेद यश्च न वेदेत्यस्मिन्नङ्गावबद्धोपास्तिवाक्य-शेषे उपासकानुपासकयोरुपास्त्याधारभूतेन तेनाङ्गेन कर्माङ्गा-नुष्ठानं विस्पष्ट माम्नायते। तस्मात् कर्मस्वनियता उपास्तयः ॥

तदेतैः पञ्चभिर्विचारैर्निर्णीत मङ्गावबद्धोपासनं नानाविध-विशेषणविशिष्ट मुक्थ मित्यारभ्य आत्मा वा इद मित्यतः प्राक्त-नेन ग्रन्थेन प्रतिपाद्यते ॥

तत्रादौ महाव्रताङ्गभूते निष्केवल्याख्यशस्त्रे पृथिव्याद्याधि-दैविकदेवतादृष्टिं वागाद्याध्यात्मिकदेवतादृष्टिञ्च क्रमेण विधित्सुः पृथिवीध्यानं दर्शयति—"उक्थ मुक्थ मिति वै प्रजा वदन्ति तदिद मेवोक्थ मिय मेव पृथिव्यतो हीदं सर्वं मुत्तिष्ठति यदिदं किञ्च"—इति। 'उक्थं' शस्त्रं, उत्तिष्ठत्यनेन देवताप्रसाद इति व्युत्पत्तेः। तत्र यज्ञं निष्पादयन्तो होतृयजमानादयः 'प्रजाः', तत्तच्छस्त्रे ध्यातव्यं रहस्यस्वरूप मज्ञात्वा केवलं नाममात्रेण 'उक्थ मुक्थम्'—'इति', एवं व्यवहरन्ति। तद्रहस्यं त्वभि-धीयते—'तत्' उक्थस्वरूपं, 'इद मेव' वक्ष्यमाणं, या 'इयं पृथिवी' दृश्यते, सा 'एव', तद्रूपम्। 'इतो हि' पृथिव्याः सका-शात् 'इदं' स्थावरजङ्गमरूपं 'सर्वं' जगत् 'उत्तिष्ठति'। तस्मात् पृथिव्या उक्थत्वं युक्तम्। उक्थे पृथिवीदृष्टिः कर्त्तव्येत्यर्थः ॥

तेन शस्त्रेणार्चनीये देवे अग्निरूपदृष्टिं शस्त्रसम्बन्धिनीषु गायत्र्यादिषु ऋचामशीतिषु अन्नदृष्टिञ्च विधत्ते—"तस्याग्निर-र्कोऽन्न मशीतयोऽन्नेन हीदं सर्वं मश्नुते"—इति। 'तस्य' शस्त्रस्य सम्बन्धी योऽयं 'अर्कः' अर्चनीयो देवः, सोऽयं 'अग्निः' अग्नि-स्वरूपः। याश्च गायत्र्युष्णिक्छन्दस्का ऋचानाम् 'अशीतयः' त्रिविधाः, ताः सर्वाः अन्नरूपाः। तस्मात् कारणात्लौकिकः

पुरुषः 'अन्नेन', 'इदं' 'सर्वं' प्राणिजातं, 'अश्नुते' प्राप्नोति। अन्नवन्तं पुरुषं सर्वे जनास्तल्लाभाय सेवन्ते ॥

पूर्वोक्तपृथिव्यादिवदुक्थदेवताप्रीतिष्वन्तरिक्षवायून्नदृष्टिं विधत्ते—"अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनुपतन्त्यन्तरिक्षमनुधावयन्ति तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते"—इति। पक्षिणः सर्वेऽपि 'अन्तरिक्षं' अवकाशम् 'अनु' तस्योपरि 'पतन्ति' सञ्चरन्ति। मनुष्याश्च भूमेरुपरि 'अन्तरिक्षं' अवकाशम् 'अनु' तस्यैव अश्वबलीवर्दादीन् 'धावयन्ति'। तस्मादन्तरिक्षस्योक्थत्वं युक्तम् ॥

द्युलोकादिदृष्टिं विधत्ते—"असावेव द्यौरुक्थममुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते"—इति। 'अमुतः' द्युलोकात्, भूमौ प्रदीयते यत् वृष्टिजलं तस्मात् वृष्टि-'प्रदानात्', 'इदं सर्वम्' ओषधिवनस्पत्यादिकं 'यत्' 'किञ्चिदस्ति', तत् 'उत्तिष्ठति'। तस्माद् द्युलोकस्य 'उक्थत्वं' युक्तम् ॥

नृपयोर्बुद्धिसमाधानायोक्तवक्ष्यमाणयोर्ध्यानयोर्विभागं दर्शयति—"इत्यधिदैवतमथाध्यात्मम्"—इति। दैवतानि पृथिव्यादीन्यधिकृत्य प्रवृत्तं ध्यानम् 'अधिदैवतम्', तच्च 'इति' उक्तप्रकारेण व्यवस्थितम्। आत्मानं मनुष्यशरीरमधिकृत्य प्रवृत्तं ध्यानम् 'अध्यात्मम्'। तत् तु 'अथ' अनन्तरम् अभिधीयते ॥

तत्रादौ मस्ते शरीरदृष्टिं विधत्ते—"पुरुष एवोक्थमयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात्"—इति। शिरःपाण्यादिमान् देहः 'पुरुषः', तस्य 'महत्त्वं' श्रेष्ठत्वम्। अयं 'पुरुषः' ब्रह्मणो लोक इत्यत्र वक्ष्यते। 'प्रजापतित्वञ्च' तस्य वाचा सृष्टौ पृथिवी चाग्निश्चेत्यत्राभिधास्यते। तस्मादुक्थहेतु-

त्वाद्देहस्य उक्थत्वम्। तच्च 'उक्थम्' 'अहम्' 'अस्मि', 'इति' एवं, ध्यायेत्। नात्र विदधातुः प्रमाणजन्यं ज्ञान माचष्टे, किन्तु पुरुषतन्त्रां ध्यानक्रियाम्। यद्यपि 'विद ज्ञाने'-इति धातुस्तथापि ज्ञानध्यानयोर्मानसत्वसाम्येन ध्यान मत्र विवक्षितम्। उपासना-प्रकरणस्य वर्त्तमानत्वात्। न त्वह मुक्थ मस्मीत्येतत् मीमांसया विरुद्धम्। तत्र हि चतुर्थाध्याये 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'-इतिसूत्रेण तत्त्वविद्यायां ब्रह्मोपासनेषु चाहङ्ग्रह मभिधाय 'न प्रतीकेन हि सः'-इतिसूत्रेण प्रतीकेष्वहङ्ग्रहो निवारितः। अत्र चोक्थं प्रतीकं तस्मादह मुक्थ मस्मीत्यहङ्ग्रहो न युक्त इति चेत्, नायं दोषः। तस्मिन् सूत्रे न्यायबलादेवाहङ्ग्रहस्य निषिद्धत्वात्। इह तु वचनबलादहङ्ग्रहो विधीयते; कि मिव हि वचनं न कुर्य्यात्। 'नास्ति वचनस्यातिभारः'-इति शास्त्रकाराणां डिण्डिमः। यद्यपि कृत्स्न मुपास्यस्वरूप मभिधायान्ते अहङ्ग्रहो वक्तव्यः, तथापि वक्ष्यमाणोपास्यावयवविशेषेषु प्रत्येक महङ्ग्रह-सिद्ध्यर्थं मादावेवासौ विधीयते॥

आधिदैविकदृष्टान्तेनाध्यात्मिकमुखदृष्टिं विधत्ते—"तस्य मुख मेवोक्थं यथा पृथिवी तथा"-इति। 'तस्य' पुरुषस्य देहरूपस्य, यत् 'मुखं', तद्दृष्टिः उक्थे कर्त्तव्या। अधिदैवतं 'यथा' प्रथमपर्य्याये पृथिवीदृष्टिस्तद्वत्॥ अर्चनीये देवे वाग्दृष्टिं अशीतिष्वन्नदृष्टिञ्च विधत्ते—"तस्य वागर्कोऽन्न मशीतयोऽन्नेन हीदं सर्वं मश्नुते"-इति॥ आधिदैविकान्तरिक्षदृष्टान्तेन द्वितीय-पर्य्यायं विधत्ते—"नासिके एवोक्थं यथान्तरिक्षं तथा"-इति॥ देवे प्राणदृष्टि मशीतिष्वन्नदृष्टिञ्च विधत्ते—"तस्य प्राणोऽर्को-ऽन्न मशीतयोऽन्नेन हीदं सर्वं मश्नुते"-इति॥

भ्रुवोरधस्तान्नासिकाया एव मूलं निर्द्दिश्य प्रशंसति—

"तदेतद् ब्रह्मस्य विष्टपं यदेतन्नासिकाग्रे विनत मिव"—इति। नासिकायाः सम्बन्धि, विशेषेण 'नतं' अत्यन्तनिम्नं, 'यत्' मूलम् अस्ति, 'तदेतत्' 'ब्रह्मस्य' आदित्यस्य ; 'विष्टपं' स्थानम् ; "असौ वा आदित्यो ब्रह्मः"-इतिश्रुत्यन्तरात्। तच्च मूलं ब्रह्म-ध्यानस्थानत्वात् ब्रह्मोपाधेरादित्यस्यापि स्थानम्। ध्यानस्थानत्वञ्च प्रश्नोत्तराभ्यां जाबाला आमनन्ति—"कतमं वास्य स्थानं भवति ?" —इति। भ्रुवोः घ्राणस्य च यः सम्बन्धः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति 'विनतमिव'—इति। 'इव' शब्दो ऽनर्थक एवकारार्थो वा॥

तृतीयपर्यायं विधत्ते—"ललाट मेवोक्थं यथा वोक्तथा तस्य चक्षुरर्कोऽन्न मशीतयोऽन्नेन हीदं सर्वं मश्नुते"—इति॥

आधिदैविकाध्यात्मिकपर्य्यायेषु षट्स्वपि अर्का धरातव्या अन्नादयो विविधाः। तद्दशीतिषु धरातव्यस्यापि नाना-विधत्वशङ्कां व्यावर्त्य पूर्वोक्त मन्नैकधरान्नं प्रशंसति—"समान मशीतयोऽधरात्मस्वाधिदैवतञ्चान्न मेवान्नेन हीमानि सर्वाणि भूतानि समनन्तीर्ऽ अन्नेनेमं लोकं जयत्यन्नेनामुं तस्मात् समान मशीतयोऽधरात्मस्वाधिदैवतञ्चान्न मेव"-इति। गायत्री बार्हत्य औष्णिहश्च यास्तृचाशीतयः, ताः सर्वाः 'अधरात्माधि-दैवतपर्य्यायेषु सर्वेष्वपि 'अन्न मेव' इत्येतत् 'समानम्'। न त्वन्नादन्यत् किञ्चित्तासु धेय मस्ति ; अन्नस्यात्यन्तप्रशस्तत्वात्। 'इमानि सर्वाणि' प्राणिरूपाणि; अन्नेनैव 'समनन्ति' सम्यक् चेष्टन्ते। अन्नजन्यस्य बलस्य शरीरचेष्टाहेतुत्वात्। सानुना-सिकश्रुतिरुक्तार्थप्रसिद्धयर्था। न केवलं अन्नस्य चेष्टाहेतुत्वं किं तु लोकद्वय मपि तेन जितं भवति। अन्नप्रदानेन मनु-ष्याणां वश्यत्व मेतल्लोकस्य जयः; शास्त्रीयेणान्नदानेन देवता-

तुष्टिः स्वर्गलोकजयः। तदेव मन्त्रस्य प्रशस्तत्वात् सर्वनाशीतीना मन्त्ररूपत्व मेव ध्येयम् ॥

उक्थे ध्यातव्यत्वेनोक्तायाः पृथिव्या भोक्तृभोग्यरूपकृत्स्न-जगद्रूपत्वध्यानं विधत्ते—"तदिद मन्न मन्नाद मिय मेव पृथि-वीतो ह्येदं सर्व मुत्तिष्ठति यदिदं किञ्च"-इति। लोके यत् 'अन्नम्' अस्ति, यच्च 'अन्नादं' भोक्तृजातं, 'तदिदं' सर्वं जग-द्रूपं, 'इय मेव', 'पृथिवी', पृथिव्यास्तदात्मकत्वं ध्येय मित्यर्थः। 'यत्' 'किञ्चित्' 'इदं' भोक्तृभोग्यजातम् अस्ति, तत् 'सर्वम्', 'इतः' पृथिव्याः सकाशात् उत्पन्नम्; तस्मात् तदात्मकत्वं युक्तम् ॥

पृथिव्याः कृत्स्नभोक्तृभोग्यात्मकत्व मुपपादयति—"यद्ध किञ्चेदं प्रेतीऽइद तदसौ सर्वं मत्ति यदु किञ्चातः प्रेतीं३ तदियं सर्वं मत्ति सेयमित्याद्यात्री"—इति। 'यत्' 'किञ्च' 'इदं' प्राणिजातं, पृथिव्यां वर्तमानं 'प्रेति' प्रैति म्रियते, इरगताविव्यस्य धातोः प्रपूर्वस्य मरणार्थत्वं द्रष्टव्यम्; इण्गताविति धातौ तथा दर्श-नात्। भूमौ मृतं 'सर्वं' प्राणिजातं, स्वानुष्ठितपुण्यकर्म-वशात् स्वर्गं गच्छति, 'तत्' च स्वर्गस्थम् 'असौ' स्वर्गलोकः 'अत्ति' भक्षयति वशीकरोति। 'यदु किञ्च' यदपि किञ्चित् स्वर्गस्थं प्राणिजातं स्वकर्म्मफलभोगे समाप्ते सति 'अतः' अस्मात् स्वर्गाल्लोकात्, 'प्रैति' मृतो भूमावागच्छति, 'तत्' समागतं 'सर्वं' प्राणिजातम् 'इयं' भूमिः 'अत्ति' भक्षयति वशी-करोति। भूमौ यागं कुर्वन्तो यजमाना मरणादूर्ध्वं स्वर्गं भुक्त्वा पुनर्भूमावागच्छन्तीति वाक्यद्वयस्यार्थः। तत्प्रसिद्ध्यर्थं श्रुति-द्वयं द्रष्टव्यम्। 'प्रेत्ते'-इत्यैकारस्य आकारप्लुतिरिकारसहिता व्याकरणेऽभिहिता। एवं सति 'सेयं' भूमिः, 'इति' उक्तेनैव प्रकारेण 'आद्या' अपि भवति; 'अत्त्री' च भवति। भूमिष्ठानां

यजमानानां स्वर्गे यद्देवतापारतन्त्र्यं तदेतद्भूमेराद्यत्वम्; स्वर्गस्थानाच्च पुनरागमने सति तेषां वशीकरणलक्षणं स्वातन्त्र्यं भूमेरत्तृत्वम्। अनेनप्रकारेण कृत्स्नभोग्यभोक्तृरूपा पृथिवी॥

एतद्गुणध्यानस्य फलमाह—"अत्ता ह वा आद्यो भवति"-इति। 'अत्ता' योऽयं लोके भोक्ता, यश्च 'आद्यः' भोग्यः पदार्थः, तदुभयरूपेण सर्वात्मकः 'भवति' इत्यर्थः॥

ननु लोके कश्चित् स्वामी भृत्यैः सेव्यमानो भृत्यानां भोक्ता भवति, तथा जीवितप्रदातृत्वेन भृत्यैर्भुज्यत इति भोग्योऽपि भवति, अनेन न्यायेन सर्वोऽप्यन्यैरुपक्रियमाणो भोक्ता स्वय मुपकुर्वन् भोग्यश्च; तयोः सति उपासनफलरूपे भोक्तृभोग्यात्मकत्वे को नाम विशेष इत्याशङ्क्याह—"न तस्येशे यन्नाद्याद् यदेनं नाद्युः"-इति। अनुपासको लौकिकः पुरुषः स्वकर्मप्राप्तमशनाच्छादनादिकं कियदेवात्ति, न तु सर्वम्। सर्वस्य स्वकर्मप्रापितत्वाभावात्। तथा सति 'यत्' वस्तु स्वयं 'नाद्यात्' न भुञ्जीत, 'तस्य' वस्तुनः 'नेशे' नेष्टे, न स्वामी भवति। उपासकस्तु हिरण्यगर्भरूपः सन् सर्व मत्तीति सर्वस्य स्वामी। सोऽय मेको विशेषः। 'वा'-शब्दः समुच्चयवाची। 'यद्' यस्माच्च कारणात् 'एनम्' उपासकं 'नाद्युः' अन्ये पुरुषा न भुञ्जीरन्, तस्मात् पराधीनत्वलक्षणं भोग्यत्वं नास्तीति; अनुपासकस्य तु तदस्तीत्यय मपरो विशेषः। ननु भोग्यत्वाभावेऽपि सति आद्यो भवति इति कथ मुच्यते? नायं दोषः। पराधीनत्वलक्षणस्य भोग्यत्वस्यैव निषेधात्; आद्यो भवतीत्यनेन तु स्वात्मभूतसर्वभोग्यजातरूपत्व मभिधीयत इति न कोऽपि विरोधः॥ २॥

---

# सामवेदस्य,

## कौथुमशाखीयच्छन्दस्संहितातः

उत्तरार्चिकस्याद्यप्रपाठकीयाद्यखण्डः ।

तत्र,

## ॥ सायणभाष्यभूमिका ॥

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्—
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २
तत्कटाक्षेण तद्रूपं दधत् बुक्कमहीपतिः ।
आदिशत् सायणाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्य्यो वेदार्थं वक्तुमुद्यतः ॥ ४
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
छन्दोभिधाभूद् व्याख्याता व्याख्यास्यत्युत्तराभिधाम् ॥ ५
छन्दस्येकैकशोऽधीता ऋचः सामोद्भवाय हि ।
स्तोमनिष्पत्तये सूक्तान्युत्तरायामधीयते ॥ ६ ॥

स्तोमशब्देनोत्पत्तिषु सोमयागेषु प्रयुज्यमानास्त्रिवृत्पञ्चदशा-दयोऽभिधीयन्ते । अतएव तैत्तिरीयकाः प्रश्नोत्तराभ्यामिद-मामनन्ति । तदाहुः—"कतमा वाव तानि ज्योतींषि य एतस्य स्तोमा इति ? त्रिवृत् पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः"—इति । छन्दोगाश्च त्रिवृ-दादिस्तोमानां स्वरूपं ब्राह्मण-द्वितीय-तृतीययोरध्याययोः बहुधा समामनन्ति । ते च बहुभिरवान्तररूपोपेताः समाम्नाताः स्तोमा नवसङ्ख्याकाः । तेषु पूर्वोक्तास्त्रिवृदादयश्चत्वारः, त्रिणव-

त्रयस्त्रिंशौ छन्दोमनामका स्तोमास्त्रयः। तेषु, चतुर्विंशाख्यस्तोमः प्रथमः; गायत्रीच्छन्दसा चतुर्विंशत्यक्षरोपेतेन गीयत इति छन्दोमः। चतुश्चत्वारिंशाख्यो द्वितीयः; स च त्रिष्टुप्छन्दसा गीयते। अष्टाचत्वारिंशाख्यस्तृतीयः; सोऽपि जगतीच्छन्दसा गीयते॥

नन्वथ ये ह्याम्नातलक्षणोपेतेभ्यस्त्रिवृदादिभ्योऽष्टादशनव-दशादि-नामका बहवः स्तोमा विद्यन्ते। तथाच तैत्तिरीयकाः केषुचिदिष्टकोपधानमन्त्रेषु देवतावद्रूपेष्टकात्वविवक्षया तान् स्तोमानामनन्ति—"आशुस्त्रिवृद्भान्तः पञ्चदशो व्योम सप्तदशः प्रतूर्त्तिरष्टादश स्तपो नवदशो ऽभीवर्त्तः स विंशो धरुण एक-विंशो वर्चो द्वाविंशः सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशो वर्चो द्वाविंशः सम्भरणस्त्रयोविंशो योनिश्चतुर्विंशो गर्भः पञ्चविंश ओज-स्त्रिणवः क्रतुरेकविंशो ब्रध्नस्य विष्टपञ्चतुस्त्रिंशो नाकः षट्त्रिंशो-ऽभिवर्त्तोऽष्टाचत्वारिंशः"—इति। एवन्तर्हि सन्त्येव बहूनि स्तोमान्तराणि, तेषां लक्षणानि तु ब्राह्मणान्तरानुसारेण सूत्र-कारैर्व्युत्पादितानि॥

ते च स्तोमाः सर्वेऽप्याज्यपृष्ठादि स्तोत्रेषूपयुक्ताः "पञ्चदशा-न्याज्यानि, सप्तदशानि पृष्ठानि"—इत्यादिश्रुतिभ्यः स्तोम-विषयाः, स्तोत्रविषयाः, तन्निष्पादकसामविषयाश्च॥

सर्वेऽपि विचारा अस्माभिश्छन्दोव्याख्यानावतारवेलाया-मेव जैमिनीयान्यधिकरणान्युदाहृत्य प्रदर्शिताः किं बहुना॥

"एकं साम तृचे क्रियते स्तोत्रियम्"—इत्यादि वचनैः स्तोत्रनिष्पादकस्य साम्नस्तृचप्रगाथादिरूपाणि सूक्तान्याश्रयत्वे-नोत्तराख्ये संहिता-ग्रन्थे समाम्नातानि। स च ग्रन्थ एक-विंशतिसङ्ख्यातैरध्यायै रूपितः॥

## ( अथ बहिष्पवमानं स्तोत्रम् )

॥ अथ प्रथमं तृचम् ॥

॥ ॐ ॥

१ २ ३ १२ ३ १ २ ३ २ ३ १र
उपास्मैगायतानरःपवमानायेन्दवे । अभिदेवाँ२
२र ३ २ ३ १ २ ३ १ २र
इयक्षते (१) ॥ अभितेमधुनापयोथर्वाणोअशिश्रयुः ।
३ २ ३ १ २ ३ २ १ २ ३ २उ ३ १ २र ३ १
देवन्देवायदेवयुः (२) ॥ सनःपवस्वशङ्गवेशञ्जनायशम
२र १ २ ३ १ २
र्वते । शँ२राजन्नोषधीभ्यः ( ३ ) ॥ १ ॥

तत्र, प्रथमाध्यायस्य प्रथमखण्डे, प्रथमसूक्ते तृचे, येयं ऋक् प्रथमा, सैव आम्नायते—हे 'नरः' नेतारः! यज्ञस्य, 'देवान्' इन्द्रादीन् 'अभि इयक्षते' आभिमुख्येन यष्टु मिच्छते, 'पवमानाय' क्षरते, 'अस्मै' अभिषूयमाणाय, 'इन्दवे' सोमाय 'उप गायत' उपगानं कुरुत (१) ॥ अथ द्वितीया । हे सोम! 'ते' तव 'देवं' देवनशीलं 'देवयुः' देव-कामं रसं 'देवाय' देवनशीलायेन्द्राय 'मधुना' 'पयः' गव्येन पयसा 'अथर्वाणः' ऋषयः 'अभ्यशिश्रयुः' अभ्यमिश्रयन् समकुर्वन्नित्यर्थः (२) ॥ अथ तृतीया । हे 'राजन्' दीप्यमान सोम! 'सः' प्रसिद्धस्त्वं 'नः' अस्माकं 'गवे' 'शं' सुखं 'पवस्व' क्षर, 'जनाय' पुत्राय च 'शं' पवस्व, 'अर्वते' अश्वाय च 'शं' पवस्व, 'ओषधीभ्यः' च 'शं' पवस्व ( ३ ) ॥ १ ॥

॥ अथ द्वितीयं तृचम् ॥

१ २ ३१ २ ३ १ २ ३ २ १ २ ३ १र
दविद्युतत्यारुचापरिष्टोभन्त्याकृपा । सोमाःशुक्रा
२र ३ २ ३ १ २ ३ १र २र ३क
गवाशिरः (१)॥ हिन्वानोहेतृभिर्हितआवाजंवा
२र १ २ ३ १ २ ३ १ २ ३
ज्यक्रमीत् । सीदन्तोवनुषोयथा (२)॥ ऋधक्सोमस्व
१ २ ३ २ ३ १ २ १ २ ३ १ २ ३ २
स्तयेसञ्जग्मानोदिवाकवे । पवस्वसूर्योदृशे (३) ॥ २ ॥

अथ द्वितीयतृचे प्रथमा। 'दविद्युतत्या रुचा' अतिशय-दीप्तया 'परिष्टोभन्त्या' परितः शब्दायमानया 'कृपा' धारया च युक्ताः 'सोमाः' 'गवाशिरः' गवाशिराः भवन्ति गव्येन पयसा मिश्रिता भवन्ति इत्यर्थः (१)॥ अथ द्वितीया। 'वाजी' बलवान् सोमः 'हेतृभिः' प्रेरकैः स्तोतृभिः 'हिन्वानः' स्तोत्रैः प्रार्थ्यमाणः 'हितः' अभीष्टकारी सन् 'वाजं' यागाख्यं युद्धम् 'आ अक्रमीत्' आक्रामति। तत्र दृष्टान्तः—यथा 'वनुषः' हन्तारो भटाः 'सीदन्तः' युद्धं प्रविशन्तः आक्रामन्ति तद्वदित्यर्थः (२)॥ अथ तृतीया। हे 'सोम'! 'कवे' क्रान्तदर्शिन्। 'सूर्य्यः' सुवीर्य्यः त्वं 'ऋधक्' ऋध्नुवन्। तथाच यास्कः—"ऋधगिति पृथग्भावस्यानुप्रवचनं भवत्यथाप्याप्नोत्यर्थे दृश्यते"—इति। 'सञ्जग्मानः' सङ्गच्छमानः 'स्वस्तये' 'दृशे' दर्शनाय 'दिवा' दिवः विभक्तिव्यत्ययः॥ 'पवस्व'-'क्षर', 'दिवाकवे'-'दिवाकविः'—इति च पाठौ (३)॥ २॥

॥ अथ तृतीयं तृचम् ॥

१ २ ३ २ १ २ १ २ ३ १

पवमानस्यतेकवेवाजिन्त्सर्गाअसृक्षत । अर्वन्तोन

२ ३ १ २ १ ३ १ २ २ २ ३ १ २ ३ १ २ ३

श्रवस्यवः ( १ ) ॥ अच्छाकोशम्मधुश्चुतमसृग्रंवारेअ

१ २ १ २ ३ १ २ १ २ ३ २ उ ३ २

व्यये । अवावशन्तधीतयः ( २ ) ॥ अच्छासमुद्रमिन्दवो

३ २ ३ २ ३ १ २ १ २ ३ २ ३ २ ३ २

स्तङ्गावोनधेनवः । अग्मन्नृतस्ययोनिमा ( ३ ) ॥ २ ॥

अथ तृतीयतृचे प्रथमा । मार्जनप्रसङ्गमाह—हे 'कवे' क्रान्तप्रज्ञ ! हे 'वाजिन्' अन्नवन् सोम ! 'पवमानस्य' दशापवित्रेण पूयमानस्य 'ते' तव 'सर्गाः' सृज्यन्ते इति सर्गा धाराः । कीदृशाः? 'श्रवस्यवः' । छन्दसि परेच्छायां क्यच् । यष्टॄणा मन्नं कामयमानास्त्वदीया धाराः 'असृक्षत' सृजन्ति, निर्गच्छन्तीत्यर्थः । तत्र दृष्टान्तः—'अर्वन्तो न' यथा अश्वा मन्दुरातो निर्गच्छन्ति तद्वत् पवित्रान्निःसरन्तीत्यर्थः । प्रयोगापेक्षं चात्र धाराबाहुल्यम् ( १ ) ॥ अथ द्वितीया । धारानिर्गमनप्रसङ्गात् अभिधीयते—'मधुश्चुतं' मधुररसस्य च्यावयितारं क्षारयितारं 'कोशं' द्रोणकलशम् 'अच्छ' अभिलक्ष्य 'अव्यये' अविमये अविसम्भूते वा 'वारे' वाले दशापवित्रे 'असृग्र' सोमाः ऋत्विग्भिरभिसृज्यन्ते । सृजेः कर्म्मणि लिङां लिङो भवन्तीति झेरमादेशः । किञ्च । 'धीतयः' अङ्गुलिनामैतत् धयन्ति पिबन्त्याभिरिति । अस्मदीया अङ्गुलयः 'अवावशन्त' तान् सोमान् पुनः-पुनर्मार्जनार्थं कामयन्ते ( २ ) ॥ अथ तृतीया । 'इन्दवः' स्रवन्तः सोमाः 'समुद्रं' सोमाना मेकत्रैव सङ्गमनस्थानं द्रोणकलशम्

'अच्छ' अभि गच्छन्ति। तत्र दृष्टान्तः—'धेनवः' पयःप्रदानेन जनानां प्रीणयित्र्यो नवप्रसूतिका गावः 'अस्तं' गृहं यथा अभि गच्छन्तीति तद्वत्। किञ्च। ते सोमाः 'ऋतस्य योनिं' सत्यभूतस्य यज्ञस्य योनिं स्थानम् 'आ अग्मन्' आभिमुख्येन गच्छन्ति। गमेर्लुङि सिचो लुकि उपधालोपः (३) ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादिष्टतः
श्रीमत्सायणाचार्येण विरचिते सामवेदार्थप्रकाशे
उत्तरार्च्चे प्रथमप्रपाठके बहिष्पवमानस्तोत्रं नामाद्यखण्डः ॥

———

## सामवेदस्य,

### कौथुमशाखीयगानसंहितातः

### ( आविर्गानम् )

गेय-पञ्चमप्रपाठक-प्रथमार्द्धीय-त्रयोविंशादि-सामत्रयम् ।

५ र                २ १ २ २          २र १    २    १
कयानश्ची। त्रआभू३वात्। ऊताइस। दा।

२    ३         ५      १   २  २               ४
वार्द्धः सा२३४खा। कयाशा३ची३। ष्ठा२३या३।

२          ५
वा३४५र्त्तो६हाइ ॥ २३ ॥

५र र          र   र      र              २ १ २ २
होवाइ। होवाइकयानश्ची। त्रआभू३वा३४त्।

५र र        र र र र                 २ १       २    २
होवाइ। होवाऊतीसदा। वृधाः सा३खा३४।

५र र   र र   र   २ १र
होवाइ । होवाइ । कयाश्चाइ । ष्ठया । वा२
३  ५र र   ३  ५
त्तौ२३४औहोवा । ऊ२३४पा ॥ २४ ॥

३ र  ४  २  ४र  ५  १  र २
काऽऽ५या । नश्चा३इत्रा३आभुवात् । ऊ । तीस
१र २ १   २ र २   १   २
दावृधःस । खा । औ३होहाइ । कया२३श्चाइ ।
३ र २  १ —  १   २
ष्ठयौहो३ । हुम्मा२ । वा२ त्तौ३५होइ ॥ २५ ॥

ऊह-प्रथमप्रपाठक-प्रथमार्द्धीय-पञ्चमं साम चैतत्सौचियम् ।

३  र  ४  २  ४र  ५  १
काऽऽ५या । नश्चा३इत्रा३आभुवात् । ऊ ।
र २२र २ १   २ र २  १  २
तीसदावृधःस । खा । औ३होहाइ । कया२३श्चाइ ।
३र २  १ —  १   २  ३  र
ष्ठयौहो३ । हुम्मा२ । वा२त्तौ३५होइ ॥ ॥ का५ऽऽत्वा ।
४  २  ४ ५  १  २र १  २ १
सत्यो३मा३दानाम् । मः । हिष्ठोमात्सादन्ध । सा ।
२ र २  १  २  ३ र २  १ —
औ३होहाइ । दृढा२३चिदा । रूजौहो३ । हुम्मा२ ।
१  २   ३  र  ४ २ ४
वा२सो३५हायि ॥ ॥ आऽऽ५भी । षुणा३:सा३खी
५  १  २र १  २र  १
नाम् । आ । विताजरायितॄ । णाम् । औ२३
र २  १  २  ३ र २  १ —
होहायि । शता२३म्भवा । सियौहो३ । हुम्मा२ ।
१  २
ता२यो३५हायि ॥ वी ॥ ५ ॥

अथ द्वितीयतृचे प्रथमा। 'सदावृधः' सदा वर्द्धमानः, 'चित्रः' चायनीयः पूजनीयः, 'सखा' मित्रभूतः, इन्द्रः 'कया' 'ऊती' ऊत्या तर्पणेन 'नः' अस्मान् 'आ भुवत्' आभिमुख्येन भवेत्? 'शचिष्ठया' प्रज्ञावत्तमया प्रज्ञासहितानुष्ठीयमानेन 'कया वृता' केन वर्त्तनेन कर्म्मणा च अभिमुखो भवेत्? (१)॥ अथ द्वितीया। 'मंहिष्ठः' पूजनीयः 'सत्यः' सत्यभूतः 'मदानां' मादयितॄणां मध्ये 'कः' मदकरः? 'अन्धसः' सोमलक्षणस्यान्नस्य रसः। 'दृढ़ाचित्' दृढ़मपि 'वसु' मनुष्यसम्बन्धि गवादिकं धनं 'आरुजे' आ समन्तात् भङ्क्तुं हे इन्द्र! 'त्वा' त्वाम् 'मत्सत्' मादयेत् (२)॥ अथ तृतीया। हे इन्द्र! 'सखीनां' समानख्यातीनां 'जरितॄणाम्' 'अविता' रक्षिता त्वं 'नः' अस्माकं 'शतं' शतसंख्याकम् 'ऊतये' रक्षायै 'सु' सुष्ठु 'अभि भवासि' अभिमुखो भव॥ 'शतम्भवास्यूतये'-'शतम्भवास्यूतिभिः' —इति पाठौ (३)॥ १२॥

( छन्दगानम् )

आरण्य-षष्ठप्रपाठक-द्वितीयार्द्धीयैकविंशं साम।

१ २र १ २र १ र २ १ २ १ २र
उन्नयामि। होइ। ३। आदित्यंप्राञ्चयन्तमुन्नया
१ २ र र १र २र १
मि। होइ। ३। अहोरात्राण्यरित्राणि। होइ।
१र २ १र र र २
३। द्यौर्नौर्हाउ। ३। तस्यामसावादित्यईयतेहाउ
१ र र रर २ १र र
। ३। तस्मिन्वयमीयमानईयामहेहाउ। ३। ईयाम

२ १र र २ २ २१र र २ १
हेहाउ । २ । ईयामहेइ । हाउवा । प्रियेधामᳲस्विय
२ र २१र र २ १ २ ३ २११
त्वरे । २ । प्रियेधामᳲस्वियत्वरे२३४५ ॥ २१ ॥

( लेश्चगानम् )

ऊह्य-तृतीयप्रपाठक-द्वितीयार्द्धीय-नवमं साम ।

१र १ र र
हौ । होयि । ह्वौ । होयि । ह्यौ । हो
र ३ ५र र २
यि । हौ । होऽ२ । वा२३४औहोवा । ए३ ।
१ र २ ११११ १र र
सुवर्ज्योती२३४५: । हौ । होयि । ह्वौ । होयि ।
र र ३ ५र र
ह्यौ । होयि । हौ । होऽ२ । वा२३४औहोवा ।
२ १२र १र २ १ र २र १ ३ ११११ १र
अभिवाजीविश्वरूपोजनित्रा२३४५म् । हौ । हो
र र र
यि । ह्वौ । होयि । ह्यौ । होयि । हौ ।
३ ५र र २ १र ३ ११११
होऽ२ । वा२३४औहोवा । ए३ । ज्योतिर्भा२३४५: ।
१र र र
हौ । होयि । ह्वौ । होयि । ह्यौ । होयि ।
र ३ ५र र २ १ २ १ २
हौ । होऽ२ । वा२३४औहोवा । हिरण्ययम्बिभ्र
१ २ ३ २ र र
दत्कᳲसुपर्णा१: । हौ । होयि । ह्वौ । होयि ।
र र ३ ५र र
ह्यौ । होयि । हौ । होऽ२ । वा२३४औहोवा ।

२ १ ३र २ र र
ए३ । शिशुर्वाजी१ । हौ । होयि । ह्वौ । हो
र र ^ ३
यि । ह्वौ । होयि । हौ । हो२ । वा२३४
५र र १र २ र १ २ १र २र ३ १ १ १ १ र
औहोवा । सूर्य्यस्यभानुम्ऋतुथावसाना२३४५: । हौ ।
र र र
होयि । ह्वौ । होयि । ह्वौ । होयि । हौ ।
^ ३ ५र र १ २ १ २र १ २ १र २र ३
हो२ । वा२३४औहोवा । परिस्वयन्मधवृजोजाना
१ १ १ १ २ १ र २ र १ र ३ १ १ १ १ १र
२३४५ ॥ अस्तु रितःशिश्रियेविश्वरूपा२३४५म् । तेजः
२ १र २ १ २ १र १ १ १ १ २ १ २र १ २
पृथिव्यामधियत्सम्बभूवा२३४५ । अन्तरिक्षेस्वम्महि
१र २ १ र ३ १ १ १ १ १ २ १र १ २ १र
मानम्मिमाना२३४५: । कनिक्रन्तिवृष्णोअश्वस्यरेता
१ १ १ १ २ १ २ १ र १ २ १र २र ३ १ १ १ १
२३४५: ॥ अयꣳसहस्रापरियुक्तावसाना२३४५: ।
१र २ र १ २ १र र २र ३ १ १ १ १ २ १र २ १र
सूर्य्यस्यभानुंयज्ञोदाधारा२३४५ । सहस्रदाःशतदा
र २ १र १ १ १ १ १र २ १र २ १ ३ १
भूरिदावा२३४५ । धर्त्तादिवोभुवनस्यविश्पती२
१ १ १ १र र र
३४५: । हौ । होयि । ह्वौ । होयि । ह्वौ ।
र ^ ३ ५र र २
होयि । हौ । हो२ । वा२३४औहोवा । ए३ ।
१ २ ३ १ १ १ १ १
सुवर्वति२३४५ ॥ ८ ॥

अथाभिवाजीति तृचात्मकं चतुर्थं सूक्तम् । तत्र प्रथमा । 'सुपर्णः' सुपतनः शोभनपतनो गरुत्मान् इव, 'वाजी' वेगवान् बलवानन्नवान् वा, 'विश्वरूपः' नानाविधप्रकाशः स हि चित्रभानुः, 'ऋजः' 'ऋजी भर्जने, भ्रस्ज पाके' ऋज्जति भृज्जति पचतीति ऋज्रः अग्निः । सः स्वकीयं 'जनित्रं' जननस्थानम् अरणिविलम्, 'अतकम्' स्वतेजसा व्याप्तम् । अतएव 'हिरण्ययं' हिरण्मय मिव स्थितम्, 'अभि' अभितः साकल्येन 'विभ्रत्' पुष्यन्, 'सूर्यस्य भानुम्' सवितुः प्रकाशम् 'ऋतुथा' कालेकाले रात्रौ 'वसानः' वस्त्रवदाच्छादयन् ; "अग्निमादित्यं सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे"—इति श्रुतेः । 'मेधं परि' यज्ञं लक्षीकृत्य 'स्वयं' 'जजान' उदपद्यत (१) ॥ अथ द्वितीया । 'रेतः' सारभूतं 'विश्वरूपं 'यत्' अन्नात्मकं 'तेजः' 'अप्सु' 'शिश्रिये' आश्रयते ; "स निलायत सो ऽपः प्राविशत्"—इति श्रुतेः । यञ्च 'पृथिव्या अधि' भूमौ 'सम्बभूव' तिष्ठति ; "अग्निः पृथिवीस्थानः" —इति हि निरुक्तम् । सः 'अन्तरिक्षे' आकाशे 'स्वं महिमानं' किरणजालं 'मिमानः' व्यापारयन् 'वृष्णः अश्वस्य रेतः' सोमाहुतिं प्रति ; "सोमो वै वृष्णो अश्वस्य रेतः"—इति श्रुतेः । 'कनिक्रन्ति' याचमान इव पुनःपुनः क्रन्दते शब्दं करोति ; यद्वा आह्वयन्निव भृशं शब्दायते (२) ॥ अथ तृतीया । 'दिवः' स्वर्गस्य अथ 'भुवनस्य' भूतजातस्य लोकस्य 'धर्त्ता' धारयिता, 'विश्पतिः' विशां प्रजानां पालयिता, 'सहस्रदाः शतदाः भूरिदाः वा' यो यावत् प्रार्थयते सहस्रं शतं भूरि अपरिमितं वा तस्मै तस्मै तावद्दाता, 'यज्ञः' यजति यः 'अयम्' अग्निः 'युक्ता' युक्तानि 'परिवसानः' परितः आच्छादयन् 'सूर्यस्य भानुं' रात्रौ सूर्यस्यापि प्रकाशं 'दाधार' स्वय मेव धारयति (३) ॥ ४ ॥

# सामवेदस्य,

## कौथुमशाखीय-ताण्ड्य-महाब्राह्मणतः

प्रथमपञ्चिकायाः द्वितीयाध्यायीयाद्यखण्डत्रयम् ।

तत्र,

## ॥ सायणभाष्यभूमिका ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रथमाध्यायस्य मन्त्रा व्याख्याताः क्रतुगामिनः ।
अध्यायान्ते स्तोमभागा उक्ताः स्तोमान् ब्रवीम्यथ ॥ २ ॥

अस्मिन् ब्राह्मणे प्राधान्येन गवामयनं प्रतिपाद्यते । प्रायणीयादिभिर्महाव्रतान्तैः पञ्चत्रिंशत्प्रतिसंख्यैरहोभिर्निष्पद्यते । प्रायेण एतान्येवाहानि अन्येषा मपि एकाहाहीनसत्रात्मकानां सोमयागानां प्रकृतीनि । द्वादशाहस्याहर्गणानां प्रकृतिः । अतः प्राधान्यात्प्रायणीयोदयनीयौ मुक्त्वा मध्ये यानि दशाहानि तेषां विष्टुतयः । एवं च सति गवामयनिकाना मपि त्रिवृदादयः स्तोमाः प्रदर्शिताः । ये स्तोमास्त्रिवृदादयस्तेषां विष्टुतयः क्रमेण द्वितीयतृतीयाभ्या मध्यायाभ्यां प्रदर्श्यन्ते । तत्र वहिष्पवमान-साधनस्य त्रिवृत्स्तोमस्य तिस्रो विष्टुतयः,–उद्यती, परिवर्त्तिनी, कुलायिनीति । आदितस्त्रिभिरनुवाकैस्ताः प्रदर्श्यन्ते ।—

तत्र तावत् उद्यत्याः स्वरूप माह—

॥ अथ प्रथमः खण्डः ॥

तिसृभ्यो हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया तिसृभ्यो हिङ्करोति स उत्तमयोद्यतो त्रिवृतो विष्टुति र्ज्यैष्ठो ज्यैष्ठिनेयः स्तुवीताग्राद्यग्रꣳ रोहत्यभिक्रामन्ती विष्टुतिरभिक्रान्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्य मृध्या एव पापवसीयसोर्विधृतिर्विपाप्मना वर्त्तते य एतया स्तुते नावगतोपरुध्यते नापरुद्धोऽवगच्छति न श्रेयाꣳसम्पापीयानभ्यारोहति न जनता जनता मभ्येति नान्योन्यस्य प्रजा आददते यथा वेवं कल्पन्ते ऽवर्षुकास्तु पर्जन्यो भवतीमे हि लोकास्तृचस्तान् हिङ्कारेण व्येत्येषा वै प्रतिष्ठिता त्रिवृतो विष्टुतिः प्रतितिष्ठते य एतया स्तुते ॥ १ ॥

एकैकस्य साम्नः पञ्च विभक्तयः,—हिङ्कारप्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः । तत्र, हिङ्कारस्त्रिभिरुद्गातृभिः कर्त्तव्यः । अतएव सूत्रकृतोच्यते—"साम्नि साम्नि हिङ्कुर्य्युः"—इति । 'तिसृभ्यः' —इति "क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः"—इति कर्म्मणि चतुर्थी । तिस्र ऋचो गातुं हिङ्कुर्य्यात् । एकवचन मतन्त्रम्, उक्तादेव हेतोः । अतस्त्रयोऽप्युद्गातारो हिङ्कुर्य्युरित्यर्थः । एव मुत्तरत्रापि हिङ्कारविधायकेषु वाक्येषु योजना । 'सः' हिङ्कर्त्ता 'प्रथमया' निरुक्तया गायेदिति शेषः । एषः प्रथमः पर्य्यायः । पुनरपि 'तिसृभ्यः हिङ्करोति' स हिङ्कर्त्ता 'मध्यमया' निरुक्तया

गायेत्। अयं द्वितीयः पर्य्यायः। पुनरपि 'तिसृभ्यो हिङ्करोति' 'सः' हिङ्कर्त्ता तृचस्य 'उत्तमया' अन्यया त्रिरुक्तया गायेत्। एष तृतीयः पर्य्यायः। अनेन पर्य्यायेण त्रिवृत् स्तोमः सम्पद्यते। उक्तप्रकारेण त्रिधा वर्त्तत इति त्रिवृत् स्तोमः, तस्य 'विष्टुतिः' एषा 'उद्यती' ऊर्द्ध्वं गच्छन्ती। उक्तेषु पर्य्यायेषु प्रथम-मध्यमोत्तमक्रमेण ऊर्द्ध्वगमनादन्वर्थसंज्ञेयम्। एषा 'त्रिवृतः' प्रथमा 'विष्टुतिः'॥

एतस्यां विष्टुतौ अधिकारिण माह—यो यजमानो भ्रातृ-णाम्मध्ये स्वयं 'ज्येष्ठः' भवति, सपत्नीनां मध्ये च या ज्येष्ठा, तस्याः पुत्रश्च भवति, स यजमानः एतया विष्टुत्या 'स्तुवीत' स्तौति। तत्रान्तर्णीतण्यर्थः स्तावयेत्; तस्य यजमानस्य एतया विष्टुत्या स्तुयुरित्यर्थः॥

एतां विष्टुतिं अग्र्यप्राप्त्यादिफलसाधनतया प्रशंसति—'अग्र्या-दग्रम्' उत्कर्षादूर्द्ध्वं पुनरप्युत्कर्षं 'रोहति' प्राप्नोति; उत्तरोत्तरा-भिवृद्धिर्भवति यश्चैतया विष्टुत्या स्तुवते। तथा इयं 'विष्टुतिः' 'अभिक्रामन्ती' त्रिषु पर्य्यायेषु प्रथममध्यमोत्तमानुपूर्व्येणाभिमुख माक्रामन्ती उपर्य्युपरि गच्छन्ती; अत एषा प्रयुज्यमाना 'यज्ञस्य' अभिक्रमणाय 'एव' उपर्य्युपरि प्राप्तये एव भवति। ततश्च किमि-त्यत आह—'यज्ञस्याभिक्रान्तेन' भावे निष्ठा अभिक्रमणेन आरो-हणेन परिसमापनेन 'ऋध्नोति' यजमानः समृद्धो भवति। 'हि' शब्दो हेतौ; यस्मादेवं 'तस्माद्' 'एतया' विष्टुत्या 'स्तोत-व्यम्'। 'ऋध्या एव' तत् स्तवनं यजमानस्य समृद्ध्यै एव भवति॥

पुनरपि नानाविधफलसाधनत्वेन प्रशंसति,—'पापनिकृष्ट'

वसीय उत्तमम्, पापञ्च वसीयश्च पापवसीयसी, तयोरुभयोः 'विधृतिः' विधरणी असाङ्कर्य्यकरणी इयं विष्टुतिः, एवं जानन् 'य एतया विष्टुत्या' 'स्तुते' स्तौति, सः 'पाप्मना' पापेन 'विवर्त्तते', पाप्मनः पृथग् भवतीत्यर्थः। यत्र देशे विधरणी एषा विष्टुतिः प्रयुक्ता, तत्र 'अवगतः' कर्त्तरि निष्ठायाम्; अवगन्ता ज्ञाता 'नापरुध्यते' अज्ञानेन अनपरुद्धः अनाक्रान्तो भवति। यस्तु 'अपरुद्धः' अज्ञानेनापहृतः स 'नावगच्छति' न जानाति। ज्ञानाज्ञाने एकस्मिन्नधिकरणे सह न तिष्ठत इत्यर्थः। तथा 'श्रेयाꣳसं' प्रशस्यतमं उत्तमजातिं ब्राह्मणादिकं 'पापीयान्' निकृष्टतमः शूद्रादिः 'नाध्यारोहति' नाभिक्रामति; न श्रेयाꣳसः पापीयाꣳसश्च विभक्ता एव वर्तन्त इत्यर्थः। तथा 'जनता' जनसमूहो 'जनताम्' अन्यजनसमूहं 'नाभ्येति' नाभिगच्छति; जनपदो जनपदान्तरं दौर्भिक्षादिकारणेन न प्रविशतीत्यर्थः। 'प्रजाः' च 'अन्योन्यस्य' धनादिकं 'नाददते' न स्वीकुर्वन्ति; अपि तु 'यथा' 'चेतं' स्वं स्वं चेतं अनतिक्रम्य स्वचेत्ते 'कल्पन्ते'। इत्य मस्या विष्टुतेर्बहूनि फलानि दर्शितानि; एकस्तु दोषो भवति। कोऽसौ दोषः? उच्यते,—'पर्ज्जन्यः' वृष्टग्रभिमानी देवः 'अवर्षुकः' अवर्षणशीलो 'भवति'; तस्मिन् देशे वृष्टिर्न स्यादित्यर्थः। यस्मिन् देशे एतया विष्टुत्या स्तुवते। कुतः? इत्यत आह,—'इमे' भूरादय स्त्रयो 'लोकाः' 'ऋचः' तिस्रः ऋचो भूरादिलोकस्थानीयाः 'तान्' लोकान् 'हिङ्कारेण' प्रत्यृचं कृतेन 'व्येति' विगमयति वियुक्तान् करोति। वयतिरन्तर्नीतण्यर्थः। परस्परोपकार्य्योपकारकभावं विश्लेषयतीत्यर्थः। सति हि तस्मिन्नन्तरिक्षात्पृथिव्या उपकारात्मिका वृष्टि-

भवति, नान्यथा। 'हि' यस्मादेवं तस्माद् 'अवर्षुकः पर्जन्यो भवति' ॥

अथैतां प्रतिष्ठाफलतया प्रशंसति,—'एषा वै' एषा खलु उद्यती 'त्रिवृतो विष्टुतिः प्रतिष्ठिता' एकैकस्या ऋचि एकैकस्य पर्यायस्य परिसमापनात् अस्यां प्रतिष्ठिता भवति। अन्नादिभिः समृद्धो भवतीत्यर्थः ॥ १ ॥

॥ अथ द्वितीयः खण्डः ॥

तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति स पराचीभिः परिवर्त्तिनी त्रिवृतो विष्टुतिः प्र परीवर्त्त माप्नोति य एतया स्तुते सन्तता विष्टुतिः प्राणोऽपानो व्यान स्तत् त्वच स्तान् हिङ्कारेण सन्तनोति सर्व मायु रेति न पुरायुषः प्र मीयते य एतया स्तुते वर्षुकः पर्जन्यो भवतीमे हि लोकास्तृच स्तान् हिङ्कारेण सन्दधाति स्वर्ग्येन तु वा ईश्वरा पशून्निर्मृजः सैषा च परा चोत श्रेयान् भवत्युत यादृङ्ङेव तादृङ् नेत्तु पापीयाꣳ स्ता मेताम्ब्राह्मणय उपासते तस्मात्ते प्रतिगृह्णन्तः परीवर्त्तान्न च्यवन्ते ॥ २ ॥

अथ परिवर्त्तिनीं विष्टुतिं दर्शयति—'तिसृभ्यः' तिसृ ऋचो गातुं 'हिङ्करोति' हिङ्कुर्य्यात्। 'सः' हिङ्कर्त्ता 'पराचीभिः' अनावृत्ताभिस्तिसृभिः ऋग्भिर्गायेत्। एव मुत्तरयोरपि पर्य्याययोर्योजना। एषा 'त्रिवृतः' त्रिवृत्स्तोमस्य 'विष्टुतिः' 'परि-

वर्त्तिनी' आवर्त्तिनी। यथा प्रथमे पर्य्याये अनावृत्ताभिगीनं तथोत्तरयोरपीति अस्या आवृत्तिः॥

अथैतां बहुविधफलसाधनत्वेन प्रशंसति—'यः' यजमानः 'एतया' विष्टुत्या स्तुते, सः 'परीवर्त्तं' परिवृत्य परिवृत्य पुनः पुनः धनादिकं 'प्राप्नोति'। परिपूर्वाद्वृतेः 'आभीक्ष्ण्ये णमुल् च'—इति णमुल् प्रत्ययः। यद्वा परिवर्तत इति परीवर्तम् धनं पचाद्यच्। तथा इयं 'विष्टुतिः', 'सन्तता' पूर्ववत् च; मध्ये हिङ्काराभावेन अविच्छिन्ना। मुख्यप्राणस्य मुखप्रदेशवर्तिनो या प्राणनरूपा वृत्तिः, स 'प्राणः'; अपानरूपा अधोगामिनी, सः 'अपानः'; तयोरुभयोर्मध्यवर्तिनी विविधं सर्वं शरीरं व्याप्य वर्तमाना या वृत्तिः, स 'व्यानः'। 'तत्' एतत् त्रितयं 'तृचः' एतास्तिस्रः ऋचः प्राणादिस्थानीया इत्यर्थः। तथा सति ऋचो हिङ्कारेण सन्तन्वन् 'तान्' प्राणादीनेव आदौ सकृत् प्रयुक्तेन 'हिङ्कारेण' 'सन्तनोति' सन्ततानविच्छिन्नान् करोति; व्यवच्छेदकस्य हिङ्कारस्य मध्ये प्रयोगाभावात्। अतएव प्राणवृत्तीनामवच्छेदात् 'सर्वं' शतवर्षलक्षणम् 'आयुः' 'एति' प्राप्नोति। एतदेव व्यतिरेकेणाह—'आयुषः' कालात् शतवर्षलक्षणादेषः 'पुरा' च 'न प्रमीयते' न म्रियते। 'य एतया' विष्टुत्या 'स्तुते', स यजमान उक्तविध इत्यर्थः। किञ्चास्य 'पर्जन्यः' 'वर्षुकः' वर्षणशीलो 'भवति'। ये 'इमे त्रयो लोकाः' ते 'तृचः' ऋक्त्रयस्थानीयत्रित्वसाम्यात्; तथा सति आदौ प्रयुक्तेन 'हिङ्कारेण' अवच्छेदेन तिस्रः 'ऋचः' सन्तन्वन् 'तान्' इमानेव लोकान् 'सन्दधाति' उपकार्य्योपकारकभावेन संयुक्तान् करोति॥

अथास्यामपि विष्टुतौ एको दोषो विद्यत इत्याह—एषा

परिवर्त्तिनी विष्टुतिः 'स्त्वेव तु वै'; ईव-शब्दोवधारणे, तु शब्दो वैलक्षण्यद्योतकः; स्तुत्या मध्ये हिङ्काराभावेन तु स्लिष्टैव खलु। ततः किम्? 'पशून्' यजमानसम्बन्धिनो गवादीन्, 'निर्मृजः' निर्मार्ष्टुम् अपगमयितुं विनाशयितुम् 'ईश्वराः' समर्थाः भवन्ति। "ईश्वरे तोसुन्कसुनौ"-इति मृजेस्तुमर्थे कसुन् प्रत्ययः। अय मेको दोषः। किञ्च 'सैषा' विष्टुतिः 'आ च परा च' अभिमुखी पराङ्मुखी च भवति। कथम्? यथैकस्मिन् पर्य्याये तथैवोत्तरयोरप्यावर्तत इत्यभिमुखीत्युच्यते; तथैकस्मिन् पर्य्याये पराचीभिस्तिसृभिः ऋग्भिः स्तवनात् पराङ्मुखीति च। अस्त्वेव मुभयरूपता, किन्ततः? इत्यत आह—उतेति। 'उत' शब्दो वा-शब्दस्यार्थे। ईदृशीं विष्टुतिं प्रयुञ्जानः 'श्रेयान्' यज्ञफलप्राप्तया वा प्रशस्ततमो वा 'भवति'। 'उत' अथवा। 'यादृङ्ङेव तादृक्'। एवकारो भिन्नक्रमः यागानुष्ठानात्पूर्वं यादृक् रूपो भवति, अनुष्ठितेऽपि यागे तादृगेव तादृश एव भवति; प्रयोगकृतोऽतिशयस्तस्मान्न भवतीत्यर्थः। 'नेत्तु' इत्च्छब्दो ऽवधारणे नैव तु 'पापीयान्' पूर्वरूपान्निकृष्टो भवति।

एषा विष्टुतिर्भाल्लविशाखिनां नित्येति दर्शयति—'ता मेतां' परिवर्तिनीं विष्टुतिं 'भाल्लवयः' भाल्लविशाखिनः 'उपासते' त्रिवृत्-स्तोमे प्रयुञ्जते। अतः 'ते' धनादिकं प्रतिगृह्णन्तः 'परीवर्त्तात्' परिवर्तमानात् 'तस्मात्' धनात् 'न च्यवन्ते' न वियुज्यन्ते ॥ २॥

॥ अथ तृतीयः खण्डः ॥

**तिसृभ्यो हिङ्करोति स पराचीभि स्तिसृभ्यो हिङ्-रोति या मध्यमा सा प्रथमा योत्तमा सा मध्यमा या**

प्रथमा सोत्तमा तिसृभ्यो हिङ्करोति योत्तमा सा प्रथमा या प्रथमा सा मध्यमा या मध्यमा सोत्तमा कुलायिनी त्रिवृतो विष्टुतिः प्रजाकामो वा पशुकामो वा स्तुवीत प्रजा वै कुलायम्पशवः कुलायं कुलाय मेव भवत्येता मेवानुजावराय कुर्य्यादेतासा मेवाग्र म्परियतीनां प्रजाना मग्रम्पर्य्येत्येता मेव वहुभ्यो यजमानेभ्यः कुर्य्यात् यत्सर्वा अग्रिया भवन्ति सर्वा मध्ये सर्वा उत्तमा सर्वानेवैनान् समावद्भाजः करोति नान्योन्य मपघ्नते सर्वे समावदिन्द्रिया भवन्ति वर्षुकः पर्जन्यो भवतीमे हि लोकास्तृचस्तान् हिङ्कारेण व्यतिषजति पापवसीयसन्तु भवत्यधरोत्तर मपावगतो रुध्यते वगच्छत्यपरुद्धः पापीयाञ् च्छ्रेयाꣳस मभ्यारोहति जनता जनता मभ्येत्यन्योन्यस्य प्रजा आददते न यथा वेलङ्कल्पन्ते ॥ ३ ॥

अथ कुलायिनीं विष्टुतिन्दर्शयति—परिवर्त्तिनी प्रथमः पर्य्यायः। द्वितीये पर्य्याये 'पराचीभिः' प्रयुक्तस्य तृचस्य 'या मध्यमा' प्राक्, 'सा प्रथमा' कार्य्या। 'योत्तमा, सा मध्यमा' कार्य्या। 'या प्रथमा, सोत्तमा' कार्य्या। तृतीयः पर्य्यायः निगदसिद्धः। 'कुलायिनी' कुलायो नीडं पक्षिणां निवासस्थानं तद्यथा व्यस्ततृणादिनिर्म्मितम्, एवं व्यत्यासयुक्ता ऋचः कुलायास्तैस्तद्वती कुलायिनी एतत् सञ्ज्ञा; त्रिवृत्-स्तोमस्य 'विष्टुतिः' इयम् ॥

अस्यां विष्टुतौ कोऽधिकारीत्यत आह—प्रजानाम्पशूनाञ्च कुलायवदवस्थितिहेतुत्वात् कुलायत्वेन स्तुतिः। कुलायिन्या स्तुवानोऽपि प्रजानां पशूनाञ्च कुलायमेव आश्रयभूतो भवत्येव॥

पुनरप्यधिकारिविशेषं दर्शयति—अनु पश्चाज्जायत इत्यनुजः कनीयान्। स हि निकृष्टः तस्मादप्यवरो निकृष्ट आनुजावरस्तादृशाय यजमानायेति। 'अग्रं परियतीनां' लोके याः प्रजाः अग्रं वयोगुणादिभिः श्रेष्ठपदं परियन्ति परितो गच्छन्ति, एतासामेव श्रैष्ठ्यं परिगच्छन्तीनां 'प्रजानां' मध्ये स यजमानः 'अग्रं' श्रेष्ठं पदं 'पर्य्येति' परिगच्छति सर्वोत्कृष्टो भवतीत्यर्थः॥

सत्रेष्वहीनेषु च बहूनां यजमानानां फलसाम्याय कुलायिनीं विधत्ते—'एतामेव' कुलायिनीन्त्रिवृतो विष्टुतिं 'बहुभ्यो यजमानेभ्यः' उद्गाता 'कुर्य्यात्'। 'यत्' यस्मादेताः तृचगताः 'सर्वाः' ऋचः 'अग्रियाः' मुख्याः प्रथमा 'भवन्ति'; 'सर्वा मध्ये' वर्तमाना भवन्ति; 'सर्वाः' च 'उत्तमाः' भवन्ति। तद्यथा—प्रथमे पर्य्याये प्रथमैव प्रथमा भवति, मध्यमे तु मध्यमा प्रथमा भवति, उत्तमे उत्तमा प्रथमा भवति। एवं सर्वासां प्राथम्यं जातम्। तथा प्रथमपर्य्याये मध्यमैव मध्यमा, द्वितीये पर्य्याये उत्तमैव मध्यमा, तृतीये पर्य्याये प्रथमैव मध्यमा। एवं सति तिस्रोऽपि मध्यमाः सम्पन्नाः। तथा प्रथमे पर्य्याये उत्तमैवोत्तमा भवति, द्वितीये पर्य्याये प्रथमैवोत्तमा भवति, तृतीये पर्य्याये मध्यमैवोत्तमा भवति। एवं सर्वा अप्युत्तमाः सम्पन्नाः। यस्मादेताः सर्वा ऋचः समानरूपाः, ततो हेतोरनया विष्टुत्या 'सर्वानेवैनान्'

यजमानानुज्ञाता 'समावद्भाजः' समावच्छन्दपर्य्यायः,—समं फलं भजन्त इति समावद्भाजः साम्येन फलभाजः 'करोति'। अतएव 'नान्योन्य मपघ्नते' परस्परन्न हिंसन्ति। तथा 'सर्वे' यजमानाः 'समावदिन्द्रियाः' समावद्वीर्य्याः समानसामर्थ्याः 'भवन्ति' ॥

फलान्तरमाह—लोकस्थानीयानां तिसृणा मृचामादौ प्रयुक्तेनैकेनैव 'हिङ्कारेण' व्यतिषञ्जनात् संयोजनात् त्रयाणां लोकानां परस्पर मुपकार्य्योपकारकभावो न वाधित इति 'पर्जन्यः' 'वर्षुकः' वर्षणशीलो 'भवतिः' इत्यर्थः ।

अस्या अपि विष्टुतौ बहुदोषाः सन्त्यवन्तीत्याह—'तु'-शब्दः फलवैलक्षण्यद्योतनार्थः। पापं प्रसिद्धम्, वसीयः पुण्यम्, तदुभय मेकाश्रयं 'भवति'। इतरत् उद्यतीवाक्यशेषवत् व्याख्येयम्। अभावोऽत्र विशेषः ॥

इत्थं विष्टुतयस्तिस्रो विहिताः। तिसृष्वपि तासु फलविशेषश्रवणान्निन्दादर्शनाच्च समानफलत्वात्सर्वा नित्याः; यत्र विशेषादेशः क्रियते निमित्तं वा कामो वा श्रूयते, ततोऽन्यत्र नित्यप्रयोगे आद्याभिरेताभिरेव स्तुतिभिः स्तोमसम्पादनं कार्य्यम्। तदाह सूत्रकृत्—प्रथमाभिर्विष्टुतिभिः स्तोमविधान मनादेशे ताः पञ्चाः सर्वाभिप्रायाश्च"—इति। पुनरपि "यथाभिष्टं वा विदध्याद्"—इत्यादिना खण्डशेषेण बहवः पक्षाः सूत्रकृतोपन्यस्ताः; ते तत्रैव बोद्धव्याः। नन्वेतास्वपि प्रत्येकं निन्दादर्शनात् कथ मासां नित्यत्वम्? नैष दोषः; उद्यत्यान्तावत् यो दोष उक्तः 'अवर्षुकः पर्जन्यो भवतीति, स कुलायिनीपरिग्रहे परिह्रियते; तत्र हि 'वर्षुकः पर्जन्यो भवतीत्याम्नातम्। यत्तु कुलायिन्यां दोषदर्शनं 'पापवस्त्रीयसन्तु भवत्यधरोत्तरमित्यादि, तदुद्यती-

प्रयोगेण विहृतम् ; तत्र हि 'पापवसीयसी विधृतिरिति सा श्रूयते स्वस्येव तु पापवसीयसन्तु भवति ॥

प्रथमाया मध्यमायाश्चान्ते प्रयोग इति यदस्ति, तदेतद् 'अधरोत्तरम्' अनुष्ठानं यस्मिन् देशे क्रियते, तत्र वा ईश्वरा पशून्निर्मृज इति परिवर्त्तिन्यां यदपशुलक्षणं दोषदर्शनं तदुक्त्यां परिहृतं भवति,—'एषा वै प्रतिष्ठिता विधृतिरिति ; तत्र हि वाक्यशेषः—'प्रजापशुसन्दुरा हि प्रतिष्ठितो भवति'- इति ॥ ३ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतः
श्रीमत्सायणाचार्येण विरचिते सामवेदार्थप्रकाशे
ताण्ड्यमहाब्राह्मणव्याख्याने प्रथमपञ्चिकायां
द्वितीयाध्यायस्य प्रथमादिखण्डत्रयम् ॥

---

## सामवेदस्य,

### कौथुमशाखीयारण्यकात्

द्वितीया दशत्, सेतुसाम च ।

२ ३ १ २ ३ २ ३ १ २
त्वमेतदधारयः कृष्णासु रोहिणीषु च ।
१ २ ३ २ ३ १ २
परुष्णीषु रुशत्पयः ॥ १ ॥

अथ द्वितीयखण्डे—सैषा प्रथमा । सुतकक्षः ऋषिरिन्द्रो गायत्री । अस्य सामर्थ्य मेवोपपादयति—हे इन्द्र ! 'कृष्णासु'

कृष्ण-वर्णासु गोषु। 'च' तथा 'रोहिणीषु च'। "वर्णादनुदात्ता-त्तोपधात्तो नः"—इति ङीप्। रोहितवर्णासु 'परुष्णीषु'। "परुष्णी पर्ववती"—इति यास्कः। पर्वशः पर्वशो नानावर्णासु च गोषु 'रुशत्'। रोचतेर्दीप्तिकर्म्मणः। दीप्यमानं श्वेतम् 'एतत्' परिदृश्यमानं 'पयः' क्षीरं त्वम् 'अधारयः' धारयसि। तस्मात् तद्बलं पूजयाम इति समन्वयः॥ "पुरुष्णीषु"—इति ऋग्वेदीयः पाठः॥ १॥

१ ३ ३ २ ३ १ २ १ ३ २
अरूरुचदुषसः पृश्निरग्रिय
३ १ २ ३ १ २ ३ २
उक्षामिमेति भुवनेषु वाजयुः।
३ १ २ ३ १ २
मायाविनो ममिरे अस्य मायया
३ १ २ ३ २ ३ २ ३ १ २
नृचक्षसः पितरो गर्भमादधुः॥ २॥

अथ द्वितीया। अरूरुचदिति त्वेतां पवित्रो दृष्टवानृषिः। पवमानो देवता स्याच्छन्दश्च जगती स्मृतः॥ 'उषसः' सम्बन्धी 'पृश्निः' आदित्यः। "पृश्निरादित्यो भवति, प्राश्नुत एनं वर्णः"—इति नैरुक्ताः। 'अग्रियः' अग्रः मुख्यः, सोमः 'अरूरुचत्' रोचयति। स 'उक्षा' जलस्य सेक्ता पर्जन्यः सन्, 'मिमेति' भृशं शब्दायते। 'भुवनेषु' 'वाजयुः' तेषा मन्न मिच्छन्; 'मायाविनः' माया प्रज्ञा, तद्वन्तो देवाः 'अस्य' सोमस्य 'मायया' प्रज्ञया 'ममिरे' निर्म्मितवन्तः। सोमस्य एकैकांशपानवशात् अग्न्यादयः स्व-स्व-व्यपारेण जगत् सृजन्तीत्यर्थः। तस्य 'अस्य'

मायया 'नृचक्षसः' नृणां द्रष्टारः, 'पितरः' पालकाः, देवाः अङ्गिरसः पितरो वा 'गर्भम्' 'आदधुः' धारयन्ति ओषधीषु । स चात्र सूर्याख्यो सोमः स्तूयते ; सूर्यरश्म्यनुगमाधीनवर्द्धनाच्च चन्द्रस्य । यद्वा अय मुषसः पृश्निः सविता अरूरुचत् रोचयति रोचते वा । सर्वं मिष्टं समानम् । तत्सम्बन्धिनो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भं मादधुर्वृष्ट्यर्थम् ॥ २ ॥

२ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १ २
इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
१ २ ३१ २ ३ १ २
इन्द्रो वज्री हिरण्ययः ॥ ३ ॥

इत्येषर्गुच्छन्दा वैश्वामित्रो द्रष्टा गायत्रीच्छन्द इन्द्रो देवतेति ॥ 'इन्द्रः इत्' इन्द्र एव 'हर्योः' हरिनामकयोरश्वयोः 'सचा' सह युगपत् 'आ सम्मिश्लः' सर्वतः सम्यङ्मिश्रयिता । कीदृशयोर्हर्योः ? 'वचोयुजा' इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः । अयम् 'इन्द्रः' 'वज्री' वज्रयुक्तः 'हिरण्ययः' हिरण्मयसर्वाभरणैरुपेत इत्यर्थः ॥ ३ ॥

२ ३ १ २ ३ १ २
इन्द्र वाजेषु नो ऽव सहस्रप्रधनेषु च ।
३ २ ३ १ २ ३ १ २
उग्र उग्राभिरूतिभिः ॥ ४ ॥

अथ चतुर्थी । हे 'इन्द्र !' 'उग्रः' शत्रुभिः अप्रधृष्यस्त्वम् 'उग्राभिः' अप्रधृष्याभिः 'ऊतिभिः' अस्मद्वैरिपरपक्षाभिः 'वाजेषु' युद्धेषु 'नः' अस्मान् 'अव' रक्ष । तथा 'सहस्रप्रधनेषु' च सहस्रसङ्ख्याकगजाश्वादिलाभयुक्तेषु महायुद्धेष्वपि रक्ष ॥ ४ ॥

१ २ ३ १ २ ३ १ २ ३ १र

प्रथश्चयस्यसप्रथश्चनामा-

२र ३ १ २ ३ २

नुष्टुभस्यहविषोहविर्यत् ।

३ १ १र ३ २ ३ १ २

धातुर्द्युतानात्सवितुश्चविष्णो

३ १ र २र ३ १ २

रथन्तरमाजभारावसिष्ठः ॥ ५ ॥

अथ पञ्चमी। अपश्यत् प्रथ इत्येतां त्रिष्टुभं प्रथनामकः। वैश्वदेवीं भवेदेवं छन्दोदैवतनिर्णयः॥ 'यस्य' वसिष्ठस्य 'प्रथः' नाम पुत्रः, यस्य भरद्वाजस्य 'सप्रथः' नाम पुत्रः; तयोर्मध्ये 'वसिष्ठः' मम पिता 'आनुष्टुभस्य' अनुष्टुप्छन्दसा युक्तस्य 'हविषः' धर्माख्यस्य यत् 'हविः' हविष्ट्वापादकं 'रथन्तरं' साम, तद्रथन्तरं 'धातुः' धातृसञ्ज्ञाद्देवात्, 'द्युतानात्' द्योतमानात् 'सवितुश्च', 'विष्णोश्च' 'आ जभार' आजहार, आहृतवान्। हृग्रहोर्भ इति भत्वम्। रथशब्दोपपदात्तरतेः सञ्ज्ञायां भृतवृजीति खच्; अरुर्द्विषदजन्तस्येति मुमागमः॥ ५॥

३ १ २ ३ १ २ ३ २ ३ १ २

नियुत्वान्वायवागह्ययꣳशुक्रोअयामिते ।

१ २ ३२ ३२

गन्तासिसुन्वतोगृहम् ॥ ६ ॥

अथ षष्ठी। नियुत्वानिति गायत्र्या वायुं गृत्समदोऽब्रवीत्। हे 'वायो!' 'नियुत्वान्' नियुतो वाहनानि वायोः "नियुतो वायोः"—इति निघण्टुः। तैर्युक्तस्त्वं 'आगहि' आगच्छ। 'अयं' 'शुक्रः' दीप्यमानः सोमः 'ते' तुभ्यम् 'अयामि'। यामैः कर्माणि

लुङि रूपम् ) नियतो गृहीत आसीत्। यतः 'सुन्वतः' सोमा-भिषवं कुर्वतो यजमानस्य 'गृहं' 'गन्तासि' यातोऽसि ॥ ६ ॥

१ २र ३ १२ ३१२
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।
१ २३१ २ ३१२ १ ३१र २
तत्पृथिवीमप्रथयस्तदस्तभ्नाउतोदिवम् ॥ ७ ॥

अथ सप्तमी । नृमेधपुरुमेधौ द्वावृषी ऐन्द्री अनुष्टुभः । हे 'अपूर्व्य !' त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित ! हे 'मघवन् !' मंहनीयतम ! धनवन्निन्द्र ! 'वृत्रहत्याय' वृत्रासुरहननाय 'यद्' यदा त्वं 'जायथाः' उत्पन्नः प्रादुर्भूतोऽसि, 'तत्' तदानीमेव 'पृथिवीं' प्रथमानाम् 'अप्रथयः' प्रसिद्धां दृढां मकरोः। 'उत' अपि च 'दिवं' द्यां द्युलोकम् अन्तरिक्षेण 'अस्तभ्णाः' निरुद्धा-मकार्षीः। ईदृशं वीर्य्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् अपूर्व्येति पदम् ॥ ७ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतः
श्रीमत्सायणाचार्येण विरचिते सामवेदार्थप्रकाशे
आरण्यकव्याख्याने द्वितीया दशत्।

---

२र १र र २ २ १
हाउ। ३। सेतूंꣳस्तर। ३। दुस्त। रान्। ३।
१र २र १र र २ २र र
दानेनादानम्। ३। हाउ। ३। अहमस्मिप्रथमजा

१ २ १ १ १ १ २र १र र २
ऋता२३स्था२३४५ । हाउ । ३ । सेतूꣳस्तर । ३ ।
२ १ र २र १र २ १ र २र १र
दुस्त । रान् । अक्रोधेनक्रोधम् । २ । अक्रोधेनक्रोधम् ।
२र र र र र १ २ १ १ १ १
हाउ । ३ । पूर्वन्देवेभ्योअमृतस्यना२३मा२३४५
२र १र र २ २ १
हाउ । ३ । सेतूꣳस्तर । ३ । दुस्त । रान् । ३ ।
२ १ र २र २र २र र र र १
श्रद्धयाश्रद्धाम् । ३ । हाउ । ३ । योमाददातिसइदेव
२ १ १ १ १ २र १र र २
मा२३वा२३४५त् । हाउ । ३ । सेतूꣳस्तर । ३ ।
२ १ २ १र र २ २र
दुस्त । रान् । ३ । सत्येनानृतम् । ३ । हाउ । ३ । अह
१ २ १ १ १ १ २ऽ ऽ ऽ
मन्नमन्नमदन्तमा२३द्मी२३३५ । हाउहाउहाउवा ।
२र १र २र १ र १ १ र
एषागतिः । ३ । एतदमृतम् । ३ । स्वर्गच्छ । ३ ।
१र र १र र २र १र २ १ १ १ १ १
ज्योतिर्गच्छ । ३ । सेतूꣳस्तीर्त्वाचतुरा२३४५ः ॥ १ ॥

त्रिष्टुभा अन्नदेवता आत्मानमेवाह ; — आत्मा एव ऋषिः । 'देवेभ्यः पूर्वम्' अग्निवरुणादिदेवेभ्यः पुरा 'अहम्' अन्नदेवता, 'अमृतस्य' विनाशरहितस्य 'ऋतस्य' सत्यस्य परब्रह्मणः सम्बन्धिनो 'प्रथमजा अस्मि नाम' प्रथमत एवोत्पन्ना भवामि खलु । 'यः' पुमान् 'मा ददाति' अन्नरूपां माम् अतिथ्यादिभ्यो ददाति, 'स इत्' स एव 'एवं' परिदृश्यमानप्रकारेण

'आवत्' अवति, सर्वान् प्राणिनो रक्षति। यस्तु लोभयुक्तः सन् प्राणिभ्योऽन्न मदत्त्वा स्वय मेव तदन्न मत्ति। 'अन्नम् अदन्तम्' नानाविधान्नभक्षकं तं लोभिनम् 'अह मन्नम्' अन्नदेवता 'अद्मि' भक्षयामि, विनाशयामीत्यर्थः ॥ १ ॥

॥ इति सायणाचार्यकृतं सेतुसामर्चो व्याख्यानम् ॥

---

## अथर्ववेदस्य,

### शौनकशाखीयसंहितातः

प्रथमकाण्डस्य प्रथमानुवाकीयं प्रथमं सूक्तम्।

॥ ॐ ॥

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ १ ॥
पुनरेहि वाचस्पते देवेन मनसा सह।
वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥ २ ॥
इहैवाभि वि तनूभे आर्त्नी इव ज्यया।
वाचस्पतिर्नि यच्छतु मय्येवास्तु मयि श्रुतम् ॥ ३ ॥
उपहूतो वाचस्पतिरुपास्मान् वाचस्पतिर्ह्वयताम्।
सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥ ४ ॥ १ ॥

शाखायाः शौनकीयायाः पूर्वोक्तेष्वेव कर्मसु।
विनियोगाभिधानेन संहितार्थः प्रकाश्यते ॥

तत्र प्रथमकाण्डे षड् अनुवाकाः। प्रथमेऽनुवाके षट् सूक्तानि। तत्र 'ये त्रिषप्ताः'-इत्येतत् प्रथमं सूक्तम्। अस्य मेधाजननकर्मसु विनियोगः। यदाह कौशिकः— 'पूर्वस्य मेधाजननानि'-इति (कौ० २. १.)। अत्र पूर्वशब्देन ये त्रिषप्ता इति सूक्त मुच्यते; 'पूर्वं त्रिषप्तीयम्'-इति (कौ० १. ७.) परिभाषणात्। तानि च मेधाजननकर्माणि,— उदुम्बरपलाशकर्कन्धूसमिदाधानम्, व्रीहियवतिलाना मावपनम्, क्षीरौदनपुरोडाशरसानां भक्षणम्, उपाध्यायाय भैक्षदानम्, सुप्तस्योपाध्यायस्य कर्णानुमन्त्रणम्, उपाध्यायोपसदनकाले जपः, आज्यमिश्रधानाहोमः, तिलमिश्र-धाना हुत्वा तच्छेषभक्षणम्, उपाध्यायाय दण्डाजिनधानाः प्रदातुं धानानुमन्त्रणम्, तद्वदेव धानाहोमः, शुकसारिभारद्वाजानां पक्षिणां जिह्वाबन्धनम् तत्प्राशनं च। एतानि कर्माणि अनेन सूक्तेन मेधाकामस्य कार्याणि। तथा च कौशिकं सूत्रम्— "शुकशारिकृशानां जिह्वा बध्नात्याशयत्यौदुम्बरपलाशकर्कन्धूना मादधात्यावपति भक्षयत्युपाध्यायाय भैक्षं प्रयच्छति सुप्तस्य कर्ण मनुमन्त्रयत उपसीदन् जपति धानाः सर्पिर्मिश्राः सर्वहुतास्तिल-मिश्रा हुत्वा प्राश्नाति पुरस्तादग्नेः कल्माषं दण्डं निहत्य पश्चा-दग्नेः कृष्णाजिने धाना अनुमन्त्रयते सूक्तस्य पारं गत्वा प्रयच्छति सकृज्जुहोति दण्डधानाजिनं ददाति"-इति (कौ० २. १.)। अस्याय मर्थः— 'आश्यबन्ध्यप्राश्नवनयानभक्ष्याणि सम्पातवन्ति'-इति (कौ० १. ७.) परिभाषणात् शुकादिजिह्वानां सम्पाताभि-हुताना मेव बन्धनं प्राशनं च। 'सम्पातेन होम माक्षिपत्'-

इत्यभ्यादानान्ते अनेन सूक्तेन आज्यं हुत्वा सम्पातानयनम्, 'सर्वाण्यभिमन्त्रणाणि'–इति ( कौ० १. ७. ) परिभाषणाद् अनेनैव सूक्तेन अभिमन्त्रणं च। कर्कन्धूर्बृहद्दरी। 'समिध मादधाति'–इति ( कौ० १. ७. ) परिभाषणात् उदुम्बरादीनां समिध इति योजनीयम्। हस्तहोमत्वात् तन्त्रविकल्पः; 'न दर्विहोमे, न हस्तहोमे, न पूर्णहोमे तन्त्रं क्रियेतेत्येके'–इति ( कौ० १४. २. ) सूत्रात्। 'आवपति व्रीहियवतिलान्'–इति ( कौ० १.७ ) परिभाषणात् आवपतिचोदनायां व्रीहियवतिलाः प्रत्येतव्याः। 'सर्वाण्यभिमन्त्रणाणि'–इति वचनात् अत्र सर्वे पदार्था अभिमन्त्र्य कर्त्तव्याः। 'भक्षयति क्षीरौदनपुरोडाशरसान्'–इति ( कौ० १. ७. ) वचनाद् भक्षयतिचोदनायां द्रव्यानादेशे क्षीरौदनपुरोडाशरसा बोद्धव्याः। अत्र रसशब्देन दधिघृतमधूदकानि उच्यन्ते; यदसूत्रयत्— 'दधि घृतं मधूदक मिति रसाः'–इति ( कौ० १. ८. )। क्षीरौदनादीनां भक्ष्यत्वात् होमसम्पाताभिमन्त्रणानि पूर्ववत् कर्त्तव्यानि; 'आश्यबन्धशाप्लवनयानभक्ष्याणि सम्पातवन्ति सर्वाण्यभिमन्त्रणाणि'–इति वचनस्य दर्शितत्वात्। मैवं पक्वम् अपक्वं वा अभिमन्त्र्य दद्यात्। अनुमन्त्रणं नाम प्रेषिणो मन्त्रार्थत्वेन अनुसन्धानपुरःसरं मन्त्रजपः। अभिमन्त्रणस्य तु ईक्षणं विशेषः। उक्तं हि—

"मन्त्र मुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
प्रेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्।
एतदेवाभिमन्त्रस्य लक्षणं वीक्षणाधिकम्॥"–इति।

धानानां सर्वहोमस्य हुतशेषप्राशनस्य च कर्मैक्ये विरोधात् प्रयोगभेदः। अन्यत् निगदसिद्धम्॥

एतानि कर्म्माणि अन्योन्यनैरपेक्ष्येण मेधाजननफलसाधनत्वेन चोदितत्वाद् विकल्पेन अनुष्ठेयानि। कर्म्मभूयस्त्वाद् फलभूयस्त्व मिति न्यायात् समुच्चयेन वा अनुष्ठेयानि। एव मुत्तरत्रापि द्रष्टव्यम् ॥

\+ \+ \+ \+ \+

द्विविधा व्याधयः,—आहारनिमित्ता अन्यजन्मपापनिमित्ताश्चेति। तत्र आहारनिमित्तानां वैद्यशास्त्रोक्तचिकित्सया उपशमनम्, पापनिमित्तानां तु आथर्वणैर्होमबन्धनपायनादिभिर्भैषज्यकर्म्मभिरुपशमनम्; 'ओषधिवनस्पतीना मनुक्तान्यप्रतिषिद्धानि भैषज्याना मंहोलिङ्गाभिः'–इति ( कौ० ४. ८. ) सूत्रकारेण 'स नो मुञ्चत्वंहसः ( अथ० सं० ४. २३. १. )'–इति पापनिवृत्तिप्रतिपादनपराणां मन्त्राणां सर्वत्र भैषज्यकर्म्मणि विनियुक्तत्वात्। तत्र सर्वव्याधिषु अनेन सूक्तेन आज्यं हुत्वा उदपात्रं सम्पात्य अनेनैव व्याधितशरीरं सम्मार्जयेत्। तथाह कौशिकः—'अथ भैषज्यानि'–इति प्रक्रम्य 'पूर्वस्योदपात्रेण सम्पातवतान्ते बलीर्विमार्ष्टि'–इति ( कौ० ४. १. )। भैषज्योक्तसूक्तैस्तत्तत्र व्याधौ उपधानोपस्थानान्यपि कुर्यादिति रुद्रभाष्यकारः। उपधानस्वरूप मुक्तम् ॥

तथा अनेनैव सूक्तेन पुत्रकामायाः स्त्रियाः, मृतापत्यायाश्च सम्पातितोदकावसेकम्, पुरोडाशभक्षणम्, कन्दुकक्रीडनम्, अलङ्कारधारणं वा कारयेत्। 'पूर्वस्य पुत्रकामावतोकयोः'–इत्यादि ( कौ० ४. ८. ) सूत्रम् ॥

तथा उपाकर्म्मणि माणवकवाचने विनियुक्तम्। 'त्रिषप्तीयं पच्छो वाचयेत्'–इति ( कौ० १४. ३. ) हि सूचितम् ॥

तथा राज्ञः पुष्याभिषेके 'ये त्रिषप्ताः'-इत्यृचा शाखादिभूतया पयोहोमः कार्यः। तथा च परिशिष्टे पुष्याभिषेकं प्रक्रम्य उच्यते—

'सप्तरात्रं घृताशी वा ततो होमं प्रयोजयेत्।
गव्येन पयसा कुर्यात् सौवर्णेन स्रुवेण तु।
वेदाना मादिमैर्मन्त्रैर्महाव्याहृतिपूर्वकैः॥'-इति (५. ३.)॥

तदेव माथर्वणमन्त्राणां सिद्धमन्त्रत्वेन अपरिमितवीर्यत्व-प्रदर्शनार्थ मादिमसूक्तस्य विस्तरतः सर्वेषु कर्मसु उपलक्षणत्वेन सूत्रकृता विनियोगोऽभ्यधायि। ततः सर्वेषां मन्त्राणा मभि-लषितसर्वफलसाधनत्वं प्रत्येतव्यम्॥

× × × × ×

तत्र प्रथमा। यच्छब्दोऽत्र प्रसिद्धार्थवाची; 'सर्वनाम प्रसि-द्धार्थं प्रसाध्यार्थविधातकृत्'-इति न्यायात्। 'ये' लोकवेदप्रसिद्धाः 'त्रिषप्ताः' त्रिसप्ताः त्रयो वा सप्त वा भावाः ['सङ्ख्ययाव्ययासन्नादूरा-धिकसङ्ख्याः सङ्ख्येये'-इति (पा० २. २. २५.) अन्यपदार्थे बहु-व्रीहिः। अन्यपदार्थश्च अत्र वार्थः। स च विकल्पः संशयो वा सम्भवति। अत्र तु विकल्प एव विवक्षितः। 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्'-इति (पा० ५. ४. ७३.) डच् समासान्तः। तस्य सतिशिष्टत्वात् 'सतिशिष्टस्वरो बलीयान्'-इति न्यायेन बहु-व्रीहिस्वरं बाधित्वा 'चितः'-इति (पा० ६. १. १६३.) अन्तो-दात्तत्वम्]। तदय मर्थः— पृथिव्यादयस्त्रयो लोकाः, तेषा-मधिष्ठातारोऽग्निवाय्वादित्याः, सत्त्वरजस्तमोगुणाः, ब्रह्मविष्णुमहे-श्वराः,-इत्येवमाद्यास्त्रिसङ्ख्याक्रान्ता ये सन्ति, ते सर्वे अत्र त्रिशब्देन विवक्षिताः। तथा— सप्त ऋषयः, सप्त ग्रहाः, सप्त मरुद्गणाः, सप्त लोकाः, सप्त च्छन्दांसि,-इत्याद्या ये सप्तसङ्ख्या-

क्रान्ताः सन्ति, ते सर्वे अत्र सप्तशब्देन अभिमताः। त्रिसङ्ख्याक्रान्ताः सप्तसङ्ख्याक्रान्ता वा इति यावत् ॥ यद्वा। त्रिः सप्त त्रिसप्ताः [ पूर्ववद् बहुव्रीहिः। अत्र सुजर्थः अन्यपदार्थः, स च क्रियाभ्यावृत्त्यात्मकः; त्रिरावृत्तसप्तसङ्ख्यायुक्ता इत्यर्थः। अत्र समासेनैव सुजर्थस्य अभिहितत्वात् सङ्ख्यावाचिनस्त्रिशब्दस्यैव समासः, न तु सुजन्तस्य इति सुचः श्रवणाभावः। तदुक्तं वार्तिककृता —'सुजभावोऽभिहितार्थत्वात् समासे'-इति ]। ते चैवं द्रष्टव्याः,— प्रसिद्धसूर्याधिष्ठितप्राग्दिग्व्यतिरिक्ता आरोगादिभिः सप्तभिः सूर्यैरधिष्ठिताः सप्त दिशः [ ते च आरोगादयस्तैत्तिरीयैराम्नायन्ते— 'आरोगो भ्राजः पटरः पतङ्गः। स्वर्णरो ज्योतिषीमान् विभासः'-इति ( तै० आ० १. ७. १. )। होतृप्रभृतयो वषट्कर्त्तारः सप्त ऋत्विजः। 'मित्रश्च वरुणश्च। धाता चार्यमा च। अंशश्च भगश्च। इन्द्रश्च विवस्वांश्चेत्येते'-इति ( तै० आ० १. १३. ३. ) श्रुत्यन्तरप्रसिद्धा विवस्वद्व्यतिरिक्ताः सप्त आदित्या इति। तथा च मन्त्रवर्णः— 'सप्त दिशो नाना सूर्याः सप्त होतार ऋत्विजः। देवा आदित्या ये सप्त०—०'-इति ( ऋ० सं० ९. ११४. ३. )। यद्वा सप्तसिन्धवः, सप्त लोकाः, सप्तदिशः, इत्येवं त्रिसप्ताः। श्रूयते हि — "यः सप्त सिन्धूनदधात् पृथिव्याम्। यः सप्त लोकानकृणोद् दिशश्च"-इति ( तै० ब्रा० २. ८. ३. ८. )। सप्त ग्रहाः, सप्त ऋषयः, सप्त मरुद्गणाः, इति वा त्रिसप्ताः॥ अथ वा त्रिगुणिता सप्तसङ्ख्या येष्विति बहुव्रीहिः; एकविंशतिसङ्ख्याका इत्यर्थः। ते च 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः'-इति ( तै० सं० ७. ३. १५. ५. ) प्रसिद्धा परिगृह्यन्ते। यद्वा शरीरारम्भकाणि पञ्च महाभूतानि, पञ्च

प्राणाः, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, अन्तःकरणं चेति। एव मेकविंशतिसङ्ख्याकाः प्रत्येतव्याः । एव मुक्तलक्षणास्त्रिसप्तसङ्ख्याः 'ये' देवाः 'परियन्ति' प्रतिदिनं प्रतिवत्सरं प्रतिकल्पं प्रतिशरीरं यथोचितं पर्यावर्त्तन्ते [ परिपूर्वात् 'इण् गतौ'-इत्यस्माल्लटि अदादित्वात् शपो लुक्, 'इणो यण्'-इति ( पा० ६. ४. ८१. ) यणादेशः, 'यद्वृत्तान्नित्यम्'-इति ( पा० ८. १. ६६. ) निघातप्रतिषेधः । 'उदात्तवता तिङा गतेः समासवचनम्'-इति परिशब्दस्य तिङन्तेन समासः, 'तिङि चोदात्तवति'-इति ( पा० ८.१.७१. ) गतेरनुदात्तत्वम् ]। किं कुर्वाणाः ? 'विश्वा' विश्वानि सर्वाणि 'रूपाणि' प्रतिनियताकारान् जगदनुग्रहार्थं 'बिभ्रतः' धारयन्तः। यद्वा रूप्यन्त इति 'रूपाणि' चेतनाचेतनात्मकानि वस्तूनि 'बिभ्रतः' अभिमतफलप्रदानेन पोषयन्तः [ विश्वेति। 'शेश्छन्दसि बहुलम्'-इति ( पा० ६. १. ७०. ) शेर्लोपे, प्रत्ययलक्षणेन नुमि, उपधादीर्घत्वे 'न लोपः प्रातिपदिकान्तस्य'-इति ( पा० ८. २. ७. ) नलोपः। विश्वशब्दः 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्'-इति ( उ० १.१४९.) क्वन्प्रत्ययान्तत्वात् 'ञ्नित्यादिर्नित्यम्'-इत्याद्युदात्तः ( पा० ६.१.१९७. )। बिभ्रत इति। 'डु भृञ् धारणपोषणयोः'-इत्यस्माल्लटः शत्रादेशः, शपः श्लुः, 'भृञा मित्'-इत्यभ्यासस्य इत्त्वम् ( पा० ७. ४. ७६. ), उगिदचां सर्वनामस्थानेऽधातोः'-इति ( पा० ७, १. ७०.) प्राप्तस्य नुमो 'नाभ्यस्ताच्छतुः'-इति ( पा० ७. १. ७८. ) प्रतिषेधः, प्रत्ययस्वरेण शतुरुदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः'-इति ( ६. १. १८९. ) अभ्यस्तस्य आद्युदात्तत्वम् ]। 'वाचस्पतिः' वाचः वेदात्मिकायाः पतिः पालकः स्वामी। निसर्गसिद्धत्वेन नित्याना मपि



वेदानां प्रथमतस्तन्मुखाभिव्यक्तेस्तस्य स्वामित्वव्यपदेशः। पद-द्वय मपि परस्परसापेक्षतया एकार्थतावृत्तित्वान्निरूढत्वाच्च ब्रह्मणः सञ्ज्ञा [ 'सावेकाचः'-इति ( पा० ६.१. १६८.) वाच उत्तरस्या विभक्तेरुदात्तत्वम्। 'षष्ठ्याः पतिपुत्र'-इति ( पा० ८. ३. ५३.) विसर्जनीयस्य सत्वम् ]। 'तेषां' प्रागुदीरितानां त्रिसप्तानां देवानां 'बला' बलानि [ पूर्ववत् 'शेश्छन्दसि बहुलम्'-इति ( पा० ६.१. ७०.) शेर्लोपः ]। तत्तदसाधारणसामर्थ्यानि श्रुतधारणादीनि 'मे' मम मेधादिफलार्थिनः [ 'तेमयावेकवचनस्य'-इति ( पा० ८. १. २२.) अस्मच्छब्दस्य षष्ठ्येकवचनान्तस्य मे-आदेशः। 'अनु-दात्तं सर्व मपादादौ'-इत्यधिकारात् ( पा० ८. १. १८.) सर्वा-नुदात्तत्वम् ]। 'तन्वः' तन्वाः शरीरस्य [ 'अनित्य मागमशा-सनम्'-इति आडभावः ]। 'अद्य' इदानीं मेधाजननादिकर्म-काले 'दधातु' विदधातु करोतु [ 'डु धाञ् धारणपोषणयोः', अस्माल्लोटि जुहोत्यादित्वात् शपः श्लुः। 'श्लौ'-इति ( पा० ६. १. १०.) द्विर्वचनम्। तिपः पित्त्वेन 'सार्वधातुक मपित्'-इति ( पा० १.२.४.) ङित्त्वस्याभावात् 'श्नाभ्यस्तयोरातः'-इति ( पा० ६. १. ११२.) आल्लोपस्याभावः। 'तिङ्ङतिङः'-इति ( पा० ८. १. २८.) निघातः ]।

अत्र बलाधानरूपाभिमतफलप्रदातृत्वं वाचस्पतिकर्तृकम् अवगम्यते, तदयुक्तम्; देवताया विग्रहाद्यभावेन फलदातृत्वा-योगात्। लोके हि विग्रहादिमत एव सेवितराजादेः फलप्रदा-तृत्वं दृश्यते। नायं दोषः। देवताया विग्रहाद्यभावेन फलदा-तृत्वासम्भवेऽपि तदुद्देशेन क्रियमाणयागहोमादिजनितापूर्वस्यैव फलप्रदातृत्वाङ्गीकारात्। तथा च नवमे देवताधिकरणे निर्णी-

तम्। "देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्" (जै० ९. १. ९.) इत्यत्र। तथा हि— "यदाग्नेयोऽष्टाकपालः" (तै० सं० २. ६. ३. ३.) इत्यत्र देवता प्रतीयते, अपूर्वमपि। तत्र प्राकरणिकाना मवघातप्रोक्षणादीनां सन्निपत्योपकारकाणाम्, प्रयाजादीना मारादुपकारकाणां चाङ्गानां, किम् अग्न्यादि-देवता प्रयोजिका, उत अपूर्वम्? इति विषये देवतैव प्रयोजिकेति तावत् प्राप्तम्। कुतः? यागेन तोषिताया देवतायाः फलप्रदत्वात्। सम्भवति हि तस्याः फलप्रदत्वम्; मन्त्रार्थवादादिभ्यो विग्रहादि-पञ्चकावगमात्। विग्रहः, हविस्स्वीकारः, तद्भोजनम्, तृप्तिः, प्रसादश्च,—इत्येतत् चेतनस्योचितं पञ्चकम्। 'सहस्राक्षो गोत्र-भिद्वज्रबाहुः'–इति (तै० सं० २. ३. १४. ४.) विग्रहः। 'अग्नि-रिदं हविरजुषत'–इति (तै० ब्रा० ३. ५. १०. २.) हविः-स्वीकारः। 'अशीदिन्द्र प्रस्थितेमा हवींषि'–इति (ऋ० १०. ११६. ८.) हविर्भोजनम्। 'तृप्त एवैन मिन्द्रः प्रजया पशुभि-स्तर्पयति'–इति (तै० सं० २. ५. ४. ३.) तृप्तिप्रसादौ। ततः सेवितराजादिवत् पूजितदेवतायाः फलप्रदत्वेन प्राधान्यात् सैव धर्माणां प्रयोजिका। तथा सति विकृतिषु सौर्यादिषु, प्राकृताना मग्न्यादीना मभावात् तत्सम्बद्धा धर्मा एव तावत् नाति-दिश्यन्ते, कुतस्तत्र ऊहस्य प्राप्तिरिति प्राप्ते, अभिधीयते— किं देवतायाः फलप्रदातृत्वेन प्राधान्यं शब्दादापाद्यते, वस्तुसाम-र्थ्याद् वा? नाद्यः; 'स्वर्गकामो यजेत'–इत्यत्र यजेतेति शब्देन विधेयस्य यागस्य फलप्रदत्वावगमात्। द्रव्यदेवते तु सिद्धत्वेन विध्यनर्हे। तत्र यथा द्रव्यस्य विधेयं प्रति गुणत्वम्, तथा देव-ताया अपि। यदा यागस्य कालान्तरभावि फलं प्रति व्यवहित-

त्वम्, तदा तत्साधनभूता देवता ततोऽपि व्यवस्थिता। का तर्हि फलस्य गतिः? अपूर्व मिति वदामः। तच्च श्रुत्या श्रुतार्थापत्त्या वा प्रतीयमानत्वात् शाब्द मिति तस्य फलप्रदत्व मुचितम्। नापि वस्तुसामर्थ्याद् देवस्य फलप्रदत्वम्; विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात्। अन्यथा 'वनस्पतिभ्यः स्वाहा, मूलेभ्यः स्वाहा'–इत्यादि (तै० सं० ७. ३. २०.) मन्त्रेष्वपि देवत्वं विग्रहादियुक्तं च कल्पेरत। तच्च प्रत्यक्षविरुद्धम्। अतो न राजादिवत् फलप्रदत्वम्। किं च, विग्रहादिमद्देवतावाद्यपि न विना कर्मणा फल मभ्युपगच्छति। ततः प्राप्ताप्राप्तविवेकेन उभयवादिसिद्धस्य यागस्यैव फलप्रदत्व मस्तु। किं च मातापितृगुर्वादिशुश्रूषायाः विनापि देवतां फलप्रदत्व मुभयवादिसिद्धम्। तस्मात् फलप्रद मपूर्व मेव धर्माणां प्रयोजकम्। तथा सति सौर्यादिषु अग्न्यादिदेवताभावेऽपि अपूर्वप्रयुक्तधर्माणा मतिदेशादस्ति तत्र ऊहस्यावकाशः। तदुक्तम्—०———०॥ एवं प्रकृतेऽपि एतत्सूक्तानुष्ठेयाज्यसमिद्धोमादिजनितापूर्वस्यैव अभिमतफलसाधनत्वम्। एवं सति 'ये त्रिषप्ताः'–इत्यस्य करणमन्त्रत्वात् मन्त्राणां च अनुष्ठेयार्थप्रकाशकत्वात् फलप्रार्थनाव्यपदेशेन कर्मापेक्षितदेवता प्रकाश्यते इत्यविरोधः॥

अयं च जैमिनिपक्षोऽनुक्रान्तः, बादरायणस्तु—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते।

भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥'

–इति प्रमाणान्तराविरुद्धानां मन्त्रार्थवादादीनां स्वार्थेऽपि तात्पर्याङ्गीकारेण देवानां विग्रहादिपञ्चक मभ्युपगम्य, यागहोमादिक्रियातोषितानां तेषां देवाना मेव अभिमतफलप्रदानकर्तृत्व

मङ्गीचकार। तथा च वैयासिकं सूत्रम्— 'फल मत उपपत्तेः'–इति (३. २. ३८.)। श्रुतिरपि आराधितस्य देवस्यैव फलप्रदातृत्वं दर्शयति— 'स्त्रीपुंसोर्वा य इह स्यात्तु मपेक्ष्यते, तस्मै सर्वैश्वर्यं ददाति; यत्र कुत्रापि म्रियेत, देहान्ते देवः परमं ब्रह्म तारकं व्याचष्टे'–इति (नृ० पू० १.)। 'एष ह्येव साधु कर्म्म कारयति, तं य मधो निनीषते'–इत्यादि (कौ० उ० ३. ८.)॥

अस्य सूक्तस्य मेधाजनने विनियोगाभिधानात्, तस्य च अधीतवेदशास्त्रादिधारणसामर्थ्याधानरूपत्वात् वेदाना मधिपतिर्ब्रह्मैव तत् कर्त्तुं शक्नोतीति ब्रह्मप्रार्थन मत्र कृतम्। अनेनैवाभिप्रायेण श्रुतिरपि तद्वाचकशब्दान्तरं परिहृत्य वाचस्पतिशब्देन ब्रह्माणं निरदिक्षत्॥

अत्र विहितानि मेधाजननादीनि कर्म्माणि, फलार्थी स्वय मेव यदि अनुतिष्ठेत्, तदा मे इति अस्मच्छब्दस्य मुख्य एवार्थः सम्भवति। यदा तु फलभाजो यजमानस्य अशक्त्या अनधिकाराद्वा उक्तानि कर्म्माणि अन्येन कार्य्यन्ते, तदा किं मयं मन्त्रः प्रत्यगाशीस्त्वलिङ्गात् 'आयुर्दा अग्नेऽस्यायुर्मे देहि'–इतिवत् (तै० सं० १. ५. ५. ४.) फलभाजा यजमानेन पठितव्यः, उत 'ममाग्ने वर्चः'–इतिवत् (ऋ० सं० १०. १२८. १.) क्रियाकर्त्रा आचार्येण ? द्वितीये पक्षे मन्त्रोच्चारणकर्त्तुरेव अस्मच्छब्दाभिधेयत्वात् तस्यैव फलसम्बन्धप्रतीतेः कथं यजमानस्य फलभाक्त्व मिति चिन्तायाम्, उच्यते— 'आयुर्दा अग्ने'–इत्यादेः करणतया विधानाभावात् लिङ्गाद् यजमानपठ्यता निर्णीता 'मन्त्राश्चाकर्म्मकरणास्तद्वत्'–इत्यस्मिन्नधिकरणे (जै० ३. ८. १५.)। अस्य तु गोपथब्राह्मणे मेधाजननादिकर्म्मसु विनियोगाभिधानात्, श्रुत्या लिङ्गं बाधित्वा

'ममाग्ने वर्चः'–इतिवत् अस्यापि मन्त्रस्य क्रियाकर्त्रा आचार्येणैव प्रयोक्तव्यता। तथा च क्रियाकर्तुराचार्यस्य दक्षिणया क्रीतत्वात् तदतिरिक्तफलसम्बन्धानुपपत्तेः फलभाक्त्वं यजमानस्यैव। 'शास्त्र-फलं प्रयोक्तरि'–इत्युक्तत्वात् ( जै० ३. ७. १८. )। तथा च मे इति सम्बन्धसामान्ये षष्ठी ; मम यो यजमानस्तस्येत्यर्थः। तथा च जैमिनीयं सूत्रम्— 'ऋत्विक् फलं करणेष्वर्थवत्त्वात्'–इति ( जै० ३. ८. २५. )। अत्रायं संग्रहश्लोकः —

"ममाग्न इति कस्यात्र फलं ? लिङ्गेन कर्तृगम्,
श्रुत्या स्वामिनि ; न, क्रीते लिङ्गं तत्रोपपद्यताम्"–इति ॥ १ ॥

अथ द्वितीया। हे 'वाचस्पते' वाचः वेदरूपायाः पालयितर्देव ! [ 'सुबामन्त्रिते पराङ्गवत् स्वरे'–इति ( पा० २. १. २. ) षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य 'आमन्त्रितस्य च'–इत्याष्टमिकं ( पा० ८. १. १९. ) सर्वानुदात्तत्वम् ]। ईदृश हे ब्रह्मन् ! 'देवेन' द्योतनात्मकेन 'मनसा' अन्तःकरणेन, अनुग्रहबुद्ध्येत्यर्थः। सकलेन्द्रियानुग्राहकत्वात् सत्त्वगुणपरिणामरूपत्वेन स्वच्छत्वाच्च मनसो द्योतनात्मकत्वम्। तादृशेन मनसा सह सङ्गतः सन् 'पुनरेहि'। क्रियाभ्यावृत्त्युपलक्षणार्थोऽयं पुनःशब्दः। अभिमतफलप्रदानार्थं पुनःपुनर्मत्समीप मागच्छेत्यर्थः [ स्वरादिगणे 'पुनरायुदात्तः'–इति पाठात् पुनःशब्द आद्युदात्तः ]॥

अत्र वाचस्पतेरागमनं फलप्रदानार्थम्। तच्च फलप्रदानं किं वाचस्पतेरेव, उत मनसोऽपीति विचिकित्सायाम्, सहभावश्रवणात् मनसोऽपीति प्राप्तम्। तच्च अयुक्तम् ; "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी"–इतिवत् सहशब्दश्रवणेऽपि अप्राधान्याद् मनसः क्रियानन्वयित्वात्। अप्राधान्यं च 'सहयुक्तेऽप्रधाने'–इति तृतीया-

विधानात् (पा० २. ३. १९.)। तथा शेषलक्षणे 'त्वष्टारं तूपलक्षयेत् पानात्'—इत्यधिकरणेऽपि (जै० ३. २. ३४.) एव मेव निर्णीतम्। तथा हि 'अग्ना३इ पत्नीवा३: सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा'—इति (तै० सं० १. ४. २७.) पात्नीवतग्रह-होममन्त्रे त्वष्टुः पत्नीवदग्निसहभावश्रवणेन पानक्रियान्वयाद् देवतात्वात् तद्ग्रहशेषभक्षणमन्त्रेऽपि उपलक्षणीयत्व माशङ्क्य-राद्धान्तितम्— त्वष्टुरप्रधानविभक्त्यभिहितत्वेन सहभावमात्र-प्रतीतेः पानक्रियान्वयित्वाभावाददेवतात्वाद् भक्षणमन्त्रे नोप-लक्षणीयत्व मिति ॥

अपि च हे 'वसोष्पते' वासकस्य ग्रामपश्वादिरूपस्य धनस्य स्वामिन्! [अन्तर्भावितण्यर्थाद् 'वस निवासे'—इत्यस्मात् 'भृमृ-शीङ्तृचरित्सरितनिधनिमस्जिभ्य उः'—इति (उ० १. १०.) उ-प्रत्ययः। 'अनित्य मागमशासनम्'—इति नुमभावे 'घेर्ङिति' इति (पा० ७. ३. १११.) गुणे 'ङसिङसोश्च'—इति (पा० ६. १. ११०.) पूर्वरूपता, 'षष्ठ्याः पतिपुत्र'—इति (पा० ८.३.५३.) विसर्जनीयस्य सत्वम्। पूर्ववत् पराङ्गवद्भावात् षष्ठ्यामन्त्रित-समुदायस्य षाष्ठिक मायुदात्तत्वम्]। यद्वा 'वसोः' वासकस्य प्राणस्य 'पते' स्वामिन्! प्रजापते! 'निरमय' अभिमतग्रामादि-लक्षणफलप्रदानेन नितरा मस्मान् क्रीड़य। यतस्त्वं वसुपतिः अतस्तव ग्रामादिविविधफलप्रदानशक्तिरस्ति, तस्मादस्मदपे-क्षितानां विविधफलानां साकल्येन प्रदानात् निरन्तरं सुखये-त्यर्थः॥ अस्मादेव लिङ्गात् ग्रामसम्पदादिषु कर्मसु विनियोग उपपन्नः ['रमु क्रीड़ायाम्', अस्मात् हेतुमति णिचि, उपधावृद्धौ, 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च'—इति मित्त्वात् 'मितां ह्रस्वः'—इत्यु-

पधाङ्गस्वत्वम् ( पा० ६. ४. ८२. ) ] ॥ इदानीं ग्रामादिविविध-सम्पत्त्या सर्वोत्कृष्टता मात्मनः प्रार्थयते । 'मय्येवास्तु' त्वया दत्तं ग्रामादिक मनन्यसाधारणेन मय्येव वर्त्तताम् । अन्ययोगव्यवच्छेदार्थोऽय मेवकारः । 'यत एवकारस्ततोऽन्यत्रावधारणम्'-इति-न्यायेन अस्मच्छब्दात् परतो वर्त्तमानेन एवकारेण ग्रामादीनां नियम्यमानत्वात् ॥ मेधाजननस्य प्राधान्यं दर्शयितुं विप्रपरिव्राजकन्यायेन पार्थक्येन निर्दिशति— 'मयि श्रुतम्'-इति । 'श्रुतम्' उपाध्यायाद् विधितोऽधीतं वेदशास्त्रादिक मपि 'मय्येव' । 'अस्तु'-इत्यनुषङ्गः । सम्यगधीतस्यापि वेदादेः प्रायेण विस्मरणसम्भवाद् अधीतस्य धारणार्थं मह्यं मेधां प्रयच्छेत्यर्थः ॥ २ ॥

अथ तृतीया । हे वाचस्पते ! 'इहैव' अस्मिन्नेव साधके जने [ 'इदमो हः'-इति (पा० ७.२.१०८.) सप्तम्यर्थे ह-प्रत्यये 'इदम इश्'-इति ( पा० ५. ३. ३. ) इशादेशः ]। 'उभे' श्रुतधारणलक्षणां मेधां, विविधभोगहेतुभूतां ग्रामादिसम्पदं च । अनयोः ऐहिकामुष्मिकफलसाधनेन व्यवस्थितत्वात् कोटिद्वयेन निर्देशः । ते उभे अपि फले 'अभि वि तनु' अभितो विस्तीर्णे कुरु । सर्वजनेभ्योऽपि मय्येव प्रभूते कुर्वित्यर्थः । [ 'तनु विस्तारे', 'तनादिकृञ्भ्य उः'-इति ( पा० ३. १. ७९.) उ-प्रत्ययः । 'उतश्च प्रत्ययादसंयोगपूर्वात्'-इति ( पा० ६. ४. १०६.) हेर्लुक् ] । तत्र दृष्टान्तः । 'ज्यया' मौर्व्या धनुषि आरोपितया 'आर्त्नी इव' अटन्याविव ; ते यथा अभिवितन्येते तथेत्यर्थः । अनेन स्वरसतः अप्राप्तयोरपि बलात् प्रापण मुक्त मिति द्रष्टव्यम् । यद्वा 'इहैव अभि वि तनु' अभिमतं फल मिति शेषः । उभे आर्त्नी इवेति उभशब्दस्य उत्तरत्र सम्बन्धः [ 'ईदूदेद्द्विवचनम्'-इति प्रगृह्यसञ्ज्ञा

(पा०१. १. ११.)। 'प्लुतप्रगृह्या अचि'-इति (पा० ६. १. १२५.) प्रकृतिभावः। आर्त्नी इवेति 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्'-इति समासः ]। इदानीं प्राप्तस्य फलस्य स्थैर्यं प्रार्थयते—'वाचस्पतिः' विधाता 'नि यच्छतु' स्वात्मने दत्तं निखिलं फलं नियमयतु। यथा मां न जहाति, तथा स्थिरीकरोतु इत्यर्थः [ निपूर्वाद् यमेः शपि 'इषुगमियमां छः'-इति (पा० ७. ३. ७७.) छत्वम्, 'तिङ्ङतिङः'-इति (पा० ८. १. २८.) सर्वानुदात्तत्वम् ]। अभिमतस्य फलस्यायोगव्यवच्छेद मुक्त्वा, अन्ययोगव्यवच्छेद माह— 'मय्येवास्तु मयि श्रुतम्' -इति। व्याख्यात मेतत् ॥ ३ ॥

अथ चतुर्थी। 'वाचस्पतिः' वाचः पालयिता देवः 'उपहूतः' समीप माहूतः। सत्स्वपि अन्येषु देवेषु असावेव मम अभिलषितफलप्रदातेति अस्माभिः प्रार्थित इत्यर्थः [ उपपूर्वात् ह्वयतेः कर्मणि निष्ठा, 'वचिस्वपि'-इत्यादिना (पा० ६. १. १५.) सम्प्रसारणम्, 'गतिरनन्तरः'-इति (पा० ६. २. ४९.) गतेः प्रकृतिस्वरत्वम्, 'उपसर्गाश्चाभिवर्जम्'-इत्युपशब्दः (फि० ४. १३.) आद्युदात्तः ]। यतो मयोपहूतः, ततो हेतोर्वाचस्पतिः स देवः 'अस्मान्' मेधाजननादिफलकामान् 'उप ह्वयतां' तत्तत् फलं प्रदातुं स्वसमीप माह्वयतु। यद्वा, तत्तत्फलप्राप्ति मभ्यनुजानातु [ उपपूर्वो ह्वयतिः अभ्यनुज्ञानेऽपि वर्त्तते ; यथा— 'उपहूत उपह्वयस्व'-इति सोमभक्षणानुज्ञानानुज्ञापनमन्त्रे ]। तेन उपहूताः सन्तो वयं 'श्रुतेन' विधितोऽधीतेन वेदशास्त्रादिना 'सं गमेमहि' सङ्गच्छेमहि ; वाचस्पतिप्रसादप्राप्तया मेधया कृत्स्नं वेदशास्त्रं प्राप्नवामेति भावः [ 'व्यवहिताश्च'-इति (पा० १.४.८२.)

सम: क्रियापदेन सम्बन्धः। 'समो गम्यृच्छि'–इति (पा० १. ३. २९.) गमेरात्मनेपदम्। अस्माद् आशीर्लिङि 'लिङ्याशिष्यङ्'–इति (पा० ३.१.८६.) अङ् प्रत्ययः शपोऽपवादः। 'लिङः सीयुट्'–इति (पा० ३.४.१०२.) सीयुट्। 'छन्दस्युभयथा'–इति (पा० ३.४.११७.) सार्वधातुकसञ्ज्ञायां 'लिङः सलोपोऽनन्त्यस्य'–इति (पा० ७. २. ७९.) स-लोपे गुणे वलि लोपः]। अधीतस्य वेदशास्त्रस्य स्वस्मिन् सर्वदावस्थानं प्रार्थयते मा,श्रुतेनेति। 'श्रुतेन' उक्तलक्षणेन 'मा वि राधिषि' विराद्धो वियुक्तो मा भूवम्; सर्वदा वेदशास्त्रादिसहितो भूयास मित्यर्थः [ 'राध साध संसिद्धौ', अस्मात् माङि लुङि व्यत्ययेनात्मनेपद मिडागमश्च ] ॥ ४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीर-
हरिहरमहाराजसाम्राज्यधुरन्धरमाधवाचार्यादेशतः
श्रीसायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
अथर्वसंहिताभाष्ये प्रथमकाण्डीयप्रथमानुवाक-
प्रथमसूक्तस्य व्याख्यानम् ॥

---

## अथर्ववेदस्य,

### शौनकशाखीयगोपथब्राह्मणतः

उत्तरकाण्डीय–प्रथमप्रपाठकस्य प्रथमः खण्डः।

॥ ॐ ॥

अथ यद् ब्रह्मसदनात्तृणं निरस्यति शोधयत्ये-वैनं तद्योपविशतीद मह मर्वाग्वसोः सदने सीदामी-त्यर्वाग्वसुर्ह वै देवानां ब्रह्मा पराग्वसुरसुराणां तमे-

वैतत् पूर्वं सादयत्यरिष्टं यज्ञं तनुतादित्यथोपविश्य जपति बृहस्पतिर्ब्रह्मेति बृहस्पतिर्वा आङ्गिरसो देवानां ब्रह्मा तस्मिन्नेवैतदनुज्ञा मिच्छति प्रणीतासु प्रणीयमानासु वाचं यच्छत्या हविष्कृत उद्वादनादे-तद्वै यज्ञस्य द्वारं तदेतदशून्यं करोतीष्टे च स्विष्ट-कृत्याज्यानुयाजानां प्रसवादित्येतद्वै यज्ञस्य द्वितीयं द्वारं तदेवैतदशून्यं करोति यत् परिधयः परिधीयन्ते यज्ञस्य गोपीथाय परिधीन् परिधत्ते यज्ञस्य सात्म-त्वाय परिधीन् सम्मार्ष्टि पुनात्येवैनं त्रिर्मध्यमं त्रय इमे प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्द्धं त्रयो वै लोका लोकानेवाभि जयति त्रिरुत्तरार्द्धं त्रयो वै देवलोका देवलोकानेवाभिजयति त्रिरुप वा जयति त्रयो वा देवयानाः पन्थानस्तानेवाभिजयति ते वै द्वादश भवन्ति द्वादश ह वै मासाः संवत्सरः संवत्सर मेव तेन प्रीणात्यथो संवत्सर मेवात्मा उप-दधाति स्वर्गस्य लोकस्य समष्ट्यै ॥ १ ॥

अथ सायणाचार्यकृतं गोपथब्राह्मणभाष्यन्त्वद्यापि नास्माभिरी-क्षितम्, तदद्यैतद्बोधसौकर्य्यायेह स्वप्रणीत मेव व्याख्यानं कारय-यामो यथाज्ञानम्—

'अथ' ब्रह्मकर्मारभ्यते । 'यत्' यतः 'ब्रह्मसदनात्' ब्रह्म-त्विगासनस्थानात् 'तृणं' 'निरस्यति' दूरं क्षिपति, 'तत्' तेन तृणनिरसनेन 'एनं' ब्रह्मसदनं 'शोधयति' संस्करोति 'एव' ।

'अथो' अनन्तरम् "इद मह मर्वाग्वसोः सदने सीदामि"– 'इति' मन्त्रं पठन् 'उपविशति', तत्रैव ब्रह्मसदने ब्रह्मेति यावत्। यतः 'देवानां' यज्ञे 'ब्रह्मा' ब्रह्मत्विक् 'अर्वाग्वसुः' (सम्मुखसम्पत्तिः) 'ह' नाम 'वै' प्रसिद्धः ; असुराणां ब्रह्मा तु 'पराग्वसुः' ( पश्चात्सम्पत्तिः ) इति ; अतः 'यज्ञम्' इमम् 'अरिष्ट' विघ्नशून्यं यथा स्यात् तथा 'तनुयात्' 'इति' हेतोः 'त मेव' अर्वाग्वसु मेव 'एतत्पूर्वं' स्वोपवेशनात् प्रागेव 'सादयति' उपवेशयति, तत्रेति शेषः। ततः तस्यैव सदने सीदामीति मननं प्रकृत्योपविशेदिति भावः।

'अथो' अनन्तरम् 'उपविश्य' 'बृहस्पतिर्ब्रह्मा'–इतिप्रतीकं मन्त्रं 'जपति'। 'देवानां ब्रह्मा, आङ्गिरसो बृहस्पतिः' 'वै' प्रसिद्धः। 'तस्मिन्नेव' तादृशे एव ब्रह्मत्वकार्ये 'अनुज्ञा मिच्छति' एष ब्रह्मा, एतेन मन्त्रपाठेनेति शेषः।

इत उत्तरं प्रणीताप्रणयनम्। 'प्रणीतासु प्रणीयमानासु' प्रणीताप्रणयनोपलक्षितात् कालादूर्ध्वम् 'आ हविष्कृत उद्वादनात्' हविष्कृन्मन्त्रोच्चारणं यावत् 'सः' ब्रह्मा 'वाचं यच्छति' मौन मवलम्बेत। 'एतद्' तृणनिरसनादिकं कर्मजातं 'यज्ञस्य' 'द्वार' प्रथम मङ्गं 'वै' प्रसिद्धम्। 'तत्' तस्मात् 'एतद्' 'अशून्यं' क्रियाशून्याभाववत्, यथोक्तं सक्रिय मिति यावत् 'करोति'।

'च' अपि 'स्विष्टकृद्याज्यानुयाजानां' 'प्रसवात्' प्रसव मारभ्य 'इष्टे' यजते 'इति', 'एतद्वै' 'यज्ञस्य' 'द्वितीयं द्वारम्' प्रथमोपदिष्टतृणनिरसनाद्युत्तरकर्त्तव्यं कर्म। 'यत् परिधयः परिधीयन्ते', 'तदेव' तेनैव 'एतद्' द्वितीयं द्वारम् 'अशून्यं करोति'। 'यज्ञस्य गोपीथाय परिधीन् परिधत्ते', 'यज्ञस्य सात्मत्वाय परिधीन् सम्मार्ष्टि'। परिधिषु 'मध्यमं' 'एनं' 'त्रिः' त्रिवारं 'पुनात्येव'।

यतः 'इमे प्राणाः त्रयः', ततः सङ्ख्यासाम्यात् तेन त्रिःपवनेन 'प्राणानेव अभिजयति'। एवं तेष्वेव परिधिषु 'दक्षिणार्द्धं' 'त्रिः' पुनातीत्येव। तेन त्रिःपवनेन 'लोकानेव' त्रीन् 'अभिजयति'; 'वै' यतः 'त्रयो लोकाः' इति सङ्ख्यासाम्यम्। तथा तेष्वेव परिधिषु 'उत्तरार्द्धं' 'त्रिः' पुनातीत्येव। अनेन त्रिःपवनेन 'देवलोकानेवाभिजयति'; 'वै' यतः 'त्रयो देवलोकाः' इति सङ्ख्यासाम्यम्। 'वा' अपि सर्वानेव परिधीन् 'त्रिः' 'उपजयति' सान्निध्यं गमयति; तेन ये सन्ति 'त्रयो देवयानाः पन्थानः' 'वै' प्रसिद्धाः, 'तानेव अभिजयति'; इहापि सङ्ख्यासाम्य मेव हेतुः। 'ते' एते 'वै' प्रसिद्धाः, त्रयः प्राणाः, त्रयो लोकाः, त्रयो देवलोकाः त्रयो देवयानाः, इति सङ्कलनया 'द्वादश भवन्ति'; 'मासा ह' मासा अपि 'द्वादश' 'वै' प्रसिद्धाः, तदात्मकश्चैकः 'संवत्सरः'; 'तेन' द्वादशसम्मितविजयेन 'संवत्सर मेव' संवत्सरात्मकं प्रजापति मेव 'प्रीणाति'। एवञ्च 'आत्मा' यजमानः 'स्वर्गस्य लोकस्य' 'समष्ट्यै' सम्प्राप्त्यै 'संवत्सर मेव' प्रजापति मेव 'उपदधाति' उपगच्छति ॥१॥

इत्यावसथभट्टाचार्यान्वयश्रीसत्यव्रतसामश्रमिरचिते
आथर्वणशौनकशाखीयगोपथब्राह्मणभाष्ये
उत्तरकाण्डीयाद्यप्रपाठकाद्यखण्डस्य व्याख्यानम् ॥
त्रयीचतुष्टयस्यांशस्त्रयीसङ्ग्रहउत्तरः।
मनुविद्यामिते शाके त्रयीबोधाय गुम्फितः ॥ २ ॥

इति श्रीमदावसथभट्टाचार्यान्वयेन सामश्रमीतिलश्रोपाधिना सामगश्रीसत्यव्रतशर्म्मणा प्रणीयमाने त्रयीचतुष्टये त्रयीसंग्रहाभिधो द्वितीयो भागः समाप्तः ॥

---

१ २ ११११ र १रर २
ऋता२३स्या२३४५। हाउ। ३। सेतूँस्तर। ३।
१ र२र १र २ १ र २र १र
दुस्त। रान्। अक्रोधेनक्रोधम्। ३। अक्रोधेनक्रोधम्।
२र र रर र १ २ ११११
हाउ। ३। पूर्वंदेवेभ्योअमृतस्यना२३मा२३४५।
२र १रर २ २ १
हाउ। ३। सेतूँस्तर। ३। दुस्त। रान्। ३।
२१र २र २र २र र र र१
श्रद्धयाश्रद्धाम्। ३। हाउ। ३। योमाददातिसइदेव
२ ११११ २र १रर २
मा२३वा२३४५त्। हाउ। ३। सेतूँस्तर। ३।
२१ ३ २१रर २ २र
दुस्त। रान्। ३। सत्येनानृतम्। ३। हाउ। ३। अह
१ २ ११११ २ऽ ऽ ऽ
मन्नमन्नमदन्तमा२३द्मि२३४५। हाउहाउहाउवा।
२र १र २र१ २१ १ २
एषागतिः। ३। एतदमृतम्। ३। स्वर्गच्छ। ३।
१र र १रर २र १र २१ ११११
ज्योतिर्गच्छ। ३। सेतूँस्तीर्त्वाचतुरा२३४५ः॥ १॥

त्रिष्टुभा अन्नदेवता आत्मानमेवाह;—आत्मा एव ऋषिः। 'देवेभ्यः पूर्वम्' अग्निवरुणादि देवेभ्यः पुरा 'अहम्' अन्न-देवता, 'अमृतस्य' विनाशरहितस्य 'ऋतस्य' सत्यस्य परब्रह्मणः सम्बन्धिनी 'प्रथमजा अस्मि नाम' प्रथमत एवोत्पन्ना भवामि खलु। 'यः' पुमान् 'मा ददाति' अन्नरूपां माम् अतिथ्यादिभ्यो ददाति, 'स इत्' स एव 'एवं' परिदृश्यमान-

प्रकारेण 'आवत्' भवति सर्वान् प्राणिनो रक्षति । यस्तु लोभ-युक्तः सन् प्राणिभ्योऽन्न मदत्त्वा स्वय मेव तदन्न मत्ति । 'अन्नम् अदन्तम्' नानाविधान्नभक्षकं तं लोभिनम् 'अह मन्नम्' अन्न-देवता 'अद्मि' भक्षयामि, विनाशयामीत्यर्थः ॥ ८

॥ इति सायणाचार्यकृतं सेतुसामर्चीं व्याख्यानम् ॥

---

## अथर्ववेदस्य,

### शौनकशाखीयसंहितातः

पञ्चमकाण्डीय-प्रथमानुवाकः ।

॥ॐ॥ ऋधङ्मन्त्रो योनिं य आबभूवामृतासुर्वर्धमानः सुजन्मा । अदब्धासुर्भ्राजमानोऽहेव त्रितो धर्ता दाधार त्रीणि ॥ १ ॥ आ यो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुषे पुरूणि । धास्युर्योनिं प्रथम आ विवेशा यो वाचमनुदितां चिकेत ॥ २ ॥ यस्ते शोकाय तन्वं रिरेच क्षरद्धिरण्यं शुचयोऽनु स्वाः ।

अचा दधीते अमृतानि नामास्मै वस्त्राणि विश
एरयन्ताम् ॥ ३ ॥ प्र यदेते प्रतरं पूर्व्यं गुः सदःसद
आतिष्ठन्तो अजुर्यम् । कविः शुषस्य मातरा रिहाणे
जाम्यै धुर्यं पति मेरयेथाम् ॥ ४ ॥ तदू षु ते
महत्पृथुज्मन्नमः कविः काव्येना कृणोमि । तत्सम्यञ्चा-
वभियन्तावभि चामत्रा मही रोधचक्रे वावृधेते ॥५॥
सप्त मर्यादाः कवयस्ततक्षुस्तासा मिदेका मभ्यंहुरो
गात् । आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे
धरुणेषु तस्थौ ॥ ६ ॥ उतामृतासुर्व्रत एमि कृण्वन्न-
सुरात्मा तन्व१स्तत्सुमद्गुः । उत वा शक्रो रत्नं दधा-
तूर्जया वा यत्सचते हविर्दाः ॥ ७ ॥ उत पुत्रः

पितरं नच्च मीडे ज्येष्ठं मर्याद्द मह्वयन्त्स्वस्तये। दर्शन्नु

ता वरुण यास्ते विष्ठा आववृ ततः कृणवो वपूंषि

॥ ८ ॥ अर्ध मर्धेन पयसा पृणाक्ष्यर्धेन शुष्म वर्धसे

असुर। अविं वृधाम शग्मियं सखायं वरुणं

पुत्र मदित्या इषिरम्। कविशस्तान्यस्मै वपूंष्य-

वोचाम रोदसी सत्यवाचा॥ ९ ॥ १ ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष-

नृम्णः। सद्यो जज्ञानो नि रिणाति शत्रूननु यदेनं

मदन्ति विश्व ऊमाः॥ १ ॥ वावृधानः शवसा

भूर्योजाः शत्रुर्दासाय भियसं दधाति। अव्यनच्च

व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु॥ २ ॥ त्वे

ऋतु मपि पृञ्चन्ति भूरि द्विर्यदेते त्रिर्भवन्त्यूमाः। स्वादोः

स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि

योधीः ॥ ३ ॥ यदि चिन्नु त्वा धना जयन्तं रणे-

रणे अनुमदन्ति विप्राः। ओजीयः शुष्मिन्त्स्थिर मा

तनुष्व मा त्वा दभन्दुरेवासः कशोकाः ॥ ४ ॥ त्वया

वयं शाशद्महे रणेषु प्रपश्यन्तो युधेन्यानि भूरि।

चोदयामि त आयुधा वचोभिः सं ते शिशामि

ब्रह्मणा वयांसि ॥ ५ ॥ नि तद्दधिषेऽवरे परे च

यस्मिन्नाविथावसा दुरोणे। आ स्थापयत मातरं

जिगत्नु मत इन्वत कर्वराणि भूरि ॥ ६ ॥ स्तुष्व

वर्ष्मन्पुरुवर्त्मानं समृभ्वाणमिनतम माप्त माप्त्यानाम्।

आ दर्शति शवसा भूर्योजाः प्र सक्षति प्रतिमानं पृथिव्याः ॥ ७ ॥ इमा ब्रह्म बृहद्दिवः कृणवदिन्द्राय शूषमग्रियः स्वर्षाः । महो गोत्रस्य क्षयति स्वराजा तुरश्चिद्विश्वमर्णवत्तपस्वान् ॥ ८ ॥ एवा महान् बृहद्दिवो अथर्वावोचत् स्वां तन्व१मिन्द्रमेव । स्वसारौ मातरिभ्वरी अरिप्रे हिन्वन्ति चैने शवसा वर्धयन्ति च ॥ ९ ॥ २ ॥

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥ १ ॥ अग्ने मन्युं प्रतिनुदन्परेषां त्वं नो गोपाः परि पाहि विश्वतः । अपाञ्चो यन्तु निवता

दुरस्थवो ऽमैषां चित्तं प्रबुधां वि नेशत् ॥ २ ॥ मम
देवा विहवे सन्तु सर्व इन्द्रवन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्ष मुरुलोक मस्तु मह्यं वातः पवतां कामा-
यास्मै ॥ ३ ॥ मह्यं यजन्तां मम यानीष्टाकूतिः
सत्या मनसो मे अस्तु । एनो मा नि गां कतमच्च-
नाहं विश्वे देवा अभि रक्षन्तु मेह ॥ ४ ॥ मयि
देवा द्रविण मा यजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैवा होतारः सनिषन्न एतदरिष्टाः स्याम तन्वा
सुवीराः ॥ ५ ॥ दैवीः षडुर्वीरुरु नः कृणोत विश्वे
देवास इह मादयध्वम् । मा नो विददभिभा मो
अशस्तिर्मा नो विदद्वृजिना द्वेष्या या ॥ ६ ॥ तिस्रो

देवीर्मह्रि नः शर्म यच्छत प्रजायै नस्तन्वे३यच्च पुष्टम् ।

मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते

सोम राजन् ॥ ७ ॥ उरुव्यचा नो महिषः शर्म

यच्छत्वस्मिन् हवे पुरुहूतः पुरुक्षु । स नः प्रजायै हर्यश्व

मृडेन्द्र मा नो रीरिषो मा परा दाः ॥ ८ ॥ धाता

विधाता भुवनस्य यस्पतिर्देवः सविताभिमातिषाहः ।

आदित्या रुद्रा अश्विनोभा देवाः पान्तु यजमानं

निर्ऋथात् ॥ ९ ॥ ये नः सपत्ना अप ते भवन्त्वि-

न्द्राग्निभ्यामव बाधामह एनान् । आदित्या रुद्रा

उपरिस्पृशो न उग्रं चेत्तारमधिराज मक्रत ॥ १० ॥

अर्वाञ्च'मिन्द्र ममुतो हवामहे यो गोजिद्धनजिदश्व-

जिद्य: । इमं नो यज्ञं विहवे शृणोत्वस्माकमभूर्हर्यश्व

मेदी ॥ ११ ॥ ३ ॥

योगिरिष्वजायथा वीरुधां बलवत्तमः । कुष्ठेहि

तक्मनाशन तक्मानं नाशयन्नितः ॥ १ ॥ सुपर्णसुवने

गिरौ जातं हिमवतस्परि । धनैरभि श्रुत्वा यन्ति

विदुर्हि तक्मनाशनम् ॥ २ ॥ अश्वत्थो देवसदन-

स्तृतीयस्यामितो दिवि । तत्रामृतस्य चक्षणं देवाः

कुष्ठमवन्वत ॥ ३ ॥ हिरण्ययी नौरचरद्धिरण्यबन्धना

दिवि । तत्रामृतस्य पुष्पं देवाः कुष्ठमवन्वत ॥ ४ ॥

हिरण्ययाः पन्थान आसन्नरित्राणि हिरण्यया ।

नावो हिरण्ययीरासन्याभिः कुष्ठं निरावहन् ॥ ५ ॥

इमं मे कुष्ठ पूरुषं त मा वह तं निष्कुरु । त मु मे अगदं कृधि ॥ ६ ॥ देवेभ्यो अधि जातो ऽसि सोमस्यासि सखा हितः । स प्राणाय व्यानाय चक्षुषे मे अस्मै मृड ॥ ७ ॥ उदङ् जातो हिमवतः स प्राच्यां नीयसे जनम् । तत्र कुष्ठस्य नामान्युत्तमानि वि भेजिरे ॥ ८ ॥ उत्तमो नाम कुष्ठास्युत्तमो नाम ते पिता । यक्ष्मं च सर्वं नाशय तक्मानं चारसं कृधि ॥ ९ ॥ शीर्षामय मुपहत्या मक्ष्योस्तन्वो३ रपः । कुष्ठस्तत्सर्वं निष्करद् दैवं समह वृष्ण्यम् ॥ १० ॥ ४ ॥

रात्री माता नभः पितार्यमा ते पितामहः । सिलाची नाम वा असि सा देवाना मसि स्वसा ॥ १ ॥

यस्त्वा पिबति जीवति त्रायसे पुरुषं त्वम्। भर्त्री हि शश्वता मसि जनानां च न्यञ्चनी ॥ २ ॥ वृक्षं वृक्ष मा रोहसि वृषण्यन्तीव कन्यला। जयन्ती प्रत्यातिष्ठन्ती स्परणी नाम वा असि ॥ ३ ॥ यद्दण्डेन यदिष्वा यद्वारुर्हरसा कृतम्। तस्य त्व मसि निष्कृतिः सेमं निष्कृधि पूरुषम् ॥ ४ ॥ भद्रात् प्लक्षान्निस्तिष्ठस्यश्वत्थात् खदिराद्धवात्। भद्रान्न्यग्रोधात्पर्णात्सा न एह्यरुन्धति ॥ ५ ॥ हिरण्यवर्णे सुभगे सूर्यवर्णे वपुष्टमे। रुतं गच्छासि निष्कृते निष्कृति-र्नाम वा असि ॥ ६ ॥ हिरण्यवर्णे सुभगे शुष्मे लोमशवक्षणे। अपामसि स्वसा लाक्षे वातो

हात्मा बभूव ते ॥ ७ ॥ सिलाची नाम कानीनो ऽजबभ्रु पिता तव । अश्वो यमस्य यः श्यावस्तस्य हास्नास्युक्षिता ॥ ८ ॥ अश्वस्यास्नः संपतिता सा वृक्षाँ अभि सिष्यदे । सरा पतत्रिणी भूत्वा सा न एह्यरुन्धति ॥ ९ ॥ ५ ॥

इत्यथर्ववेदीयशौनकशाखायाः संहितायां
पञ्चमकाण्डीयः प्रथमोऽनुवाकः ॥

---

अथर्ववेदस्य,

शौनकशाखीयगोपथब्राह्मणतः

पूर्वकाण्डस्य पञ्चमप्रपाठकीय सप्तमाष्टमखण्डौ ।

अथातो यज्ञक्रमाः । अग्न्याधेय मग्न्याधेयात् पूर्णाहुतिः पूर्णाहुते रग्निहोत्र मग्निहोत्राद् दर्श-पूर्णमासौ दर्शपूर्णमासाभ्या माग्रयण माग्रयणाच्चातु-र्मास्यानि चातुर्मास्येभ्यः पशुबन्धः पशुबन्धा दग्निष्टोमो

ऽग्निष्टोमाद्राजसूयो राजसूयाद्वाजपेयः वाजपेया दश्व-
मेधो ऽश्वमेधात्पुरुषमेधः पुरुषमेधात्सर्वमेधः सर्वमेधाद्
दक्षिणावन्तो दक्षिणावद्भ्यो दक्षिणा अदक्षिणाः सहस्र-
दक्षिणे प्रत्यतिष्ठंस्ते वा एते यज्ञक्रमाः। स य
एव मेतान् यज्ञक्रमान् वेद यज्ञेन स-आत्मा सलोको
भूत्वा देवानप्येतीति ब्राह्मणम् ॥ ७ ॥

प्रजापतिरकामयतानन्त्य मश्नुयेति सोऽग्नीनाधाय
पूर्णाहुत्या यजेत सोऽन्त मेवापश्यत्सोऽग्निहोत्रेणेष्ट्वा
ऽन्त मेवापश्यत् स दर्शपूर्णमासाभ्या मिष्ट्वाऽन्त मेवा-
पश्यत् स आग्रयणेनेष्ट्वाऽन्त मेवापश्यत्स चातुर्मास्यै-
रिष्ट्वाऽन्त मेवापश्यत्स पशुबन्धेनेष्ट्वाऽन्त मेवापश्यत्सो-
ऽग्निष्टोमेनेष्ट्वाऽन्त मेवापश्यत्स राजसूयेनेष्ट्वा राजेति
नामाधत्त सोऽन्त मेवापश्यत्स वाजपेयेनेष्ट्वा सम्रा-
ड़िति नामाधत्त सोऽन्त मेवापश्यत्सोऽश्वमेधेनेष्ट्वा
स्वराडिति नामाधत्त सोऽन्त मेवापश्यत्स पुरुष-
मेधेनेष्ट्वा विराडिति नामाधत्त सोऽन्त मेवापश्यत्स
सर्वमेधेनेष्ट्वा सर्वराडिति नामाधत्त सोऽन्त मेवा-
पश्यत्सोऽहीनैर्दक्षिणावद्भिरिष्ट्वाऽन्त मेवापश्यत्सोऽही-
नैरदक्षिणावद्भिरिष्ट्वाऽन्त मेवापश्यत्स सत्रेणोभय-
तोऽतिरात्रेणान्ततो यजेत वाचं ह वै होत्रे प्रायच्छ-
त्प्राणमध्वर्य्यवे चक्षुरुद्गात्रे मनो ब्रह्मणेऽङ्गानि होत्र-

केभ्य आत्मानं सहस्रेभ्य एव मानन्त्य मात्मानं दत्त्वा-नन्त्य मश्नुयेति तद्वा दक्षिणा अनयत्ताभिरात्मानं निष्क्रीणीय तस्मादेतेन ज्योतिष्टोमेनाग्निष्टोमेनात्म-निष्क्रयणेन सहस्रदक्षिणेन पृष्ठशमनीयेन त्वरेत यो ह्यनिष्ट्वा पृष्ठशमनीयेन प्रैत्यात्मानं सो निष्क्रीणीय प्रैतीति ब्राह्मणम् ॥ ८ ॥

इत्यथर्ववेदीयशौनकशाखायाः गोपथब्राह्मणस्य
पूर्वकाण्डीयपञ्चमप्रपाठके सप्तमाष्टमौ खण्डौ ॥

———

॥ इत्यावसथश्रीसत्यव्रतशर्मणा सङ्गृहीतस्त्रयीसंग्रहः समाप्तः ॥

———

# ॥ त्रयीपरिचयः ॥

( त्रयीचतुष्टय-प्रथमभागः )

"वेदा वा एते, अनन्ता वै वेदाः" [ तै० ब्रा० ३. १०. ११.—८५० ]



१८१५ शकाब्दे

आवसथ्यश्रीसत्यव्रतसामश्रमिभट्टाचार्येण प्रणीतः ।




कलकत्ता—सत्ययन्त्रतः

( १९—१, घोषेस् लेन )

श्रीमहेन्द्रनाथसरकारेण मुद्रयित्वा ग्रन्थकर्त्रा प्रकाशितः ।

॥ शाकाः १८१५ । संवत् १९५० । खी० १८९३ ॥

## ॥ त्रयीपरिचयमङ्गलाचरणम् ॥

विश्वरूपं प्रणम्याथ नन्दरामं च छान्दसम् ।
त्रयीपरिचयं वक्ति श्रीसत्यव्रतसामगः ॥ १ ॥

---

# ॥ त्रयीपरिचयसूचीपत्रम् ॥

# ॥ त्रयीपरिचयः ॥

वस्तुतः

## चतुर्वेदपरिचयप्रकाशायाभिनवप्रबन्धः ॥

—— —*— ——

( त्रयीचतुष्टये प्रथमो भागः )

कलिकाता-घोषोपनिष्करीयषोड़शैकसङ्ख्यभवनवासिना,
आवसथ्यश्रीसत्यव्रतसामश्रमिभट्टाचार्येण
रचितः प्रकाशितश्च ।

CALCUTTA

16/1 Ghoshe's Lane, Satya Press.

Printed by Mohendra Nath sircar.

1893.

# ॥ त्रयीपरिचयस्य सूचीपत्रम् ॥

# ॥ त्रयीचतुष्टयमुखबन्धः ॥

---

नामं नामं परब्रह्म ध्यायं ध्यायं गुरोर्गिरः ।
स्मारं स्मारं पितुर्लक्ष्यं श्रीसत्यव्रतशर्म्मणा ॥ १ ॥
नष्टस्वाध्यायमन्त्रेऽस्मिन् यत्यते वङ्गमण्डले ।
वेदविद्याप्रचाराय शरदस्सप्तविंशतिम् ॥ २ ॥
अध्यापिताश्चतुस्त्रिंशत् प्रायस्तेऽद्य मठाधिपाः ।
काङ्क्षन्ते हि तथा ग्रन्था 'ग्रन्थी भवति पण्डितः' ॥ ३ ॥
यजुषां संहिता चाथ सर्वां साम्नाञ्च संहिता ।
ब्राह्मणाद्याश्च दुष्प्रापा भाष्यभाषासमन्विताः ॥ ४ ॥
नव्यः प्रचारिताः किन्तु प्राज्ञैः कैश्चित् समादृताः ।
अस्पृश्या गुरवोऽन्येषां सीधाः कुम्भा यथा पथि ॥ ५ ॥
अतो विविच्य धीमद्भिः सिद्धिः साध्ये यथा भवेत् ।
पुष्पभारः समाकर्षी चेतव्य इति निश्चितम् ॥ ६ ॥
त्रयीपरिचयश्चातः सटीकत्रयीसङ्ग्रहः ।
त्रयीटीका विशेषाख्या त्रयीभाषा च वङ्गमुत् ॥ ७ ॥
त्रयीचतुष्टयं ह्येतन्मण्यादर्शश्चिकीर्षति ।
त्रयीविद्यानुभुत्सातः सर्वैर्गृह्येत वेत्तृभिः ॥ ८ ॥

---

## ॥ त्रयीपरिचयः ॥

अथ त्रयीं व्याख्यास्यामः ।

"त्रयी वै विद्या ऋचो यजूंषि सामानि"–इति शतपथ-ब्राह्मणम् ४,६,७,१ । तद्रचनायास्त्रैविध्य मेव मन्त्राणां त्रयीत्वे बीजम् । अस्ति हि काचिद्रचना पद्यं नाम, सैव पुरा ऋगिति श्रुता; अस्ति काचिद्रचना गद्यं नाम, सैव पुरा यजुरिति श्रुता; अस्ति काचिद्रचना गानं नाम, सैव पुरा सामेति श्रुता । यतो हि गद्यपद्यगानातिरिक्तो नास्ति रचनाप्रकारः, अत एव ऋक्संहितासु, यजुःसंहितासु, सामसंहितासु, अथर्वसंहितासु वा ऋग्यजुस्सामभ्योऽन्यो नैव दृश्यते कोऽपि वेदमन्त्रः । पद्य-गद्यगानातिरिक्ता हि रचना कदापि नासीत्, इदानी मपि नावलोक्यते लोके, तत् कथन्नाम ऋग्यजुस्सामलक्षणातिरिक्ता-ऽपि मन्त्ररचना भवेद्वैदिकीति । तदाह भगवान्, जैमिनिः— "तेषा मृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुःशब्दः ( मी० द० २. १. ३२, ३३, ३४. )"–इति । तदे-तन्न्यायविस्तरे स्पष्टीकृतञ्च माधवेन, द्रष्टव्यं तत् तत्रैव ।

यद्यपि मन्त्राणा मेव रचनानियमाधीन मेतत्त्रयीनाम, अतो मन्त्रभागस्यैव त्रयीत्व मङ्गीकर्त्तव्यम्, न तु ब्राह्मणभागस्येति वक्तुं युज्यते । "अहे बुध्नीय मन्त्रं मे गोपाय य मृषयस्त्रैविदा विदुः । ऋचः सामानि यजूंषि ( तै० ब्रा० १. २. १. २६. )"–इति श्रुति-स्तत्र साधिकैव प्रतीयते । "त्रीन् वेदान् विदन्तीति त्रिविदः । त्रिविदां सम्बन्धिनोऽधेतारस्त्रैविदाः, ते च यं मन्त्रभागम्

ऋगादिरूपेण त्रिविध माहुः, तं गोपायेति योजना"—इति चैतद्व्याख्याने ऽधिकरणमालाकारो माधवाचार्यः। तथापि मन्त्र-भागानुगतब्राह्मणग्रन्थाना मपि त्रयीत्वं व्यावहारिक मिदानीं मन्तव्य मेव ; सञ्ज्ञायाः खलु व्यवहाराधीनत्वात्। वस्तुतो मन्त्रभागस्यैव वेदत्वं, श्रुतित्वं, समाम्नायत्वं तथा त्रयीत्वं च मुख्यम् ; ब्राह्मणभागस्य त्वप्रधान मिति स्थिरम् ॥

एवञ्च 'त्रयी'—इति, 'वेदः'—इति चानर्थान्तरम्। "विद्यन्ते ज्ञायन्ते लभ्यन्ते वा एभिर्धर्म्मादिपुरुषार्था इति वेदाः"— इत्येतद् वेदशब्दव्युत्पादनं कृतं दृश्यते देवमित्रपुत्रेण विष्णु-मित्रेण ऋक्प्रातिशाख्यस्य वृत्तुपक्रमे। अन्यान्यविधानि च सन्ति बहूनि वेदशब्दव्युत्पादनानि ; तानि चान्यत्रान्यत्र द्रष्टव्यानि।

"प्रत्यक्षानुमानागमेषु ( प्रमाणेषु ) अन्तिमो वेदः"—इति, "समयबलेन सम्यक् परोक्षानुभवसाधनं वेदः"—इति, "अपौ-रुषेयं वाक्यं वेदः"—इत्यादीनि च वेदलक्षणानि सायणीये ऋग्भाष्यादौ द्रष्टव्यानि। "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिक मुपायं यो वेदयति स वेदः"—इत्येकेनैव वाक्येन च वेदस्य व्युत्पादन-लक्षणे ऽप्युक्ते कृष्णयजुर्भाष्यभूमिकायां सायणेनैव। "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता"—इति वचनञ्च तत्र मानत्वेनोपन्यस्योक्तं च "स एवोपायो वेदस्य विषयः ; तद्बोधार्थी चाधिकारी ; तेन सहोपकार्योपकारकभावश्च सम्बन्धः"—इति।

आपस्तम्बेन चैव मुक्तं वेदस्वरूपं यज्ञपरिभाषायाम्—"मन्त्र-ब्राह्मणयोर्वेदनामधेयम्"—इति (३४ सू०)। सर्ववेदभाष्यकारेण

सायणाचार्येणाप्येतदेवापस्तम्बीयलक्षण मवलम्ब्यैव प्रपञ्चित मृग्-भाष्यभूमिकायां बहुधैव, ततः सिद्धान्तितञ्चैतत् "मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः"–इति। तथा सर्वानुक्रमणीवृत्तिभूमिकायां षड्गुरुशिष्येणाप्येवं श्लोकितम्—

"मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः।
विनियोक्तव्यरूपो यः स मन्त्र इति चच्यते।
विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि।
विनियोक्तव्यरूपश्च त्रिविधः सम्प्रदर्श्यते।
ऋग्यजुस्सामरूपेण मन्त्रो वेदचतुष्टये।
अहे वुध्नीय मन्त्रं मे गोपायेत्यभिधीयते।
ऋक् पादबद्धो, गीतस्तु साम, गद्यं यजुर्मन्त्रः।
चतुर्ष्वपि हि वेदेषु त्रिधैव विनियुज्यते।
वेदैरशून्य इत्यादौ मन्त्रे त्रैविध्य मुच्यते।
सर्वैर्ब्रह्मेति (य० प० २२) सूत्रेऽपि चतुर्भिरिति निर्णयः।
प्रस्तुतर्क्षादिवाचि त्रीवामन्त्रे सूत्रकारणे।
ऋथूपमन्त्रबाहुल्यादृग्वेदः स्यात् तथेतरौ।
शान्तिपुष्ट्यादिकब्रह्मवर्गप्रणवविद्यया।
ऋचाञ्च यजुषां तुर्यो बाहुल्येन विधायकः॥"—इति।

एतेन खलु सर्वेषा मेव वेदानां स्वरूपादीन्युक्तान्येव समासतस्तेन धीमतेत्यत्रास्माकं नैव किञ्चिद्वक्तव्य मस्त्यवशिष्टम्॥

अथास्त्यत्रैतदालोच्यम्,—आपस्तम्बादिमतानुगाः सायणाचार्यादयस्तु मन्त्राणां ब्राह्मणानाञ्च वेदत्वं चिरात् सिद्ध मिति मन्यन्ते। केचित्त्वाधुनिका ब्राह्मणग्रन्थेषु बहुत्र 'य एवं वेद' —इतिदर्शनादेव प्रथमं तावत् ब्राह्मणग्रन्थाना मेव वेदाख्या

प्रचलिता, ततः कालक्रमेण मन्त्रेष्वपि सा उपचरितेत्याहुः । वयन्तु तयोरुभयोरेव विपरीतं ब्रूमः ;—पुरासीत् विद्यापरपर्याय एवायं वेदशब्दः ; तथा यतश्च सर्वासामेव विद्यानां निधानानि इमे मन्त्राः प्रदृष्टाः, अतो मन्त्रकाले एव त्रिविधानां मन्त्राणां वाचकः सम्पन्नो वेदशब्द इति ; ततो ब्राह्मणकाले ब्राह्मणेष्वपि ग्रन्थेषु मन्त्रमात्रपर एव व्यवहृतो वेदशब्दः ; पश्चात् सूत्रकाले तु मन्त्रब्राह्मणयोरुभयोरेव विद्यानिधानत्वेनादरातिशयख्याति-रुभयोरेव बोधकः सञ्जातो वेदशब्दः । तदत्र त्रयः पक्षाः सम्पद्यन्ते—(१) मन्त्रब्राह्मणयोरुभयोर्वेदत्वम्, (२) ब्राह्मण-ग्रन्थानामेव मुख्यं वेदत्वम्, (३) सर्वविद्यानिधानानां हि मन्त्राणामेव वेद इति व्यवहारो मुख्योऽतिपूर्वकालिकश्चेति । अथैषां कतमः पक्षो ज्यायान् ? तत् पूर्वापरदर्शिभिर्मध्यस्थधि-षणावद्भिरेव समालोच्यताम् ।

श्रूयते हि शुक्लयजुषि माध्यन्दिन्यां मन्त्रे एव त्रयोपरो वेद-शब्दः—"वेदेनरूपे व्यपिबत् सुतासुतौ प्रजापतिः (१९.७८.)"—इति । "प्रजापतिः 'सुतासुतौ' सुतासुतयोः 'रूपे' 'वेदेन' ज्ञानेन, त्रय्या विद्यया वा 'व्यपिबत्' विविच्य पीतवान् । सुतः=सोमः, असुतः=पयः परिस्रुच"—इति च तस्यैव व्याख्यानं भाषितं महीधरेण । तदत्र वेदेनेत्यस्य द्विविधोऽर्थः कृतो दृश्यते,—ज्ञानेन, त्रय्या विद्ययेति च ; तत्र द्वितीयोऽर्थ एव युक्ततरोऽस्माकम् ; मूले 'वेदेन'—इत्याद्युदात्तश्रवणात् । अस्ति हि वेदशब्दः उञ्छादिगणे (पा० सू० ६. १. १६०.) पठितः करणव्युत्पाद्यो यौगिको ऽन्तोदात्तः ; अस्ति चापरो वृषादिगणे (पा० सू० ६. १. १. २०३.) पठितस्त्वयं रूढ़

आद्युदात्तो वेद इति। अत एव ऋक्संहितायां श्रुतस्य "यः समिधा (६. १. ५.)"—इतिमन्त्रस्य व्याख्याने भाषितं सायणाचार्येण 'वेदेन—वेदाध्ययनेन'—इति। तैत्तिरीयसंहिताया मप्येव मस्ति त्रयीपरो वेदशब्द आद्युदात्तः (७. ५. ११. २.)। तथैवाथर्वणिका अप्यसकृदामनन्ति संहिताया मेव त्रयीपरं वेदशब्दम्। तथाहि—"यस्मिन् वेदा निहिता विश्वरूपास्तेनौदनेनातितराणि मृत्युम् (४. ७. ५. ६.)"—इति; बुद्ध्यत एवात्र हि वेदा इत्यस्यार्थं ऋगादय इति। तथा तत्रैवोनविंशकाण्डे ऽपि त्रिः श्रुतो वेदशब्दस्त्रयीपर एव। तदेवं सर्वसंहितास्वेव त्रयीपरो वेदशब्दो विश्रूयत एवेति।

एवं ब्राह्मणेष्वपि सर्वत्र श्रूयत एव वेदस्त्रयीपरः। तथाहि, बह्वृचब्राह्मणे—"त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्; तान् वेदानभ्यतपत् (ऐ० ब्रा० ५. ५. ६.)"—इति; एव मन्यत्रान्यत्र च तत्रैव (६. ३. ७; ७. ३. ६.)। तैत्तिरीयब्राह्मणेऽपि तृतीयकाण्डे (१०. ११. ४.) श्रूयत एव त्रयीपरो वेदशब्दः। तथा छान्दोग्यब्राह्मणे च—स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेद माथर्वणं चतुर्थम् (८. १. २.)"—इत्यादि। अथर्वब्राह्मणेऽपि—"इमे सर्वे वेदाः (गो० ब्रा० १. २. ८.)"—इत्यादि। तदेवं सर्वब्राह्मणेषु च त्रयीपरो वेदशब्दः श्रूयत एव।

अत इदानीं वक्तुं शक्यत एवैतत्,—सर्वसंहितास्वेव त्रयीपरवेदशब्ददर्शन मेव प्रमाणयति, आसीन्मन्त्रकालेऽपि केवलमन्त्राणा मेव वेद इति व्यपदेशः; तदापि मन्त्रव्याख्यानार्थकानां ब्राह्मणग्रन्थाना मनाविर्भावात्। प्रदर्शितब्राह्मणवाक्यानि

च तदेव दृढ़यन्ति ; ऋगादिशब्दानां मन्त्रेष्वेव मुख्यशक्तेः। अत एवोपपद्यन्ते तत्र गोपथे "इमे सर्वे वेदाः"—इत्यत्र विशेषणानि "सब्राह्मणाः"—प्रभृतीनि। निरुक्ते ये चार्थज्ञप्रशंसनाय शाखान्तरीयमन्त्रा उद्धृता यास्केन, तत्र च श्रूयते त्रयोपर एवादुदात्तो वेदशब्दः—"अधीत्य वेदम्"-इति (१.६.२.)। तस्माच्च ज्ञायते मन्त्रकाले एव मन्त्रार्थको वेदशब्द आसीत् प्रसिद्ध इति। यास्कः स्वयञ्चाह सुव्यक्तम्—"कर्म्मसम्पत्तिर्मन्त्रो वेदे (१.१.२)"-इति; स च कर्म्मसम्पत्तिर्मन्त्रः क्वास्ति ब्राह्मणेषु संहितासु वा ? संहितास्वेवेति चेदितोऽपि स्फुटं व्यज्यते संहितार्थ एव वेदशब्दोऽभिमतः खलु निरुक्तकारस्यैतस्य यास्कस्यापीति॥

वस्तुतो ज्ञानार्थस्य लाभार्थस्य वा विदधातोरेव रूपं वेद इतुरक्तं विद्यैव तस्यार्थः फलति। अनन्ताश्च विद्या इह जगति सन्ति चिरन्तनाय; तत एव वेदस्य सनातनत्व मनन्तत्वञ्च मन्यन्ते आर्याः। आदिसभ्यकाले चात्र भारते ये ऋषयः प्रादुर्बभूवुः, आसन्नेव ते विविधविद्याभूषणाः साक्षात्कृतधर्म्माणः, अत एव तैर्दृष्टा मन्त्रास्तत्कालादेवोच्यन्ते वेदा इति। तदेवं मन्त्रेष्वेव वेदशब्दस्य मुख्या वृत्तिः ; ब्राह्मणानान्तु यथा ऋगादिलक्षणाभावेऽपि तत्तद्व्याख्यानाद्यर्थतया तत्तन्नाम्ना व्यवहारः ; तथैव वेदनाम्नापीति वेदशब्दस्य तत्र वृत्तिस्त्वौपचारिक्येव। तथा ह्यामनन्ति तैत्तिरीयाः—

"भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्य मुवास। तꣳ ह जीर्णिꣳ स्थविरꣳ शयानम्, इन्द्र उपव्रज्योवाच। भरद्वाज ! यत्ते चतुर्थ मायुर्दद्याम्, किमेतेन कुर्य्या इति। ब्रह्मचर्य

मेवेनेन चरेय मिति होवाच। तथ्ᳲ ह त्रीन् गिरिरूपान-विज्ञातानिव दर्शयाञ्चकार; तेषाथ्ᳲ हैकैकस्मान्मुष्टि मादद। स होवाच भरद्वाजेत्यामन्त्र्य। वेदा वा एते, अनन्ता वै वेदाः, एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः; अथ त इतरदननूक्त मेव ( तै० ब्रा० ३. १०. ११. ३, ४. )"—इति।

छान्दोग्येऽपि श्रूयत एव वेदार्थो विद्याशब्दः। तथाहि— "प्रजापतिर्लोकानभ्यतपत् * * * अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्। स एतां त्रयीं विद्या मभ्यतपत्"—इत्यादि (१, १७, १—१०.)। एवं तत्रैवान्यत्रान्यत्रापि (४. २१. १; २३. २.)। तदेवं वेदस्य विद्यापरपर्य्यायत्वं स्फुट मेव।

अतः सुष्ठूक्त मस्माभिः 'पुरासीत् विद्यापरपर्याय एवायं वेदशब्दः'—इत्यादि (५ पृ०); तथा सम्भाव्यते चैष पक्षो युक्ततम एवोपन्यस्तो मन्त्रेष्वेव वेदशब्दस्य मुख्या वृत्तिरिति॥

आपस्तम्बादिसूत्रारम्भकाले तु ब्राह्मणग्रन्थाना मपि वेदत्वं व्यपदिष्टम्; ततः प्रभृति सिद्ध मेव "मन्त्रब्राह्मणयोर्वेदनामधेयम्"—इति (य० प० ३४ सू०)। तत एव मनुसंहितायावपि "वेदः कृत्स्नोऽधिगन्तव्यः (२. १६५.)"—इत्यादिषु वचनेषूभयोरेव ग्रहण मवगम्यते। अत एवोक्तं सङ्गच्छते "उदितेऽनुदिते चैव समयाध्युषिते तथा। सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः (२. १५.)"—इति "उदिते जुहोति"—इत्यादि विषयस्तु ऐतरेयादिब्राह्मणेष्वेव श्रूयन्ते। तथाहि— "वृषशुष्मो ह वातावत उवाच जातूकर्ण्यो वक्ता स्मो वा इदं देवेभ्यो यद्वैतदग्निहोत्र मुभयेद्युरहूयतान्येद्युरर्वाव तदेतर्हि हूयत इत्येतदु हैवोवाच कुमारी गन्धर्वगृहीता वक्ता स्मो वा

इदं पितृभ्यो यद्देतदग्निहोत्र मुभयेद्युरहूयताऽन्येद्युरर्वाञ्च तदे- तर्हि हूयत इत्येतद्वा अग्निहोत्र मन्येद्युर्हूयते ; यदस्तमिते सायं जुहोत्युदिते प्रातरथैतदग्निहोत्र मुभयेद्युर्हूयते ; यदस्तमिते सायं जुहोतुरुदिते प्रातस्तस्मादुदिते होतव्यम्। ***। उद्यन्नु खलु वा आदित्य आहवनीयेन रश्मीन्त्सन्दधाति। स योऽनुदिते जुहोति, यथा कुमाराय वा वत्साय वाऽजाताय स्तनं प्रतिदध्यात् तादृक्; तदथ य उदिते जुहोति, यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात् तादृक् * * * । तदेषाभियज्ञगाथा गीयते—

'प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्।
दिवाकीर्त्त्य मदिवा कीर्त्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्॥'
—इति (५. ५. ४, ५, ६.)" —इति॥

श्रुतिरिति च वेदस्यैव नामान्तरम्। श्रवणात् श्रुति- रित्याख्या। "श्रुयजीषिस्तुभ्यः करणे (पा० ३. ३. ९५. वा० २.)" —इति निष्पादितः श्रुतिशब्दः श्रवणेन्द्रियपरः ; "स्त्रियां क्तिन् (३. ३. ९४.)"—इति भाववचनोऽपि भवत्येव ; इह तु कर्म- ण्येव क्तिनिष्टः। एष हि वेदश्चिर मेव श्रूयते गुरुपरम्परानु- सारेण, न केनापि कदाचिदपि एकस्यापि मन्त्रस्य प्रणयन- कालनिर्णये कथ मपि समर्थः ; अत एव वाय्वादिवद् अनादि- रपौरुषेयश्चेति स्तूयतेऽय मिति वृद्धाः।

स एषः श्रुतिशब्दो वेदपरो न व्यवहृत आसीत् मन्त्रकाले ; मन्त्रसंहितासु क्वचिदपि वेदार्थश्रुतिशब्दस्य दर्शनाभावात्। ऐत- रेयब्राह्मणादिप्रचारात् पुरैव गाथाकाले तु साधारणप्रवादपरः सः व्यवहृत इत्येवावगम्यते। तथा ह्येतरेयकम् -"तस्मादपत्नीको

ऽप्यग्निहोत्र माहरेत्। तदेषाभियज्ञगाथा गीयते—'यजेत सौत्रामण्या मपत्नीको ऽप्यसोमपः। मातापितृभ्या मनृणार्थ्य-जेति वचनाच्छ्रुतिः'—इति। तस्मात् सौम्यं याजयेत् (ऐ० ब्रा० ७. १. ९.)"—इति। ता मिमां यज्ञगाथा मवलम्ब्यैव चाख्यात मिदं ब्राह्मणम्—"तदाहुर्वाचाऽपत्नीकोऽग्निहोत्रं ०—० स्वर्गांल्लोकान् जयन्तीति (७. १. १०.)"—इति। तदेवमादीनां दर्शनादिद मपि सत्य मभिव्यक्तम्—आदौ मन्त्रकालः, ततस्तेषां यज्ञादिषु व्यवहारकालः, ततस्तादृशप्रवादश्रुतिकालः, ततो गाथाकालः, ततश्च ब्राह्मणकालः; गाथामूलानि हि बहूनि ब्राह्मणवचनानि श्रूयन्ते।

स एषः प्रवादार्थः श्रुतिशब्दो ब्राह्मणकालादनन्तरं मन्त्र-ब्राह्मणयोरपि व्यवह्रियते। अत एवं प्रोक्तं यास्कीये निरुक्ते—"सेयं विद्या श्रुतिमतिबुद्धिः (१३. १. १२.)"—इति। स्मर्यते च तथा मन्वादिभिः। तद्यथा—"श्रुतिस्मृत्युदितं धर्म मनुतिष्ठन् हि मानवः (म० सं० २. ९.)"—इति, "श्रुतिस्तु वेदो विज्ञेयः (म० सं० २. १०.)"—इति, "उदितेऽनुदिते चैव समयाध्युषिते तथा। सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः (म० सं० २. १५.)"—इत्यादि च॥

वेदस्यानुश्रव इत्याख्यापि एतन्मूलिकैव। तथाहि—"दृष्ट-वदानुश्रविकः"—इतीश्वरकृष्णीयसाङ्ख्यकारिकाया व्याख्यानावसरे व्युत्पादित मेवं वाचस्पतिमिश्रेण—'गुरुमुखादनुश्रूयते इत्यनु-श्रवो वेदः'—इति।

लौकिकप्रवादवाक्याना मपि श्रुतित्वव्यवहारो दृश्यते बहुत्र। तद्यथा—'द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरितिश्रुतिः'—इति

रामा० २. ११०. १८.। तथा 'एष मे कृष्णसन्देशः श्रुतिभिः ख्याति मेष्यति' —इति महा० भा० १. ५०.। 'इति सत्यवती श्रुतिः ( भाग० पु० ४. २१. ४५. )'—इत्यादि च। तदेवं यस्य कस्यचिद् वचनस्य प्रचारकालस्यादिर्न निर्णीयते,—कदा केन कथित मिद मिति, अपि च प्रामाणिकतया गुरुपरम्परयोपदेशो लभ्यते, तत् किल वैदिकं वा लौकिकं वा वचनं श्रुतिरित्युच्यते।

कल्पयन्ति चानुमिताः श्रुतीः मन्वादिभिर्वेदविद्भिर्विहितानां विधीनां मूलानीति स्मार्तग्रन्थेषु; वेदार्थस्मरणमूलकत्वादेव तेषां स्मृतित्वाख्यानात्। तदेवं यस्य च प्रामाणिकस्मृतिवचनस्य मूलं वैदिकवचनं साक्षान्नोपलभ्यते, तस्य मूलं तादृशवैदिकवचनं कल्पनीयं भवति, तत् कल्पितवचन मपि श्रुतिरिति व्यवहृतं रघुनन्दनादिभिः।

तदत्र मन्त्रभागानां श्रुतित्वं सर्ववादिसम्मतम्; ब्राह्मणभागानां च श्रुतित्वं मन्वादिभिः स्वीकृतम्; प्रवादवाक्यानां लौकिकानाञ्च श्रुतित्वं व्यावहारिकम्; कल्पितश्रुतयोऽपि सन्ति रघुनन्दनादीना मिति श्रुतिचातुर्विध्यं स्थिर मिति॥

अपरञ्चोच्यते "श्रुतिस्त्री वेद आम्नायस्त्रयी"—इति नामलिङ्गानुशासनात् श्रुतिः, वेदः, आम्नायः, त्रयी,—इत्येतान्येकार्थान्येव पदानि। आम्नायसमाम्नायौ चाभिन्नार्थौ। अतएव 'इति माहेश्वराणि सूत्राणि'—इति भट्टोजिदीक्षितप्रथमवचनव्याख्यानावसरे ह्युक्तं नागेशेन लघुशब्देन्दुशेखरे—'आम्नायसमाम्नायशब्दौ वेदे एव रूढौ'—इति। वेदशब्देन तु आसूत्रकालात् मन्त्रा ब्राह्मणवचनानि च बुध्यन्ते इत्युक्त मेव।

अत एव भगवता जैमिनिमुनिना कृते मीमांसादर्शने च बहुत्रैव मन्त्रब्राह्मणार्थपरो ह्याम्नायशब्दो दृश्यते। तथाहि—'आम्नायस्य क्रियार्थत्वादानर्थक्य मतदर्थानाम् (१. २. १.)', 'उक्तं समाम्नायैदमर्थ्यम् (१. ४. १.)''—इत्येवमादयो ग्रन्था द्रष्टव्याः। 'स्वाध्यायाम्नायधर्मित्वाच्छन्दसि नियमः (१. ४.)'—इत्येतस्य वाजसनेयिप्रातिशाख्यसूत्रस्य व्याख्यानावसरे च 'आम्नायो वेदः'—इत्यारभ्य 'ब्राह्मणं विध्यर्थवादरूपम्, मन्त्रस्तु कर्माङ्गभूतद्रव्यदेवतास्मारकः'—इत्याद्युक्तं तद्भाष्यकृदुव्वटेनापि। तथा स्पष्टमोक्त मथर्ववेदीये कौशिकसूत्रे—'आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च (१)'-इति।

यास्कीये निरुक्तेऽप्युभयोरेव मन्त्रब्राह्मणयोराम्नायत्व माख्यातं दृश्यते। तथाहि—"अथाप्यनुपपन्नार्था भवन्ति—'ओषधे! त्रायस्वैनम् (य० वा० सं० ४. १; ६. १५.)', 'स्वधिते मैनं हिंसीः (य० वा० सं० ४. १; ६. १५.)'—इत्याह हिंसन् (१. ५. १.)''—इत्याशङ्क्य समाहितं तत उत्तरम्—"यथो एतदनुपपन्नार्था भवन्तीत्याम्नायवचनादहिंसा प्रतीयेत (१. ५. २.)''—इति। तदत्र नूनं मन्त्राणा मेवाम्नायत्वेन ग्रहण मिष्टं यास्कस्य। ततः "एषां लोकानां रोहेण सवनानां रोह आम्नातः (७. ६. ४.)''-इत्यत्र, एतत्सिद्धान्ते "यथो एतद्रोहात्प्रत्यवरोहश्चिकीर्षित इति, आम्नायवचनादेतद् भवति (७. ७. १.)''-इत्यत्र च ब्राह्मणवचनाना मेवाम्नायत्वेन ग्रहणं मिति।

मन्त्राणा माम्नायत्वं मत्वैव मन्त्रेभ्यः संगृहीतस्य निघण्टोश्च समाम्नायत्व मुक्तं निरुक्तोपक्रमे—"समाम्नायः समाम्नातः,

स व्याख्यातव्यः (१. १. १.)-इति। अत एव च तद्वृत्तिकृता दुर्गाचार्येणोक्तं तट्टीकाया भूमिकायाम्—"छन्दोभ्यः समाहृत्य समाम्नाता, सैषा छन्दोऽवयवभूता छन्दोधर्मिण्येव यथायथापन्नस्था गौर्गोधर्म्मा इति ॥

वेदाङ्गाना मप्याम्नायत्वं निरुक्तकृत्सम्मत मेव; तेन प्रदर्शिते पुरावादे 'समाम्नासिषुर्वेदञ्च वेदाङ्गानि च (१. ६. ५.)'—इतिवचने मन्त्राणाम्, तेभ्यः सङ्गृहीतानां नैघण्टुकपदानाम्, वेदानाम् (मन्त्रातिरिक्तानाम्)=ब्राह्मणानाम्, वेदाङ्गानाञ्च आम्नायत्वावगमात्। लघुशब्देन्दुशेखरेऽपि प्रत्याहारव्याख्यानावसरे 'ननु चतुर्दशसूत्र्या मक्षरसमाम्नाय इति व्यवहारानुपपत्तिः ?'-इत्यादिकं विचार मवतार्य पाणिनिव्याकरणादीनां वेदाङ्गाना मप्याम्नायत्वं प्रमाणीकृतं नागेशेनेति।

"तस्येदम् (४. ३. १२०.)"-इति पाणिनीये सूत्रे यदुक्तं वार्त्तिकम् "चरणाद्धर्माम्नाययोः (२)"—इति, तदनुसृत्यैव "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः (पा० ४. ३. १२९.)"—इति सूत्रे नाट्यग्रन्थस्याप्याम्नायत्व मुररीकृतं दीक्षितेन। तथा ह्युक्तम्—'चरणाद् धर्माम्नाययोरित्युक्तं तत्साहचर्यान्नटशब्दादपि तयोरेव'-इति। एवञ्च शिलालिप्रभृतिकृतानां प्राचीनतमानां नटसूत्रादीना मप्याम्नायत्वं दीक्षितादिसम्मतमेवेति।

केचित्त्वाहुः—'म्ना अभ्यासे'—इति धातुत एवाम्नायपदं निष्पन्नम्; अतो यः कश्चन ग्रन्थोऽभ्यस्त उक्तः, स एवाम्नायः। एकस्यैव पुनःपुनरुच्चारणादिना स्मृत्यनुगतकरण मेवाभ्यसनम्। युगावसानकाले प्रायः सर्वेष्वेव प्राण्यादिष्ववसन्नेषु ये केचिच्छिष्टा अवशिष्टा बभूवुः, तैः स्वस्वस्मृत्यनुरूपतः साङ्गो वेदः प्रोक्तः

स्वस्वान्तेवासिभ्यः, तैश्च बहुभ्य इत्येवं पुनर्विस्तृतः सः; पुन-र्युगान्ते चोपगते पुनः सर्व एव ते विलीनाः, पुनर्नवयुगारम्भे लयावशिष्टैः शिष्टैः स्वस्वस्मृत्यनुरूपत एव प्रोक्ताः स्वस्वान्ते-वासिभ्यः। एव मेवाभ्यासः सम्पद्यते साङ्गस्य वेदस्य सदैवेति स साङ्गो वेदः सर्व एव समाम्नाय इत्याख्यायते। अत एव सूर्यसिद्धान्ते ज्योतिषोपनिषदध्याये ऽप्युक्तम्—

"युगेयुगे समुच्छिन्ना रचनेयं विवस्वतः।
प्रसादात् कस्यचिद्भूयः प्रादुर्भवति कामतः"—इति (१८ श्लो०)।

तत्र चायं विशेष उपलभ्यते,—मन्त्राणा मेव यथावत् स्वर-वर्णमात्रादियुतानां यथाश्रुताना मभ्यासः क्रियते; अतः स मन्त्रभागो दृष्ट इत्युच्यते। तत्रापि स्मृतिच्युत्यादिहेतुभिः पाठन्यूनाधिक्यं पाठान्तरत्वं क्रमान्यत्वञ्चानिवार्य मिति शाखा-न्तरत्वं च सम्पद्यते। ब्राह्मणानान्तु तदर्थाभिधाने एवोपयोगि-त्वात्तच्चान्यथाप्युपपद्येतेति न तत्र यथावत्पाठाभ्यासः स्वीकृतः, प्रत्युत तदर्थाभ्यास एव कृतोऽपरग्रन्थप्रवचनेनेति; अतः स ब्राह्मणभागः प्रोक्त इत्युच्यते। एवं वेदाङ्गग्रन्थाना मपि मूल-तत्त्वाना मभ्यसनीयत्वेऽपि तत्तत्प्रयोगस्थानाना मस्ति देश-कालाद्यपेक्षेति देशकालाद्यनुसारेणैव विधान मुचित मिति प्रतिनवयुगे नवकल्पनैव कृता; तदेवं सर्व एव वेदाङ्गाः तत्त्व-तोऽभ्यस्ता अपि अक्षरशः प्रतियुगे नूतनाः कल्प्यन्ते-इति कल्प-नामभाजः स्युः, परं शिक्षाप्रभृतीनां पञ्चानां कल्पनामतो व्यवहारो न दृश्यतेऽपि तु यागादिविधायकानां पैङ्गीप्रभृतीना मेव ग्रन्थाना मेकविधानां कल्प इति प्रसिद्धिः; व्यवहार एवात्र निदानम्। तथाच वेदाङ्गग्रन्थेषु तेषा मेव कल्पसूत्रग्रन्थानां

प्राथम्य मनुमीयते ; यथा हि तैत्तिरीयाणां पञ्चाना मेव शाकल्ले ऽपि आद्याया एव शाखायाः शाकल इति प्रसिद्धिः, सर्वेषां सामवेदीयार्चिकानां छन्दस्त्वे ऽपि पूर्वभागस्यैव च छन्द इति ।

अत एव ब्राह्मणग्रन्थेष्वपि निरुक्तादिनामदर्शनं न विस्मयकरं भवत्यार्याणाम् । नाट्यादिग्रन्थोऽपि नासीत् पुराकल्पे इति को वदितुं सक्षमः ? परं मन्त्रातिरिक्तानां केषा मपि प्रबन्धानां न हि यथावदक्षरशोऽभ्यसनं सप्रयोजन मित्यतिप्राचीननटसूत्रादीनां कृतकत्वेऽप्यामृनायत्व मव्याहत मेव । तदेवं नटशब्देनापि कात्यायनोक्तधर्मामनाययोरभिसम्बन्धे को दोषः पाणिनिवृत्तिकृतः खलु भट्टोजिदीक्षितस्य ।

परं मत्र चेद मवश्यं धार्यम्—भवतु नाम मन्त्रब्राह्मणात्मकस्य वेदस्य, मन्त्रोद्धृतपदसङ्घात्मकस्य निघण्टोः, षड्विधानां वेदाङ्गानाम्, अन्येषाञ्च नटसूत्रादीनां सर्वेषा मेव प्राचीनतमाना मार्षशास्त्राणा मामनायत्वम्; परं मन्त्रभागस्यैवाम्नायत्वं मुख्यम्, प्रतिकल्पे मन्त्राणा मेवाक्षरश आम्नानात् ; तथैव नैघण्टुकपदानाम्; तदनु ब्राह्मणभागस्य, तस्यापि तथा व्यवहारात् ; तदनु वेदाङ्गानाम्, यास्कादिभिः स्वीकारात् , नटशास्त्रादीनान्तु तथात्वे प्रामाण्यं विप्रकृष्टत इतीति ॥

"छन्दः"—इत्यपि वेदस्यैवान्यतम मतिप्राचीनं नाम ।

(१) छन्दःशब्देन पुरा खलु ऐशप्रबन्धाना मेषां वाय्वादीनां सर्वेषा मेव बोधो भवति स्म । तत एवैव माथर्वणिका आमनन्ति —"त्रीणि छन्दांसि कवयो * * * आपो वाता ओषधयः (१८, १, २, ७,)"-इति । तत्र छन्दांसि जगद्बन्धनानीत्यर्थः ।

अत्राप्युपपद्यत एवैतन्निरुक्तम् —'छन्दांसि छादनात् (७. ३. ६.)' —इति ; छादनं नाम बन्धन मेव ; बन्धनान्येव हीमाः सर्वे विषयाः ; तदुक्तं हि साङ्ख्यतत्त्वकौमुद्याम् — "विषिण्वन्ति विषयिण मनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्, विषयाः पृथिव्यादयः सुखादयश्चास्मदादीनाम् (५ सां० कौ०)" —इत्यादि ।

( २ ) तत उत्तरं सर्वेषा मपि अक्षरसमाम्नायाना मर्थंतस्तु सर्वेषां येन केनापि जीवेन कृतानां शब्दाना मकारादीनां च छन्दःशब्देन व्यपदेशो भवति स्म । तत एवैवं तैत्तिरीया आमनन्ति — "छन्दः पुरुष इति य मवोचाम, अक्षरसमाम्नाय एव ; तस्यैतस्याकारो रसः ( ३. २. ३. ४. )"—इति । तत्राप्युपपद्यते एवैतन्निरुक्तम्—'छन्दांसि छादनात्'—इति ; छादनानेव हि शब्दा अकारादयोऽर्थानाम् ।

( २ ) ततः पश्चात् ऋगादि-त्रिविधेषु मन्त्रेष्वपि व्यवहृतं छन्द इति । तत एवैव मप्याथर्वणिका आमनन्त्युच्छिष्टसूक्ते— "अग्न्याधेय मथो दीक्षा कामप्रश्छन्दसा सह । उत्सन्ना यज्ञाः सत्राण्युच्छिष्टे ऽधि समाहिताः ( ११. ४. १. ८. )"—इति ; अन्यत्र च "दिवो नु मां बृहतो अन्तरिक्षादपां स्तोको अभ्यपप्तद्रसेन । स मिन्द्रियेण पयसाह मग्ने छन्दोभिर्यज्ञैः सुकृतां कृतेन ( ६. १२. ११. १. )"—इति । तदत्राप्युपपद्यते एतदेव निरुक्त 'छन्दांसि छादनात्'—इति ; छादनानेव हि ते मन्त्रा मनोभावादीनाम् । निरुक्तारम्भेऽपि यद् भाषितम् — "छन्दोभ्यः समाहृत्य समाहृत्य समाम्नाताः" —इत्यादि, तत्रापि मन्त्रेभ्य इत्येव तस्यार्थः ; तत्र हि निघण्टौ मन्त्रमात्रत एवोद्धृतानां

पदानां दर्शनात्। अत एव तस्य वृत्तौ 'छन्दांसि = मन्त्राः'—इतेत्र-वोक्तं टीकाकृद्दुर्गाचार्येणापि।

श्रूयते चेदं तैत्तिरीयारण्यके—"यश्छन्दसा मृषभो विश्वरूपः * * * भूर्भुवः सुवश्छन्द ओम् ( १०. ६. )"—इति। " 'यः' प्रणवः 'छन्दसां' वेदानां मध्ये 'ऋषभः' श्रेष्ठः"—इत्यादि च तद्भाष्यं सायणीयम्। तथैव छान्दोग्यब्राह्मणेऽपि—"देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिरच्छादयन्; यदेभिरच्छादयꣳस्तच्छन्दसां छन्दस्त्वम् ( ३. ४. २. )"—इति। शतपथेऽप्येव मेव—"यदेभिरात्मान माच्छादयत, देवा मृत्यो-र्बिभ्यतः, तच्छन्दसां छन्दस्त्वम् (४. ५. १. १.)"—इति।

निघण्टुश्रुतस्य ( २. ७. १४. ) कान्तिकर्मणोऽपि भवति छन्द इतेत्रके। तथाच सर्व एव वेदाः काम्यमानाश्चास्माकं सर्वकामपूरकाः कमनीया वा। अर्चतिकर्मण एव ( ३. १४. २०. ) भवति छन्द इति च केचित्। तथाच सर्वेषा मेव वेदमन्त्राणा मर्चायां गतिरिति छन्दस्त्वम्, अर्चनीया वा सर्ववेदा अस्माकम्। ततोऽपि छन्दो वेदस्त्रयीत्याद्यभिन्नार्थः। तदित्थं पुरा सर्वेषा मेव मन्त्राणां साधारणं नाम छन्द इत्यासीदिति तु सर्वसम्मत मेव। निघण्टौ स्तोतृनामसु ( ३. १६. १०. ) च 'छन्दः'-इति पठितम्। पाणिनीयसूत्रेषु, कात्यायनीयवार्त्तिकेषु, पतञ्जलेरिष्टिषु, अन्यत्राप्यत्र चैवमादिषु ग्रन्थेषु सर्ववेदपरं छन्दोवचनं सर्ववादिसम्मतं सुप्रसिद्धञ्चेत्यतएव सर्वे वैदिकाश्छान्दसा इत्यभिधीयन्तेऽपीति।

(४) सामवेदीयर्चा मपि विशेषाख्या छन्दइति। तथाहि— "ऋचः सामानि छन्दांसि पुराणं यजुषा सह। उच्छिष्टाज्ज-

ज्ञिरे सर्वे ( अ० सं० ११. ४. २. ४. )"—इत्याथर्वणे, "तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ( ऋ० सं० १०. ९०. ९. )"—इत्यृचि च "छन्दांसि"—इतिपदेन सामवेदीयचाँ मेव ग्रहण मिष्यते छान्दसैरेकमत्येति। अत एव सामवेदीयचीं ग्रन्थो छन्दसी इत्युच्येते। सामवेदीयानां हि संहिताभागो गानम् छन्दः इति च द्विधा भिन्नः। तत्र गानग्रन्थाः—गेयः, आरण्यकः, ऊहः, ऊह्यश्चेति चत्वारः; छन्दोग्रन्थो तु योनिरुत्तरा चेति द्वावेव, तयोर्द्वयोरार्चिक इति च समाख्या। एवं हि यथैव 'तस्मात् सर्वहुतः यज्ञात्' 'ऋचः' ऋग्वेदीयाः यजुर्वेदीयाः, अथर्ववेदीयाश्च, 'यजुः' यजूंषि वृत्तगीतिवर्जितमन्त्रवाक्यानि यजुर्वेदीयानि सामवेदीयानि अथर्ववेदीयानि च, 'सामानि' सामवेदीयानि यजुर्वेदीयानि च 'जज्ञिरे', तथैव 'तस्मात्' तत एव यज्ञात् 'छन्दांसि' सामवेदीयगानादिमूलीभूतान्छन्दोनामकमन्त्राश्च 'जज्ञिरे' इति तदर्थः। यदि च तेषु छन्दःसु अपि ऋग्लक्षणं विद्यत एवेति पुनश्छन्दोग्रहण मानर्थक्यं भजतैव, परं तेषां प्राधान्यख्यापनाय ब्राह्मणवसिष्ठन्यायेन पृथग्ग्रहणञ्च न दोषावहम्; अन्यथा हि ऋग्वेदोद्धृता एव ते मन्त्रा इति तेषा मप्राधान्य मेव स्यादिति।

एतेन ऋग्वेदत एव साममूलीभूतास्ता ऋचस्तत्र सङ्गृहीता इति च मतं दूरोत्सारित मेव। पुनर्विशदयिष्यामश्चैतदिहैवोपरिष्टान्मन्त्रनिरुक्तिप्रकरणे। वस्तुतो यज्ञार्थ मेव हौत्रम्, यज्ञार्थ मेवौद्गात्रम्; तत्र होतृकार्यनिर्वाहाय ये मन्त्राश्रिताः, ते हि सर्व एव ऋक्संहितायां दृश्यन्ते; उद्गातृकार्यनिर्वाहाय

ये च मन्त्राश्रिताः, ते सामरूपा ऋग्रूपाश्च ; त एव हि साम-संहितायां दृश्यन्ते। तत्र सामसङ्घातात्मग्रन्थानां सामेतिरव प्रसिद्धिश्चिरन्तनी, इदानीन्तु गान मित्यपि ; ऋक्सङ्घातात्म-ग्रन्थयोस्तु छन्दइत्येव प्रसिद्धिः पुरातनी; आर्चिक इति तु योग-रूढ़ोतिरव विशेषः। इत्यन्यत्र पश्यतु तावत् —ऋक्संहितातः सामवेदीयर्गुद्धरणे कोऽवसरः? यदैव यथैव यतएव येनैव ऋक्-संहितायाः ऋचां सङ्ग्रहः सम्पन्नः, तदैव तथैव ततएव तेनैव सामसंहितायाञ्छन्दसाञ्च सङ्ग्रहः ; इत्येतत्ख्यापनायैव "छन्दांसि जज्ञिरे तस्मात्"—इति कृतः पृथगुपन्यास इति।

(५) पुरैव गायत्र्यादीना मपि छन्दस्त्वं व्यवहृतं मन्त्रेष्वपि ; तद्यथा—"छन्दांसि च दधतो अध्वरेषु (ऋ० स० ८. १६. ५.)"—इत्यादि। तत्रापि छादन मेव वीजम्; भवति हि शब्दानां छादनं गायत्र्यादिभिः। किञ्च यथा खलु पद्यैर्भवति शब्दानां छादनम्, तथैव गद्यैर्गानैरपीति सर्वविधरचनाना मेव छन्दस्त्वं चिरात्प्रतिष्ठितम् ; कालभेदाल्लौकिकव्यवहारो विभिन्न इत्यन्यदेतत्। अत एव "छन्दांसि=छादनात्"—इति व्याख्यानावसरेऽप्युक्तं दुर्गाचार्येण—"ते (मन्त्राः) छन्दो-मयाः ; नाच्छन्दसि वागुच्चरति"—इत्यादि। अतएव च गद्यात्मकस्य यजुर्मन्त्रस्यापि छन्दोनिर्णयं कुर्वन्ति वैदिकाः, याजुषीति गायत्र्यादिभेदोऽपि वर्णितः पिङ्गलेन (२. ३—८.)। तदित्थं निश्छन्दो यजुरिति वचनं त्वापेक्षिक मेव ; कात्यायनेन हि यजुर्वेदीयमन्त्राणां सर्वेषा मेव छन्दोज्ञान मपि विहितम्, (अनुक्र० १. १.)। माध्यन्दिनोभाष्यकारेण महीधरेणाप्युक्तम् —'तत्र यजुर्वेदमन्त्रेषु कानिचिद् यजूंषि काश्चन ऋचः ; तत्र

ऋचां नियताक्षरपादावसानाना मावश्यकं छन्दः कात्यायने-नोक्तम्, यजुषां चङ्क्तरप्रताक्षरावसानाना मेकाक्षरादीनां पिङ्गलेन दैव्येक मित्यादिनोक्तं छन्दो बोद्धव्यम्'–इति।

(६) किञ्च यद्यपि 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'—इति-प्रसिद्धेरनन्तरं ब्राह्मणग्रन्थाना मपि छन्दःशब्देन च ग्रहणीयता सुतरां सम्पन्ना; तथापि मन्त्रभागाना मेव मुख्यं छन्दस्त्वम्। अतएव यास्को मन्त्रार्थे एव छन्दःशब्दं प्रायुङ्क्त निरुक्तोपक्रमे; मन्त्रब्राह्मणयोरुभयोरेवाविशेषेण छन्दःशब्दव्यवहारं कृतवता भगवता पाणिनिनापि क्वचित् प्रायोजि मन्त्रेष्वेव च छन्द इति। तथाहि—"छन्दोब्राह्मणानि च तद्विषयाणि (४. २. ६६.)"–इत्येवमादीनि समालोच्यानि; न हि तत्र छन्दःशब्दस्योभयपरत्वे ब्राह्मणानां पृथक् ग्रहण मुपपद्यते।

(७) ततो वेदाङ्गाना मपि वेदत्वातिदेशात् छन्दस्त्व मप्यनिवार्य मेव। तदुक्तं भगवता पतञ्जलिना "छन्दोवत् सूत्राणि भवन्ति (१ अ० ४ पा० २ आ०)"—इति; परं तत्रापि ये केचित् शौनकीयशिक्षादयः, तेषां वेदाङ्गत्व मस्तु नास्तु वा छन्दस्त्वं तु नास्त्येव। तथा च दर्शितं प्रत्युदाहरणं "शौनकादिभ्यश्छन्दसि (४. ३. १०६)"—इति सूत्रीयशेखरे 'छन्दसि किम्? शौनकीया शिक्षा'—इति। अपि वा तत्र सूत्रे मुख्यछन्दस्त्व मेवापेक्षितम्, न च तद्वेदाङ्गाना मित्येव तयोक्तं नागेशेनेति। प्रातिशाख्यादावपि व्यवहृत एव छन्दःशब्दः पतञ्जलिना—"छन्दःशास्त्रेषु (१ अ० २ पा० १ आ०)"—इति; प्रातिशाख्यादिष्वेव तदर्थो गम्यते; अपि वा छन्दसां शास्त्रेषु इत्येव तदर्थः।

(८) नागेशादिभिस्तु भिक्षुसूत्रनटसूत्रयोरपि छन्दस्त्वं स्वीकृतम्। तथाहि—'तित्तिरि०। इत आरभ्य वक्ष्यमाणाः प्रत्ययास्तेनैकदिगितिएतत्पर्यन्तं छन्दसि वाच्ये दृश्यन्ते। शौनकादिभ्यश्छन्दसीत्यतश्छन्दोग्रहणस्य पूर्वमपकर्षादुत्तरत्रानुवृत्तेश्च' —इति लघुशब्देन्दुशेखरे द्रष्टव्यम्। तत्र तेनैकदिगित्यन्तेषु तित्तिर्यादिषु (४. ३. १०२—१११.) दशसु सूत्रेषु नवमे "भिक्षुनटसूत्रयोरपि" ग्रहणं दृश्यते। तदेवं कालक्रमादिदानीमार्षेतिप्रसिद्धग्रन्थमात्रस्यैव छंदस्त्व मुररीकुर्वन्ति विपश्चित इत्यलं छंदोविचारेणेति॥

स्वाध्याय इति च तस्यैव वेदस्य नामान्तरम्। "स्वाध्यायोऽध्येतव्यः (तै० आ० २. १५. ७.)"—इत्यादिश्रुतिषु "यः स्वाध्याय मधीतेऽब्दम् (२. १०७.)"—इत्यादिषु स्मृतिषु च तथैव व्यवहारात्। द्विजातिभिः सम्यगध्येय एव इत्येवायं स्वाध्याय इति कथ्यते। अतएवाह भगवान् मनुः—"योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्व माशु गच्छति सान्वयः (२. १६८)"—इतीति॥

आगम इति च वेदस्यैव नामान्तरम्। "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्"—इति पाणिनीयवार्त्तिककार-कात्यायन मुन्याद्युक्तेः; "आगमः,—खल्वपि ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च"—इति च तत्र पातञ्जलम्। भट्टकुमारिलेनाप्युक्तं स्वकृतश्लोकवार्त्तिकभूमिकायाम्—"आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि"—इति। साङ्ख्यकारिकायामीश्वरकृष्णेनापि यदुक्तम् "तस्मादपि चासिद्धं परोक्ष माप्तागमात् सिद्धम्" —इति. तदप्येतदभिप्रायेणेवेति॥

निगम इति च आगम इति चानर्थान्तरम्। यास्कीयेऽखिलनिरुक्ते निगम इति सर्वत्र वैदिकोदाहरणान्येव दर्शितानि। तथाहि—"तत्र खल इतीत्यस्य निगमा भवन्ति— * * * खलेन पर्षान् (ऋ० सं० ८. १. ६. २)"-इत्यादि (३. २. ३. ४.)। "अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते, दमूनाः क्षेत्रसाधा इति; अथापि नैगमेभ्यो भाषिकाः उष्णं घृत मिति (२. १. ३.)"—इति चास्ति तत्रैव।

अत्र चेदं तत्त्वम्—आदौ तु निगम इति मन्त्रभागस्यैवाभिधान मासीन्न ब्राह्मणभागस्यापि; निरुक्तग्रन्थे सर्वत्रैव मन्त्राणां मन्त्रांशानां चैव निगमत्वेनोपन्यासात्। मन्त्रभागत उद्धृतानां च पदाना मस्ति निगम इति व्यवहारः। तद्यथा—'निघण्टवः कस्मात्? निगमादिमे भवन्ति'-इति यास्कः (१. १. १)। तथा मनुसंहितायाम्—"निगमांश्च वैदिकान् (४. १९.)"-इति व्याख्यानावसरे चोक्त मिदं कुल्लूकेन—"तथा पर्यायकथनेन वेदार्थावबोधकान् निगमाख्यांश्च ग्रन्थान्"—इति। तत उत्तरं कालाद् ब्राह्मणेष्वप्युपसङ्क्रान्तं निगमाभिधानम्। भागवतादौ तु निगमपदेन मन्त्रब्राह्मणोभयात्मकस्य वेदस्यैव बोध दृष्टः। तथाहि—"निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्। पिबत भागवतं रस मालयं मुहुरहो रसिका भुवि भावुकाः (भा० पु० १. १. ३.)"—इति। अत्र 'निगमो वेदः, स एव कल्पतरुः, सर्वपुरुषार्थोपायत्वात्; तस्य फल मिदं भागवतं नाम'-इति प्राह श्रीधरस्वामी। "निगमकल्पतरोः सर्वफलोत्पत्तिभुवः शाखोपशाखाभिर्वैकुण्ठ मप्यध्यारूढस्य वेदरूपतरोः"-इति च क्रमसन्दर्भः। "निगमो वेदः स एव कल्प-

तरुः"-इत्यादि च तत्रैव विश्वनाथः। तस्य च भागवतस्योपदेशविषयो वैदिको न वेत्यन्यदेतत्।

सोऽयं निगमकल्पतरुः, त्रिविधरचनात्मकस्त्रयीतिप्रसिद्धोऽपि ऋक्संहिता, यजुःसंहिता, सामसंहिता, अथर्वसंहितेतिचतुःसंहिताभिश्चतुःसङ्ख्यान्वितः। संहितालक्षणं तु प्रातिशाख्यादौ प्रसिद्धम्—'पदप्रकृतिः संहिता (ऋ० प्रा० २.१.)'-इति, 'वर्णाना मेकप्राणयोगः संहिता (य० वा० प्रा० १. १५८.)'—इति, 'परः सन्निकर्षः संहिता (पा० १. ४. १०९.)'—इति; एवमादि। तत्र। ऋग्लक्षणानां (पद्यात्मकानां) मन्त्राणां चतुर्विधास्वपि संहितासु विद्यमानत्वेऽपि यत्र ग्रन्थेऽन्यलक्षण एकोऽपि मन्त्रो न दृश्यते, तस्यैव ऋक्संहितात्वम्। एवं तदतिरिक्तासु त्रिविधास्वपि संहितासु यजुर्लक्षणानां (गद्यात्मकानां) मन्त्राणां विद्यमानत्वेऽपि यत्र ग्रन्थे यजुषा मेवाधिक्यम्; ऋचा मपि यजुष्ट्वेनैव पाठो विनियोगश्च, तस्यैव यजुःसंहितात्वम्। अतएवोक्त मध्वर्युब्राह्मणभाष्यभूमिकायां सायणाचार्येणापि-"तत्र यजुषा मध्वर्युवेदेऽतिबहुलत्वात् क्वचित् क्वचित् ऋचां सद्भावेऽपि यजुर्वेद इत्येवाख्यायते'—इति। सामसंहितायास्तु स्तोमानां गानानाञ्च मूलीभूतानां कासाञ्चिदृचाम्, स्तोभलक्षणानां कतिपयानां यजुषां चाश्रयत्वेऽपि साम्ना माधारभूमित्व मनन्यलभ्य मेव। तदेवं पद्यगद्यगीतिभेदात् त्रिविधा एव रचना भवन्ति; तादृशरचनात्रैविध्यावलम्बनेनैतानि त्रीणि नामानि सम्पन्नानि। ततश्चतुर्थसंहितायाः किं नाम भवितव्य मिति चिन्ताया मेवंविभागकारिणो नाम्नैवैतस्या नामकरण मुचित मिति सिद्धं नामाथर्वसंहितेति।

अथर्वा नामर्षिरेव हि यज्ञप्रक्रियायाः प्रथमप्रकाशक इति गम्यते, स एव हि हौत्रादिकार्यसौकर्याय ऋगादिनामभिर्वेद-विभाजकश्चेत्यपि सम्भाव्यतेऽस्माभिः । "यज्ञैरथर्वा प्रथमः पथस्तते (ऋ० स० १.६. ४. ५.)"-इति, "अग्निर्जातो अथर्वणा (ऋ० स० ७. ७. ४. ५.)"—इति, "त्वा मग्ने पुष्करादध्यथर्वा निर-मन्थत (ऋ० स० ४. ५. २३. ३.)"—इति, "अथर्वाणं पितरं देवबन्धुं मातुर्गर्भं पितरसुं युवानम् । य इमं यज्ञं मनसा चिकेत प्र णो वोचस्त मिहेह ब्रवः (अ० स० ७. १. २.)"—इति चेवमादिमन्त्रलिङ्गात् प्रतीयत एवाथर्वणो यज्ञाविष्कर्तृ-त्वम् । "यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियते इति त्रय्या विद्ययेति ब्रूयात् (ऐ० ब्रा० ५. ५. ८.)"—इत्यादिश्रुतेः स्फुट मेव प्रतीयते यज्ञकार्यनिर्वाहसौकर्यार्थ मेव ऋगादिसंहिता-विभाग इति च । किञ्चात्रैव "अथ केन ब्रह्मत्वं क्रियते ? त्रय्या विद्यया"—इत्यतः समग्रा एव त्रयी विद्या ब्रह्मत्वकरणे साधिकेति स्पष्टम् । न चाथर्वसंहिताध्ययन मन्तरा समग्रायाः स्त्रय्याः ज्ञानं भवितु मर्हति ; हौत्राध्वर्यूद्गात्रव्यवहार्यातिरिक्ताना मप्यृग्यजुर्मन्त्राणां तत्र सद्भावात् । अतएव "ऋचात्वः पोष मास्ते (ऋ० सं० ८. २. २४. ५.)"—इति मन्त्रस्य निर्वचना-वसरे यास्कोऽप्याह—"ब्रह्मा सर्वविद्यः सर्वं वेदितु मर्हति (१. ३. ३.)"-इति । अथर्ववेदी एव ब्रह्मा भवति स एव च यज्ञं समन्तात् रक्षति । तथाहि—"ब्रह्मैव विद्वान् यद् भृग्वङ्गिरो-वित् सम्यगधीयानश्चरितब्रह्मचर्योऽन्यूनातिरिक्ताङ्गोऽप्रमत्तो यज्ञं रक्षति, तस्य प्रमादाद् यदि वाप्यसान्निध्याद् यथा भिन्ना नौ-

रगाधे महत्युदके सम्प्लवेत्''–इत्यादिः, ''तस्माद् यजमानो भृग्वङ्गिरोविद मेव तत्र ब्रह्माणं वृणीयात् ; स हि यज्ञं तारयतीति ब्राह्मणम्''–इत्यन्तो गोपथग्रन्थो द्रष्टव्यः ( २. २. ५. )। छन्दोगा अपि ब्रह्मणो भिषक्त्व मामनन्त्येव—'भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति (छा॰ ब्रा॰ ५. १७. ८.)—इत्यादि। सामवेदभाष्यावतरणिकायां सायणाचार्योऽप्यवोचत्—''त्रयाणा मपराधन्तु ब्रह्मा परिहरेत् सदा''—इति। युक्ततरञ्चेतद् तदैव ब्रह्मर्त्विजि, यदा खलु तस्य चतुर्वेदविरवेन समग्रत्रयीवेत्तृत्वं स्यात्, सर्ववेदवेत्तृत्वेनैव च तस्य विश्वव्यचा इति समुद्र इति चाख्यानं सङ्गच्छते। श्रूयते हि—''समुद्रोऽसि विश्वव्यचा ( य॰ वा॰ सं॰ ५. ३३. )''—इति यजुर्मन्त्रः। स्फुटतरञ्चैतदाम्नातं दृश्यते गोपथपूर्वार्द्धे—''तस्माद्दग्विद मेव होतारं वृणीष्व, यजुर्विद मध्वर्युम्, सामविद मुद्गातारम्, अथर्वाङ्गिरोविदं ब्रह्माणम्''—इति, ''प्रजापतिर्यज्ञ मतनुत ; स ऋचैव हौत्र मकरोत्, यजुषाध्वर्यवम्, साम्नौद्गात्रम्, अथर्वाङ्गिरोभिः ब्रह्मत्वम् ( १. ३. १, २. )''—इति च॥

इह केचिदन्यथैवाहुरन्यदेशीयाः। तद्यथा—पुरा किल यदा ऋग्वेदो यजुर्वेदः सामवेदः–इति त्रय एव वेदा आसन्, नासीदथर्ववेदः, तदैव वेदस्य त्रयीत्याख्या प्रचलितेति। अत एव प्राचीनतमेष्वेव ग्रन्थेषु त्रयाणां वेदाना मुल्लेखो दृश्यते, नातिप्राचीनेषु। तद्यथा छान्दोग्यब्राह्मणे—''अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्। स एतां त्रयीं विद्या मभ्यतपत् ( ६. १७. )''—इत्यादि। एवं मनुसंहिताया मपि—''अग्नि-

वायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्। दुदोह यज्ञसिद्ध्यर्थं मृग्यजुः-सामलक्षणम् ( १, २३. )"—इति। छान्दोग्यादिभ्योऽर्वाचीना ये ग्रन्थाः, तेषु तु वेदस्य चतुष्ट्व मेव, न त्रयीत्वम्; तदानी मथर्ववेदोऽपि सम्भूत इतेयव तथात्वे वीजम्। तद्यथा बृहदारण्यके—"अरे अस्य महतो भूतस्य निःश्वसित मेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः ( ४. ४. १०. )"—इत्यादि। किञ्च महाभारतेऽपि—"एकतश्चतुरो वेदान् भारतञ्चै तदेकतः। पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम्॥ चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारत मुच्यते ( १ प० २६८, २५९ श्लो० )"—इति। पुनस्तत्रैव "यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः। न चाख्यान मिदं विद्यात् नैव स स्याद् विचक्षणः ( १ प० २६८ श्लो० )"—इति। एवञ्च ऋग्यजुःसामान्येव त्रयो वेदाः त्रयीशब्द-वाच्याः; अथर्ववेदस्तु न त्रयीशब्दस्य शक्त्या बुध्यते; अपि तु गौण्येति। तथा च ऋगादयस्त्रय एव प्राचीनतमाः; अथर्ववेदस्तु तदपेक्षयार्वाचीन एवेति फलितं वेदतत्त्वान्वेषिणां तेषां मनोरथद्रुमेणेति।

नैतन्मत मस्मन्मनोहरम्, नापि विचारसहम्; निर्मूलत्वात् एकदेशदर्शित्वदोषग्राहग्रस्तत्वाच्च। तथाहि—न क्वापि वेदे लोके वा तादृशमतस्य किञ्चिदपि मूलं कथ मपि द्रष्टुं अनुमातुं वा शक्यते। त्रयीतिनाम्ना वेदस्य व्यवहार एवात्र निदान मिति चेत्, अस्मदुक्तत्रयीनामकारण मेव तत्संहारकं किन्न सदैव जागर्त्ति? सत्स्वपि हि चतुर्ष्वपि वेदेषु रचनात्रयभेदनिबन्धनं तेषु त्रयित्व मव्याहत मेव। अत एव, सामवेदे ऋचां यजुषां

च पाठा विद्यन्ते एवं यजुर्वेदेऽपि ऋचां पाठा उपलभ्यन्ते, तत् कथ मसाङ्कर्यं सामादिलक्षणाना मित्याशङ्क्य सिद्धान्तितं माधवाचार्येण,—अस्तु सामादिनामतः सम्प्रति प्रसिद्धेषु ग्रन्थेषु यजुरादीनां साङ्कर्यम्, परं न हि तेन सामादिलक्षणानां साङ्कर्यं सम्पद्यते। ऋगादिलक्षणानि तु सर्वथा अव्याप्त्यति-व्याप्तिदोषशून्यान्येवेति इदानीन्तनाध्यापकप्रसिद्धिविरुद्धा एव ऋगादयः शास्त्रसम्मता इति। तथाहि—"नर्क्सामयजुषां लक्ष्म साङ्कर्यादिति शङ्किते। पादश्च गीतिःप्रश्लिष्टपाठ इत्यस्त्य-सङ्करः॥ * * *। तत्र त्रिविधाना मृक्सामयजुषां व्यव-स्थितं लक्षणं नास्ति। कुतः? साङ्कर्यस्य दुष्परिहरत्वात्। अध्यापकप्रसिद्धेषु ऋग्वेदादिषु पठितो मन्त्रः'—इति हि लक्षणं वक्तव्यम्, तच्च सङ्कीर्णम्। 'देवो वः सवितोत्पुनात्व-च्छिद्रेण वसोः सूर्यस्य रश्मिभिः'—इत्ययं मन्त्रो यजुर्वेदे सम्प्रति-पन्नो यजुषां मध्ये (तै० सं० १. १. ५. १.) पठितः; न च तस्य यजुष्ट्व मस्ति, तद्ब्राह्मणे सावित्र्यर्चं त्वाकत्वेन व्यवहृतत्वात्। 'एतत् साम गायन्नास्ते'—इति प्रतिज्ञाय किञ्चित् साम यजु-र्वेदेऽङ्गीकृतम् (तै० सं० आ० ९. १०. ५.)। 'अक्षित मसि। अच्युत मसि। प्राणसंशित मसि'—इति त्रीणि यजूंषि सामवेदे समाम्नातानि (छा० ब्रा० ३. १७. ६.)। तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायन्ते। तस्मान्नास्ति लक्षण मिति चेत्, न; पादादीना मसङ्कीर्णलक्षणत्वात्। 'पादबन्धे-नार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः', 'गीतिरूपा मन्त्राः सामानि', 'वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि'—इत्युक्ते न क्वापि सङ्करः (अधि० मा० २. १. ५०.)"—इति।

एवञ्च इदानीन्तनाध्यापकप्रसिद्धितो वेदनामग्रहो मुग्धकर एव। वस्तुतो यत्र क्व च ग्रन्थेऽग्रन्थे वा यस्य कस्यचिन्मन्त्रस्य पादबन्धेनार्थेनोपेतत्वं वृत्तवद्धत्वञ्च दृश्यते, सोऽवश्य मेव ऋङ्मन्त्रः; एवं यत्र क्व च ग्रन्थेऽग्रन्थे वा यस्य कस्यचिन्मन्त्रस्य गीत्यात्मकत्वं दृश्यते, सोऽवश्य मेव साममन्त्रः; तथैव यत्र क्व च ग्रन्थेऽग्रन्थे वा यस्य कस्यचिन्मन्त्रस्य यजुष्ट्वं दृश्यते, सोऽवश्यं यजुर्मन्त्रः। एतदेवाङ्गीकृत्य स्मृतं बह्वृक्प्रातिशाख्यव्याख्याने विष्णुमित्रेण—"तथाचोक्तम्—'यः कश्चित् पादवान् मन्त्रो युक्ता-श्चाक्षरसम्पदा। स्वरयुक्तोऽवसाने च ता ऋचं परिजानते'–इति" –इत्यादि। अतएव यास्कीये निरुक्ते ऋगिति प्रदर्शितं यजु-स्सामब्राह्मणीयवचनम् 'अङ्गादङ्गात् सम्भवसि'-इति। न हि एत-द्वचन मस्ति क्व चिदपि ऋक्संहितायाम्, प्रत्युत अस्त्येव शत-पथब्राह्मणे (१४. ९. ४. २६.), सामवेदीयमन्त्रब्राह्मणे (१. ५. १७.) च। यदि नाम ऋक्संहितावचनाना मेव ऋक्त्वं यास्का-चार्यसम्मतं स्यात्, तर्हि कथ मुच्येतास्य "तदेतदृक्श्लोकाभ्याम् (३. १. ४.)"–इत्यादि। तदेव मेवैषाचार्यप्रवृत्तिर्ज्ञापयति यत्र क्वापि वेदे स्यात् ऋग्लक्षणो मन्त्रः, भवत्येव ग्रहणं तस्य ऋगिति; एवं यजुरपीति। एवञ्च ग्रन्थानां कालकृतबहुत्वेऽपि वेदस्य त्रैविध्यं तदनु त्रयीत्वञ्च यथा पुरा तथाद्यापि सुस्थित मित्यथर्ववेदोऽपि नास्माद् भिन्नः; तस्यापि ऋग्यजुर्मयत्वात्। अपि च यथा सामबहुले सामवेदइतिप्रसिद्धेऽपि ग्रन्थे पठिताना मृचा मृक्त्वं यजुषां यजुष्ट्व मुररीकार्यं मेव, न च तत्स्वीकारात् तस्य सामवेदत्वं विहन्यते; तथैव अथर्वकृत्याबहुले अथर्ववेद-इतिप्रसिद्धेऽपि ग्रन्थे पठिताना मृचा मृक्त्वं यजुषाञ्च यजुष्ट्वं

कथं न स्वीकार्यम्? तथा स्वीकृते च तस्य अथर्ववेदत्वं कथं वा विहन्येत? एवं हि 'अस्त्वथर्ववेदस्य स्वातन्त्र्यम्, तदीय-मन्त्राणां केषाञ्चिद्दृक्त्वं केषाञ्चिच्च यजुष्ट्वं न केनापि कदापि कथमपि वारितुं शक्यते। तत् सिद्धमेतत्,—वेदानां ग्रन्थ-भेदकृतचतुष्ट्वेऽपि रचनाभेदकृतत्रयीत्वे न कोऽप्यस्ति संशयः। अत एवैवमुक्तं दृश्यते सर्वानुक्रमणीवृत्तौ—"विनियोक्तव्यरूपश्च त्रिविधः सम्प्रदर्श्यते। ऋग्यजुःसामरूपेण मन्त्रो वेदचतुष्टये। अहिर्बुध्नीय मन्त्रं मे गोपायेत्यभिधीयते। ऋक् पादबद्धो, गीतस्तु साम, गद्यं यजुर्मन्त्रः। चतुर्ष्वपि हि वेदेषु त्रिधैव विनियुज्यते"–इति।

यच्चोक्तम्,—छान्दोग्यादिषु प्राचीनतमेषु ग्रन्थेषु ऋग्यजुस्साम-नाम्नामेवोल्लेख; तदपेक्षयार्वाचीनेषु बृहदारण्यकादिष्वेवाथर्ववेदस्येति, तदिदं तेषामेकदेशदर्शित्वमेवावेदयति; सर्वत्र सर्वविधदर्शनात्। तथाहि, तत्रैव छान्दोग्ये—"ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणञ्चतुर्थम् (७. ७.)"—इति च। तत्रैव मनुसंहितायामपि—(९. २९.) "अभिचारेषु", "कृत्यासु"—इति। तत्रैव शतपथब्राह्मणेऽपि—"त्रयो वेदा अजायन्त (११. ५. ८.)"—इत्यादि च। तत्रैव महाभारतेऽपि—"अग्निहोत्रं त्रयी विद्या (१. १००. ६५.)", "कच्चिद्धर्मे त्रयीमूले (२. ५. ९८.)", "न सामऋग्यजुर्वर्णाः (३. १५०. १३.)"—इत्यादि च। किम्बहुना यत्र क्वच ग्रन्थे वेदस्य त्रित्वं दृश्यते तत्र सर्वत्रैव चतुष्ट्वमपि। तदेवं ग्रन्थानां प्राचीनत्वार्वाचीनत्व-भेद एव वेदस्य त्रित्वचतुष्ट्वरूपवैविध्यवर्णने बीजमिति मतं सर्वथैवापास्तम्॥

अथर्ववेदस्याधुनिकत्वे पाणिनेरस्मरण मपि मानान्तर मित्युक्तिश्च तेषां तथैव। तथाहि—ऋक्, यजुः, साम—इमानि तु मन्त्रलक्षणानि; ऋग्लक्षणो मन्त्रः, यजुर्लक्षणो मन्त्रः, सामलक्षणो मन्त्र इति। तादृशमन्त्रनिबद्धा एव सर्वे वेदाः, अतः खलु तेषां ग्रहणेनैव सर्ववेदानां ग्रहणं सम्पद्यते; सूत्राणा मेव ग्रहणेनैव यथा सर्वेषा मेव पटाना मिति। अथर्वेति तु न किंविधस्यापि मन्त्रस्य लक्षणम्; अपि तु यथा शाकलादिशाखानां साधारणं नाम ऋग्वेद इति, यथा च कौथुमादिशाखानां साधारणं नाम सामवेद इति; तथैव शौनकादिशाखानां साधारणं नाम अथर्ववेद इति। शाकलादिसंहिताग्रन्थानान्तु नास्ति दृष्टत्वम्; अपि तु पाणिनेरतिपूर्वतनीयत्वादार्षत्वाच्च प्रोक्तत्वं पाणिनिसम्मतम्। अत एव यथाप्रयोजनं प्रोक्ताधिकारे एव शाकलादीना मुल्लेखः कृतः पाणिनिना "शाकलाद्वा (४. ३. १२८.)"—इत्यादिभिः सूत्रैः; तत्राथर्ववेदीयशौनकसंहितादीना मप्यस्त्येवोल्लेखः—"शौनकादिभ्यश्छन्दसि (४. ३. १०५.)"—इति। तस्मिंश्च सूत्रे 'छन्दसि'—इतिदर्शनादिदञ्च ज्ञायते,—प्रोक्तत्वेन ग्राह्योऽपि न छान्दसः, एव मप्यासीदेव कश्चन ग्रन्थः शौनकीयः पाणिनेर्विदित इति। स च ग्रन्थः खल्वथर्ववेदीय शिक्षैव। तत एव तत्र प्रत्युदाहृतं नागेशेन "शौनकीया शिक्षा"—इति। अथर्ववेदीयकल्पस्यापि ग्रहणं कृत मेव तत्र प्रोक्ताधिकारे—"काश्यपकौशिकाभ्या मृषिभ्यां णिनिः (४. ३. १०३.)"—इति। चतुरध्यायी कौशिकसूत्र मथर्ववेदीयं सुप्रसिद्ध मेव। किञ्च तत्रैव प्रोक्ताधिकारे यथैव "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः (४. ३. १२९)"—इति

सूचितम्, तथैव "आथर्वणिकस्येकलोपश्च (४. ३. १३३.)-इत्यपि। तथा, यथैव छन्दोगानां धर्म्म आम्नायो वा इत्यर्थे साधितं छान्दोग्य मिति, तथैव आथर्वणिकानां धर्म्म आम्नायो वा इत्यर्थे साधित मेव आथर्वण इति पदम्। "चरणाद्धर्म्माम्नायोः (४. ३. १२६.)"-इति वार्त्तिकञ्च पाणिनितात्पर्य्याख्यानपर मेव न तु वाचनिक मित्यपि तत्रैव भाष्ये स्फुटम्। तथाहि—"न चेदानी मन्यदाथर्वणिकानां स्वं भवितु मर्हति, अन्यदतो धर्म्माद्वा आम्नायाद्वा"-इति। वस्तुतः सर्वत्रैव "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्"-इत्येव भाष्यसम्मतम्। तदित्थ मथर्ववेदास्तित्वज्ञानं पाणिनेरासीन्नवेति विचारस्तु दूरे आस्ताम्, प्रत्युत अथर्ववेदीया शौनकसंहिता, अथर्ववेदीयं कल्पसूत्रं चतुरध्यायात्मकं कौशिकं नाम, अथर्ववेदीया शिक्षा, अथर्ववेदीयानां पाठप्रकाराद्यात्मको धर्म्मश्चेति सर्वाण्येतानि आसन्नेव तस्य पाणिनेर्विदितानीति ध्रुवम्।

निरुक्तकारो यास्कः पाणिनेः पूर्वतनः,-इति वादिनां तेषां निरुक्तेऽसकृदेवाथर्ववेदीयनिगमोद्धृतिदर्शनात् कथं न तस्याथर्ववेदस्य यास्कावद्धपूर्वदृष्टत्वं तत एव पाणिनिविदितत्वं च स्वीकार्यं भवेत्? तदथर्ववेदस्य पाणिनिविदितत्वाविदितत्वविचारस्त्वस्तु पेटिकाबद्धः, तेषां नये हि तत्पूर्वजस्य यास्कस्यापि विदित एवासीत्स इत्युपपद्यते। तथाहि "शतं जीव शरदो वर्द्धमानः"—इति (१३. ४. ७.)—निगमस्तु तेनाथर्ववेदत एव लब्धः (स० २०. ८. ६. ९.)। अन्यत्र चोक्तम् "एकं पादं नोत्खिदतीत्यपि निगमो भवति (१२. ३. १०.)"-इति। एषोऽपि निगमोऽथर्वसंहितात एव लब्धः; श्रूयते हि तत्रैवैकादशकाण्डीय-

द्वितीयानुवाकान्त्यसूक्ताद्येयमृक् "एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्"—इत्यादि। किञ्चैतन्निरुक्ते निघण्टुस्थितस्यैकपादित्यस्यैष एव निगमोऽन्यत्र वैश्वदेव्याद्यृक्षु तु निपात एवेतिनिर्णयात् निघण्टुसमाम्नायश्रवणात् पुराप्यासीदथर्ववेद इति यास्कसम्मत मेवेति चोपलभ्यते। निघण्टोश्च समाम्नायत्वं यास्केनासकृदुक्तम् (१. १. १; ६, ५.)। तस्मात् सर्ववेदसमकालिकत्व मेवाथर्ववेदस्येत्यत्र सन्देहलेशोऽप्ययुक्त एवेत्यस्माकम् ॥

वस्तुतो यज्ञीयहौत्रादिकार्यानुसारत एव चतस्रः संहिताः समाम्नाताः; यत्र च यदीयं विधानादिकं श्रूयते, तदेव तस्य ब्राह्मण मिति च। तदुक्तं सर्वानुक्रमणीवृत्तिभूमिकायाम् "विनियोक्तव्यरूपो यः स मन्त्र इति चच्यते। विधिस्तुतिकरं शेषं ब्राह्मणं कथयन्ति हि"-इति। एव मेकस्यैव वेदस्य चतुर्धा विभागः सम्पन्नस्तत्र कः संशयः। सामवेदीयौद्गात्रग्रन्थयोः प्रकरणसन्निवेशदर्शनेन च यज्ञकार्यसौकर्यायैवैकस्य वेदस्य चतुर्भेदाः कृता इत्याभाति स्फुट मेव; तयोरुभयोरेव हि ग्रन्थयोः क्रमात् दशरात्र-संवत्सर-एकाह-अहीन-सत्र-प्रायश्चित्त-क्षुद्रेतिसप्तपर्वात्मकत्वम्। एव मेव अध्वर्युवेदसंहिताभाष्ये प्रथमानुवाकव्याख्यावतरणिकायां यदाह सायणाचार्यः—"अस्मिन् वेदे समाख्याता दर्शपूर्णमासेष्टिमन्त्रास्त्रिविधाः, आध्वर्यवा याजमाना हौत्रकाश्चेति। * * *। एतेषां मध्ये याजमानानां हौत्राणाञ्च चित्रस्थानीयत्वात् भित्तिस्थानीयाना माध्वर्यवाणा मेवादौ पाठो युज्यते"-इत्यादि, तदपि सङ्गच्छते; यदि हि यज्ञकार्यानुक्रमेणैवैताश्चतस्र एव संहिता ग्रथिता न सुस्तर्हि तस्य तयोक्तिरसङ्गतित्व मेवोपगच्छेन्नामेति। अपि यजुर्वेदीय-

मैत्रायणीयशाखायाः परिच्छेदविन्यासानां प्रत्यक्षसन्दर्शनेनैवा-स्तङ्गच्छेदेवैष संशयस्तत् किं मम प्रमाणपारायणेनेति ।

तथाच निष्पन्न मेतत् ;— होतृव्यवहार्यमन्त्रास्तु सर्व एव ऋचः ; तासा मृचां संहननेनोपनिबद्धो ग्रन्थ एव ऋक्-संहि-तेति सम्पन्नः ; तदर्थविनियोगाद्यभिधायकश्च ग्रन्थ ऋग्ब्राह्मण मिति । तावेव ग्रन्थावधुना ऋग्वेद इति प्रसिद्धौ । अध्वर्यु-व्यवहार्यमन्त्राः प्रायो यजूंषि, ऋचोऽपि सन्ति ; तादृशयजुः-संहननेनोपनिबद्धो ग्रन्थ एव यजुःसंहितेति सम्पन्नः ; तदर्थ-विनियोगाद्यभिधायकश्च ग्रन्थो यजुर्ब्राह्मण मिति । तावेव ग्रन्थावधुना यजुर्वेद इति प्रसिद्धौ । उद्गातृव्यवहार्यमन्त्रास्तु ऋचो, यजूंषि, सामानि च ; तादृशयजुःसाम्नां संहननेनोप-निबद्धो ग्रन्थ एव सामसंहितेति सम्पन्नः ; तदर्थविनियोगा-द्यभिधायकश्च ग्रन्थः सामब्राह्मण मिति । तावेव ग्रन्थावधुना सामवेद इति प्रसिद्धौ । ये, खलु ऋग्वेदमात्रे कृतश्रमाः, अध्यापयन्ति व्यवहरन्ति च ऋग्वेदमात्रम्, त एवाख्यायन्ते ऋग्वेदिन इति । तेषां ब्रह्मयज्ञादिसिद्धये ये केचन मन्त्राः प्रयोजनीयाः, तेऽपि तदीयसंहिताया मन्तर्निविष्टाः । ये खलु यजुर्वेदमात्रे कृतश्रमाः, अध्यापयन्ति व्यवहरन्ति च यजुर्वेद-मात्रम्, त एवाख्यायन्ते यजुर्वेदिन इति ; किञ्च यजुःसंहितायाः मृचा मपि सद्भावात् यजुर्वेदिना ऋग्बोधोऽपि सुतरां सम्पद्यते, अतस्ते "द्विवेदी"—इत्यप्युच्यन्ते ; भाषायां 'दुबे'—इति च । तेषां ब्रह्मयज्ञादिसिद्धये ये केचन मन्त्राः प्रयोजनीयाः, तेऽपि तदीयसंहिताया मन्तर्निविष्टाः । ये खलु सामवेदमात्रे कृत-श्रमाः, अध्यापयन्ति व्यवहरन्ति च सामवेदमात्रम्, त एवा

ख्यायन्ते सामवेदिन इति ; किञ्च सामसंहितायां ऋचां यजुषाञ्च विद्यमानत्वात् सामवेदिना ऋग्यजुषोर्बोधोऽपि सुतरां सम्पद्यते, अतस्ते “त्रिपाठी”–इति, “त्रिवेदी”–इति चोच्यन्ते ; भाषायां ‘तिवाडी’-इति, ‘तिवारी’—इति च। तेषां ब्रह्मयज्ञादिसिद्धये ये केचन मन्त्राः प्रयोजनीयाः, तेऽपि तदीयसंहितायां ब्राह्मणे चान्तर्निविष्टाः। एभ्योऽवशिष्टमन्त्राणां पेटिकारूपा संहत्यैव निबद्धा चतुर्थसंहिता सम्पन्ना। तत्र ऋचोऽपि सन्ति यजूंषि अपि। सैवाथर्वसंहितेति प्रसिद्धा। तदर्थविनियोगाद्यभिधायकस्य ग्रन्थोऽथर्वब्राह्मण मिति। तावेव ग्रन्थावधुना अथर्ववेद इति प्रसिद्धौ। अतो ब्रह्मत्वकार्ये कर्त्तव्ये सर्वासा मेवर्चां सर्वेषा मेव यजुषां सर्वेषाञ्चैव साम्नां बोधः प्रयोजनीयः; तादृशसर्वमन्त्रवेत्तृत्वञ्च ऋग्यजुःसामसंहिताध्ययनवता मपि अथर्वसंहिताध्ययन मन्तरा न सम्भवति, अतो यथा हौत्रे ऋग्वेदः, यथा च आध्वर्यवे यजुर्वेदः, यथैव औद्गात्रे सामवेदः ; तथैव ब्रह्मत्वेऽथर्ववेदः। किञ्च यथा ऋग्वेदस्य होतृवेद इत्यपरं नाम, यथा च यजुर्वेदस्य अध्वर्युवेद इत्यपरं नाम, यथैव सामवेदस्य उद्गातृवेद इत्यपरं नाम ; तथैवाथर्ववेदस्य ब्रह्मवेद इत्यपरं नाम। अपि च ब्रह्मत्वकरणायैवाथर्ववेदाध्ययनं विशेषतः सप्रयोजनम्, तच्च ऋगाद्यध्ययनमृते न सम्भवति, अतोऽथर्ववेदाध्ययनेच्छुभि ऋग्वेदाद्यध्ययन मप्यवश्यं कर्त्तव्य मित्यतो ये त्वथर्ववेदिनस्त एव प्रायश्चतुर्वेदाध्यायिनो भवन्ति, ततः “चतुर्वेदी”–इत्याख्यायन्ते भाषायां ‘चौबे’–इति च।

तदेवं मूलत एकस्यैव वेदस्य रचनाभेदमूलकत्रयीत्वेऽपि हौत्रादिकार्यसौकर्यार्थं कृतं चतुष्ट्व मप्यवश्यं सर्वैरेवादरणीयम्।

## ॥ त्रुटीपत्रम् ॥

( त्रयीपरिचयस्य चतुस्त्रिंशपृष्ठादनन्तरं निवेश्यम् )

तथा ह्युक्त मथर्वसंहिताभाष्ये भगवता सायणेन—"य ऋषय-स्त्रैविदा विदुः । ऋचः सामानि यजूꣳषि"–इति ( तै० ब्रा० १. २. १. २६. ) त्रैविध्यं तु वेदंगतमन्त्राभिप्रायम् । तदुक्तं जैमि-निना— "तच्चोदकेषु मन्त्राख्या । तेषा मृग् यत्रार्थवशेन पाद-व्यवस्था । गीतिषु सामाख्या । शेषे यजुःशब्दः"–इति ( जै० सू० २. १. ३२, ३५, ३६,३७. ) । तदस्मिन्नपि वेदे विद्यत इति न चतुष्ट्वव्याकोपः ।०—०। एवं सारभूतब्रह्मात्मकत्वाद् ब्रह्मकर्त्तव्य-प्रतिपादनाच्चायं ब्रह्मवेद इत्यप्याख्यायते"–इति । तथा चाम्नातं गोपथब्राह्मणे—"चत्वारो वा इमे वेदा ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेद इति । चतस्रो वा इमे होत्राः, हौत्र माध्वर्यव मौद्गात्रं ब्रह्मत्व मिति । तदप्येतदृचोक्तम्— 'चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां माविवेश"–इति ( ऋ० सं० ४. ५८. ३. ) । चत्वारि शृङ्गेति वेदा वा एत उक्ताः"–इत्यादि ( १. २. १७. ) ॥

॥ त्रयीपरिचयस्य मङ्गलाचरणम् ॥

विश्वरूपं प्रणम्याथ नन्दरामं च क्रान्तसम् ।<br>
त्रयीपरिचयं वक्ति श्रीसत्यव्रतसामगः ॥

अतएव दृश्यतेऽत्र निरुक्तेऽपि—"चत्वारि शृङ्गेति वेदा वा एत उक्ताः (१३. १. ७.)"—इति। सिद्ध मित्थं चत्वार एव वेदास्त्रयीशब्दवाच्या इति ॥

---

ते चेमे चत्वार एव वेदा मन्त्रब्राह्मणभेदात् द्विधा भिन्नाः ; अत एवोक्तं यज्ञपरिभाषायां मापस्तम्बेन 'मन्त्रब्राह्मणयोर्वेद-नामधेयम्"–इति।

मन्त्रलक्षणं त्वेव मुक्तं भगवता यास्केन "मन्त्रा मननात् (७. ३. ६.)"–इति। 'तेभ्यः (मन्त्रेभ्यः) हि अध्यात्माधिदैवा-धियज्ञादिमन्तारो मन्यन्ते तदेषां मन्त्रत्वम्"–इति च तत्र दौर्गी वृत्तिः। तथाच 'मननहेतुर्मन्त्रः'–इत्येव लक्षणं सम्पन्नम्।

दूषितञ्चैतल्लक्षणं सायणेन ऋग्भाष्यभूमिकायाम्—'मनन-हेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिः'–इति ; परं न च तत्रोदा-हृतं तादृशं ब्राह्मणवाक्य मेक मपि। तथाचावगम्यते—"तच्चो-दकेषु मन्त्राख्या (जै० सू० २. १. ३२.)"–इतिसूत्रानुगतम् "अभियुक्तानां मन्त्रोऽय मिति समाख्यानं लक्षणम्"–इति विव-क्षया,—'विहितार्थाभिधायको मन्त्रः'–इत्यस्य पूर्वाचार्यविहि-तस्य, असिपदान्तादीनां पञ्चदशानां च मीमांसावृत्तिकृदुदा-हृतानां, मन्त्रलक्षणानां मीमांसाभाष्यकारकृतखण्डनेभ्यः कति-चिदुद्धृत्य दिदर्शयिषया चोद्विग्नचित्तस्तैस्तैकाग्रमना यास्कोक्ति विचारावसरं नालभत स इति। प्रतिपादितञ्चास्माभिर्मीमांसा-कारस्य खलु जैमिनेर्यास्काग्रजत्वं निरुक्तालोचने (चू० पृ०); तथाच जागरितेऽपि हि तादृशे लक्षणे यदुक्तं यास्केन "मन-नान्मन्त्रः"-इति, ततः समाख्या मेवैतल्लक्षण मदुष्ट मिति। अपि

च सायणतः प्राचीनेन, उद्गीथस्वामिनापि हि स्कन्दस्वामिना तत्सूत्रस्य भाष्ये विवक्षितार्थाभिधायकत्वादीनि मन्त्रलक्षणानि खण्डखण्डीकृतानि ; परं न तस्मिन्निरुक्तेऽस्य यास्कीयलक्षणस्यावतरणमपीष्टं तेन ; इतश्च ज्ञायते नैतल्लक्षणं दुष्ट मिति। "अविशिष्टस्तु वाक्यार्थः ( जै० सू० १. २. ४०. )"-इतिसूत्रस्य, "विधिशब्दाश्च ( जै० सू० १. २. ५३. )"-इतिसूत्रस्य च व्याख्यानावसरे, मन्त्राणां मननसाधनत्वं च स स्वय मलक्षयत्—"तु-शब्देन मन्त्राणा मदृष्टार्थ मुच्चारणमात्रं वारयति ०—० तस्मान्मन्त्रोच्चारणस्य अर्थप्रकाशनरूपं दृष्ट मेव प्रयोजनम्"—इति, "तस्माद्विवक्षितार्था मन्त्राः प्रयोगकाले स्वार्थप्रकाशनायैवोच्चारयितव्याः"-इति च। मन्त्राणां मननहेतुरूपलक्षण मनुलक्ष्यैवोक्तिरेषा भगवतो यास्कस्य—"यत्काम ऋषिर्यस्यां देवतायामार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति (निरु० ७.१.१. )"—इति। तदेवं 'मननहेतुर्मन्त्रः'-इति यास्कीयम्, 'मन्त्रोऽय मित्यभियुक्तोपदिष्टो मन्त्रः'—इति च जैमिनीयम्, द्वे एवैते मन्त्रलक्षणे निर्दुष्टे ; यस्मै यद्रोचेत, तदेव स गृह्णात्विति।

अथवान्यैतत् सुष्ठु समाधानम्—जैमिनिकृतं मन्त्रलक्षणं ग्रन्थपरम्, यास्ककृतलक्षणं तु वाक्यपर मिति। तथाच जैमिनि-नये वैदिकसमाख्यासिद्धानां मन्त्रेतिप्रसिद्धानां संहिताग्रन्थानामेव मन्त्रग्रन्थत्वम् ; न त्वन्येषां ताण्ड्यादीनाम् ; यास्कमते तु ग्रन्थानां तथा लक्षणेऽपि न क्षतिः ; परं ताण्ड्यब्राह्मणाद्याध्यायगतानां 'मह्यं वोचः'—इत्यादीनाम्, छान्दोग्यब्राह्मणाद्याध्यायद्वयगतानाञ्च 'देव सवितः प्रसुव'—इत्यादीनाम्, तथा

तैत्तिरीयब्राह्मणपठितानां यजुषां ऋचाञ्च मन्त्रत्वसिद्धये खल्विदं यास्कीयं लक्षण मप्यवश्य मन्तव्यम्—'मननहेतुर्मन्त्रः'-इति। तदेव मुभयलक्षणयोर्विषयभेदात् नैवास्ति विवादविषय इत्य-लाक मिति ॥

"आनन्दपुरवास्तव्य-वज्रटाख्यस्य सूनुना। मन्त्रभाष्य मिदं कृतं भोजे पृथ्वीं प्रशासति"—इत्युक्त्या स्वपरिचय मुक्तवताखिल-यजुर्मन्त्रभाष्यं कृतवता उव्वटेन तत्रैव भूमिकायां प्रदर्शिताश्चैते मन्त्रभेदाः ;—

"न्यायविदः पठन्ति—

'विध्यर्थवादयाच्ञाशीःस्तुतिप्रैषप्रवल्हिकाः।
प्रश्नो व्याकरणं तर्कः पूर्ववृत्तानुकीर्तनम्।
अवधारणं चोपनिषत् वाक्यार्थास्तु त्रयोदश।
मन्त्रेषु ये प्रदृश्यन्ते व्याख्यातश्रुतिचोदिताः।'—इति।

अथ तेषा मुदाहरणानि। तत्र,—

परमेष्ठ्यभिहितः-'अश्वस्तूपरो गो मृगस्ते (वा०स० २४.१.)'-इति।
अर्थवादः—'देवा यज्ञ मतन्वत (वा० स० १९.१२.)'-इत्यनुवाकः।
याञ्चा—'तनूपा अग्नेऽसि तन्वं मे पाहि (वा०स० ३.१७.)'-इति।
आशीः—'आ वो देवास ईमहे (य० वा० स० ४. ५.)'-इति।
स्तुतिः—'अग्निर्मूर्द्धा दिवः ककुत् (य० वा० स० ३.१२.)'-इति।
प्रैषः—'होता यक्षत्समिधाग्निम् (य०वा०स० २१. २९.)'-इति।
प्रवल्हिका—'इन्द्राग्नी अपादियम् (य०वा०स० ३३.९३.)'-इति।
प्रश्नः—'कः स्विदेकाकी चरति (य०वा०स० २३.९.)'-इति।
व्याकरणम्—'सूर्य एकाकी चरति (य०वा०स० २३.१०.)'-इति।
तर्कः—'मा गृधः कस्य स्विद्धनम् (य०वा०स० ४०.१.)'-इति।

पूर्ववृत्तानुकीर्तनम्–'ओषधयस्समवदन्त (वा०स०१२.९६.)'-इति।
अवधारणम्-'तमेव विदित्वातिमृत्युमेति (श्वे०उ० ६.१५.)'-इति।
उपनिषत्—'ईशा वास्य मिदं सर्वम् (वा०स० ४०.१.)'-इति।"

शवरभाष्येऽपि आशिरादयस्त्वयोदशैव मन्त्रभेदाः प्रदर्शिताः, परं तत्त्वन्यथैव ; द्रष्टव्याश्च ते तत्रैव (जै० सू० २.१.३२. भा०)। ऋग्भाष्यभूमिकायां सायणेन तत एव कतिचिदुद्धृताश्च।

उव्वटेन ह्येतानि सर्वाण्येव यजुरेवाधिकृत्योदाहृतानि ; निरुक्तकारेण भगवता यास्केन तु ऋग्वेदीयान्यपि दर्शितानि बहून्युदाहरणानि। तथाहि—"तास्त्रिविधा ऋचः ;—परोक्षकृताः प्रत्यक्षकृताः, आध्यात्मिक्यश्च"—इत्युपक्रम्य, "परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठा अल्पश आध्यात्मिकाः"—इत्युक्त्वा, "अथापि स्तुतिरेव भवति नाशीर्वादः * * * ; अथाप्याशीरेव न स्तुतिः ; तदेतद् बहुल माध्वर्यवे याज्ञेषु च मन्त्रेषु"—इति प्रदर्श्य, उदाहृतानीमानि—"अथापि शपथाभिशापौ ०—० ; अथापि कस्यचिद् भावस्याचिख्यासा ०—० ; अथापि परिदेवना कस्माच्चिद् भावात् ०—० ; एव मुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति"—इति, "अक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च (७. १. ३.)"—इत्येवमादीनि॥

स चैष एव मन्त्रभागः संहितेत्युच्यते। तल्लक्षणं चोक्तं पुरस्तात् समासतः (२१ पृ०)। सा चादौ द्विविधा ;—निर्भुजसंहिता, प्रतृण्णसंहिता, चेति। "अग्निमीळेपुरोहितम् (ऋ० स० १.१.१.१.)"—इत्यादयो यथायथप्रसिद्धपाठा एव निर्भुजसंहिताया उदाहरणानि। यैव निर्भुजसंहिता, सैव आर्षी संहितेत्यप्युच्यते। प्रतृण्णसंहितापि द्विविधा,— पदसंहिता, क्रम-

संहिता चेति नाम। तत्र, "अग्निम्, ईडे, पुरःऽहितम्"—इत्येवं पठ्यते पदसंहिता; अग्निम्. ईडे; ईडे, पुरोहितम्; पुरोहित मिति पुरःऽहितम्"—इत्येवं क्रमसंहितेत्युच्यते। इमा मेव क्रमसंहिता मवलम्ब्य जटाद्या अष्टविधाश्च विकृतयः पठ्यन्ते। तदुक्तं विकृतिवल्ल्याम्—"जटा, माला, शिखा, लेखा, ध्वजो, दण्डो, रथो, घनः। अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः (१. ५.)"—इति। ततो जटादीना मपि क्रमात्मकत्वेन प्रकृतसंहितात्व मेव। तदेव मेकैकमन्त्रस्य एकादशप्रकाराः संहितापाठा भवन्ति। तत्त्वतस्तु पाठप्रकारभेदात् बहुधान्यापि सार्षी संहिता प्रतिवेद मेकैकैवेति॥

तासाञ्च सर्वासा मेव संहितानां बहुप्राचीनत्वात् कालभेद-देशभेद-व्यक्तिभेदादिभिरध्ययनाध्यापनयोरुच्चारणादिभेदाः पाठभेदाश्च सम्पन्नाः, पाठन्यूनातिरिक्तता च किञ्चित् सञ्जाता, आचार्य्याणां प्रकृतिवैषम्यात् स्वस्वदेशकालाद्यनुरोधाच्च अनुष्ठेयभेदाः तत्प्रयोगभेदाश्च सम्पन्नाः; अत एवैकैकापि सा बहुशाखत्व मापन्ना। तदेवोदाहृतञ्च प्राचीनभाषितं चरणषट्कं षड्गुरुशिष्येण—"एकविंशत्यध्वयुक्त मृग्वेद मृषयो विदुः। सहस्राध्वा सामवेदो यजुरेकशताध्वकम्। नवाध्वाथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्"—इति। 'अध्वा, देवता, गतिः, शाखा इति पर्य्यायवाचकाः'—इति च तत्रोक्तं तेनैव।

पातञ्जले महाभाष्येऽप्युक्तं तथैव। तथाहि पस्पशाह्निके—"एकशत मध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेदः"—इति। चरणव्यूहे तु किञ्चित् पार्थक्य मपि। तद्यथा—

"ऋग्वेदस्य ० ० ० शाखाः पञ्च भवन्ति । आश्वलायनी शाङ्खायनी शाकला बाष्कला माण्डुकाश्चेति"—इति (१ ख०)।

"यजुर्वेदस्य षड़शीतिर्भेदा भवन्ति । तत्र चरका नाम द्वादशभेदा भवन्ति । चरका आह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाः आष्ठलकठाश्चारायणीया वारायणीया वार्त्तान्तवेयाः श्वेताश्वतरा औपमन्यवो मैत्रायणीयाश्चेति । तत्र मैत्रायणी नाम सप्तभेदा भवन्ति । मानवा दुन्दुभाश्चैकेया वाराहा हारिद्रवेया श्यामा शामायणीयाश्चेति । ० ० ० । वाजसनेया नाम सप्तदशभेदा भवन्ति । जाबाला बौधेयाः काण्वा माध्यन्दिनाः शापीयास्तापनीयाः कापालाः पौण्ड्रवत्सा आवटिकाः परमावटिकाः पाराशरीया वैरेया वैनेया औधेया गालवा बैजवाः कात्यायनीयाश्चेति । ० ० ० । चतुश्चत्वारिंशदुपग्रन्थाः ।" इति ( २ ख० )।

"सामवेदस्य ० ० ० आसुरायणीया वासुरायणीया वार्त्तान्तवेयाः प्राञ्जला ; ऋग्वर्णभेदाः प्राचीनयोग्या ज्ञानयोग्या चेति । तत्र राणायनी नाम नवभेदा भवन्ति । राणायनीयाः शाट्यायनीयाः सात्यमुग्रलाः खल्वला महाखल्वला लाङ्गला कौथुमा गौतमा जैमिनीयाश्चेति ।"—इति (३ ख०)।

'आसां षोड़शशाखानां मध्ये तिस्रः शाखा विद्यन्ते । गुर्जरदेशे कौथुमी प्रसिद्धा । कर्नाटके जैमिनीया प्रसिद्धा । महाराष्ट्रदेशे तु राणायनीया चेति'–इति तत्र टीकाकृन्महिदासः ।

"अथर्ववेदस्य नव भेदा भवन्ति । पैप्पला दान्ता प्रदान्ता स्नाता स्नौता ब्रह्मदावला शौनकी देवदर्शती चारणविद्याश्चेति ।"—इति (४ ख०)।

" तैत्तिरीयका नाम द्विभेदा भवन्ति । औख्या काण्डिकेया-
" श्चेति । काण्डिकेया नाम पञ्च भेदा भवन्ति । आपस्तम्बी
" बौधायनी सत्याषाढी हिरण्यकेशी औधेयी चेति । ० ० ० । *

विष्णुपुराणादौ तु शाखानां सङ्ख्या नामानि च पृथक् पृथ-
गेव, तदत्र मिहानतिप्राचीनानां भ्रमविजृम्भितानामिव तेषा
मवतारणीनेति । चरणव्यूहादावपि पाठभेदाः सन्त्येवेति ।

वस्तुतस्तु ऋग्वेदस्य शाकलशाङ्खायनभेदात् द्वे एव शाखे
प्रधाने । तत्रैकेन शाकल्याचार्येणाध्यापिता एकैव संहिता
पञ्चभिः शिष्यैरुच्चारणादिभिर्विविधं प्रापिता पञ्चत्व मागता च ।
तथाहि विकृतिकौमुद्याम्—

"शाकल्यस्य मतं शिष्या नैष्ठिकब्रह्मचारिणः ।
पञ्च तेषां गृहस्थास्ते धर्मिष्ठाश्च कुटुम्बिनः ।
शिशिरो वाष्कलः साङ्ख्यो वात्स्यश्चैवाश्वलायनः ।
पञ्चैते शाकलाः शिष्याः शाखाभेदप्रवर्त्तकाः ।'—इति ।

तदेवं शाकलशाखाया एवैते पञ्चोपशाखाः—शैशिरीया,
वाष्कली, साङ्ख्या, वात्स्या, आश्वलायनी । आसां पञ्चाना मेव
शाखानां शाकलत्वम् । अतएव "ऋग्वेदे शैशिरीयायां संहि-
तायां यथाक्रमम् । प्रमाण मनुवाकानां सूक्तैः शृणुत
शाकलाः ।"—इति शौनकीयानुक्रमणी-व्याख्यानावसरे प्राह
षड्गुरुशिष्यः—'सर्वेषां (शैशिरीयादिपञ्चशाखाधेतॄणाम्) शाक-
लत्व मुक्तम्'—इति । आसा मेव पञ्चानां जटाद्यष्टविधपाठ-
नियामिका अस्ति व्याडिप्रणीता 'विकृतिवल्ली' नाम । अपराः
षोडश शाखाः शाङ्खायनभेदाः एव । तासां जटाद्यष्टविधपाठ-

* इमाश्चिह्नः पंक्तयः ४० पृष्ठे १२ पंक्तौ चतुरिल्यतः प्राक् पाठ्याः ।

नियामकोऽप्यस्ति शाखुकेयप्रणीतो ग्रन्थः। कौषीतकी शाखापि शाङ्खायनविशेषैव। तदित्थ मादौ द्विधा भिन्नापि ऋक्संहिता क्रमादेकविंशतिधा सञ्जाता। तत्र चरणव्यूहरचनाकाले या पञ्च स्थिताः, तासा मेव नामानि तत्र गृहीतानीति निष्कर्षः।

एवं यजुषा मपि संहिता प्रथमं त्रिधैव। ततः कालादून-विंशतिश्चरकाध्वर्युशाखाः, सप्तदश वाजसनेयशाखाः, षट् तैत्ति-रीया इति द्विचत्वारिंशत्।

इत्थं बहुशाखत्वेऽप्येकैकस्य वेदस्य, एकैकस्याः शाखाया अध्ययनेनैव भवेदेवाधीत एकैको वेदः; सर्वास्वेवैकवेदीय-शाखासु संहितायाः प्रायोऽभेदात्। किञ्चिन्मन्त्रन्यूनातिरिक्तेन, किञ्चित्पाठव्यतिक्रमेण किञ्चिदुच्चारणभेदेन किञ्चिदनुष्ठानविधि-पार्थक्येन च न स्वरूपतो विभिन्नत्वम्; जागर्त्त्येव ह्येष न्यायः 'एकदेशविकृत मनन्यवत् ( पा० सू० १. १. ७२. भा० )'–इति; भवत्येव हि छिन्नपुच्छे शुनि श्वेतिव्यवहारो लोके। अत एव सायणाचार्यादिभिरेकैकैव शाखा व्याख्याता, तथापि च सर्व-वेदव्याख्याने आत्मनः कृतकृत्यतेति। एवं "वेदः कृत्स्नोऽधि-गन्तव्यः ( २. १६५. )"—इति "षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् ( ३. १. )"—इति, "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ( ३. २. )"—इति च मनुवचनानि सङ्ग-च्छन्ते; शाखानां मन्त्रगतप्रकृतपार्थक्ये हि कथं सम्भवेन्नामाध्य-यनं द्वादशस्वेवाब्देषु सहस्रशाखस्य सामवेदस्य? ततस्तादृश-स्मृतिवचनाना मुन्मत्तप्रलपितत्व मेव प्रसजेतेति। अतोऽत्रैव मेवावधार्यम्,—वेदशाखाभेदो न मन्वाद्यध्यायभेदतुल्यः, प्रत्युत भिन्नकाललिखितानां भिन्नदेशीयाना मेकग्रन्थीयाना मपि

बहुतरादर्शपुस्तकानां यथा भवत्येव पाठादिभेदः, प्रायस्तथैव। वेदाना मनुश्रवत्वं बहुप्राचीनत्वं शाखाप्रवर्त्तकानां प्रवचने किञ्चित् स्वातन्त्र्यं चेह बीजानि। अथाप्यत्र संशयश्चेत् कस्याप्येकस्य वेदस्य कयोरपि शाखयोराद्यन्तपाठसन्दर्भेनैव तद्दूरोत्सारणं सुकर मेवेति भवेन्निवृत्तः कोलाहलः।

परन्त्वेव मपि यजुर्वेदस्य वाजसनेय-तैत्तिरीययोः शाखयोरेवं मिथः पार्थक्य मुपलभ्यते, यत्तयोरुभयोः शुक्लत्वकृष्णत्वेऽभंसत प्राचीनाः। तथाच जाबालादीनां समदशवाजसनेयशाखानां शुक्लयजुरिति ख्यातिः; औख्यादीनां तैत्तिरीयाणान्तु षण्णां यजुःशाखानां कृष्णयजुरिति समाख्या चेति। इदमासदृशभेदकारणं शतपथश्रुत्यादितात्पर्यतोऽवगन्तव्यम्।

तथाच वैदिकमन्त्रभागः ऋग्-यजुः-सामेतित्रिविधरचनात्मकोऽपि हौत्राध्वर्यवौद्गात्रब्राह्मेति चतुःसंहितात्मकः, कालेन शुक्लकृष्णेति द्वैविध्यं गते च यजुषि, सम्प्रति राजते पञ्चसंहितात्मक एव ;—ऋग्वेदसंहिता, शुक्लयजुर्वेदसंहिता, कृष्णयजुर्वेदसंहिता, सामवेदसंहिता, अथर्ववेदसंहितेति॥

अथासु च पञ्चसु वेदसंहितासु बहुधैव पौर्वापर्यं केचिदाहुरन्यदेशीयाः। तथाहि– 'ऋक्संहितायाः सर्वत एव प्राथम्यम्; तत्रापि द्वितीयमण्डलस्यापेक्षिकनूतनत्वम्, दशममण्डलस्य तु ऋक्संहितापरिशिष्टरूपत्वञ्च; सामसंहितायास्तु तत एवोद्धृतार्चिकमूलकत्वम्; शुक्लयजुःसंहितायाः तदपेक्षयाप्यर्वाचीनत्वम्; अथर्वसंहितायास्तु सर्ववेदपरिशिष्टत्वेन ततोऽप्यर्वाचीनत्वम्'–इति। वेदतत्त्वानुसन्धित्सुभिः प्राज्ञतमैरेवेदं तत्त्व मुन्नावित मित्यत्र विश्वास एवोचितः सर्वेषाम्; परं किं कुर्मो

वयं नानास्माकं बुद्धिः प्रसरति ; एकस्मिन्नेव हि काले, एकस्यैवाचार्यस्य, एकेनैव च चयनयत्नेन चतुष्ट्व मापन्नानां पौर्वापर्यं कथङ्कारं स्यादिति । यदि कश्चित् फलविक्रयी,—आम्रार्थी आम्र मेव गृह्णातु, जम्ब्वर्थी जम्बु मेव, पनसार्थी पनस मेव, राजादनार्थी राजादन मेवेति क्रयविक्रयसौकर्यार्थ मेकदैवैकेनैव यत्नेनैक मेव फलराशिं विभज्य चयनेन चतुरः स्तूपान् विदध्यात् ; तत्र कः खलु धीर एवं वदितु मुत्सहेत,—अयं स्तूपः पूर्वं कृतः, अत्राप्यय मंशो नूतन इत्यादि ? तथैवात्रापि । किञ्च यथास्त्येव तत्र फलाना मुत्पत्तौ कालपौर्वापर्यम्, न ह्येककालजातान्येव तानि सर्वाणि ; एव मत्रापि अस्तु मन्त्राणा मुत्पत्तौ कालपौर्वापर्यम्; न ह्येककालोत्पन्नास्त इति स्यात् सत्य मेव ; परं न हि तेन स्तूपानां संहितानां वा प्राचीनत्वार्वाचीनत्वविचारः कथ मपि सङ्गच्छते ; फलानां मन्त्राणाञ्चोत्पत्तिकालविचारस्तु स्तूपानां संहिताना मुत्पत्तिकालविचारतः सर्वथा स्वतन्त्र एवेति बहुशास्त्रपारावारदृश्वानां विश्वविख्यातकीर्त्तीना मपि तेषा मत्र तद्वचो न प्रमाणकोटिं प्रवेष्टु मिष्ट इत्यस्माकम् ॥

तथापीदं विचार्यते कथङ्कार मृक्संहितायाः प्राथम्य मिति ;—

स्मर्यते हि मनुसंहितायाम्—"ऋग्यजुस्सामलक्षणम् (२. ११.)"—इति । एवमादौ ऋग्वेदस्य प्रथमप्रयोगदर्शनादेव तस्यैव वेदेषु प्राथम्यं गम्यत इति चेन्न ; तादृशसमस्तप्रयोगे हि शब्दानुशासनादेव ऋक्शब्दस्य पूर्वनिपातो भवति । तथा हि पाणिनिसूत्रम्—"अल्पाच्तरम् (२. २. ३४)"—इति यद्येवम्प्रयोगादेव प्राथम्यं गम्येत, तर्हि "विन्ध्यकिष्किन्ध्यहिमालयाः"—इत्युक्ते विन्ध्यस्यैव प्राथम्य मुररीकार्यं स्यात् । अस-

मन्त्रप्रयोगेषु च यत्र यत्र ऋक्शब्दस्य प्रथमतः प्रयोगो दृश्यते, तत्र सर्वत्र प्रयोक्तुर्यादृच्छिकत्व मेव बीजम्। अपिवा पद्यगद्यगानात्मिकासु त्रिविधरचनासु तत्त्वतो गानरचनाया एव ज्यायस्त्वेऽपि पद्यरचनायास्तदस्थिरूपत्वेन ततोऽपि गरीयस्त्व मवश्य मभ्युपगन्तव्य मिति रचनानियमाधीन मेव प्राधान्य मृचां बहुत्र आद्युल्लेखे निदानम्। तदेवं सर्वत्रैवर्क्शब्दस्य प्रथमप्रयोग एव ऋग्वेदस्य सर्ववेदप्राथम्ये विनिगमक मिति तेषां मनोराज्यविजृम्भणमात्र मेव।

श्रूयते यच्च कौषीतकीब्राह्मणे—"तत्परिचरणावितरौ (६. ११.)"—इति। तेन खलु यज्ञकाण्डे होमकर्मण एव प्राधान्यम्, होमार्थ मेव अध्वर्युकल्प मुद्गातृकल्पञ्चेत्येव बोधितम्; नैतस्माद्वचां प्रथमोत्पन्नत्वं कथ मपि बुध्यते। एवञ्चास्य वचनस्यापि तद्विषयकमानत्वेनोपन्यासो वृथैव।

सर्ववेदभाष्यकारस्य श्रीमतः सायणाचार्यस्य ऋग्वेदभाष्यभूमिकायाम्—"मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र तत्राध्वर्युणा प्रयोज्या ऋचो बह्व आम्नाताः। साम्नान्तु सर्वेषा मृगाश्रितत्वं प्रसिद्धम्। आथर्वणिकैरपि स्वकीयसंहिताया मृच एव बाहुल्येनाधीयन्ते"—इत्युक्तिश्च दृश्यते सत्यम्; पर मेतस्मादपि ऋग्वेदस्य प्राथम्ये सायणसम्मतिर्न बुध्यते; अपि तु मन्त्रेषु ऋचां बाहुल्य मित्येव ध्वन्यते। किञ्चर्चां प्राधान्याख्याने च ऋक्संहिताया नैव प्राधान्यं गम्यते; ततोऽन्यत्रापि ऋचां सद्भावात्। तत्त्वतस्त्वृचां रचनानियमाधीनं बाहुल्यमूलकं वा प्राधान्य मुररीकुर्वतोऽपि सायणस्य मते ऋग्वेदस्य त्वप्राधान्य मेव। तथा ह्युक्तं तैत्तिरीयभाष्यभूमिकायाम्—"आनुपूर्व्या कर्मणां स्वरूपं

यजुर्वेदे समाम्नातम्। तत्र विशेषापेक्षाया मपेक्षितायां याज्यापुरोऽनुवाक्यादय ऋग्वेदे समाम्नायन्ते, स्तोत्रादीनि तु सामवेदे। तथा सति भित्तिस्थानीयो यजुर्वेदः, चित्रस्थानीयावितरौ। तस्मात् कर्मसु यजुर्वेदस्य प्राधान्यम्"—इति। सामभाष्यभूमिकायाञ्च— "अध्वर्युमुख्यैर्ऋत्विग्भिश्चतुर्भिर्यज्ञसम्पदः। निर्मिमीते क्रियासङ्घैरध्वर्युर्यज्ञियं वपुः। तदलं कुरुते होता ब्रह्मोद्गातेत्यमी त्रयः। * * *। यत्तं यजुर्भिरध्वर्युर्निर्मिमीते ततो यजुः। व्याख्यातं प्रथमं पश्चादृचां व्याख्यान मीरितम्। साम्ना मृगाश्रितत्वेन सामव्याख्याथ वर्ण्यते"—इति। वस्तुतो जगत्सृष्टेः पूर्वैव ब्रह्मणश्चतुर्भ्यो वदनेभ्यश्चत्वारो वेदा युगपत् समुत्पन्ना इत्येवंवादिनां पौराणिककालप्रभवाणां श्रीमत्सायणादीनां तथाविधविचारे मनोनिवेशोऽप्यसम्भव एव; तेषां तादृशाभिरस्कविचारप्रवृत्तौ भवेदेव हि स्वसिद्धान्तव्याकोपः।

किञ्च ऋक्संहितायाः प्राथम्येऽभ्युपगते ऋक्संहिताप्रणयनकाले यजुःसाम्नोरसद्भावात् तत्रैव ऋक्संहितायां यजुःसाम्नोरुल्लेखः कथङ्कारं श्रूयत इत्येवं तादृशचतुरचेतसां चेतःसु कथन्न चमत्कार माविर्भूतम्? तथा पश्यन्तु तावत् धीमन्तः— "यजुस्तस्मादजायत (९०. ९.)"–इति, "त मेव ऋषिं त मु ब्रह्माण माहुर्यज्ञन्यं सामगा मुक्थशासम् (१०७. ६.)"–इति, "ऋक्सामाभ्या मभिहितौ (८५. ११.)"—इत्येवमादीनि। इमानि तु निदर्शनानि ऋग्वेदीयदशममण्डलादाहृतानि; दशममण्डलस्यानतिप्राचीनत्व मेव तेषा मिति चेत्, ततोऽन्यतोऽपि दर्शयामः। तद्यथा—"गायत्साम नभन्यम् (१७३. १.)–इत्याद्यमण्डलीयम्, "यजुषा रत्नमाणः (६२. ५.)"–इति, "तमु

सामानि यन्ति (४४. १४.)"-इति च पञ्चममण्डलस्य। साम-विशेषनामान्यपि श्रूयन्ते ऋक्संहितायाम्। तद्यथा—"रथन्तर मा जभारा वसिष्टः (१८१. १.)"-इति, "भरद्वाजो बृहदाचक्रे अग्ने:"-इति (१८१.२.) च। एते च निदर्शने दशममण्डलीये इत्येवाशाहेत तेषा मिति चेत्, अन्यत्राप्यमेव। तद्यथा—"रथ-न्तरे सूर्यम्पर्यपश्यत् ( १६४. २५. )"-इति प्रथममण्डलीयम्, "प्र गायत्रेण गायत ( ८. ६०. १. )"-इति च नवममण्डलीय मिति दिक्। तदेव ऋक्संहितायाः ऋङ्लक्षणमन्त्राणां वा प्रथमरचितत्वं तेषां स्वकपोलकल्पित मिवाभातीति ॥

यदप्युक्तं तद्द्वितीयमण्डलस्य अपेक्षाकृत मर्वाचीनत्वं तद-प्येव मेव; मानाभावात्। कश्च खलु धीमान् शुष्कतृणसहाय एव वटविटपिदुर्गच्छेदने समर्थो भवेत्? अस्ति खलु ऋक्-संहिताद्वितीयमण्डलीयसायणभाष्यारम्भे "य आङ्गिरसः शौन-होत्रो भूत्वा भार्गवः शौनकोऽभवत् स गृत्समदो द्वितीयं मण्डल मपश्यत्"-इत्यनुक्रमणीवचन मुद्धृतम्। तथाच द्वितीय-मण्डलस्य शौनकीयत्वं सुव्यक्तम्। शौनकीयग्रन्थस्य च पाणि-निना "शौनकादिभ्यश्छन्दसि ( ४. ३. १०५. )"-इति सूत्रे प्रोक्तत्वस्वीकारात् प्राचीनतमत्वाभावश्च सुतरां स्फुट मित्येवैकेषां युक्तिर्द्वितीयमण्डलस्य चिरात्सिद्धप्राचीनतमत्वखण्डने शुष्कतृण-मयी कर्त्तनी। इह पश्यन्तु तावच्चक्षुष्मन्तः—एकवंशीया-श्चान्यवंशप्रभवाश्च शौनकाः खलु बहव एव;—मन्त्राणां द्रष्टारो बभुवुः शौनकाः, तेभ्योऽन्ये सूक्तानाञ्च द्रष्टारः स्थिता एव शौनकाः; द्वितीयमण्डलस्य द्रष्टा च शौनकस्ततोऽप्यन्य एव; अथर्वशाखाविशेषस्य च प्रवक्ता शौनकोऽप्यन्य एव; तत्तद्वंश-

प्रभवा श्चद्यापि बहुत्र बहवः शौनका राजन्त एव। शौनकादिभ्यश्छन्दसि (४. ३. १०६.)"—इति पाणिनिसूत्रस्य शौनकप्रोक्तग्रन्थ एव विषयः, तथाच शौनकप्रोक्तं अथर्ववेदीयसंहिताग्रन्थं येऽधीयते त एव शौनकिनः; शौनकदृष्टग्रन्थस्तु न चास्य सूत्रस्य विषयः; अनुक्रमण्यान्तु "द्वितीयमण्डलं ऽपश्यत्"—इत्युक्तम्, न तु द्वितीयं मण्डलमवोचदिति। ततश्च शौनकदृष्टत्वमेव द्वितीयमण्डलस्येति शौनकदृष्टं मण्डलं येऽधीयते इति विग्रहे तत्सूत्रस्य प्रवृत्तिरेव नास्तीति तस्य द्वितीयमण्डलस्य प्रोक्तत्वमूलकापेक्षिकार्वाचीनत्वकल्पनं भ्रमविजृम्भितं किन्नेति। वस्तुतः पाणिनिसूत्राणां समालोचनयेदमेव ज्ञायते;—तस्य भगवतः पाणिनेः शाखानामेव प्रोक्तत्वेन ग्रहणमीप्सितम्, तदधीयनर्थ एव च प्रत्ययादयो विहिताः; मन्त्रसूक्तमण्डलादीनान्तु दृष्टत्वेनैव ग्रहणमिति दृश्यतेऽनुक्रमणिकादावपि। न च क्वचिदपि पाणिनीये मण्डलाधीयनर्थे तादृश प्रत्ययविधिर्दृश्यते प्रत्युत शाखाध्यधीयनर्थे एव; सन्ति यथैव ऋग्वेदादीनां शाकलादयः शाखा, तथैवास्ति शौनकसंहितेत्यथर्ववेदस्यापि चिरादेव; एवं यथैव शाकलादिशाखानां प्रोक्तत्वमेव पाणिनिसम्मतम्, तथैव शौनकशाखाया अपि। तत्कथं मम द्वितीयमण्डलाधीयतरि तादृशप्रत्ययप्रसङ्गः? कुतो वा अनुक्रमण्यां यस्य द्रष्टृत्वं भासते, तस्यैवेह बलात् प्रोक्तत्वेन ग्रहणमिति।

यदप्युक्तम्—तस्यैव ऋग्वेदद्वितीयमण्डलस्य प्रथमसूक्तीयद्वितीयस्यां "तवाग्ने होत्रं तव पोत्रमृत्वियं तव नेष्ट्रं त्वमग्निदृतायतः। तव प्रशास्त्रं त्वमध्वरीयसि ब्रह्मा चासि गृहपतिश्च नो दमे"—इत्यस्यामृचि यतो होत्रादीनि याज्ञिकाभिधानानि

श्रूयन्ते, ततश्च ज्ञायते तन्मण्डलं यज्ञकालभव मिति। एतच्च वक्तुरेकदेशदर्शित्व मेव विशदीकरोति। वस्तुतो यज्ञकाले एव हि सर्वासां संहितानां ग्रथनं सम्पन्नम्, ततः संहितासु सर्वत्रैव विद्यन्ते तथाविधपदयुक्ता मन्त्राः; न द्वितीयमण्डले एव। तद्यथा तत्रैव ऋक्संहितायाम्—१. ७६. ४. होत्रम्, पोत्रम्, ८. ४०. ११. ऋत्वियम्, १, १५. ३. नेष्टः, १०. १४. १३. अग्निधम्, १. ९४. ६. प्रशास्ता, १. २३. १६. अध्वरीयताम्, १. ८०. १. ब्रह्मा, १.१२.६. गृहपतिः, १.१. ८.दमे इति। तदेवं होत्रादि-पददर्शनात् तत्तन्मन्त्राणां यज्ञकालजत्वसिद्धेऽपि प्रथममण्ड-लादिभ्यो द्वितीयं मण्डल माधुनिक मिति वक्तुं कथ मपि न युज्यत इति सुव्यक्तम्।

एवं दशममण्डलस्य ऋक्परिशिष्टरूपत्वं कल्पयितुं तैर्भाषा-पार्थक्यप्रदर्शनादिः प्रयासः स्वीकृतः;—दशममण्डलस्य भाषा मन्त्रार्थगततात्पर्याणि च प्रथममण्डलादिभ्यः पृथगेवेति नूनं तस्य नवमण्डल-परिशिष्टरूपत्व मिति तदाशयः। किं मत्र ब्रूमो वयम्? अस्मच्छ्रुतिषु हि दशममण्डलस्य मण्डलान्तराणाञ्च भाषा एकविधैवोपलभ्यते, अस्मद्बुद्धिषु च तथैकविध मेव तात्पर्य मिति न जानीमहे केषां बुद्धिमालिन्यं केषां वा श्रवणेन्द्रिय-दुष्टत्वं केषां वा हठकारित्व मिति।

तत्रतस्तु वेदानां कृतकत्वपक्षे मन्त्राणां बहुकर्तृकत्वात् अनेककालजत्वाच्च भाषातात्पर्ययोः पार्थक्यन्तु प्रतिमन्त्रगत मेवेत्यन्यदेतत्। मण्डलगतपार्थक्यन्तु असम्भव मेव; मण्डल-रूपेण ग्रन्थाविर्भावाभावात्। सर्वास्वेव च शाखासु एकविध-परिच्छेदविभागोऽपि न सम्भवपरः; दृश्यते हि काण्वशाखाया

अध्याया एकचत्वारिंशत्, माध्यन्दिन्यास्तु चत्वारिंशदिति। तदेवं यत्र खलु शाखायां नवपरिच्छेदपरिच्छिन्ना एव सर्वे मन्त्राः, यत्र चैकादशपरिच्छेदपरिच्छिन्ना इमे एव सर्वमन्त्राः, तत्र कथं दशममण्डलस्य परिशिष्टत्वं परिरक्ष्येत ? इदानीं प्रचलितेयं तु संहिता, शाकलबाष्कलेतिशाखाद्वयमिलितेत्येव बुध्यते, अत्र द्विविधपरिच्छेदविभागदर्शनात्। तथाचाष्टकाध्यायवर्गैर्विभागः खलु एकशाखाकृतः, मण्डलानुवाकसूक्तैर्विभागस्त्वपरशाखाकृतः स्फुट मेव प्रतीयते। अष्टकाध्यायवर्गविभक्तसंहितायां किञ्चित् पाठाधिक्य मपि। त एवाधिकाः पाठाः वालखिल्यमन्त्रा उच्यन्ते। न च ते मन्त्राः खिलाखिलकाः; तेषा मपि पदपाठाद्यध्ययनाध्यापनश्रवणात्, "अथ वालखिल्या विहरेत् (उ० २, २, २—२२, )"-इत्याद्याश्वलायनीयश्रौतविधानादिस्मरणात्, निरुक्ते निगमत्वेन व्यपदेशाच्च। अतएवाह च षड्गुरुशिष्यः—'बाष्कलके संहितापाठे अतः शाकलात् अधिकान्यष्टौ सूक्तानि'-इति। भगवता सायणाचार्येण तु शाकलशाखा मधिकृत्यैव व्याख्याता ऋक्संहितेति नैव व्याख्यातानि वालखिल्यानि; परं स्वीकृतान्येवैतरेयभाष्ये तान्यष्टाविति। अपि यथैवान्यत्रान्यत्र, तथैवेहापि वालखिल्याना मष्टसूक्तात्मकत्व मेकादशसूक्तात्मकत्वञ्चेति सूक्तसङ्ख्याविषयकोऽप्यस्ति पाठभेदः। तदेव मष्टकविभागे बाष्कलके दशममण्डल मेव नास्तीति कथङ्कारं भवेत् तस्य परिशिष्टत्व मिति विचार्यं सुधीभिरेव। तथाच पुरा ऋक्संहिताया नवमण्डलात्मकत्व मेवासीत्, ततोऽभवत्तस्या दशममण्डलात्मकत्व मिति कथनं यथा सुकरम्; तथा नेदम्—पुरा सप्तमाष्टकीय-

पञ्चमाध्यायाष्टाविंशतिवर्गान्त मेव ऋक्संहितायाः प्रवचन मासीत्, ततस्तदष्टकीयतदध्यायस्थोनविंशतितमादयो वर्गाः प्रणीताः, अष्टमाष्टकस्य समग्रः प्रणीत इति। न च निरुक्तो दाशतयीतिव्यपदेशाद् दशममण्डलात्मकत्व मेव सर्वक्शाखा-संहितानामिति वाच्यम्; तत्र सर्वत्र दाशतयीति शाकल-शाखासंहिताया एव ग्रहणे बाधाभावात्। किञ्च प्रथमादि-मण्डलेषु श्रुतानां बहूनां सूक्तानाम्, दशममण्डलस्थितानाञ्च बहूनां सूक्तानाम्, द्रष्टारोऽभिन्ना एवावगम्यन्ते; परिशिष्टत्व-वादिनां मते तत् कथ मुपपद्येतेत्यपि विचारयन्तस्त्र माध्यस्थ्य-पद मादधाना एवेति॥

एवं सामवेदीयर्ङ्मन्त्राणा मृक्संहितात उद्धृतत्वकथन मपि प्रौढ़िवादमात्रम्, सृष्टिसूक्ते साममूलानां छन्दसा मपि पृथगु-त्पत्तिश्रवणात्। तथाहि—"तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत (ऋ० सं० १०.९०.९.)"—इति। अस्या मृचि छन्दांसीतिपदेन सामवेदी-यर्चा मेव ग्रहण मिष्टम्; तथैव सर्ववैदिकप्रसिद्धेरिति प्रति-पादितं पुरस्तादपि (१५—१७ पृ०); छन्द इति हि साम-वेदीयार्चिकग्रन्थानां तथा तत्तद्ग्रन्थीयमन्त्राणां च नाम इति केऽधीतवेदा न जानन्ति? पाणिनिना च विशेषतः सामवेदीय-च्छन्दोग्रन्थस्य मन्त्रा एव छन्दस्त्वेन लक्षिताः। तथाहि—"सोऽ-स्यादिरिति छन्दसः प्रगाथेषु (४.२.५५.)"—इति तत्सूत्रम्। 'पङ्क्तिरादिरस्येति पाङ्क्तः प्रगाथः'—इत्यादीनि च तदुदाह-रणानि। प्रगाथास्तु सामवेदे एव दृश्यन्ते, नान्यत्र; विहि-ताश्च ते सामवेदीये ताण्ड्यमहाब्राह्मणे।

किञ्च यतश्च साममूलमन्त्राणां सर्वेषा मेव छन्द इति चिरात्समाख्या, अत एव तेषां गानकारिणः सामवेदिनश्छन्दोगा एवोच्यन्ते ; न तु ते क्वचित् केचिदपि ऋग्गा इति। यतश्च सामवेदिन एव छन्दोगा उच्यन्ते, तत एव सामवेदीयब्राह्मणग्रन्थाना मुपनिषदाञ्च छान्दोग्य मिति समाख्या प्रसिद्धा। व्युत्पादिता च सा पाणिनिनापि "छन्दोगौक्थिक (४.३.१२९)"—इति। एवञ्च यच्च केनचिदुक्तम् 'वेदसंहितासु ये केचन प्राचीनतमश्लोकाः, त एव छन्दांस्यभिधीयन्ते ; ततोऽप्राचीना एव मन्त्राः'—इति, तदिद मपि जलमध्यगतमसीचोदवद्विलीन मेव न वेत्यपि विचारयन्तु त एव।

नन्वेव मपि ऋक्साम्नोरुत्पत्त्यनन्तर मेव छन्दसा मुत्पत्तिश्रवणात् सामवेदीयर्चां ऋग्भ्योऽवरजत्वं यथावत् स्थित मेवातः 'खादितेऽपि लशुने न शान्तो व्याधिः'-इति चेदत्र ब्रूमः ;—तस्माद्यज्ञात्‌सर्वहुत इतिमन्त्रे न हि क्रमोत्पत्तिवर्णन मिष्टम् ; अन्यथा हि ऋगुत्पत्त्यनन्तरं सामोत्पत्तिः, तदनन्तरञ्च छन्दउत्पत्तिः इत्येवं मन्तव्यं स्यात्, तच्चाप्रसिद्धासम्भवदोषग्रस्तं भवेदेव। तथाहि—ऋग्वेदीयर्चोऽवलम्ब्यैव सामानि गीतानीति चेत्, तज्ज्ञातारः खलु ऋग्गा इत्येव प्रसिद्धाः स्युः, न च तथा प्रसिद्धिः दृश्यते तेषां क्वचिदपि लोके वेदे वा; प्रत्युत छन्दोनामप्रसिद्धानां तेषां सामवेदीयर्चां गातृत्वात् सामवेदीयाः छन्दोगा एवोच्यन्ते। एवं साम्नां प्रथम मुत्पत्तिस्ततस्तन्मूलानाञ्छन्दसा मित्यप्यसम्भव मेव। तस्मात् यदैव यतश्च ऋचः प्रादुरभूवन्, तदैव ततश्च सामानि च, साममूलच्छन्दांसि च, यजूंषि चेतित्रयं तन्मन्त्राश्रयः; तथाच सहोत्पत्तिरेवेष्टः। अतएवाथर्ववेदीये तदनुरूपे एव

मन्त्रे सहशब्दश्च श्रूयते—"ऋचः सामानि छन्दांसि पुराणं यजुषा सह। उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः (११, ७, २४,)"–इति। अत्र श्रुतः पुराणशब्दस्तु प्राचीनेतिवृत्तान्वाख्यानपरश्रुतिवाचकः। तदेतस्मान्मन्त्राच्च सर्वविधमन्त्राणां सहोत्पत्तिः सुव्यक्तैव।

किञ्च यदि नाम ऋक्संहितात एव साममयोनिमन्त्रा उद्धृताः स्युः, तर्हि उद्धृतिक्रमत एवेह सामवेदे मन्त्रा दृश्येरन्; न च तथा दृश्यन्ते। अपरञ्च, एव मपि बहवो मन्त्राः सामवेदे सन्ति, येषा मृक्संहितायां श्रवणं नास्त्येव। अथापरं यथैवर्क्संहितायां सूक्तानि, तथैवेह दशतादीनि: ततश्च कुतः कस्योद्धरणं किस्मानकं भवेदिति च स्याद् विचार्य मेव; विचारकाले तु विनिगमकाभाव एव मूर्तिमान् दरीदृश्येतेत्यत्र च कः संशयः।

वस्तुतः पुरा तु ऋगादिलक्षणाः सर्व एव मन्त्रा विकीर्णा एव आसन्, ततो यदैव ऋक्चयनेन ऋग्वेदीयसूक्तानि संगृहीतानि, तदैव तथैव सामवेदीयान्यपि दशतादीनीति किं चित्रम्? एकस्या एव हि ऋचश्चयन मुभयत्रैककालेऽपि सम्भवत्येवेत्यपास्यैतेवोद्धृतिमत मिति॥

अथर्वविचारस्तु कृत एव पुरस्तात् (२३—२५ पृ०)॥

अथ ब्राह्मणम्।—"कर्मचोदना ब्राह्मणानि"–इति चाह आपस्तम्बः (य० प० ३५ सू०)। कर्मचोदना विधिरिति त्वनर्थान्तरम्। विधिश्चैष द्विविध इत्याह सायणः। तथाहि—"विधिरपि द्विविधः; अप्रवृत्तप्रवर्तनम्, अज्ञातज्ञापनञ्चेति। 'आग्नावैष्णवं पुरोडाशं निर्वपति दीक्षणीयायाम्'–इत्याद्याः

कर्मकाण्डगता विधयः अप्रवृत्तप्रवर्त्तकाः; 'आत्मा वा इद मेक एवाग्र आसीत्'-इत्यादयो ब्रह्मकाण्डगता अज्ञातज्ञापका (ऋ० सं० भा० भू० )''-इति ।

ब्राह्मणविशेषस्त्वार्थवादः। तथाच तत्सूत्रम्—''ब्राह्मणशेषो-ऽर्थवादः''-इति ( य० प० २६ )। शेषशेषिभावोऽङ्गाङ्गिभावस्येत्य-नर्थान्तरं मीमांसकानाम्। तच्च प्रतिपादितम् ''अथातः शेष-लक्षणम् ( ३. १. १. )''-इत्यधिकृत्य ''शेषः परार्थत्वात्, द्रव्यगुण-संस्कारेषु बादरिः, कर्मण्यपि जैमिनिः, फलञ्च पुरुषार्थत्वात्, पुरुषश्च कर्मार्थत्वात् ( ३. १. २—६. )''-इति। विधिभिरङ्गा-ङ्गिभावश्चार्थवादानां ते मन्यन्त एव। तथाहि—''आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्य मुच्यते''-इत्यादिभिः षड्भिः सूत्रैः (जै० सू० १. २. १—६.)। अतदर्थानाम्=अक्रि-यार्थानाम्=अर्थवादानाम् आनर्थक्यम्, तस्मात्तेषा मनित्यत्व माशङ्क्य ''विधिना त्वेकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युः''-इत्यादिभिश्च षड्भिः सूत्रैः (जै० सू० १. २. ७—१२.)। विधी-नाम्=‘वायव्यां श्वेत मालभेत’-इत्यादीनाम्=ब्राह्मणवाक्यानां स्तुत्यर्थत्वेनैव 'वायुर्वै क्षेपिष्ठा देवता'-इत्येवमादीना मर्थवाद-वाक्यानां सार्थकता तस्मान्नित्यता च सिद्धान्तिता। एतदेवाभि-प्रेत्याह सायणाचार्यः ''द्विविधं ब्राह्मणम्—विधिः, अर्थवादश्च'' -इति। अर्थवादभेदाश्चैवं निर्णीतास्तेनैवापस्तम्बेन—''निन्दा-प्रशंसा परकृतिः पुराकल्पश्च''-इति ( य० प० ३७ )।

तेषा मर्थवादानां ब्राह्मणत्वं स्वीकृतं निरुक्तेऽपि। तद्यथा —''प्रामित्र मस्याक्षिणी निर्जघानेति च ब्राह्मणम् ( १२. २. ३. )''—इति। अपि चार्थवादानां ब्राह्मणत्व मुररीकुर्वतैव

तेन तेषां तत्त्वख्यापनेऽप्रामाण्यञ्च ध्वनितं तत्र। तथाहि—"बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति (७. ७. २.)"—इत्यादि॥

अत्र त्वेतदपि ज्ञातव्य मस्ति,—सायणस्य प्रदर्शितप्रकारं विधिद्वैधन्तु वैदान्तिकाना मनुरोधतः प्रौढिवादमात्र मिति; कर्म्मचोदनैव विधिरिति आपस्तम्बादियाज्ञिकानां जैमिन्यादिमीमांसकानाञ्च सम्मतत्वात्। न हि केऽपि याज्ञिकाः "आत्मा वा इद मेक एवाग्र आसीत्"—इत्यादीनां विधित्वं मन्यन्ते; अपि त्वर्थवादत्व मेव। शालिकनाथीयप्रकरणपञ्चिकायान्तूक्तम्—"केवलवस्तुवादी वेदभागो नास्ति"—इत्येवमादि। ततश्चार्थवादानां वेदत्व मपि तेषां नये दूरोत्सारितं गम्यते।

विध्यर्थवादयोः प्रकारभेदोदाहरणानि जैमिनीयादौ बाहुल्येनवर्णितानि; लौगाक्षिभास्करीयार्थसङ्ग्रहे, खण्डयज्वना च मीमांसापरिभाषायां सङ्क्षेपेण निर्णीतानि; विधिविचारादिप्रकरणेषु प्रपञ्चितानि च; तेभ्य एव विशेषतोऽवगन्तव्यानि॥

मीमांसावृत्तिकारेण तु ब्राह्मणलक्षणान्येव मुदाहृतानि—'इतिकरणबहुलम्', 'इत्याहोपनिबद्धम्', 'आख्यायिकास्वरूपम्'—इति च। इमानि लक्षणानि प्रायिकाभिप्रायेणोक्तानि; मन्त्रेष्वपि तथादर्शनात्, ब्राह्मणेष्वपि क्वचित्तदभावदर्शनाच्चातिव्याप्त्यव्याप्तिदोषापत्तेरित्याहतुः शबरस्वामिसायणौ। जैमिनिस्तु सूत्रयामास "शेषे ब्राह्मणशब्दः (२. १. ३३.)"—इति। 'मन्त्राश्च ब्राह्मणानि च वेदः, तत्र मन्त्रलक्षणे उक्ते परिशेषसिद्धत्वात् ब्राह्मणलक्षण मवचनीयम्, मन्त्रलक्षणेनैव सिद्धम्,—यस्यैतल्लक्षणं न भवति, तद् ब्राह्मण मिति परिशेषसिद्ध

ब्राह्मणम्'—इति च तद्भाष्यम्। तदेवं निष्पन्न मेतत्—अभि-युक्तानां समाख्यात एव ज्ञेय मेष मन्त्रः, एतद् ब्राह्मण मिति।

तदित्थं तैत्तिरीयसंहितादौ ब्राह्मणलक्षणश्रुतीनाम् तैत्ति-रीयब्राह्मणादौ च ऋगादिलक्षणमन्त्राणाञ्चाध्ययनादपि मन्त्र-संहितात्वं ब्राह्मणग्रन्थत्वं च यथायथ मव्याहत मेव। आप-स्तम्बीयं ब्राह्मणलक्षणन्तु न ग्रन्थपर मपि श्रुतिवाक्यपरम्; यथा जैमिनीयानि ऋगादिलक्षणानीति सङ्क्षेपः।

अत्राप्युदाहरणपरावेतौ प्राचीनश्लोकौ—

"हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना॥
उपमानं दशैवैते विधयो ब्राह्मणस्य तु।
एतद्वै सर्ववेदेषु नियतं विधिलक्षण॥"–इति।

तत्र, (१) हेतुः—"शूर्पेण जुहोति, तेन ह्यन्नं क्रियते"-इति।

(२) निर्वचनम्—"तद्दध्नो दधित्वम्"-इति।

(३) निन्दा—"उपवीता वा एतस्याग्नयः"-इति।

(४) प्रशंसा—"वायुर्वै क्षेपिष्ठा देवता"-इति।

(५) संशयः-"तद्विचिकित्सन् जुहवानी३मा हौषा३म्"-इति।

(६) विधिः—यजमानसम्मिता औदुम्बरी भवति"-इति।

(७) परकृतिः—"माषानेव मह्यं पचति"–इति।

(८) पुराकल्पः—"पुरा ब्राह्मणा अभैषुः"-इति।

(९) व्यवधारणकल्पना—"यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान् निर्वपेत्"-इति।

दशम मुदाहरणन्तु शबरस्वामिना नैव प्रदर्शितम्; तत एव लब्धविधेन सायणेनापि कथङ्कारं भवेद् दर्शितम्? अथवा

लेखकप्रमाद एवात्र भवेन्निदानम्। यथाज्ञानं तदिह प्रदर्श्यते ऽस्माभिः—"स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्रायतन मलब्ध्वा बन्धन मेवोपश्रयत, एव मेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतन मलब्ध्वा प्राण मेवोपश्रयते; प्राणबन्धनं हि सोम्य मन इति (छा० उ० ६. ८. २.)"—इति॥

अथेद मप्यालोचनीयम्—ब्राह्मणग्रन्थेषु खल्वेतत्पद्यद्ग्बोक्तातिरिक्ताना मितिहासादीना मपि कतिविधानां वाक्याना मस्तित्व मुपलभ्यते। तथाहि छान्दोग्ये—"स होवाच ऋग्वेदं भगवोऽध्येमि ०—० इतिहासपुराणम् (७. १. २.)"—इत्यादि। शतपथेऽप्यश्वमेधप्रकरणे—"अथाष्टमेऽहन् ०—० तानुपदिशतीतिहासो वेदः, सोऽय मिति किञ्चिदितिहास माचक्षीतैव मेवाध्वर्युः सम्प्रेष्यति (१३.४.३.१२.)"—इति, "अथ नवमेऽहन् ०—० तानुपदिशति पुराणं वेदः, सोऽय मिति किञ्चित् पुराण माचक्षीतैव मेवाध्वर्युः सम्प्रेष्यति (१३.४.३.१३)"—इति च। तैत्तिरीयेऽपि—"यद् ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतयः (आ० २. ९. २.)"—इति। "ब्राह्मणानि कर्मचोदनाः—'वायव्यं श्वेत मालभेत'—इत्यादयः। इतिहासाः ब्रह्माण्डादिनियमाः—'देवाः सुराः संयत्ता आसन्'—इत्यादयः। 'आत्मा वा इद मेक एवाग्र आसीन्नैवेह किञ्चनासीत्'—इत्यादीनि सृष्ट्यादिप्रतिपादकानि पुराणानि। कल्पाः कल्पसूत्राणि—प्रयोगप्रतिपादकानि। गाथाः गायन्ति-चोदिता मन्त्रविशेषाः—'योऽस्य कौष्ठ्यः'—इत्यादयः (तै० आ० ६.५.२.१.); 'यमगाथाभिः परिगायति'-इति (तै० सं० ५. १. ८. २.) विधानात्। नाराशंसीः नाराशंस्यः 'होतायक्षन्नराशंसम्'—

इत्याद्याः। ब्राह्मणान्तःपठितानामपि पुनरुक्तिः फलातिशयद्योतनार्थम्''-इति च तद्भाष्यं सायणीयम्। तत्त्वतस्त्विह कल्पाः कल्पसूत्रबीजानीत्येव वक्तुमुचितम्; अस्ति वात्र पाठान्तरता? गाथाः श्लोकबद्धाः प्रवादवाक्यरूपा ब्राह्मणग्रन्थेभ्योऽपि प्राचीना एव गम्यन्ते। तद्यथा—"तदेषाभियज्ञगाथा गीयन्ते — 'यजेतो-वामनसा सपत्नीकोऽप्यसोमपः। मातापितृभ्या मनृणार्थाद्यजेति-वचनाच्छ्रुतिः'-इति (ऐ० ब्रा० ७. २९.)"-इति। नाराशंस्यस्तु नरस्तुतिश्रुतयः। तास्त्रिविधा भवन्ति — मन्त्रात्मिकाः, गाथात्मिकाः, ब्राह्मणात्मिकाश्चेति। तद्यथा—"अधि बृबुः पणीनां वर्षिष्ठे मूर्द्धन्नस्थात् (ऋ० सं० ४. ७. २६. ६. ७. ८.)"-इत्येवमादयो मन्त्रात्मिकाः; "एतेन ह वा ऐन्द्रेण महाभिषेकेणोद्दमय आत्रेयोऽङ्ग मभिषिषेच तस्मादङ्गः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे (ऐ० ब्रा० ८. ४. ७.)"-इत्येवमादयश्च ब्राह्मणात्मिकाः। अथर्ववेदीयगोपथब्राह्मणे तु तत्पद्यप्रकाशितातिरिक्ता बहुविधा एव श्रुतयः संलक्ष्यन्ते। तथाहि—"इमे सर्वे वेदा निर्म्मिताः; सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः, सानुमार्जनाः सवाकोवाक्याः (१. २. ९.)"—इति। तत्र कल्पाः खल्विदानीम्प्रचलितकल्पसूत्राणां मूलान्येवोपलभ्यन्ते; रहस्यानि त्वारण्यकानि; स्वरा इति तु इदानीम्प्रचलितशिक्षाग्रन्थानां मूलानि; निरुक्तानि चाद्यप्रचलितनिरुक्तमूलान्येव; अनुशासनान्यपि अद्यप्रचलितच्छन्दोऽनुशासनमूलानि; संस्काराः खलु पदसंस्कारकशास्त्राणां पाणिन्यादीनां मूलान्येव; अनु-

मार्जनानि चाद्यस्थितक्षुद्रतमवेदाङ्गज्योतिषस्य मूलानि ; वाको-वाक्यानि तु प्रश्नोत्तररूपाणीति शङ्कराचार्यः ; ऊहापोहादि-तर्कप्रतिपादकमीमांसाशास्त्रमूलान्येवेत्यपि केचित् । तदेतेषां पूर्वप्रदर्शितपद्योक्तेषु दशसु कथं भवेत् समावेशः ? तदत्र बहु-यत्नतो द्वयोस्त्रिसृणां वा समावेशानुभवेऽपि न तु सर्वेषां समा-वेशः सिद्ध्यतीति ।

मन्त्रव्याख्यानपराण्यपि बहूनि ब्राह्मणवाक्यानि श्रूयन्ते । तद्यथा—"यज्ञेन यज्ञ मयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः"—इति ऋङ्मन्त्रः (२. ३. २३. ४ ; ८. ४. १९. ६.) । एतद्व्याख्यान-परश्चैतदैतरेयकं ब्राह्मणम्—"यज्ञेन यज्ञ मयजन्त देवा इत्युत्त-मया परिदधाति । * * * । छन्दांसि वै साध्या देवाः, तेऽग्ने-ऽग्निनाग्नि मयजन्त । 'ते स्वर्गं लोक मायन्' आदित्याश्चैवेहास-न्नङ्गिरसश्च ( १. ३. ५. )"—इत्यादि । एतदेव व्याख्यानं निरु-क्तादौ विशदीकृतं च दृश्यते ( १२. ४. ७. ) ।

तथा "इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे"—इति शुक्लयजुषः कृष्णयजुषश्चाद्या मन्त्राः । एतेषां च दुर्गमपदव्याख्यानानि कृतानि दृश्यन्ते शुक्लकृष्णयो-रुभयोरेव ब्राह्मणयोः । तथाहि शतपथब्राह्मणे—"वृष्ट्यै तदाह यदाह इषे त्वेति"—इति, "यो वृष्टादूर्ग् रसो जायते, तस्मै तदाह"—इति, "यज्ञो वै श्रेष्ठतमं कर्म्म"—इति च ( १. ७. १. १—५.) । तैत्तिरीयेऽपि "तृतीयस्यामितो दिवि सोम आसीत्"—इत्यादिः "श्रेष्ठतमाय कर्म्मण इत्याह यज्ञो हि श्रेष्ठतमं कर्म्म तस्मादेवमाह"—इत्यन्तश्च (तै० ब्रा० ३.२.१.१—४) ग्रन्थः ।

तथा सामवेदे सामसु ये स्तोभाः श्रूयन्ते, ते च व्याख्याता दृश्यन्ते तद्ब्राह्मणे—"अयं वाव लोको हाउकारो वायुर्हायिकारश्चन्द्रमा अथकारः। आत्मेहकारोऽग्निरीकारः। आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोइकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं या वाग् विराट्। अनिरुक्तस्त्रयोदश स्तोभः सञ्चरो हुङ्कारः (छा० उ० १. १३. १—२.)"—इति।
अतोऽत्रैवं बुध्यते—बहुतिथे काले व्यतीते यदा मन्त्रार्थावबोधो दुरूहः सम्पन्नः, तदैव (यज्ञकाले) यज्ञानुष्ठानतत्परैः तदानीन्तनैर्ब्राह्मणैः तेषां मन्त्राणां विधानादिव्यवस्थाभिः सह मन्त्रान्तर्गतदुर्बोधपदाना मर्था अपि भाषिताः। तदेवं ब्राह्मणान्येवादिवेदभाष्याणीति सुतरां प्रतिपद्यते।

अतएव वेदार्थमीमांसनायैव प्रवृत्ते जैमिनीये मीमांसादर्शने मन्त्रलिङ्गाधिकरणे दृश्यते चैतत् सूत्रम्—"विधिशब्दाश्च (१. २. ५३.)"—इति। "विधिशब्दाश्च विवक्षितार्थानेव मन्त्राननुवदन्ति,—'शतं हिमाः शतं वर्षाणि जीव्यास्मेत्येतदेवाह'-इति"—इति शबरस्वामिकृतं तद्भाष्यम्। "मन्त्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्द इत्युच्यते"—इति च तत्राह सायणाचार्योऽपि। तत्रैवोदाहृत्य व्याख्यातञ्च तेन तद् ब्राह्मणम्। तथाहि—"स चैव माम्नायते—'शतं हिमाः शतं वर्षाणि जीव्यासमित्येवैतदाह'—इति। तत्र 'शतं हिमाः (ऋ० सं० १. ५. ८. ४.)'—इत्येतद् व्याख्येयमन्त्रस्य प्रतीकम्; अवशिष्टं तु तस्य तात्पर्यव्याख्यानम्"—इत्यादि। संहिताभाष्येऽप्युक्तमेवम्—'अत्र हिमशब्देन तदुपलक्षिता हेमन्तर्त्तवोऽभिधीयन्ते; तथाच ब्राह्मणम्'—इत्यादि।

अतएव भगवता कात्यायनेनापि यजुःप्रातिशाख्ये ऋग्यजुःसामलक्षणस्य मन्त्रभागस्यैव वेदत्वं स्वीकृत्य, तद्व्याख्यानपरस्य ब्राह्मणभागस्य भाष्यत्वं सूचितम्। तथाहि—"ॐकारं वेदेषु (१.१८), अथकारं भाष्येषु (१.१९.)"—इति सूत्रद्वयस्थवेदभाष्यपदार्थौ पर्यालोच्यौ। यदि च तत्र तद्भाष्यकार उव्वटभट्टो वेदशब्देन मन्त्रब्राह्मणयोरुभयोरेव ग्रहणं स्वीचकार, भाष्यशब्देन च कल्पाद्यङ्गानाम्; परं तत्रैवानुपद मेव "सप्त। त्रीन्। द्वौ। एकम्"—इति स्वरविधायकेषु सूत्रेषु (१. १२७–१३०) सामस्वर-नैगमस्वर-भाषिकस्वर-यज्ञकर्मस्वराणां विधानस्य पर्य्यालोचनयेदृशं तद्भाष्यशब्देन ब्राह्मणाना मेव बोधने कात्यायनाभिप्रायोऽनुभूयते; "अथ ब्राह्मणस्वरसंस्कारनियमः"—इत्यारभ्य "तान एवाङ्गोपाङ्गानाम्"—इत्यन्तेन परिशिष्टग्रन्थेन भाषिकादिस्वराणां सुष्ठु परिचायितत्वात्। ब्राह्मणग्रन्थानां हि भाष्यत्वेनैव तदीयस्वराणां भाषिकत्वसिद्धिः। ब्राह्मणस्वर एव भाषिकस्वर इत्युच्यते इति तु सर्वसम्मतम्। अतएवोक्तम् "एकम् (१.१३०.)"-इति सूत्रस्योव्वटभाष्यस्य टीप्पन्याम्—"मन्त्रकाण्डपठितानामपि ब्राह्मणभागानां मखस्तूपर इत्यादीनां त्रैस्वर्यम् (निगमस्वरत्वम्) एव, ब्राह्मणकाण्डपठितानां विश्वेदेवाः शास्तन मा यथेहेत्यादीनां भाषिकस्वर एवेति"—इति।

तथा तैत्तिरीयसंहिताभाष्यभूमिकाया मपि स्पष्ट मेवाख्याख्यत् सायणाचार्य्यो ब्राह्मणानां मन्त्रव्याख्याग्रन्थत्वम्—"यद्यपि मन्त्रब्राह्मणात्मको वेदः, तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वात् मन्त्रा एवादौ समाम्नाताः"—इति।

अत एव "प्रोक्षन्तु हिरण्यवता पाणिना दर्भपिञ्जूलवता

वेति भाषिकम् (६. २.)"—इत्युक्तं सङ्गच्छते साङ्ख्यायनगृह्य-कारस्येति च।

"अथापि भाषिकेभ्यो धातुभ्यो नैगमाः * * * अथापि नैगमेभ्यो भाषिकाः (२. १. ३.)'—इत्यादौ निरुक्ते तु श्रुतं भाषिकपदं यद्यपि भाषाशब्दमूलक मेव, तथापि न क्षतिः; भाषाभाष्ययोरेकधातुजत्वात्। किञ्च भाषयोपनिबद्ध मेव भाष्यं भवति; मूलार्थबोधने एव हि सर्वभाष्यस्य तात्पर्यम्; न च चलितभाषया व्याख्यान मन्तरा मूलस्य स्पष्टतया बोधः सञ्जायते। तदेवं वेदस्य दुर्बोधत्वपरिहाराय यदा ब्राह्मणग्रन्था विरचिताः, तदा तादृश्या एव भाषाया व्यवहार आसीत् यादृश्या रचितानि वेदभाष्यरूपाणि ब्राह्मणानि। एवञ्च तदानीं ब्राह्मणग्रन्थीयानां वाक्यादीनां यथासीद् भाषिकत्वम्, तथैवाद्यतनीयाना मस्मद्वाक्यादीना मपीति सम मेवेति तन्नै-रुक्तञ्च न विरुध्यते। वस्तुतस्तु पुराकल्पे ब्राह्मणग्रन्थरचनाकाले मन्त्राणा मेव वैदिकत्वेन ग्रहण मासीद्योग्यम्; ब्राह्मणानान्त्व-वश्यं लौकिकत्वेनैव; पर मिदानीन्तु मन्त्रब्राह्मणयोरुभयोरेव वैदिकत्वेनाभ्यर्हनं समानम्; लौकिकाणा मपि वचनानां वैदिकवत्त्वम्; ततः परस्तृणाना मेव लौकिकत्व मिति। शास्त्र-कर्त्तां व्यवहार एवात्र निदानम्; तत्रापि कालस्यैव प्राधान्य मभ्युपगन्तव्य मिति॥

अथ ब्राह्मणग्रन्थस्तु न प्रतिशाखायां भिन्नः, नापि सर्वास्वेव शाखास्वेक एव; अपि तु, ऋग्वेदस्य—शाकलेतिप्रसिद्धानां शैशिरीय-बाष्कल-साङ्ख्य-वात्स्य-आश्वलायन-शाखाना मेकं ब्राह्मण मैतरेयकं नाम। बह्वृचब्राह्मण मिति च तस्य प्रसिद्धिः।

कौषीतक्यादीना मपरासां षोड़शशाखाना मेकं ब्राह्मणं कौषीतकं नाम। तत् शाङ्खायन मिति चोच्यते। साङ्ख्यायनं शाङ्ख्यायन मित्यपि तत्र पाठद्वयम्। यजुर्वेदस्य—मैत्रायणीप्रभृतीना मूनविंशानां चरकाध्वर्युशाखाना मेकं ब्राह्मणं मैत्रायणं नाम। अध्वर्युब्राह्मण मिति च तस्य प्रसिद्धिः। वाजसनेयादीनां सप्तदशशाखानां चैकं ब्राह्मणं वाजसनेयकं नाम। शतपथ मिति च तस्य नामान्तरम्। षण्णां तैत्तिरीयशाखानां तु तैत्तिरीयब्राह्मण मेक मेव। सामवेदस्य इदानी मधीयमानानां जैमिनि-कौथुम-राणायनीयाना मेक मेव छान्दोग्यं नाम ब्राह्मण मध्याधीयते। तत्राद्य-पञ्चविंशाध्यायानां प्रौढ़ मिति प्रसिद्धिः, मध्य-पञ्चाध्यायानां मद्भुत मिति षड्विंश मिति च; ततोऽवशिष्टानां दशाना मध्यायाना मुपनिषदिति; तत्राप्याद्याध्यायद्वयस्य ब्रह्ममन्त्रपेटिकारूपत्वान्मन्त्र मित्येवेति। सर्ववेदभाष्यकृत्सायणाचार्यमते आर्षेयम्, सामविधानम्, देवताध्यायः, वंशः, संहितोपनिषत् इति च सर्वसामगैरध्येयानि ब्राह्मणान्येव। वस्तुत आर्षेयादीनि तु पञ्च, अनुब्राह्मणानीत्यस्मद्गुरुचरणाः। अथर्ववेदस्य त्वेक मेव ब्राह्मणं गोपथं नामास्माभिरिदानीं दृश्यते, ब्राह्मणान्तरलोपश्चानुभूयते; प्रश्नोपनिषदादिदर्शनादिति।

अथारण्यक मिति चास्ति वेदभागः। स चैकाध्यायात्मक एवेति केचित्। ब्राह्मणभागपरिशिष्टरूप मेव तदारण्यक मिति केचित्। पाणिनीयतः पुरा नैवासीत् किञ्चिदारण्यकन्नामेत्यपि केचित्। तदेतत् सर्व मेव वेदानां मुमूर्षुदशात्व मेवावेदयति। हन्त! यदि ह्यद्य "स्वाध्यायोऽध्येतव्यः"—इत्यादि-

श्रुतेरादरः कार्यतो दृश्येत, यदि चाथ "वेदः कृत्स्नोऽधि-
गन्तव्यः"—इत्यादिस्मृतेश्चादरः कार्यतो दृश्येत, तर्हि सर्वै-
रवश्य मेतत्, ज्ञात मेव स्यादारण्यकं न त्वध्यायात्मक मेव ;—
नापि ब्राह्मणान्त्यभागरूप मेव ;—आस्तोच्च पाणिनीयतो बहु-
प्रागपीति ।

सर्वेषा मेवारण्यकग्रन्थाना मध्यायपरिगणनादेव ज्ञायते,
नारण्यकग्रन्थोऽध्यायमात्र एवेति । यदि हि "पथ्यध्यायन्याय-
विहारमनुष्यहस्तिष्विति वक्तव्यम्"-इतितद्वार्तिकभाष्ये "आर-
ण्यकोऽध्यायः"— इत्येकवचनान्तोदाहरणदर्शनादेवारण्यकग्र-
न्थाना मेकाध्यायात्मत्व मेव स्यात्, तर्हि तत्रैव "आरण्यकः पन्थाः,
० ० ० आरण्यको न्यायः, आरण्यको विहारः, आरण्यको
मनुष्यः, आरण्यको हस्ती"—इत्येकवचनान्तोदाहरणानां दर्श-
नाच्च आरण्यक-पथ-न्याय-विहार-मनुष्य-हस्तीनां चैकैकत्व मे-
वावधार्यतैव ; न च तथावधार्यते केनचिदपि प्रकृतिस्थेन ।
तदेवं यथैव लोके पन्थानः, न्यायाः, विहाराः, मनुष्याः, हस्ति-
नश्च बहवः सन्त्येव, तथैव वेदे अध्याया अपि बहवः सन्त्ये-
वारण्यकाः । तथा सामवेदस्य छन्दोनामार्चिकमधेय सामसंहि-
ताग्रन्थेषु च सामारण्यकदर्शनादेव स्फुट मवगम्यते, नारण्यक-
ग्रन्थो ब्राह्मणे एवोपनिबद्धो नापि परिशिष्टरूप एवेति ; सामा-
रण्यकमन्त्राणां हि सामसंहितामध्यस्थत्वेन तत्र न कस्यापि
विरुद्धवाक्प्रसृतिसम्भवः, तेषां परिशिष्टता माशङ्कितु मपि न
भवेत् कोऽपि सक्षमः ।

"अरण्यान्मनुष्ये (४. २. १२.)"—इति पाणिनीयसूत्रेण
आरण्यको मनुष्य इत्येव सिध्यति ; न तु आरण्यकः पन्थाः,

आरण्यकोऽध्यायः—इत्यादीनि पदानि। अतोऽत्र तेषां साधनाय "पथ्यध्याय"—इत्यादिकं वार्तिक मपठीत् कात्यायनः। एवञ्चोपपद्यते नासीत् पाणिनिकाले आरण्यकोऽध्याय इति; सति हि तस्मिन् कथं न साधितस्तादृशार्थवशेणापीदृश आर्यप्रयोगः?—इति चेत्, अत्रेदं ब्रूमः—आसीत् तदाप्यारण्यकोऽध्यायोऽवश्य मेव; सामसंहितामध्यभागीयत्वादिनारण्यकस्यापि मन्त्रब्राह्मणात्मकत्वादेवातिप्राचीनत्वावधारणात्; परं पाणिनिकाले नासीत् तथाविधमन्त्राणां ब्राह्मणानाञ्चारण्यक मिति व्यवहारः; अपि तु मन्त्रात्मकारण्यकानां मन्त्रत्वेनैव ब्राह्मणात्मकानान्तु ब्राह्मणत्वेनैवेति सम्भाव्यते। भगवतः पाणिनेः तादृशप्रयोगासाधने तद्वाच्यपदार्थानां तात्कालिकोऽभाव एव कारण मिति तु वक्तुं नैव युज्यते; तथावादिनां हि पाणिनिकाले आरण्यकाः पन्थानोऽपि नासन्,—आरण्यकाः हस्तिनोऽपि नासन्,—अरण्येषु गावः पुरीष मपि नोदसृजन्,—महज्जिम मपि नासीत्,—महदरण्य मपि नासीदिति च गलेकुठारन्यायेन स्यात् स्वीकार्य मेव; पथ्यध्यायेतिवार्तिकेन न हि अध्यायवाचक एवैक आरण्यकः प्रयोगः साधितः, नापि कात्यायनेन तदेवैकं वार्तिकं विरचित मिति॥

केचित्तु "सामध्वनावृग्यजुषी नाधीयीत कदाचन। वेदस्याधीत्य वाप्यन्त मारण्यक मधीत्य च (४, १२३,)"—इत्यत्र मनुवचने ऋग्यजुःसामभ्यः पृथगेवारण्यकस्योल्लेखदर्शनात्त नास्त्यारण्यकस्य त्रयीत्व मित्याहुः, तदपि न साधीयः; ब्राह्मणात्मकस्याप्यरण्यकस्य बोधनायैव तत्र तथोक्तिः। तथाहि तस्य च मनुश्लोकस्याय मर्थः,—'सामध्वनौ' सामगानानन्तरम्

'ऋग्यजुषी' ऋचः यजूंषि वा 'कदाचन न अधीयीत'; न हि सप्तस्वराद्यन्वितगानानन्तरं नैस्वर्यादिश्रुतिर्मधुरा भवेत्, नापि क्षुज्ञाता सप्तस्वराद्यवतार्य तदानीमेव स्वकण्ठतस्त्रैस्वर्यं कामयितुं शक्नोतेति तादृशयत्न एवासत्फलः स्यादतः स प्रतिषिध्यते। किञ्च 'वेदस्य अन्तम् आरण्यकम् अधीत्य अपि' ऋचो यजूंषि वा मन्त्रा न अधीयीत; तादृशारण्यकाध्ययनत एवाधेतुः श्रोतृणाञ्च मनसां ब्रह्मगत्वेन परिणतत्वात् ततोऽपि ऋङ्मन्त्र-यजुर्मन्त्रयोः पाठो निषिद्धः; न हि पूर्णोदरस्याशितेऽपि रुचि-सम्भवः। अत्र च वेदस्य अन्त मारण्यक मितुयक्त्या ऐतरेय-तैत्तिरीयबृहदाथर्वणारण्यकाना मेव ग्रहणं बोध्यम्, तेषा मेव ब्राह्मणात्मकवेदस्यान्तावयवत्वात्; सामारण्यकमन्त्राणान्तु मन्त्र-भागमध्यस्थितत्वेन वेदस्यान्तरूपत्वाभावादिहाग्रहण मेव; परं पूर्वार्द्धे सामध्वनावित्युक्त्यैव तदग्रहणं सम्पन्न मिति सामा-रण्यकाध्ययनात् पर मपि ऋग्यजुर्लक्षणान् मन्त्रान् नाधीयीते-त्येव। एवञ्च वेदेषु श्रुताना मारण्यकानान्तु वेदत्वं तदनुगत-प्राचीनतमत्वञ्चाक्षत मेव; प्रत्यक्षस्य बाधाभावात्।

ऐतरेयकपञ्चमारण्यकादीनान्त्ववेदत्वं सर्ववादिसम्मत मेव। तथा ह्याह सर्ववेदभाष्यकारः सायणाचार्यः स्वय मेव—"महा-व्रतस्य पञ्चविंशति मित्यादि पञ्चमारण्यकं सूत्र मेव; अरण्ये एवैतदधीय मित्यभिप्रेत्याधेतार आरण्यकाण्डेऽन्तर्भाव्याधी-यते"—इतिएवमादि। तदित्थं यथा मन्त्रभागे सन्त्येव खिल-रूपाः श्रीसूक्ताङ्गसूक्ताद्यात्मका मन्त्राः, परं न च ते सम्मिलिता मन्त्रभागावयवत्वेन; तथैव ब्राह्मणभागेऽपि सन्त्येव पञ्चमा-रण्यकादीनि च, परं नैव तानि सम्मिलितानि ब्राह्मणभागा-

वेदत्वं नेति। तत् तादृशानां मा भूत् वेदत्वं प्राचीनतमत्व- ञ्चेति; तदन्येषान्तु वेदात्मकारण्यकोपनिषदां वेदत्वं तथा प्राचीनतमत्वञ्चापह्नोतुं न कोऽपि क्षमेतेति सर्वं मवदातम्॥

एवं पाणिनिसूत्रेषु क्वापि वेदांशवाचकत्वेन उपनि- षच्छब्दस्य प्रयोगादर्शनात् पाणिनीयतः पूर्व मुपनिषदो नासन्नित्यप्याहुः केचिदाधुनिकाः। तदप्यस्माक मतिविस्मयकर मेव; संहितासु पञ्चस्वेव, ब्राह्मणेषु च बहुषु विकीर्णरूपत्वेन बहूना मेवोपनिषल्लक्षणवचनाना मीशावास्य मितिप्रव मादी- नाम्, उपनिषदिति ब्राह्मणग्रन्थेषु प्रसिद्धानाञ्च प्रत्यक्षदर्श- नात्। भगवता पाणिनिना उपनिषत्पदसाधनाय विशेषः कश्चन प्रयत्नो नोद्भावित इतिप्रव उपनिषदा माधुनिकत्वे बीज मिति लक्षिमता मक्ष्णिषु धूलिनिक्षेपणाय यत्न एव। न हि सर्वतोमुखसूत्रकारेणाचार्य्येण प्रतिपदसाधनायैव विभिन्नं सूत्रं कार्य्यम्। तथाच साधारणनियमत एव सिद्धे ह्युपनिषच्छब्दे तत्र विशेषवक्तव्याभावादेव न कृतं सूत्रान्तर मिति सुवच मेवात्रै- तत् समाधानम्।

अन्यच्च। "ऋगयनादिभ्यः (४.३.७३.)"—इतिसूत्रीये ऋगयनादिगणे "वेतनादिभ्यो जीवति (४.४.१२.)"—इति- सूत्रीये च वेतनादिगणे उपनिषच्छब्दस्य पाठोऽपि दृश्यत एव। इदानीमप्रचलितस्यास्य गणपाठस्यापाणिनीयत्वस्वीकारेऽपि आसीच्च पूर्वं कश्चनैव गणपाठोऽपीत्यवश्यं स्वीकार्य मेव; अन्यथा हि "ऋगयनादिभ्यः"—"वेतनादिभ्यः"—इत्यादिषु सर्व- त्रैव आदिशब्दव्यवहार एवाचार्यस्य व्यर्थता मापद्येत। स्वीकृते तु तस्मिन् प्राचीनगणपाठे नासीदेवोपनिषच्छब्दस्तत्र इत्यत्र

मानाभावादुपनिषदा माधुनिकत्वपक्षः स्वान्निःसहाय एव । ऋगयनादीना माकृतिगणत्वस्वीकारेऽपि पाणिनेरुपनिषच्छब्दाज्ञानं न सिध्यति ; विनिगमनाविरहात् । सति हि पाणिनेरुपनिषज्ज्ञाने "वेतनादिभ्यः"-इत्येवं नोक्त्वा "उपनिषदादिभ्यः"—इत्येव ब्रूयादिति तु कुतर्क एव ; तथोक्ते हि पाणिनेर्वेतनज्ञानं नासीदित्यपि उच्येतैवेत्येष तुल्यो न्यायः ।

किञ्च वेदांशवाचकोपनिषच्छब्दोच्चारणं पाणिनिना न क्वचिदपि कृत मित्यत एवोपनिषदां पाणिनीयपरभवत्व मनुमीयेत चेत्,—कात्यायनेनापि तथा नोच्चारितम्, पतञ्जलिनापि तथा नोच्चारित मिति वार्त्तिकपाठात् महाभाष्याच्च परभवत्वं तासा मबाध मेव ; किं बहुनाद्यतनीयेऽपि क्वचित् व्याकरणे न दृश्यते उपनिषत्साधनाय यत्नविशेष इति नाद्यापि काचिदुपनिषदाविर्भूतेत्यपि वक्तुं युज्येतैव । अथेदृशेऽपि वचने यदि कश्चित् श्रद्दधीत, तर्हि तादृशवचनेऽपि ते श्रद्धां विधत्ता मित्येवास्माकम् ।

वस्तुतस्तु इदानीं यावन्त्य उपनिषदः प्रथिता दृश्यन्ते, न च ताः सर्वा एव वेदोपनिषदः, प्रत्युत तत्र सन्त्येव कतिपया वेदविद्भिर्वेदार्थतत्त्वोपदेशायैव स्वशिष्येभ्य उपदिष्टाः, उपनिषत्तुल्या इति उपनिषदिति गृहीताश्च शिष्टैः ; रामतापन्यादयो अन्यास्तु कैश्चिदर्वाचीनैः स्वसम्प्रदायमर्यादारक्षये एव प्रणीताः, तासा मप्युपनिषत्त्वं तु मन्यन्ते च तदनुगता एव ; अल्लेत्यादयस्तु सर्वथा अग्राह्या एव ; परं यास्तु मन्त्ररूपा ब्राह्मणरूपाश्च, ताः खलु पाणिनेर्जन्मतो बहु प्रागपि स्थिता इति ध्रुवम् ; अपि वेदविदा मुपदेशरूपाश्च याः काश्चिदुपनिषत्तुल्या उपनिषदि-

तेऽत्र प्रसिद्धाः, तासां बह्व्योऽप्यासन्नेव पाणिनीयतोऽपि पूर्वम्; नास्त्यत्र सन्देहलेशोऽपि। तथाहि—

(१) अस्त्येकं सूत्रं पाणिनीयम्—"जीविकोपनिषदावौपम्ये (१. ४. ७९.)"-इति। अनेन च सूत्रेण औपम्ये गम्यमाने एव जीविकोपनिषच्छब्दयोर्गतिसञ्ज्ञा विधीयते, तत्याञ्च गति-सञ्ज्ञायां "कुगतिप्रादयः (२. २. १८.)"-इति समासो भवति। तथाच 'जीविकाम् इव कृत्वा'-इति विग्रहे 'जीवि-काकृत्य'—इति पदम्, 'उपनिषदम् इव कृत्वा'-इति विग्रहे च च 'उपनिषत्कृत्य'—इति च पद मुदाहृतम्, "समासेऽनञ्पूर्वे क्त्वो ल्यप् (७. १. ३७.)"—इति ल्यब्भावश्च तादृशसमासफल मिति च दर्शितं वैयाकरणसिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन। इत्यत्र 'उपनिषत्कृत्य'—इत्यस्य पदस्य 'उपनिषद्ग्रन्थतुल्यग्रन्थ-करणानन्तरम्'— इत्येवार्थः सर्ववैयाकरणसम्मतः। तदेवं पाणिनेः प्राचीनतमोपनिषद्विषयकं ज्ञान मासीन्न वेति विचा-रस्तु दूरे आस्ताम्,—रचनया स्वरेण तात्पर्येण वा ये च ग्रन्था उपनिषत्तुल्याः कृताः पाणिनिपूर्वतनैर्वेदोपनिषद्विद्भिः, तेषा मुपपनिषत्तुल्याना मपि बोध आसीत्तस्येत्यपि स्फुटम्। सिद्ध मित्यं कासाञ्चित् कृत्रिमोपनिषदा मप्यस्तित्वं पाणिनिकालात् पूर्वस्मिन्नपीति, तत् कस्तत्र सन्देहस्तदानीं प्रकृतोपनिषदा मस्तित्वे इति विचारयन्तु धीमन्त एव।

(२) अस्ति चैतत् सूत्रम्—"पाराशर्यशिलालिभ्यां भिक्षु-नटसूत्रयोः (४. ३. ११०.)"-इति। एतच्च पाणिनिनैव कृत मिति मन्तव्यं चेत्, अवश्य मेवैतत्कर्त्तुः पाणिनेः भिक्षुसूत्रा-स्तित्वज्ञाने सन्देहाभावः स्वीकार्य एव, स च सूत्रग्रन्थो वेदान्त-

दर्शनबीजभूतः, उपनिषद एव च तच्छरण मितुग्रपनिषद्विषयकज्ञान मपि पाणिनेरवश्य मेव स्थित मिति सुतरां प्रतीयते ।

( ३ ) ये तु निरुक्तकारस्य यास्कस्य पाणिनिपूर्वजत्वं स्वीकुर्वन्ति, तेषां प्रबोधायेद मपि स्मारयामः—"यत्रा सुपर्णा (ऋ० सं० २. ३. १८. १. )"—इतिमन्त्रस्याधिदैवतव्याख्यानपक्षेऽब्रवीद्यास्कः—"इत्युपनिषद्वर्णा भवति (निरु० ३. २. ६. )"—इति । "यया ज्ञान मुपगतस्य सतो गर्भजन्मजरामृत्यवो निश्चयेन सीदन्ति, सा रहस्यं विद्या उपनिषदित्युच्यते ; उपनिषद्भावेन वर्ण्यत इति उपनिषद्वर्णः"—इति च तदीयं भाष्यं दुर्गाचार्यकृतम् । अथैतर्हि तेऽधिब्रुवन्तु पाणिनिपूर्वजस्य यास्कस्याप्युपनिषज्ज्ञान मासीच्चेत्, कथन्न तत्परजस्य पाणिनेरुपनिषज्ज्ञान मिति ? ॥

---

अथेदानी मेषोऽपि प्रश्नः स्वतः समुदेति नाम,—तस्यैतस्य वेदस्योत्पत्तिकालनिर्णयः शक्योऽशक्यो वास्माक मिति । कथं शक्यः ? कथं वा अशक्यः ? तदेवेह समासतश्चिन्तयामः—

पश्याम एव तावत्, प्राचीनानां कालिदासादिग्रन्थाना मपि कालाः सुनिर्णीता इव, अतिप्राचीनानां भूगर्भोत्थिताना मपि शिलास्तम्भादीनां भवत्येव कालनिर्णय इत्यपि, वेदकालनिर्णये च केचिद्धीमन्तोऽपि यतितवन्त एवेति ; तत एवोत्पद्येत नामास्माक मप्येषाशा, शक्योऽस्य कालनिर्णय इति । यदा तु स्मरामः,—अपौरुषेयोऽय मिति सिद्धान्तो मीमांसकानाम्, यदा चाध्यापयामः "नित्या वागुत्सृष्टा स्वयम्भुवा"—इति, "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् । दुदोह यज्ञसिद्ध्यर्थ

ऋग्यजुःसामलक्षणम्"—इति, "वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे"—इत्येवमादीनि च स्मृतिवचनानि, तदेव तत्र हेताम्नाः सम्भवामहे; अकृतकत्वादेवैतस्य। कृतकत्वेऽपि मनुष्यरचितत्वाभावेन वाय्वादितुल्यत्वे नैव फल मनुसन्धानस्य। मनुष्यरचितत्वेऽप्यनद्ययुगीयत्वेन प्रणेतृव्यक्तिनिर्णयसम्भावना-विरहात् स्यादशक्य एवैतत्कालनिर्णय इति॥

एष खल्वार्याणा मादिधर्मग्रन्थः; आदिधर्मग्रन्थेतिप्रसिद्धानां प्रायः सर्वेषा मेवोत्पत्तौ कश्चनालौकिकः प्रवादो विद्यत एव; अस्योत्पत्तिविषयेऽपि तथैवैषः,—'न केनचिदपि पुरुषेण प्रणीतो वेदः'—इति। मीमांसकानां कर्मशक्त्यनुगतफललाभवादिना मीश्वरविचारोऽप्यप्रयोजनीयः, परं वेदानां सर्वथानादित्वप्रति-पादने एव महान् यत्नः। तथाहि—"वेदांश्चैके सन्निकर्षं पुरुषाख्याः, अनित्यदर्शनाच्च"—इति सूत्रद्वयाभ्यां पूर्वपक्षं निर्माय सिद्धान्तित मुत्तरसूत्रचतुष्टयेन—"उक्तन्तु शब्दपूर्वत्वम्, आख्या प्रवचनात्, परन्तु श्रुतिसामान्यमात्रम्, कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात्"—इति मी॰ द॰ जै॰ सू॰ १, १, २९—३२। एतान्येव सूत्राण्यवलम्ब्य बहु विचारितं शास्त्रदीपिकादौ, तथा निर्णीतन्तु वेदाना मकृतकत्व मेव।

भगवता बादरायणेन तु वेदस्य ब्रह्मकार्यत्वं सूचितम् "शास्त्रयोनित्वात् (१, १, ३,)"—इति। ऋग्वेदादिशास्त्र-कारणत्वाद् ब्रह्म सर्वज्ञ मिति हि तत्सूत्रार्थः। एतावताप्यपौरुषे-यत्वं वाय्वादितुल्यत्वञ्च नापगतं वेदस्य; मनुष्यनिर्मितत्वा-भावात्। फलञ्च तुल्यं तत्कालनिर्णयाय अनुसन्धानाननुसन्धा-नयोः; न हि मनुष्यनिर्मितातिरिक्तेषु कालनिर्णयसम्भवः, तत-

स्तत्र नैव वाचः प्रसरन्ति प्रेक्षावतां विपश्चिताम्। को नाम मर्त्यो निर्णेतुं सक्षमः, कदैषाभवत् सृष्टिः? आदिसृष्टेर्वर्णनन्तु स्वस्वकल्पनायाः परिचयदानमात्रम्। पृथिव्याः अन्तस्तरादिदर्शनात् पृथिवीसृष्टिकालकथन मपि धीमतः परिचयदान मेव। पुराणोक्तसृष्टिकथाश्च नैकरूपाः श्रूयन्ते, अतस्ताः कल्पनाप्रसूता एव न तत्रापि संशयः; अस्तु वा कल्पभेदेन तत्र विरुद्धभाषणमीमांसा, न तथापि सृष्टेरादिकालनिर्णयः सम्भवेत्। एवं ब्राह्मणादिश्रुतञ्च सृष्टितत्त्वं मन्तव्यं किल यथायथ मेवेत्यत्रापि धीमतः संशय एव समुत्पद्यते; वेदार्थसहायके निखिलमीमांसादर्शनेऽपि ब्राह्मणगतसृष्टिप्रतिपादकाद्याख्यायिकावाक्यानां काल्पनिकत्वनिर्णयात्। तथाहि "बबरः प्रावाहणिरकामयत"—इत्येवमादिषु श्रुतिषु बबरादीना मनित्यार्थानां संयोगात् वेदस्याधुनिकत्व माशङ्क्य सिद्धान्तित मेतत्—"न तु तत्रानित्यो बबराख्यः कश्चित् पुरुषो विवक्षितः, किन्तु बबर इति शब्दानुकृतिः; तथा सति बबरेति शब्दं कुर्वन् वायुरभिधीयते; स च प्रावाहणिः, प्रकर्षेण वहनशीलः। एव मन्यत्राप्यूहनीयम्"—इति (मी० जै० सू० १. २. ५०. सा० व्या०)। निरुक्तकारः खलु यास्कोऽपि तादृशानां निखिलब्राह्मणवचनाना मादरातिशयेन प्रामाण्यं नाङ्गीचकार। अत एवाह—"बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति (७. ७. २.)"—इति। वस्तुतो वैदिकसृष्टिविवरणानि तु प्रायो रूपकाण्येवेति नात्र मैतिहासिकतोपायेति। तदेव मादिसृष्टिकालनिर्णयो न कदापि भूतो भवति भविष्यति वा। अतएव श्रूयन्ते—"ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्व मिदं जगत्

(ऋ० सं० ८. ८. २१. ४.)"—इत्येवमादयः; अर्यन्तो च—"सिद्धे शब्दार्थसम्बन्धे (का० वा० १.)"—इत्यादयः, "सिद्धा द्यौः सिद्धा पृथिवी, सिद्ध माकाशम् (पा० भा० १. १. १.)"—इत्येवमादयश्च। सिद्धशब्दस्य चेह नित्यार्थता; तथाह्याह पस्पशायां भगवान् पतञ्जलिः—"नित्यपर्यायवाची सिद्धशब्दः"-इति। वेदस्यापि तथात्वे तत्कालनिर्णयमनोरथद्रुमः खलु भवेदुपलाहत एवेति।

यास्केन त्वनैव प्रदर्शितः पुरावादः—"साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्यः उपदेशेन मन्त्रान्त-सम्प्रादुः, उपदेशेन ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समा-म्नासिषुर्वेदं च वेदाङ्गानि च (निरु० १. ६. ५.)"—इति। सिद्धश्चेत्थं वेदाना माम्नातत्व मार्षत्वञ्च। ऋषयः खल्वस्मत्पूर्व-पुरुषा इति मनुष्या एव। परन्त्वेव मप्यशक्यनिर्णयतैव वेद-कालस्य; आम्नातकृतयोर्विभिन्नार्थत्वात्। आम्नात इत्युक्ते न ज्ञायते कृत इति, अपि बुध्यते अभ्यस्त इत्येव; अभ्यासे एव म्नातेरुपदेशात् (धा० पा० १.८२८.)। एव मभ्यासस्तु पूर्वस्थिताना मेव भवति; न तु क्रियमाणानाम्। अतएव वामदेव्यादीनि सामानि वामदेवादिभिर्दृष्टान्येवोच्यन्ते न तु कृतानीति प्राचीनाः।

वैशेषिक-न्याय-साङ्ख्य-पातञ्जलेष्वपि वेदस्य प्रामाण्यं स्वीकृतम्; परं न चोक्त मकर्तृको वेद इति, नाप्युक्त मीश्वरकृत इति; अपि त्वाप्तैः ऋषिभिरेवैषः कृत इत्येव। तथाहि—"बुद्धिपूर्वा वाक्य-कृतिर्वेदे, ब्राह्मणे सञ्ज्ञा कर्मसिद्धिलिङ्गम् (६. १. १, २.)"—इति, "आर्षं सिद्धदर्शनञ्च धर्मेभ्यः (९. २. १३.)"—इति,

"तद्वचनादाम्नायस्य प्रामाण्यम् ( १०, २, १० )"—इत्येवमादि च वैशेषिके। एव मन्येषु च।

एवं "विश्वामित्र ऋषिः ०—० नदीस्तुष्टाव गाथा भवतीति (निरु० २, ७, २, )"-इति, "ऋषिपुत्रा विलपितं वेदयन्ते ( निरु० ५, १, २, )"--इति, "गृत्समद मर्थ मभ्युत्थितं कपिञ्जलोऽभिववाशे, तदभिवादिन्येषर्ग् भवति (निरु० ९. १. ४.)" —इत्येवमादिषु यास्कवचनेषु चोपलभ्यते तत्तन्मन्त्राणा मृषिकृतत्व मेव। "सर्पं ऋषिर्मन्त्रकृत् ( ऐ० ब्रा० ६. १. १.)"— इत्यादिब्राह्मणवाक्येभ्यश्चावगम्यते मन्त्राणा मप्यृषिकृतत्वम्।

वस्तुतः कतिचिन्मन्त्राणां समालोचनयापि व्यक्तं प्रतीयते वेदानां धीमत्पुरुषकृतत्वम्; विशेषतः क्वचित् क्वचित् मन्त्रे तु स्वत एव चैषां बहुपुरुषकृतत्वञ्च। तथाहि—

"सक्तु मिव तितउना पुनन्तो यत्र धीरा मनसा वाच मक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि।"

—इति ऋ० सं० ८. २. २३. २.।

तथा चास्मत्पूर्वपुरुषैः ऋषिभिरेव वेदाः प्रणीता इति ध्रुवम्॥

सत्येव मप्येषां कालनिर्णयस्त्वशक्य एव; अनद्ययुगीयत्वात्। तथाहि—एतद्युगप्रथमसहस्राब्द्या मेव जातः पाणिनिराचार्य इति तु नैरुक्तालोचनेऽस्माभिः सिद्धान्तितम्; ततोऽपि पूर्वतनाः क्रमकारा बाभ्रव्यादयः; ततोऽपि पूर्वतनाः पदकाराः शाकल्यादयः; ततोऽपि पूर्वतना ऋक्तन्त्रादिप्रणेतारः शाकटायनादयः; ततोऽपि पूर्वतना नवयुगारम्भजन्मानो लाट्यायनादयः कल्पसूत्रकाराः ( तदानी मेव नवकल्पारम्भ इत्येव तत्कालकृता अन्याः कल्पा इतुरचन्त इति च नासम्भवः )।

एतद्युगारम्भात् पुरैव प्रणीतानि कुसुरुविन्दादिभिः ऋषिभिः अनुब्राह्मणादीनि ; ततः पूर्वस्मिन्नेव युगे कल्पे वा महीदासादिभिः श्लोकानुश्लोकगाथादीनि सङ्गृह्य तदनुसारेण कृतान्यैतरेयादीनि ब्राह्मणानि ; ततः पूर्वस्मिन् युगे कल्पे वा प्रवादानेवानुसृत्य प्रणीताः श्लोकानुश्लोकगाथादयः ; ततः पूर्वस्मिन् युगे कल्पे वा श्रूयन्ते स्म विकीर्णाः प्रवादास्तत एवाद्यापि ते श्रुतय इत्याख्यायन्ते च ; ततः पूर्वस्मिन् युगे कल्पे वाभवत् यज्ञप्रयोगारम्भः ; तदैवाथर्वणा व्यासेन वा एकेनैव यत्नेन चतस्रः संहिताः सङ्गृहीताः तत्पूर्वमेव सम्पन्ना बभूवुः सूक्तमण्डलादिसङ्ग्रहाः, तत्रापि नास्ति संशयः। ततः पुरा तु बहुकालमभिव्याप्य बहुभिः ऋषिभिर्बहुभिरेवोच्चावचैरभिप्रायैः प्रणीता बहवो मन्त्राः। तदेवं बहुयुगपूर्वमेवारब्धा मन्त्ररचनाः, तत्कथङ्कारमद्यतनीयैः शक्यो निर्णेतुं तत्कालः ; अनद्यतनीयानां तादृशातिप्राचीनतमानां कालनिर्णये हि न किमपि लिङ्गं प्रतिभासेत बहुधीमतामप्यद्यतनीयानाम्। भवति हि व्यक्तिनिर्णयपूर्वक एव कालनिर्णयः, न चात्र क्वापि व्यक्तिनिर्णयः सम्भाव्यते ; न ह्येतत्कृतोऽसौ मन्त्र इति क्वापि लिखितं दृश्यते। दृष्टशब्द एव कृतवाचक इति चेत्, तथापि न व्यक्तिनिर्णयः सुकरः ; अग्निना दृष्ट इत्यादौ अग्न्यादिसञ्ज्ञानां सञ्ज्ञिशून्यत्वेन कल्पितसञ्ज्ञित्वेनैव वा प्रायोऽवधार्यत्वात्। यथा च खलु सूर्यवंशीयानां क्षत्रियाणामादिपुरुषः सूर्य इति तु शब्दतः प्रतीयत एव, परमुदीयमानस्यैतस्य दिनमणेरेवौरसजातः स वंश इति विश्वासस्तु कथं भवेन्नाम सर्वशेमुषीमताम्? अतस्तद्वंशादिपुरुषस्य प्रकृतनामाज्ञानात् शौर्येण च कल्पितं नाम सूर्य

इतीत्येव तत्र स्वीकार्यम्, तथैवात्रापि। एवं "अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् (म० सं० १. २३.)"—इत्यादिष्वपि। अस्तु वा किञ्चित् विशेषतात्पर्यमपि। तस्मात् तत्त्वतः प्रत्येक-व्यक्तिनिर्णयासम्भवादेव मन्त्रकालनिर्णयस्याशक्यतैव सम्पद्यते।

"अर्चिषि भृगुः सम्बभूव ( निरु० ३. ३. ५. )"—इत्यादि-निर्वचनाच्च वंशाना आदिसञ्ज्ञानां किञ्चितात्पर्यमूलकरूपकत्व-मेवानुमीयते। अथ यदि 'तुष्यतु दुर्जनः' इति न्यायेन स्वीकुर्मः,—समुत्पन्न एव कश्चित् भृगुर्नाम महर्षिस्तथैव, कृतञ्च भृगुणैव भार्गवं नाम सूक्तमिति, तथापि न सम्भवेत् व्यक्तिनिर्णयः; को हि जानाति कोऽयं भृगुः कदेमां भुव मलञ्चकारेति? एवं यत्र क्व च मन्त्रे वसिष्ठ-नाम श्रूयते, तस्यापि रचना-कालनिर्णयोऽस्माकमशक्य एव; यतो हि को जानाति आदि-वसिष्ठः कदोत्पन्न इति? तथा यान्यपि इडादिभिर्ऋषुभिरिन्द्र-प्रमतिभिर्वसिष्ठैश्च दृष्टानि सूक्तानि श्रूयन्ते, तेषामप्युद्भवकाल-विज्ञेयता गाढतमोभिराच्छन्नैव; वर्त्तते हि तत्र तत्रापि कालनिर्णायकलिङ्गाभावः; नापि हि आदिभार्गवस्यैव भार्गव इति, आदिवासिष्ठस्यैव च वासिष्ठ इति व्यवहारनियमो विद्यते लोकेऽन्यत्र वा। तत्त्वतो वेदे काश्यपवचनमप्यस्ति सत्यम्! परं न ह्यत्र पृथिव्यामेक एव काश्यपः सञ्जातः, अहमपि काश्यपः, मत्पुत्रोऽपि काश्यपः; मत्पौत्रोऽपि भविष्यति काश्यप एव। एवं भारद्वाजादयोऽपि। तस्मादेतादृशनाम-पर्यालोचनया च मन्त्रप्रणयनकालनिर्णये यत्नो व्यर्थ एव।

एतच्च निर्णीतमेव विद्वद्भिः,—अद्य यावत् यावतां प्राचीन-प्रबन्धाना मनुसन्धानं सम्पन्नम्, तेषु सर्वेष्वेव वैदिकमन्त्रभागः

ध्रुवम् प्राचीनतम इति; अस्मादपि पुरातनः कश्चित् प्रबन्धो बभूव, इदानीं लुप्त इत्यपि वक्तुं न कस्यापि पुरातत्त्वानुसन्धित्सोरोष्ठाधरौ स्फुरताविव दृश्येते; वर मस्यैव निगमकल्पतरोर्बह्व्यः शाखाः प्रलयवात्या कालसागरे निमग्ना उपलभ्यन्त एव। एकस्यैव हि ऋग्वेदस्य बहवः शाखाः स्थिता इति सर्वसम्मतम्, पर मतिप्राचीनेन निरुक्तकारेण यास्केनापि पञ्चविधा शाकलशाखैवाऽदर्शीति गम्यते, नान्याः; निरुक्तेऽस्मद्दैव दृशतयीत्यस्यैवोल्लिखदर्शनात्। न हि सर्वासा मेव शाखानां दृशमण्डलात्मकत्वेन दृशतयीत्व मेव युज्यते; अद्यापि विद्यमानासु शुक्लयजुषः काण्वमाध्यन्दिनमैत्रावरुणशाखासु परिच्छेदवैषम्यं हि दृश्यत एव; तथैव तत्राप्यवश्य मेव भवितव्यम्; तस्मात् न कथ मपि सर्वासा मेव बह्वृक्शाखानां दृशतयीत्वसम्भवः। एवञ्च यास्कजन्मतो बहु प्रागेव नन्वन्याः शाखा एकैकशः क्रमाद् विनष्टा इत्यनुमानं च नासङ्गतम्। तदेवं विचारयन्तु धीमन्तः;—यास्ककालात् मन्त्रकालस्य कीदृक् प्राचीनत्व मिति। तदित्थं मनव्ययुगीयत्वात् व्यक्तिलिङ्गानवाप्तेः रचयितृव्यक्तिनिर्णयाभावात् मन्त्रभागस्य कालनिर्णयस्तु सर्वथा अशक्य एवास्माक मद्ययुगीयाना मिति॥

ब्राह्मणग्रन्थाना मपि कालनिर्णये यत्नोऽप्येव मकिञ्चित्कर एव; न हि तेषु कस्यापिकस्य कालनिर्णयसहायः संवादोऽवगम्यते क्वापि लोके शास्त्रे वा। ततः सर्वेषा मेव युगान्तरीयग्रन्थानां कालनिर्णये एतत्खृष्टाब्दे ऽसौ प्रणीत एवेति निर्धारणे वय मसमर्था एव सर्वथा। मन्त्रब्राह्मणयोः सम्यक् पर्यालोचनया मन्त्रभागात् परभवो ब्राह्मणभाग इति तु वक्तुं

युज्यते ; एवम् मन्त्रब्राह्मणयोरुभयोरपि भागयोरन्तरेऽपि एत-स्मान्मन्त्रादेष मन्त्रः परभवः, एतस्माच्चैष प्राग्भवः, किञ्चैतस्माद् ब्राह्मणादेतत् ब्राह्मणं ब्राह्मणवाक्यं वा परभवम्, एतस्माच्चैतद् प्राग्भव मित्यपि प्रायो निःशङ्कं निर्णेतुं शक्यते ; पर मेतद्यु-गीयैतत्सङ्ख्यकेऽब्देऽसौ मन्त्रग्रन्थो ब्राह्मणग्रन्थो वा प्रणीतो ग्रथितः सङ्कलितो वेति नास्मादृशां बोधयोग्यम् ; अतएव मन्त्रभागस्येव ब्राह्मणभागस्याप्यनादित्व मुपचर्य्यतेऽद्येति ।

यद्यप्यैतरेयभाष्यभूमिकायां सायणाचार्य्येणापि प्रकाशित एवेतरायाः पुत्रो महिदासाख्यो भूमिदेवतातो वर मवाप्य भाषितं यद् ब्राह्मणं, तदेव ग्रथित मैतरेय मितीति प्रवादः । तथापि तस्यापि ब्राह्मणस्य न शक्यः कालनिर्णयः ; प्रदर्शित-प्रवादात्त्विद मेव हि ज्ञायते,—इतरेतिप्रसिद्धायाः कस्याश्चिदपि ऋषिरमण्याः पुत्रेणेदं प्रोक्त मिति, परं तस्मान्नैव मभिव्यज्यते —एतद्युगीये एतस्मिन्नब्दे किल सा ऋषिरमणी तद्ब्राह्मण-ग्रन्थं प्रणेष्यन्तं कुमारं प्रसूयेमं जगतीतल मलङ्कृतवतीति । एवञ्चैतरेयादिग्रन्थानां कालनिर्णयाय तादृशप्रवादादीना मव-लम्बन मपि सुदूरपारसागर मुत्तितीर्षोः प्लवमानकाशकुशा-वलम्बनकल्प मेवेति ॥

यच्चास्त्यैतरेयके—"एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारिक्षित मभिषिषेच ; तस्मादु जनमे-जयः पारिक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेधेनेजे । तदेषाभि यज्ञगाथा गीयते— 'आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम् । अश्वं बबन्ध सारङ्गं देवेभ्यो जनमेजयः'—इति (८. ४. ७.)"—इत्येवमादि ; ताण्ड्य-

ब्राह्मणे चैवं श्रूयते—"जनमेजयश्चार्वैदो गावः (२५. १५.)" —इति। एवमादिश्रुतेन यदि कश्चिदध्यवसेत्,—अर्जुनपौत्र-जनमेजयात् बहुदिनानन्तर मेवैतानि प्रणीतान्यैतरेयकादीनि ब्राह्मणानीति, तथाच यौधिष्ठिरीयाया मन्यूनद्वितीयशताब्द्या मेवैषां सम्पन्नं प्रणयन मितो निर्णीत एवैतत्काल इति; तर्हि सः स्यादवश्यं भ्रमावर्तमग्नः स्वातिवुद्ध्यैव वञ्चितः। ऐतरेया-दीनां यौधिष्ठिरीयद्वितीयशताब्दीजत्वे हि पाणिनिसमकालत्व मेव प्रसज्येत। अस्मन्ते तत्कालोचने पाणिनेरपि यौधिष्ठिरीय-द्वितीयशताब्दीजत्वनिर्णयात्। न चेष्टापत्तिः; पाणिनीये एव हि व्याकरणे ब्राह्मणग्रन्थाना मतिप्राचीनत्वेन प्रोक्तत्वादिस्वीकारात्; न हि समकालिकाना मेव ग्रन्थानां प्रोक्तत्वेन व्यपदेशः सङ्ग-च्छते, नापि छन्दस्त्वादिक मुपपद्यते।

अस्मन्मते तु बभूवैव कश्चन पुराकल्पेऽपि परीक्षितो जनमे-जयश्च, तत्तन्नामश्रुत्यनुसारत एवाभिमन्युपुत्रस्याभवन्नामकरणं परीक्षित इति, तथा तत्पुत्रस्य जनमेजय इति च। तद्यथा, दृश्यत एव हि भागवतादिषु सत्यव्रतो नाम, तत एव मन्ना-मकरणं सम्पन्नं सत्यव्रत इति; न च मन्नामकरणतः पश्चात् प्रणीतानि भागवतादीनि। अप्येवं वङ्कवेर्वङ्किमस्य लेखनी-जातानि कपालकुण्डलादिनी च नामानीदानीं बहुष्वेव वङ्गाङ्गनेषु श्रूयन्त एवेति। एव मेव समाधानं सर्वत्रैवावश्य मुररीकर्तव्यम्; अन्यथा वेदेषु भोजनामश्रवणात् भोजसम-सामयिकस्य वेदभाष्यकदुव्वटस्यापि वेदसमकालजत्वं प्रसज्ये-तैव, तत् कथङ्कारं वार्यतेति। तथा हि ऋक्संहितायां (८. ६. ४. ५.) श्रूयते—"भोजस्येदं पुष्करिणीव वेश्म"—इति;

श्रूयते चैतरेयब्राह्मणे तत्रैवाभिषेकप्रकरणे—"भोजं भोजपितरम् (८. ४. २.)"—इति; उक्तञ्चोव्वटेन—"मन्त्रभाष्य मिदं कृतं भोजे पृथ्वीं प्रशासति"—इति। तदत्र कथयन्तु धीमन्तो यदि नाम नामदर्शनादेव कालनिर्णयः शक्यस्तर्हि तत्तद्वेद-ग्रन्थाविर्भावकाले एव किमु आविरभूत् वेदभाष्यकार उव्वटो वज्रटात्मजः? इह नेत्युक्ते स्वीकार्य एवायं न्यायोऽन्यत्रापि सर्वत्रैव; न हि कुक्कुट्या एको भागः पाकाय, अपरो भागः प्रसवाय कल्प्यत इति॥

यच्चोक्तम्—शतपथं नाम ब्राह्मणं पाणिनीयतोऽप्युत्तरभव मपि तु कात्यायनसमकालिकेन याज्ञवल्क्येन प्रणीतम्; पुराण-प्रोक्तेषु ब्राह्मणकल्पेषु (४. ३. १०५)"—इति हि पाणिनिसूत्रम् तत्स्थं वार्त्तिकादिकं च तत्र मान मिति। तदप्यतीव विस्मयकर मस्माकम्। गम्यते हि तस्मादेव सूत्रात् तत्स्थात् वार्त्तिकादिकाच्च शतपथस्यापि पाणिनीयतः खलु प्राचीनत्व मेव। तथा ह्यस्त्येतत् सूत्रं पाणिनीयम्—"पुराणप्रोक्तेषु ब्राह्मण-कल्पेषु (४. ३. १०५.)"—इति। 'तृतीयान्तात् प्रोक्तार्थे णिनिः स्यात्, यत्प्रोक्ता पुराणप्रोक्ताश्चेद् ब्राह्मणकल्पास्ते भवन्ति। पुराणेन चिरन्तनेन मुनिना प्रोक्ताः। भल्लु—भाल्लविनः। शाट्यायनः—शाट्यायनिनः। कल्पे—पिङ्गेन प्रोक्तः पैङ्गी कल्पः। पुराण इति किम्? याज्ञवल्क्यानि ब्राह्मणानि, आश्मरथः कल्पः'—इति तत्रैव *वैयाकरणसिद्धान्तकौमुदी। तत्रैतद् विचार्यम्—यदि नाम याज्ञवल्क्यं ब्राह्मणं शतपथ मिति यावत् पाणिनेर्नावगतं स्यात्, तर्हीह किं प्रत्युदाहरणं भवेत्?—व्याप्तिव्यभिचारणाय सूत्रे पुराणविशेषण मुपपद्येत? न हि

भविष्यमाणग्रन्थस्य शतपथादेः प्रोक्तत्त्वं पाणिनेरभिमतं भवितु मर्हति, तत् किंव्यावर्तकं सूत्रस्थं पुराणपद मिति। वस्तुतस्तु पाणिनिना यथा प्राचीनत्वेन ज्ञातं पैङ्ग्यादिकं कल्पशास्त्रम्, तथैव ज्ञात मेव आश्मरथ्यादिकं च; अतएव प्रोक्तत्वेन तेषां सर्वेषा मेव ग्रहणसम्भवेऽनिष्टं प्रसज्येतेति प्राचीनेष्वपि कल्पेषु ये पुराणप्रोक्ताः=प्राचीनतमाः, तेभ्य एवं णिनिर्विधाय आश्मरथ्यादिभ्यो णिनिप्रसङ्गो वारितः; तथा सर्वस्मादेव कल्पशास्त्रात् प्राचीनेषु सुतरां प्राचीनतरेषु ब्राह्मणग्रन्थेषु सर्वत्रैव णिनि-प्रसङ्गवारणाय तत्रापि पुराणविशेषणं सार्थकम्; सति हि पुराणविशेषणे प्राचीनतरेभ्यः सर्वेभ्य एव ब्राह्मणग्रन्थेभ्यो न भवति णिनिः; अपि तु तत्रापि ये पुराणप्रोक्ताः=प्राचीन-तमाः, तेभ्य एवेति सिद्धं शाट्यायनि ब्राह्मण मित्यादि; ये तु प्राचीनतरेष्वपि ब्राह्मणग्रन्थेषु शाट्यायनादिपरभवप्रोक्ताः न तेभ्यो णिनिरिति सिद्धं याज्ञवल्क्यं ब्राह्मण मित्यादि च। एवञ्चातिप्राचीनेष्वेव पुराणप्रोक्तत्वं तदितरत्वं चेष्टं पाणिने-रिति याज्ञवल्क्यब्राह्मणादेरप्यतिप्राचीनत्वन्त्वक्षत मेव।

एव मेतत्सूत्रस्थं वार्त्तिक मप्यस्मन्मतसाधक मेव। तथाहि— "पुराणप्रोक्तेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्"-इति वार्त्तिकम्। शाट्यायनादिप्रोक्तानां ब्राह्मणानां, पिङ्गादिप्रोक्तानां कल्पानाञ्च यथा पाणिनिपूर्वप्रोक्तत्वम्, तथैव याज्ञवल्क्यादि-प्रोक्तानां ब्राह्मणाना मश्मरथादिप्रोक्तानाञ्च कल्पाना मिति सर्वेषा मेवैषां पाणिनिपूर्वप्रोक्तत्वेन तुल्यकालत्वात् पुराण-प्रोक्तत्वं समान मिति सर्वेभ्य एवैतेभ्यो णिनिः प्रसक्तः; तन्नि-वारणाय याज्ञवल्क्यादिभ्यः प्रतिषेधरूपो यत्नविशेषः कर्त्तव्य

इति च तद्वार्त्तिकाशयः । एवञ्चैतद्वार्त्तिकारम्भात् भगवतः कात्यायनस्य अतिप्राचीनेष्वेव ब्राह्मणेषु कल्पेषु च पुराणप्रोक्तत्वा-पुराणप्रोक्तत्वनिर्णये संशयः, तन्निरासाय च यत्नोऽवश्यं कर्त्तव्य इत्येवाशयः फलितः । कात्यायनसमकालिकस्यैव कस्यचित् याज्ञवल्क्यस्य तु सति शतपथनिर्मातृत्वे तत्र पुराणप्रोक्तेष्विति णिनिप्रसङ्ग एव कथम् ? कथं वा तन्निरासाय वार्तिकारम्भो भवेत् प्रयोजनीयः ?। तत्त्वतो पाणिनिसमकालिकानां पाणिनि-सद्मानाञ्च धीमतां प्राचीनतमेष्वपि ग्रन्थेषु पौर्वापर्यनिर्णयो यथा सुगमः, न तथा तत्परकालिकानां कात्यायनादीना मपीति तदानी मेव याज्ञवल्क्यादीनां परिगणनं सप्रयोजन मासीत्, तत् किं मद्यतनीयानां त्वस्मादृशाम् ।

एव मेतदीयं भाष्यञ्चास्मन्मतपोषक मेव । तथाहि— "पुराणप्रोक्तेषु ब्राह्मणकल्पेष्वित्यत्र याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । याज्ञवल्क्यानि ब्राह्मणानि, सौलभानीति । किं कारणम् ? तुल्यकालत्वात् ; एतान्यपि हि तुल्यकालानीति" —इत्येव तद्भाष्यम् । 'तुल्यकालत्वादिति—शाट्यायनादिप्रोक्तै-र्ब्राह्मणैरेककालत्वादित्यर्थः'—इत्येव च तथोक्तवान् कैयटो जैय-टात्मजः । यद्यपीह वार्तिकमत मेवानुमोदितं भाष्यकारेणेति गम्यते, तथापि नो न क्षतिः । श्रीमन्नागेशभट्टस्य मते तु शाट्या-यनादिसमकालतैव याज्ञवल्क्यादिप्रोक्तानां शतपथादीनाम् ; अतस्तेभ्यो णिनिः प्राप्तः, कात्यायनवचनेन वारितोऽनुमोदि-तञ्च तद्वचनं भाष्यकारेणेति (ल० श० शे० ) । तथाहि—'याज्ञ-वल्क्यानीति । कण्वादिभ्य इत्यण् । ते हि पाणिन्यपेक्षया आधुनिका इत्यभिमानः ; भाष्ये तु शाट्यायनादितुल्यकालत्वाद

* * * वचन मेवारब्धम्"–इति। वस्तुतो भाष्य एतत्पूर्वमेव "छन्दोब्राह्मणानि च तद्विषयाणि ( पां० ४. २. ६६. )"–इत्यत्रोक्तम्—"वक्ष्यत्येतत् 'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्'–इति। तन्नैव वक्तव्यम्; तद्विषयता च न भवतीति"–इति! "वक्ष्यत्येतदिति। पुराणप्रोक्तेष्वित्यत्र"—इत्येव च तत्र कैयटः। तथा च अतिप्राचीनेष्वेव ब्राह्मणकल्पग्रन्थेषु ये पुराणप्रोक्ताः, तत्रैव णिनिः पाणिनिना विहितः; ये तु नूतनप्रोक्ताः, तत्र तु णिनिविषयतैव नास्तीति व्यर्थं वार्तिक मिति तद्भाष्याशयः"। पाणिनिकालेऽपि ये ग्रन्था अतिप्राचीना इति प्रसिद्धा अतएव प्रोक्ता इत्येव व्यपदिष्टास्तदानीन्तनैः शिष्टैः, तेष्वेव के पुराणप्रोक्ताः के वा नेति निर्णयायैव परिगणन मवश्यं कर्त्तव्य मिति वार्तिककारमतम्; "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्"—इति भाष्येष्या च तत्खण्डनं योग्य मित्येवात्र सारम्। तदित्थं सूत्रकारवचनात्, वार्तिककारवचनात्, भाष्यकारादिवचनाच्चेद मेव सिद्धम्,—याज्ञवल्क्यादिप्रोक्तं शतपथादिकं शाट्यायनादिभ्योऽर्वाचीन मपि पाणिनीयतः खलु प्राचीनतम मेवेति।

वार्तिककारकात्यायनसमकालिकः कश्चन याज्ञवल्क्यो नासीदासीदेति नास्मद्विचारविषयः;—अपि तु शतपथप्रवक्ता याज्ञवल्क्यस्तु वार्तिककारकात्यायनसमकालिकः कथ मपि नैव; पाणिनिसमकालिकोऽपि न सः कथ मपि; प्रत्युत पाणिन्यादयो यस्मिन् युगे जाताः, यस्मिन् कल्पे जाताः ततोऽपि नूनं पूर्वतनः;. किञ्च तस्य शाट्यायनादिसमकालिकत्वाभावेऽपि ब्राह्मणकालजत्वं त्ववितथ मेवेति॥

तैत्तिरीयप्रथमारण्यके श्रुतं "स होवाच व्यासः पाराशर्यः (१. ९. २.)"—इति वचनं च तस्यारण्यकस्य युधिष्ठिरसमसामयिकव्यासात् परकालिकत्व मावेदयतीत्यपि वादो नूनं नामभ्रमविजृम्भित एव। युधिष्ठिरसमसामयिको व्यासोऽपि पराशरवंशीयः, परं न तु पराशरपुत्रः; शतपथीयवंशाम्नानेऽन्यथा श्रवणात्। तथाहि—"घृतकौशिकः पाराशर्य्यायणात्, पाराशर्यायणः पाराशर्यात्"-इत्यादि (१४. ५. २१.)। व्यास इत्यपि वंशनामैव। प्राचीनार्याणां गोत्रनामभिरेवासीद् व्यवहारः प्रचलितो न व्यक्तिनामभिः, तथाद्यापि दृश्यते इंलण्डीयादीनां तथा सपितृनाम-नामव्यवहारो भारतीयाना मपि दाक्षिणात्यानाम्। अतएव गोभिलपराशरव्यासाश्वलायनपाणिनिशौनकयास्कादीनां बहुत्वाद् भवेदेव तत्र पौर्वापर्यनिर्णये विभ्रमः। गण्डूषमात्रे फर्फरायमाणानां शफरीणा मिवाल्पविद्यानां बहुवादिना मस्माकं कथा तु दूरे आस्तां विद्वद्ग्रगण्याः षड्गुरुशिष्यादयोऽप्यतएवाभवन्नत्र विभ्रमावर्त्तमग्नाः। तन्निदर्शन मपि किञ्चित् प्रदर्शित मस्माभिर्नैरुक्तालोचने कः कालो यास्कस्येति विवेचनावसरे। अतो नाम दर्शनमात्रतः कालनिर्णयो नून मसम्भव एव। तद्यथा—अस्ति नाम कौथुमशाखीयाना मस्माकं गोभिलीयं गृह्यसूत्रम्; श्रुताश्च सामवेदीये वंशब्राह्मणे बहवो गोभिलाः। तद्यथा—"पूषमित्राच्च गोभिलात् पूषमित्रो गोभिलोऽश्वमित्राद् गोभिलादश्वमित्रो गोभिलो वरुणमित्राद् गोभिलाद् वरुणमित्रो गोभिलो मूलमित्राद् गोभिलान्मूलमित्रो गोभिलो वत्समित्राद् गोभिलाद् वत्समित्रो गोभिलो गौल्गुलवीपुत्राद् गोभिलाद् गौल्गुलवीपुत्रो गोभिलो बृह-

द्वसोः पितुर्बृहद्वसुर्गोभिलो गोभिलादेव गोभिलो"—इति। एवं वंशब्राह्मणग्रन्थरचनातः परमपि कति गोभिलाः सञ्जाताः, के वा तान् सङ्ख्यातुं समर्थाः? तदद्य कथं निर्णयेमहि वंशब्राह्मणोक्तेषु तत्परभवेषु वा कतमेन गोभिलेन प्रणीतः स सूत्रग्रन्थः? इति। तदेवं नाममात्रदर्शनतो वेदाङ्गसूत्रग्रन्थकालनिर्णयेऽपि पराहतमतीनामस्माकं कथं सम्भवेन्नाम वेदकालनिर्णय इति दिक्॥

अथ केचिच्च कालनिर्णेतारोऽथर्वसंहिताया ऊनविंशकाण्डीये सप्तमसूक्ते कृत्तिकानक्षत्रस्य प्रथमोपादानश्रुतेस्तत्प्रणयनकाले कृत्तिकैवासीद्राशिचक्रस्य प्रथमं नक्षत्रमित्यनुमानस्य सौकर्यात् प्रायः सार्द्धत्रिसहस्राः सार्द्धचतुःसहस्रा वा अब्दा व्यतीतास्तद्रचनाकालत इत्याहुः। तदप्यसङ्गतं प्रतिभात्यस्माकम्; को जानाति हि कृत्तिका कतिवारमलभतैतद्राशिचक्रस्य प्राथम्यम्? को वा कथयितुं शक्नोत तत्र कतमस्मिन् प्राथम्ये रचितोऽयमथर्ववेद इति?

वस्तुतः कृत्तिकाया देवनक्षत्रेषु प्राथम्यादन्यत्रापि बहुत्र प्रथममेवोपादानं श्रूयते। तद्यथा—

"कृत्तिकानक्षत्रमग्निर्देवता"—इत्यादि तै॰ सं॰ ४.४.१०. १।

"कृत्तिकास्वग्निमादधीत"—इत्यादि तै॰ ब्रा॰ १.१.२.५।

"अग्निर्नः पातु कृत्तिकाः"—इत्यादि च तै॰ ब्रा॰ ३.१.१.१।

देवनक्षत्रेषु प्राथम्यं चैतस्यैवं श्रूयते—

"देवनक्षत्राणि वा अन्यानि यमनक्षत्राण्यन्यानि। कृत्तिकाः प्रथमं विशाखे उत्तमम्। तानि देवनक्षत्राणि। अनुराधाः प्रथमम् अपभरणीरुत्तमम्। तानि यमनक्षत्राणि। यानि देव-

नक्षत्राणि तानि दक्षिणेन परियन्ति । यानि यमनक्षत्राणि तान्युत्तरेण । * * * । यान्येव देवनक्षत्राणि तेषु कुर्वीत यत्कारी स्यात् पुण्याह एव कुरुते"–इति तै० ब्रा० १.५.२.६–९ ।

तत्रैवाथर्वणसूक्ते "भानुराश्लेषा अयनं मघा मे"—इति-श्रवणादथर्वसंहितायाः प्रणयनकाले खल्वासीदयनारम्भोऽश्लेषाख्यनक्षत्रशेषसीमतो मघाद्यसीमतो वेत्यस्यापि स्वीकारेऽपि पूर्वन्यायेनैवाशक्योऽस्माकं वेदप्रणयनकालनिर्णय इति शम् ॥

---

अथास्यार्थधर्ममूलस्य सर्वविद्यानिधानस्य विद्यापरपर्यायस्य वेदस्य संहिताग्रन्थानां बोधाय ब्राह्मणग्रन्थाना मध्ययनमेव मुख्य उपायः, यास्ककृतो निरुक्त ग्रन्थश्च विशेषप्रतिपत्तिकरः । स च मया आस्यायितिकसभादेशतः स्वकृतटीप्पन्यादियुतः सटीकश्च प्रकाशितः ( शा० १८०४ – १८११ )। स्कन्द-स्वामि-भवस्वामि गुहदेव-श्रीनिवास-माधवदेव-उवटभट्ट-भास्कर-मिश्र-भरतस्वामि–हरदत्त–माधवभट्टा अप्यभवन् मन्त्रब्राह्मणानां भाष्यकाराः॰। तेषा मन्यतमैः कृतानि भाष्याणि सन्ति च मदन्तिके एकैकग्रन्थीयान्येव । स्कन्दस्वाम्यादीनां रचनाकालश्च मन्निरुक्तालोचने किञ्चिदालोचितः । तत उत्तरं सायणाचार्येणापि सर्वेषां संहिताब्राह्मणग्रन्थानां भाष्याणि विरचितानि । तान्येवास्माक मिदानीन्तनाना मतिगम्भीरेऽपि वेदसागरे विहरणायावलम्बनीयान्युडुपानि । तेषां भूमिकादिषु च बहूनि वैदिकतत्त्वानि प्रकाशितानि। ततश्चेह कतिचित् सञ्चिनोमि । तद्यथा, ऋग्वेदस्य संहिता-भाष्यभूमिकातः —

"विषयप्रयोजनसम्बन्धाधिकारिज्ञान मन्तरेण श्रोतृप्रवृत्त्य-

भावादिविषयादयो निरूप्यन्ते। व्याख्यानस्य व्याख्येयो वेदो विषयः। तदर्थज्ञानं प्रयोजनम्। व्याख्यानव्याख्येयभावः सम्बन्धः। ज्ञानार्थीचाधिकारी। यद्यप्येतावत्प्रसिद्धं तथापि वेदस्य विषयाद्यभावे व्याख्यानस्यापि परमविषयादिकं न स्यात्, अतो वेदस्य चतुष्टय मुच्यते।—

वेदे पूर्वोत्तरकाण्डयोः क्रमेण धर्मब्रह्मणी विषयः; तयो-रनन्यलभ्यत्वात्। तथा च पुरुषार्थानुशासने सूत्रितम्—"धर्म्म-ब्रह्मणी वेदैकवेद्ये"-इति। जैमिनीये च द्वितीय सूत्रे चोदनैव धर्मे प्रमाणम्, चोदना प्रमाण मेवेति नियमद्वयं सम्प्रदाय-विद्भिरभिहितम्। चोदनैवेत्यमु मर्थ मुपपादयितुं चतुर्थसूत्रे प्रत्यक्षविषयत्वं धर्मस्य निराकृतम्—"प्रत्यक्ष मनिमित्तं विद्य-मानोपलम्भनत्वात्"—इति। अनुष्ठानादूर्द्ध मुत्पत्स्यमानस्य धर्म्मस्य पूर्वं मविद्यमानत्वान्न प्रत्यक्षयोग्यतास्ति। उत्तरकाले-ऽपि रूपादिराहित्यात् नेन्द्रियैरवगम्यते। अत एवादृष्ट मिति सर्वैरभिधीयते। लिङ्गराहित्यान्नानुमानविषयत्व मप्यस्ति। सुख-दुःखे धर्म्माधर्म्मयोर्लिङ्ग मिति चेत्, वाढम्; अत्र मपि लिङ्ग-लिङ्गिभावो वेदेनैव गम्यते। ततश्चोदनैव धर्मे प्रमाणम्॥ वैयासिकस्य तृतीयसूत्रस्य द्वितीयवर्णके ब्रह्मणः सिद्धवस्तुनो-ऽपि शास्त्रैकविषयत्वं भाष्यकृद्भिर्व्याख्यातम्। शास्त्रादेव प्रमाणा-ज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः। इति श्रुतिश्च भवति "नावेदविन्मनुते तं बृहन्तम्"—इति। तत्रोपपत्तिः पूर्वाचार्यैरेव मुदीरिता— रूपलिङ्गादिराहित्यान्न मानान्तर-योग्यतेति। तस्मादनन्यलभ्यत्वादस्ति धर्म्मब्रह्मणोर्वेदविषयत्वम्॥

तदुभयज्ञानं वेदस्य साक्षात्प्रयोजनम्। न च तस्य ज्ञानस्य

सप्तद्वीपा वसुमती राजासौ गच्छतीत्यादिज्ञानवदपुरुषार्थपर्यवसायित्वं शङ्कनीयम्; धर्मप्रयुक्तस्य पुरुषार्थस्य स्तूयमानत्वात्। "धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पाप मपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति"—इति (तै० आ० १०. ६३. ७.)। उद्दण्डस्य राज्ञो नियामकत्वाद्विवदमानयोः पुरुषयोर्मध्ये दुर्बलस्यापि राजसाहाय्यवज्जयहेतुत्वाच्च धर्मः पुरुषार्थः। तथा च वाजसनेयिनः सृष्टिप्रकरणे समामनन्ति "तच्छ्रेयोरूप मत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयांस माशंसते; धर्मेण यथा राज्ञैवम्"—इति (१४.४.२.२६.)। 'ब्रह्मविदाप्नोति परम् (तै० उ० २.१.)' 'ब्रह्म वेद ब्रह्मैव भवति', 'तरति शोक मात्मवित्'–(छा० उ० ७. १. ३.) इत्यादिश्रुतिषु ब्रह्मज्ञानप्रयुक्तपुरुषार्थः प्रसिद्धः॥

तदुभयज्ञानार्थी वेदेऽधिकारी। स च त्रैवर्णिकः पुरुषः। स्त्रीशूद्रयोस्तु सत्या मपि ज्ञानापेक्षाया मुपनयनाभावेनाध्ययनराहित्याद्वेदेऽधिकारः प्रतिबद्धः; धर्मब्रह्मज्ञानं तु पुराणादिमुखेनोत्पाद्यते। तस्मात्त्रैवर्णिकपुरुषाणां वेदमुखेनार्थज्ञानेऽधिकारः॥

सम्बन्धस्तु वेदस्य धर्मब्रह्मभ्यां सह प्रतिपाद्यप्रतिपादकभावः, तदीयज्ञानेन सह जन्यजनकभावः, त्रैवर्णिकपुरुषैः सहोपकार्योपकारकभावः॥

तदेवं विषयाद्यनुबन्धचतुष्टय मवगत्य समाहितधियः श्रोतारो वेदव्याख्याने प्रवर्तन्ताम्॥

अतिगम्भीरस्य वेदस्यार्थ मवबोधयितुं शिक्षादीनि षड्-

ङ्गानि प्रवृत्तानि। अत एव तेषा मपरविद्यारूपत्वं मुण्डकोपनिषद्गाथर्वणिका आमनन्ति-"द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष मिति। अथ परा यया तदक्षर मधिगम्यते"-इति (१. १. ४, ५.)। साधनभूतधर्मज्ञानहेतुत्वात् षड्ङ्गसहितानां कर्म्मकाण्डाना मपरविद्यात्वम्, परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां परविद्यात्वम्।

वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। * * *। कल्पस्त्वाश्वलायनापस्तम्बबोधायनादिसूत्रम्। कल्प्यते समर्थ्यते यागप्रयोगो ऽत्रेति व्युत्पत्तेः। * * *। व्याकरण मपि प्रकृति-प्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते। * * *। अथ निरुक्तप्रयोजन मुच्यते। अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। गौः ग्मा ज्मा क्ष्मा क्षा क्षमेत्यारभ्य वसवः वाजिनः देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय पदान्तरापेक्षा न विद्यते। एतावन्ति पृथिवीनामान्येतावन्ति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्ट मभिहितत्वात्। * * *। तद्व्याख्यानं च 'समाम्नायः समाम्नातः'-इत्यारभ्य 'तस्यास्तस्यास्ताद्भाव्य मनुभवत्यनुभवति'-इत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे। तदपि निरुक्त मित्युच्यते। एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेण-च्यन्त इति व्युत्पत्तेः। * * *। तथा छन्दोग्रन्थोऽप्युपयुज्यते। छन्दोविशेषाणां तत्र तत्र विहितत्वात्। तस्मात्सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्त इति ह्याम्नातम्।

गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येतानि सप्त छन्दांसि। * * * ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थे विहितम्। 'यज्ञकालार्थसिद्धये'-इति ॥ * * * ॥

स च ऋग्वेदोऽस्माभिः षडंगानुसारेण व्याख्यायते। मन्त्र-ब्राह्मणात्मके वेदे ब्राह्मणस्य मन्त्रव्याख्यानोपयोगित्वादादौ ब्राह्मणमारण्यककाण्डसहितं व्याख्यातम्। अथ तत्र तत्र ब्राह्मणोदाहरणेन मन्त्रात्मकसंहिताग्रन्थो व्याख्यातव्यः। 'अग्नि-मीळे'-इत्यारभ्य 'यथा वः सुसहासति'-इत्यन्तोऽष्टकाण्डै-र्दशमण्डलैश्चतुःषष्ट्यध्यायैरीषदधिकद्विसहस्रवर्गैरीषदधिकाभि-र्दशसहस्रसंख्याभिर्ऋग्भिश्चोपेतः। तस्य च ग्रन्थस्य कृत्स्नस्या-ध्याम्नातक्रमेणैव सामान्यविनियोगो ब्रह्मयज्ञजपादौ पूर्वमेवा-भिहितः; विशेषविनियोगस्तु तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः। स च त्रिविधः। सूक्तविनियोगस्तृचविनियोग एकैकस्या ऋचो विनियोगश्चेति। * * *। तत्र हीनपादग्रहणात् सूक्त-निश्चयः; 'सूक्तं सूक्तादौ हीने पादे (आ० श्रौ० १. १. १८)' —इति परिभाषितत्वात्। * * *। कृत्स्नपादग्रहणा-दृगित्यवगम्यते; 'ऋचं पादग्रहणे (आ० श्रौ० १. १, १७) —इति परिभाषितत्वात् *। * * * ॥

ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते—

'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।
योऽध्यापयेद् जपेद् वापि पापीयान् जायते तु सः ॥
ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥'—इति।

---

* 'अधिके तृचं सर्वत्र (आ० श्रौ० १, १, १९,)'—इति तृचग्रहणसङ्केतः।

वेदनविधिश्च स्मर्यते—

'स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च।

मन्त्रजिज्ञासमानेन वेदितव्यं पदे पदे ॥'-इति।

० ० ० ०

ऋषिः। 'ऋषगतौ'—इति धातुः। 'सर्वधातुभ्य इन् (उ० ४१. १९.), 'इगुपधात् कित् (उ० ४. १२१.)'। वेदार्थं तपोऽनुतिष्ठतः पुरुषान् स्वयम्भूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते— "अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्त ऋषयोऽभवन्"—इति (तै० आ० २. ९. १.)। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनात् ऋषित्व मित्यभिप्रेत्य स्मर्यते—

"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।

लेभिरे तपसा पूर्वं मनुज्ञाता स्वयम्भुवा ॥"-इति।

पुरुषस्य पापसम्बन्धं वारयितु माच्छादकत्वात् छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते—"छादयन्ति ह वा एनं छन्दांसि पापात् कर्मणः"-इति। अथवा चीयमानाग्निसन्तापस्याच्छादकत्वाच्छन्दः। तच्च तैत्तिरीया आमनन्ति— "प्रजापतिरग्नि मचिनुत स क्षुरपविर्भूत्वातिष्ठत् तं देवा बिभ्यतो नोपायन् ते छन्दोभिरात्मानं छादयित्वोपायन् तच्छन्दसां छन्दस्त्वम्"—इति (तै० स० ५. ६. ६. १.)। यद्वापमृत्युं वारयितु माच्छादयतीति छन्दः। तदपि छान्दोग्योपनिषद्याम्नातम् —"देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरात्मान माच्छादयन् यदेभिराच्छादयं स्तच्छन्दसां छन्दस्त्वम्"—इति (छा० उ० १. ४. २.)।

तथा द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्द इतीत्रतदाम्नायते—"दिवा वै नोऽभूदिति तद्देवानां देवत्वम्"—इति । अतो दीव्यतीति देवः । मन्त्रेण द्योत्यत इत्यर्थः । ० ० ० स्तूयमानत्वात् ० ० ० देवः ॥"—इति ।

अथ ऐतरेयब्राह्मणभाष्ये यानुक्तानि वैदिकतत्त्वानि, तानि तु त्रयीसंग्रहे यथास्थानं संगृहीतान्येव ।

अथ ऐतरेयप्रथमारण्यकभाष्यतः—

"ऐतरेयब्राह्मणेऽस्ति काण्ड मारण्यकाभिधम् ।
अरण्य एव पाठ्यत्वादारण्यक मितीर्य्यते ॥ ५ ॥
आरण्यकानि पञ्चेति प्रोक्तान्यर्थविभेदतः ।
महाव्रत महः प्रोक्तं प्रथमारण्यके स्फुटम् ॥ ६ ॥
गवामयन मित्युक्ते सत्रे संवत्सरात्मके ।
उपान्त्य मस्ति यदहस्तन्महाव्रतनामकम् ॥ ७ ॥
सत्रप्रकरणेऽनुक्तिररण्याध्ययनाय हि ।
महाव्रतस्य तस्यात्र हौत्रं कर्म्म विविच्यते ॥ ८ ॥

तत्रादौ विवक्षित मर्थं प्रतिजानीते । "अथ महाव्रतम्"—इति । 'अथ' शब्द आरम्भवाची । महाव्रताख्यं कर्म्म प्रारब्ध मित्यर्थः । अथवा अय मानन्तर्य्यार्थः 'अथ'शब्दः । प्रकृतिज्ञानानन्तरं विकृतिरूपं महाव्रताख्यं कर्माभिधीयत इति शेषः । प्रकृतिज्ञाने हि सति ततो विकृतावतिदिष्टा धर्माः साकल्येन अवबोद्धुं शक्यन्ते । विश्वजिच्चतुर्विंशादीनि कर्माणि महाव्रतस्य प्रकृतयः । आज्यप्रउगनामके द्वे शस्त्रे विश्वजिदाख्यात् कर्मणो महाव्रतेऽतिदिश्येते । होत्रकाणां शस्त्राणि चतुर्विंशाख्यात् कर्मणोऽतिदिश्यन्ते । तथा च पञ्चमारण्यके पठिष्यते—

"आज्यप्रउगे विश्वजितो ह्योत्राश्चतुर्विंशत्"-इति (५ आ० १. १. ४, ५.) ॥"—इति ।

अथ ऐतरेयद्वितीयारण्यकभाष्ये यान्युक्तानि वैदिकतत्त्वानि, तानि तु त्रयीसंग्रहे यथास्थानं (१६८-१७५ पृ०) सङ्गृहीतान्येव ।

अथ ऐतरेयतृतीयारण्यकभाष्यतः—

"प्राणविद्या मध्यमस्य ब्रह्मविद्योत्तमस्य च ।

पूर्वोक्तोक्थाधमस्याथ संहितोपास्तिरीर्यते ॥ २ ॥

त्रिविधो विद्याधिकारी, उत्तमो मध्यमोऽधमश्च । सर्वस्मात् संसाराद्विरक्त एकाग्रचित्तः सद्यो मुक्तिकाम उत्तमः । तं प्रति 'आत्मा वा इद मेक एवाग्र आसीत्'-इत्यादिना (२ आ० ५—७ अध्या०=ऐ० उ०) ब्रह्मविद्योक्ता । हिरण्यगर्भप्राप्तिद्वारा क्रममुक्तिकामो मध्यमः । तं प्रति 'उक्थ मुक्थम्'—इत्यादिना (२ आर० १. २.) प्राणविद्योपास्तिरुक्ता । यस्तु द्विविधां मुक्ति मकामयमानः प्रजापश्वादिमात्रकामोऽधमः । तं प्रति संहितोपासनं तृतीयारण्यकेऽभिधीयते । तत्र संहितोपासनं प्रतिजानीते—"अथातः संहिताया उपनिषत्"-इति (३ आ० १. १.) । 'अथ' प्राणविद्याब्रह्मविद्ययोः कथनानन्तरं यतः कारणात् प्रबलया पाठवासनया युक्तस्य पाठसम्बन्धरहितयोः प्राणब्रह्मविद्ययोश्चित्तं न प्रविशति, 'अतः' कारणात् 'संहितायाः' पाठसम्बन्धिन्याः, 'उपनिषत्' विद्या, उच्यत इति शेषः । उपनिषस्य मस्यां विद्यायां प्रजापश्वादिफलमिति 'उपनिषत्' ।" ॥

अथ ऐतरेयचतुर्थारण्यकभाष्यतः—

"कथितोपनिषत्सर्वा महानाम्न्याख्यमन्त्रकाः ।

अरण्याध्ययनार्थं ते प्रोच्यन्तेऽथ चतुर्थके ॥ २ ॥"-इति ॥

अथ ऐतरेयपञ्चमारण्यकभाष्यतः—

"त्रिविधं महाव्रताख्यं कर्म;—एकाहरूपम्, अहीनावयवरूपम्, सत्त्रावयवरूपञ्चेति। तस्य त्रिविधस्यापि हौत्रप्रयोगं वक्तुमुपक्रमते—"महाव्रतस्य पञ्चविंशतिं सामिधेन्यः"—इति (५ आर० १.१.)। ननु प्रथमारण्यकेऽपि 'अथ महाव्रतमिन्द्रो वै वृत्रं हत्वा'-इत्यादिना (१ आर० १. १.) महाव्रतप्रयोगोऽभिहितः, पञ्चमेऽपि तस्यैवाभिधाने पुनरुक्तिः स्यात्? नायं दोषः; सूत्रब्राह्मणरूपेण तयोर्विभेदात्। पञ्चमारण्यकमृषिप्रोक्तं सूत्रम्, प्रथमारण्यकन्त्वपौरुषेयं ब्राह्मणम्। अतएव तत्रार्थवादप्रपञ्चेन सहिताविधयः श्रूयन्ते; पञ्चमे तु न कोऽप्यर्थवादोऽस्ति। शाखान्तरगताश्च मन्त्रा बहव उपलभ्यन्ते। तस्मात् "अथैतस्य समाम्नायस्य (आ० श्रौ० १. १. १.)'--इत्यादिद्वादशाध्यायवत् 'महाव्रतस्य पञ्चविंशतिम्'—इत्यादि पञ्चमारण्यकं सूत्रमेव। अरण्ये एवैतदधीयमित्यभिप्रेत्याधीयतार आरण्यकाण्डेऽन्तर्भाव्याधीयते। एतस्मिन् पञ्चमारण्यके सूत्रकारेणाभिधीयमानं महाव्रताख्यं कर्म गवामयने सत्त्रे समुत्पन्नम्। अतएवाध्वर्युशाखायां 'गावो वा एतत् सत्त्रमासत'—इत्यादिके गवामयनप्रकरणे 'देवानां वा सन्तं जग्मुम्'—इत्यादिकेनानुवाकत्रयेण महाव्रतमाम्नातम्; न तु तस्यामेव शाखायाम्। ग्रन्थान्तरे 'प्रजापतिः प्रजाः सृष्ट्वा वृत्तोऽशयत्'—इत्यनुवाकेन (तै० ब्रा० १. २६. १.) तदाम्नातम्? इति चेत्, आम्नायतां नाम तस्याप्यनुवाकस्य गवामयनप्रकरणगतत्वम्; 'नवैतान्यहानि भवन्ति'—इत्यादिके (तै० ब्रा० १. २. २. १.) गवामयनप्रतिपादकेऽनुवाकपञ्चके 'प्रजापतिः प्रजाः सृष्ट्वा'—इत्याद्यनुवाकः (तै० ब्रा० १. २.

६. १.) पञ्चमत्वेनाम्नातः। उद्गातृवेदेऽपि 'गावो वा'—इत्या-
द्यारभ्य (ता० ब्रा० १. ३. १. १.) समाम्नायते। गवामयन-
प्रकरणे 'प्रजापतिः प्रजा असृजत'—इत्यादिना (ता० ब्रा०
१. ४. १०. १.) महाव्रताख्यमेकमहराम्नातम्, तच्च सत्रस्यो-
पान्त्यमहः; उदयनीयाख्यादन्तिमादह्नः समनन्तरपूर्वभा-
वित्वात्। तथाचापस्तम्बः—'सन्तिष्ठते महाव्रतम्'—इत्येतदहः
समाप्त्यानन्तरं व्याख्याय 'उदयनीयः'—इत्युदयनीयाख्यं चरम
महः प्रोवाच। तस्मात् सत्रे समुत्पन्नस्य महाव्रतस्य वचन-
बलात्सत्राद्बहिरप्येकाहरूपेणाहीनगतत्वेन च पृथक् प्रयोगो
भवति। यथा राजसूयोत्पन्नाया अवेष्टेर्वचनात् पृथक् प्रयोगः।
यथा वा राजसूयोत्पन्नानां चातुर्मास्यानाम् 'अक्षय्यꣳ ह वै
चातुर्मास्ययाजिनः सुकृतं भवति'—इति वचनेन पृथक् स्वतन्त्र-
प्रयोगः। तद्वदेकाहपक्षे स्वातन्त्र्यम्। अहीनत्वपक्षे तु पौण्ड-
रीकनाम्न एकादशरात्रस्य इदं दशम महर्भवति। तथा चाप-
स्तम्बः 'अथैकेषा मत्यायन् गाः पञ्चाहश्चत्वारश्छन्दोमा महाव्रतं
विश्वजित्सर्वपृष्ठोऽतिरात्रः'—इति पौण्डरीकाहःकॢप्तिं सुक्तवान्।

अथ सत्रे समुत्पन्नं महाव्रतं प्रकृतिः। एकाहरूप महीन-
रूपञ्च विकृतिः। अतः सत्रगतस्य महाव्रतस्य प्राधान्येन प्रयोग
इहोपदिश्यते। ननु तस्यापि महाव्रतस्य परम्परयाग्निष्टोम-
विकृतित्वेन सोमयागरूपत्वात् सोमयागे च स्तोत्रशस्त्रादि-
वत्सामिधेनीना मङ्गत्वाभावात् पञ्चविंशतिं सामिधेनीविधान
मयुक्त मिति चेत्, नायं दोषः; सोमयागस्य सामिधेन्यपेक्षा-
राहित्येऽपि तदङ्गभूतस्य सवनीयस्य पशोस्तदपेक्षत्वात्। आन-
र्थक्यात्तदङ्गेष्वितिन्यायेन प्रधानेनान्वयरहितस्य तदङ्गान्वयो-

यपत्तेः। अतोऽङ्गद्वारा सामिधेनीनां महाव्रतस्येति सम्बन्ध-वाचिनी षष्ठी युज्यते। 'पञ्चविंशतिम्', इति द्वितीया प्रथमान्तत्वेन परिणेतव्या; सामिधेन्यभिधा ऋचः, पञ्चविंशति-सङ्ख्याका इत्यर्थः। सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिः ऋग्भिस्ताः 'सामिधेन्यः'। तथा चोक्तम्—'ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने'—इति (अम० को० २. ७. २२.)। सवनीयस्य पशोः प्रोक्षणादूर्ध्व मध्वर्युणा प्रेषितो होता सामिधेनीरनुब्रूयात्। तथा चापस्तम्ब आह—'उपरिष्टादधस्तात्सर्वतश्च प्रोक्ष्य वेदं निधाय सामिधेनीभ्यः प्रतिपद्यते'—इति।"—इति॥

अथ तैत्तिरीयसंहिताभाष्ये भूमिकायां यानुक्तानि, तानि प्रायः ऋग्भाष्यभूमिकोक्ततुल्यान्येव; ततः प्रथममन्त्रव्याख्यानावसरे तु यानुक्तानि, तेभ्यो यथाप्रयोजन मत्रैव छित्वाछित्वोद्धृतानि, (२९—४८)॥

अथ तैत्तिरीयब्राह्मणभाष्यभूमिकातः—

"यद्यपि संहितायाम् 'इषेत्वोर्ज्जेत्वा'—इत्यादीनां दर्शपूर्णमासमन्त्राणा मादौ (१. १. १. १.) समाम्नातत्वात् तद्व्याख्यानरूपे ब्राह्मणे पौरोडाशिककाण्ड मादौ पठितव्यम्, तथापि दर्शपूर्णमासयोराहवनीयाद्यग्निसापेक्षत्वादग्नीनां चाधानसाध्यत्वात् प्रथमकाण्डस्याद्ये प्रपाठकेऽग्न्याधानविधिरुच्यते। यद्यपि 'कृत्तिकास्वग्नि मादधीत'—इत्यय मेव आधानब्राह्मणस्य उपक्रमः तथापि संहितायां ग्रहकाण्डे शुक्रामन्थिग्रहप्रचारार्थानां मन्त्राणा मनुक्तत्वेनात्र वक्तव्यत्वात् तेषाञ्चाशासनीयफलप्रतिपादकत्वेन मङ्गलरूपत्वादाद्यानुवाके तान् परिशिष्टान् मन्त्रानभिदधानोऽर्थान्मङ्गलाचरणं सम्पादयति 'ब्रह्म सन्धत्तम्'—इति।

ब्रह्मशब्दो जगत्कारणे परमात्मनि मुख्यतया वेदे प्रयुज्यते। तथा चैतरेयिणः स्वकीयोपनिषदि समामनन्ति—'प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म'—इति (ऐ० उ० ३. ३.)। तैत्तिरीयाश्च 'सत्यं ज्ञानमनन्तं ब्रह्म'—इति (तै० उ० २. १.)। वाजसनेयिनश्च 'विज्ञानमानन्दं ब्रह्म'—इति (बृ० उ० ३. ९. २८.)। एवं सति ब्रह्मशब्दप्रतिपादकोऽस्य वर्णमात्रको परब्रह्मणि सहसा बुद्धिस्थत्वादर्थान्मङ्गलाचरणं सम्पद्यते। तस्य ब्रह्मणः प्रतिपादकत्वेन वेदोऽपि ब्रह्मशब्दस्यार्थः। ततो ग्रन्थादौ वेदपुरुषोऽनुस्मृतो भवति। तादृशस्य वेदाध्ययनाध्यापनयोर्मुख्याधिकारसम्पादिका ब्राह्मणजातिरपि ब्रह्मशब्दस्यार्थः, सोऽप्यत्र मन्त्रे विवक्षितः। उत्तरवाक्यगतक्षत्रशब्दसाहचर्यात्। एवं सत्यत्र प्रतिपाद्यत्वेनाविवक्षितोऽपि परमात्मा सहसा प्रतीयमानो विघ्नपरिहारादिरूपं मङ्गलं सम्पादयति। यथा ब्राह्मणभोजनार्थमानीयमानस्य दधिकुम्भस्य दर्शनेन ग्रामान्तरे जिगमिषूणां मङ्गलं तद्वत्। तस्मादाद्यानुवाके 'ब्रह्म सन्धत्तम्'—इत्यादिमन्त्राणामाम्नानं युक्ततरम्।"—इति॥

अथ तैत्तिरीयारण्यकभाष्यतः—

"अरण्याध्ययनादेतदारण्यकमितीर्यते।
अरण्ये तदधीयीतेत्येवं वाक्यं प्रवक्ष्यते॥
काण्डमारण्यकं सर्वं व्याख्यातव्यं प्रयत्नतः।
आरण्यकविशेषास्तु पूर्वाचार्यैरुदीरिताः॥
हेतून् प्रवर्ग्यकाण्डस्य याश्चोपनिषदो विदुः।
आरुणीयविधिश्चैव काठके परिकीर्तितः॥
रुद्रो नारायणश्चैव मेधो यश्चैव पित्र्यः।

एतदारण्यकं सर्वं नाव्रतो श्रोतु मर्हति ॥
कठेन मुनिना दृष्टं काठकं परिकीर्त्त्यते ।
सावित्रो नाचिकेतश्च चातुर्होत्रस्तृतीयकः ॥
तुर्यो वैश्वसृजस्तद्वदङ्गिरारुणकेतुकः ।
स्वाध्यायब्राह्मणञ्चेति सर्वं काठक मीरितम् ॥
नारण्याधीतिनियमः सावित्रादिचतुष्टये ।
अतस्तद्ब्राह्मणग्रन्थे श्रुतं व्याख्यात मप्यदः ॥
अङ्गिरारुणकेत्वाख्यः पाठके पञ्चमे श्रुतः ।
आरण्यकाद्यवाम्नातस्तद्व्याख्याथ प्रतन्यते ॥"–इति ॥

तत्रैव षष्ठप्रपाठकभाष्यशेषे—

"यो दर्शपूर्णमासाद्यैः पितृमेधान्त ईरितः ।
कर्म्मकाण्डः समग्रोऽयं व्याख्यातो बालबुद्धये ॥"–इति ॥

तैत्तिरीयारण्यकस्य सप्तमाष्टमनवमाध्यायाः उपनिषद्रूपाः; तत्र सायणकृतं भाष्यं न दृश्यते ।

अथ दशमप्रपाठकभाष्यारम्भे—

"वारुण्युपनिषद्युक्ता ब्रह्मविद्या ससाधना ।
याज्ञिक्यां खिलरूपायां सर्वशेषोऽभिधीयते ॥

यथा बृहदारण्यके सप्तमाष्टमाध्याये खिलकाण्डत्वे नाचार्यैरुदाहृतौ, तथेयं नारायणीया व्याख्या याज्ञिक्युपनिषदपि खिलकाण्डरूपा; तल्लक्षणोपेतत्वात् । कर्म्मोपासनब्रह्मकाण्डेषु त्रिष्वपि यद्वक्तव्य मवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णकरूपं खिलत्वम् । बृहदारण्यके सप्तमाध्याये 'पूर्णमदः पूर्ण मिदम्' --इत्यादिना ( १.१. ) ब्रह्मतत्त्व मभिहितम् । 'ॐ खं ब्रह्मे-त्यादिभिरष्टमाधरायगतैश्च 'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ( ८.१.

१. )'-इत्यादिभिर्वाक्यैर्नानाविधान्युपासनान्यभिहितानि। 'स यः कामयेत महत् प्राप्नुयाम् ( ८. ३. १. )'-इत्यादिना मन्थाख्यं कर्माभिहितम्। तथा पुत्रविशेषादिकामनायुक्तानां तत्कर्माण्यभिहितानि ( ८. ४. ६—१८. )। एव मत्रापि 'अम्भस्य पारे' —इत्यादिना ब्रह्मतत्त्व मभिहितम् (१ अनु०)। 'आदित्यो वा एष एतन्मण्डलम्'—इत्यादिनोपासन मभिहितम् ( १२ अनु० ) 'भूरन्न मग्नये पृथिव्यै स्वाहा'—इत्यादिना कर्माण्यभिहितानि ( २ अनु० )। तत्र कर्म्मणां बाहुल्याद्याज्ञिकीत्युच्यते। उपक्रमे ब्रह्मतत्त्वाभिधानादुपसंहारे च ब्रह्मज्ञानसाधनानां सत्यादीनां सन्यासान्ताना मभिधानादुपनिषदित्युच्यते। तदीयपाठसम्प्रदायस्तु देशविशेषेषु बहुविध उपलभ्यते। तत्र यद्यपि शाखाभेदः कारणं, तथापि तैत्तिरीयशाखाध्यापकैस्तत्तद्देशनिवासिभिः शिष्टैरादृतत्वात् सर्वोऽपि पाठ उपादेय एव। तत्र द्रविडानां चतुःषष्ट्यनुवाकपाठः। आन्ध्राणा मशीत्यनुवाकपाठः। कर्णाटकेषु केषाञ्चिच्चतुःसप्ततिपाठः; अपरेषां नवाशीतिपाठः। तत्र वयं पाठान्तराणि यथासम्भवं सूचयन्तोऽशीतिपाठं प्राधान्येन व्याख्यास्यामः॥''-इति॥

अथ सामवेदीयपूर्वार्च्चिकभाष्यभूमिकातः—

"सामवेदार्थ मेषोऽत्र प्रकाशयति सादरम्।
उद्गातुस्तत्त्वजिज्ञासोरपि तेन कृतार्थता॥
यज्ञो ब्रह्म च वेदेषु द्वावर्थौ काण्डयोर्द्वयो।
अध्वर्युमुख्यैरृत्विग्भिश्चतुर्भिर्यज्ञसम्पदः॥
निर्म्मिमीते क्रियासङ्घैरध्वर्युर्यज्ञियं वपुः।
तदलंकुर्वते होता ब्रह्मोद्गातेत्यमी त्रयः॥

शस्त्रयाज्यानुवाक्याभिर्होतालङ्कृतेऽध्वरम् ।
आज्यपृष्ठादिभिः स्तोत्रैरुद्गातालङ्करोत्यमुम् ॥
त्रयाणा मपराधन्तु ब्रह्मा परिहरेत् सदा ।
'ऋचास्त्व:'–इति मन्त्रेऽसावर्थः सर्वोऽभिधीयते ॥
यज्ञं यजुर्भिरध्वर्युर्निर्मिमीते ततो यजुः ।
व्याख्यातं प्रथमं; पश्चादृचां व्याख्यान मीरितम् ॥
साम्ना मृगाश्रितत्वेन सामव्याख्याऽथ वर्ण्यते ।
अनुतिष्ठासुजिज्ञासावशाद् व्याख्याक्रमो ह्ययम् ॥
जाते देहे भवत्यस्य कटकादि विभूषणम् ।
आश्रितम् मणिमुक्तादि कटकादौ यथा तथा ॥
यजुर्जाते यज्ञदेहे स्यादृग्भिस्तद्विभूषणम् ।
सामाख्या मणिमुक्ताद्या ऋक्षु तासु समाश्रिताः ॥

* * * *

यदुक्तं 'गीतिषु सामाख्या'-इति ( जै० सू० २. १. ३६. ) तदेव विशदीकर्तुं सप्तमाध्यायस्य द्वितीयपादे रथन्तरशब्दो निरूपितः—

'अतिदेश्यं विनिश्चेतुं कवतीषु रथन्तरम् ।
गायतीत्यृग् गानयुक्ता शब्दार्थो गान मेव वा ॥
इति चिन्ता ; गानयुक्ता त्वभित्वेत्यृक् प्रसिद्धितः ।
लाघवादतिदेशस्य योग्यत्वाच्चान्तिमो भवेत् ॥

इद माम्नायते—'कवतीषु रथन्तरं गायति'-इति, 'कया नश्चित्र आ भुवदित्याद्यास्तिस्त्र ऋचः कवत्यः ; तासु वामदेव्यं सामाध्ययनतः प्राप्तम्, तद्बाधितुं रथन्तरं साम तास्वतिदिश्यते ; तत्रातिदेशस्य स्वरूपं निश्चेतुं रथन्तरशब्दार्थश्चिन्त्यते । गान-विशेषयुक्ता 'अभि त्वा शूर नोनुमः'–इतीय मृक् रथन्तर मितुश-

च्यते ; कुतः ? अधीरहप्रसिद्धितः । रथन्तरं गीयता मिति केन चिदुक्ताः अधीरतारः स्वरस्तोभविशेषयुक्ता मभिलष्टार्चं पठन्ति, न तु स्वरस्तोभमात्रम् ; तस्माद् गानविशिष्टाया ऋचो रथन्तरशब्दार्थत्व मिति प्राप्ते, ब्रूमः— स्वरादिविशेषानुपूर्वि-मात्रस्वरूप मृगचरव्यतिरिक्तं यद् गानं तदेव रथन्तरशब्दार्थः । कुतः ? लाघवात् । किञ्च कवतीष्वृत्तु गान मतिदेष्टुं योग्यम्, न त्वृचस्तद्योग्यतास्ति, कयानोऽभित्वेत्यनयोर्ऋचोर्युगपदाधा-राधेयभावेन पठितु मशक्यत्वात् । तस्माद् गानविशेष एव रथ-न्तरशब्दार्थः'—इति ।

पुनरपि नवमाध्यायस्य द्वितीयपादे प्रथमाधिकरणस्य प्रथम-वर्णके सामशब्दस्य गानमात्रवाचित्वं स्मारितम्—

'सामोक्तिबृहदाद्युक्ती गीतायां मृचि केवले ।
गाने वा गानएवेति स्मार्यते सप्तमोदितम् ॥

सामान्यवाची सामशब्दो विशेषवाचिनो बृहद्रथन्तरादि-शब्दाश्च गानमात्रे वर्त्तन्ते, न तु गानविशिष्टाया मृचि, इत्ययं नियमः सप्तमस्य द्वितीयपादे सिद्धः ; सोऽत्र वक्ष्यमाणविचारो-पयोगितया स्मार्यते'—इति ।

सामशब्दवाच्यस्य गानस्य स्वरूप मृगक्षरेषु क्रुष्टादिभिः सप्तभिः स्वरैः अक्षरविकारादिभिश्च निष्पाद्यते । क्रुष्टः प्रथमो द्वितीय स्तृतीय श्चतुर्थः पञ्चमः षष्ठ श्चेत्येते सप्त स्वराः । ते चावा-न्तरभेदैर्बहुधा भिन्नाः । स्वरस्य सामनिष्पादकत्वं छान्दोग्यो-पनिषदः प्रथमे प्रपाठके प्रश्नोत्तराभ्यां मामनन्ति—'स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्य मुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गति रिति स्वर इति होवाच'—

इति (८. ३, ४.)। काण्वा उद्गीथविद्यायां स्वरस्य सामसम्बन्धिसर्वस्वस्थानीयत्वं शोभनवर्णस्थानीयत्वं चामनन्ति—'तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य स्वर एव स्वम्'-इति (बृ० उ० १. ३. २५.), 'तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णम्'—इति (बृ० उ० १. ३. २६.) च।

अक्षरविकारादीनान्तु सामनिष्पादकत्वं नवमाध्यायस्य द्वितीयपादे एव 'अर्थैकत्वाद् विकल्पः स्यात्' (२७ सू०)-इत्येतस्य सप्तमाधिकरणगतस्य सूत्रस्य व्याख्यानावसरे शबरस्वामिना स्पष्ट मुक्तम्—'सामवेदे सहस्रं गीत्युपायाः। आह कतमे गीत्युपाया नाम? उच्यते—गीतिर्नाम क्रिया ह्याभ्यन्तरप्रयत्नजन्या स्वरविशेषाणा मभिव्यञ्जिका, साम-शब्दाभिलप्या; सा नियतप्रमाणाया ऋचि गीयते। तत्सम्पादनार्थोऽय मृगक्षरविकारो विश्लेषो विकर्षण मभ्यासो विरामः स्तोभ इत्येवमादयः सर्वे सामवेदे समाम्नायन्ते'-इति।

तद्विषये विचारो न्यायविस्तरेऽभिहितः—

'समुच्चेया विकल्प्या वा विभिन्ना गीतिहेतवः।

आद्यः प्रयोगग्रहणादर्थैकत्वाद् विकल्पनम् ॥

छान्दोग्ये तवल्कारादिशाखाभेदेषु विलक्षणा गीतिहेतवोऽक्षरविकारादय आम्नायन्ते; ते सर्वे कर्मानुष्ठाने समुच्चेतव्याः। कुतः? प्रयोगवचने सर्वेषां परिगृहीतत्वात्। नैवम्; एकैकशाखोक्तैरेवाक्षरविकारादिभिरध्ययनकालएव गीतिस्वरूपनिष्पत्तेस्तन्निष्पत्तिलक्षणस्य प्रयोजनस्यैकत्वात्। प्रयोगवचनपरिगृहीता अपि व्रीहियववद् बृहद्रथन्तरवच्च विकल्पन्ते'-इति।

गीतिहेतुषु स्तोभस्यात्यन्त मप्रसिद्धत्वात्तल्लक्षणं तस्मिन्नेव पादे एकादशाधिकरणे चिन्तितम् —

'स्तोभस्य लक्षणं नास्ति किं वास्ति न विवर्णता ।
आधिक्य मप्यतिव्याप्तं विशिष्टं लक्षणं भवेत् ॥

न तावद् विवर्णत्वं लक्षणम्, वर्णविकारस्य विपरीतवर्णत्वेन स्तोभत्वप्रसङ्गात् । 'अग्न आ याहि (ऋ० आ० १.१.१.)'-इत्यस्या ऋचि अकारस्य स्थाने ओकारं कृत्वा गायन्ति 'ओग्नायि'-इति (गे० गा० १.१.१.) । अधिको वर्णः स्तोभ इत्युक्ते सति, अभ्यासेऽतिव्याप्तिः; 'पिबा सोम मिन्द्र मन्दतु त्वा'-इत्येतस्या ऋचि दतुत्वेत्यक्षरत्रयं गानकाले त्रिरभ्यस्तम् । अतो विकाराभ्यासयोरतिव्याप्ते र्नास्ति लक्षणम्? इति चेत्, मैवम्; 'अधिकत्वे सति ऋग्विलक्षणवर्णः स्तोभः'-इति विशिष्टस्य तल्लक्षणत्वात् । लोकेऽपि सभायां विप्रलम्भकेनोच्यमाने प्रकृतार्थानन्वितं कालक्षेपमात्रहेतुं शब्दराशिं स्तोभ इत्याचक्षते । तस्मादस्ति लक्षणम्'—इति ।

अक्षरविकारस्तोभादिवत् वर्णलोपोऽपि क्वचिद् गीतिहेतुर्भवति । तल्लोपविषयश्च विचारो नवमाध्याये प्रथमपादस्याष्टादशाधिकरणेऽभिहितः —

'इरा गिरा विकल्पः स्यादुतैरेवा विशेषतः ।
आद्यो मैवं बाध पूर्वं गिरायां विहितत्वतः ॥

ज्योतिष्टोमे श्रूयते—'यज्ञायज्ञीयेन स्तुवीत'-इति । 'यज्ञायज्ञा'-इत्यनेन शब्देन युक्तायां ऋच्युत्पन्नं साम यज्ञायज्ञीयम् । तस्या ऋचि 'गिरा'-शब्दः पठ्यते 'यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे'—इति । तत्र सामगा योनिगान मधीयानाः

सहैव गकारेण गायन्ति 'गायिरा गिरा'—इति । ब्राह्मणे तु गकारलोपपूर्वकं साकारयकारादिकं गानं विधीयते 'ऐरं कृत्वो-द्गेयम्'—इति । गिराशब्दे गकारलोपादिराशब्दो भवति, इरायाः सम्बन्धि गानम् ऐरम्, तादृशं कृत्वा प्रयोगकाले तद्गानं कर्त्तव्य मित्यर्थः । तत्र योनिगानब्राह्मणयोः समानबलत्वेन विशेषाभावात् विकल्पेन प्रयोक्तव्यम् ? इति प्राप्ते, ब्रूमः—'न गिरागिरेति ब्रूयाद्, यद् गिरा गिरेति ब्रूयाद् आत्मान मेव तदुद्गाता गिरेत्'—इति गकारसहितगाने बाधकमुक्त्वा गकार-रहित मिरापदं गेयत्वेन विधीयते ; तत्पदादेरिकारस्य गानार्थं साकारो यकार इकारश्चेति त्रीन् वर्णान् प्रयुञ्जते ; ततः 'आयिरा'—इत्येव गातव्यम्'—इति ।

तत्रैवोपरितनाधिकारे कश्चिद् विशेषश्चिन्तितः—

'इरापदं न गेयं स्याद् गेयं वा गीत्यनुक्तितः ।

न गेयं गीयमानस्य स्थाने पातात् प्रगीयते ॥

ब्राह्मणेन विहित इराशब्दो न गातव्यः ; कुतः ? ऐरमिति शब्देन गीतेरनुक्तत्वात् । पाणिनीयेन 'विमुक्तादिभ्योऽण् (५, २, ६१, )'—इतिसूत्रेणेराशब्दादण् प्रत्ययो मत्वर्थीयो विहितः । तथासतीरापदोपेतं कृत्वेत्येतावानेवार्थो भवति । यदि प्रगीते-रापदसम्बन्धः तद्धितेन विवक्ष्येत, तदानी साकारो यकार ईकारो रेफ आकारश्चैतैः पञ्चभिर्वर्णैर्निष्पन्न मायीरारूपं गीय-मानेराशब्दप्रातिपादिकं भवति ; तादृशात् प्रातिपदिकात् पाणिनीयेन 'वृद्धाच्छः (४, २, ११४,)'—इतिसूत्रेण प्रत्ययान्तरे सति, आयिरीयं कृत्वेति ब्राह्मणपाठो भवेत् । तस्मान्न गेयम् ? इति प्राप्ते, ब्रूमः—गीयमानस्य गिरापदस्य स्थाने इरा पदं

विधीयते इति पदमात्रस्य बाधः ; गानन्तु न बाध्यते । किञ्च विमुक्तादि-( ५. २. ६१. )-सूत्रेणाण्प्रत्ययेऽपि पूर्वस्मात् 'मतौ छः सूक्तसाम्नोः ( ५. २. ५९. )'—इति सूत्रात् सामानुवृत्तेरेवं सामेत्यर्थो भवति ; सामत्वं च गीतिसाध्यम् । यदा तु 'तस्य विकारः ( ४. ३. १३४. )'—इत्यस्मिन्नर्थे अण् प्रत्ययः, तदानी मिरायाः विकार इति विग्रहे यथोक्तं गानं लभ्यते । तस्माद् गातव्यम्'—इति ।

* * * *

यथोक्त ऋगक्षराणां संस्कारकं गीत्यात्मकं यत् साम तदेतदेकैकं छन्दोगा एकैकस्या ऋचि 'वेदसाम'-नामके ग्रन्थेऽधीयन्ते ; ऊहनामके तु ग्रन्थे एकैकं साम तृचेऽधीयते । सोऽयं मूहग्रन्थः तस्मिन्नेव पादे प्रथमाधिकरणस्य द्वितीयवर्णके विचारितः—

'ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवाऽग्रिमः ।
वेदसामसमानत्वाद् विधिसार्थत्वतोऽन्तिमः ॥

यस्मिन् ग्रन्थे सामगास्तृचे तृचे सामैकैकं गायन्ति, सोऽय मूहग्रन्थो नित्यो न तु पुरुषेण निर्मितः । कुतः ? अनध्यायवर्जनेन कर्तुरस्मरणेनाध्यापकानां वेदत्वप्रसिद्ध्या च वेदसामनामकग्रन्थसदृशत्वात् । इति चेत्,—मैवम् ; अपौरुषेयत्वे विधिवैयर्थ्यप्रसङ्गात् ; 'यद्योन्यां तदुत्तरयोर्गायति'—इति हि विधीयते । अय मर्थः—अपौरुषेयत्वेन सम्प्रतिपन्ने वेदसामनामके ग्रन्थे 'कया नश्चित्र आभुवत्'—इत्येतस्यां योन्यामेकस्यामृचि यद् वामदेव्यनामकं सामोपदिष्टम् ; तदेवोत्तरयोर्ऋचोः 'कस्त्वा सत्यो मदानाम्'—'अभी षू णः सखीनाम्'—इत्यनयोः द्वितीयतृतीययोर्गातव्यम् इति । अयं विधिरूहग्रन्थस्य वेदत्वे

व्यर्थः स्यात्; 'वेदसाम'-वदध्ययनादेव तत्सिद्धेः। उपरितने ऋग्द्वये सामोहस्य पौरुषेयत्वेऽपि सामस्वरूपस्य तदाधारभूतानां तिसृणा मृचां च वेदत्वादनध्यायाः वर्जनीयाः। कर्तुरस्मरणं जीर्णकूपारामादिष्विव चिरकालव्यवधानादुपपन्नम्, अस्मरण-मूलैवाध्यापकानां वेदत्वप्रसिद्धिः;—यथा बह्वृचा अध्यापका महाव्रतप्रयोगप्रतिपादक माश्वलायननिर्मितं कल्पसूत्र मरण्ये अधीयमानाः पञ्चम मारण्यक मिति वेदत्वेन व्यवहरन्ति, तद्वत्। न च तस्यापि वेदत्व मस्त्विति वाच्यम्; प्रथमारण्यकेन पुनरुक्तत्वात्, अर्थवादराहित्येन ब्राह्मणसादृश्याभावाच्च। तस्मात् पञ्चमारण्यकवदूहः पौरुषेयः; पौरुषेयस्य च न्यायमूलत्वात् यत्र वक्ष्यमाणन्यायविरोधस्तदप्रमाणम्'—इति॥

* * * *

नन्वस्मिन् सामवेदे ब्राह्मणभागस्य व्याख्यातुं योग्यत्वेऽपि मन्त्रभागस्य न व्याख्यानयोग्यतास्ति? तत्रत्यानां मन्त्राणां गीतिमात्रात्मकत्वात्;—न खलु पदवाक्यव्यतिरिक्तायां स्वर-स्तोभादिसाध्यायां गीतौ क्रियाकारकयोजनाभिव्यङ्ग्यः कश्चि-दर्थोऽस्ति, यस्याभिव्यक्तये भवता गीतिर्व्याख्यायेत। यत्तु स्वरादि-लक्षणविशेषकथनेन गीतिव्याख्यानं तत्पूर्वाचार्यैरेव तत्तल्लक्षण-मन्त्रग्रहणेषु सम्पादितम् इति न तत्र त्वया यतितव्यम्; अतः कथं भवतो मन्त्रभागव्याख्यानम्? अत्रोच्यते— न तावद् गीतिर्निराश्रया; तस्याः ऋगाश्रितत्वात्। अतएव छन्दोगा उपनिषद्येव मामनन्ति—'तस्मादृच्यध्यूढं साम गीयते'—इति (१. ६. १.)। गीत्याश्रयभूता सेयमृगपि मन्त्र एव, 'तेषा मृग्य-त्रार्थवशेन पादव्यवस्था'—इति मन्त्रविशेषत्वेन सूचितत्वात्।

ऋगात्मकस्य तु मन्त्रस्य क्रियाकारकान्वयाभिव्यङ्ग्योऽर्थो विद्यते, स च क्रत्वनुष्ठानकालेऽनुस्मर्त्तव्य इति ऋग्व्याख्यानमवश्यं कर्त्तव्यम्। मन्त्रैरर्थानुस्मरणं तु प्रथमाध्यायस्य द्वितीयपादे चतुर्थाधिकरणे निर्णीतम्—

'मन्त्रा उरुप्रथस्वेति किं अदृष्टैकहेतवः।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः॥
ब्राह्मणेनापि तज्ज्ञानात् मन्त्राः पुण्यैकहेतवः।
न तज्ज्ञानस्य दृष्टत्वाद् दृष्टं वरमदृष्टतः॥

'उरुप्रथस्व'-इत्ययं कश्चिन्मन्त्रः; तस्यायमर्थः—भो पुरोडाश! त्वं उरु विपुलता यथा भवति तथा प्रसर इति। एवमादयो मन्त्राः यागप्रयोगेषूच्चार्यमाणाः अदृष्टमेव जनयन्ति, न त्वर्थप्रकाशनाय तदुच्चारणम्; पुरोडाशप्रथनलक्षणस्यार्थस्य ब्राह्मणवाक्येनापि प्राप्तत्वात्। 'उरुप्रथस्वेति पुरोडाशं प्रथयति'—इति हि ब्राह्मणवाक्यम्। नैतद् युक्तम्; अर्थप्रत्यायनस्य दृष्टप्रयोजनसम्भवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात्। तस्मात् दृश्यमानार्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम्। ब्राह्मणवाक्येनार्थानुस्मरणसम्भवे मन्त्रेणैवानुस्मरणीयमिति यो नियमः तस्य दृष्टासम्भवात् अदृष्टं प्रयोजनमस्तु'-इति॥

अस्मिन्नेवाधिकरणे मतान्तरेण पूर्वोत्तरपक्षावाह—

'मन्त्रब्राह्मणयोर्यद्वा कलहो विनियोजने।
न मन्त्रलिङ्गसिद्धार्थमनुवक्तीतरद् यतः॥

अस्य मन्त्रस्य लिङ्गेन विनियोगे ब्राह्मणवाक्यम् अविवक्षितार्थं स्यात्? वाक्येन विनियोगे मन्त्रलिङ्गं न विवक्षेत? इत्युभयोर्विरोधादप्रामाण्यं नोदनायाः इति पूर्वपक्षः। नायं

विरोधः ; प्रबलेन लिङ्गेन विनियोगसिद्धौ वाक्यस्यानुवादकत्वात् इति राद्धान्तः'—इति ॥

अर्थानुस्मरणाय व्याख्यातव्याः सामयोनिभूता ऋचः संहिताग्रन्थे छन्दोनामके समाम्नाताः। ताः सर्वा ऋचः आम्नातक्रमेणेह व्याख्यायन्ते ।

न च तासां क्रतुषु स्वातन्त्र्येण विनियोगोऽस्ति ब्राह्मणेन सूत्रेण च विनियुक्तानां साम्नामाश्रयतया तदुपयोगात्। तस्माद् ऋग्वेदव्याख्यान इवैतद्व्याख्याने विशेषेण विनियोगो नान्वेषणीयः। सामान्येन तु विनियोगो यद्यपि ब्रह्मयज्ञविषयोऽस्ति तथाप्यसौ कृत्स्नस्य वेदस्यैक एवेति नान्वेषणप्रयासोऽस्ति ॥"—इति ॥

सामवेदस्योत्तरसंहिताभाष्यभूमिका तु त्रयीसंग्रहे यथास्थानं ( १९१, १९२ पृ० ) यथावत् प्रकाशितैव ।

सामवेदस्य ताण्ड्यमहाब्राह्मणभाष्यभूमिका त्वेषा—

"वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशन्माधवाचार्य्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुर्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणव्याख्याङ्करोत्वोज्ञानबुद्धये ॥ ५ ॥
पञ्चविंशतिरध्याया महति ब्राह्मणे स्थिताः ।

आद्येऽध्याये श्रुता मन्त्रा उद्गातुर्यजुरात्मकाः ॥ ६ ॥
ये तु मन्त्राः स्तोत्ररूपा उत्तरासु ऋचेषु ते ।
योनिवद्गान मूहित्वा पठ्यन्ते तद्विधिर्वेयात् ॥ ७ ॥
यथोन्यां गान माम्नातं तद्देवोत्तरयोर्ऋचोः ।
गायेदिति स्तोत्रकृतौ साम्ना मूहो विधीयते ॥ ८ ॥
आवृत्तियुक्तं तत्साम स्तोम इत्यभिधीयते ।
द्वयोरध्याययोः स्तोमप्रकारा बहुधा श्रुताः ॥ ९ ॥
चतुर्थाध्याय मारभ्य गवामयनिकादयः ।
क्रतूनां विधयः प्रोक्ता एषोऽस्मिन् ब्राह्मणे क्रमः ॥ १० ॥
प्रथमाध्यायगा मन्त्रा विनियोगपुरःसरम् ।
व्याख्यायन्ते सर्वसोम-यागेष्वेते ऽङ्गताङ्गताः ॥ ११ ॥

ननु प्रथमाध्याये समाम्नातानां 'मह्मे वोचः'-इत्यादीनां मन्त्राणां क्रत्वङ्गत्व मयुक्तम्? क्रतुप्रकरणमध्ये पाठाभावात्। चतुर्थाध्यायप्रभृतीनि हि क्रतुप्रकरणानि भविष्यन्ति। चतुर्थ-पञ्चमाध्यायौ गवामयननामकस्य संवत्सरसत्त्रस्य प्रकरणम्; 'गावो वा एतत्सत्त्र मासत'-इत्यारभ्य तयोरध्याययोराम्नात-त्वात्। षष्ठाध्याये 'अग्निष्टोम मपश्यत्'-इत्यारभ्य तस्याध्याय-स्याम्नातत्वात्। एव मुत्तराण्यपि क्रतुप्रकरणान्यवगन्तव्यानि।

नन्वेवम्प्रथमाध्यायगता मन्त्रा द्वितीयतृतीयाध्यायगता विष्टुतयश्च न कञ्चित् क्रतु मारभ्याम्नाताः, अतो नैतेषां क्रत्व-ङ्गत्वं युज्यते इति चेत्,—मैवम्; अनारभ्याधीतानां प्रकृति-गामित्व मिति न्यायेन क्रत्वङ्गत्वावगमात्। स च न्यायस्तृतीया-ध्याये षष्ठपादस्य प्रथमाधिकरणे पर्णवाक्य मुदाहृत्याभिहितः—

'प्रकृतौ विकृतौ वा स्याद्यस्य पर्णत्वसौ विधिः ।

प्रकृताविव वा तुल्याद्वचनादुभयोरसौ ॥
जुहू माश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः ।
चोदकेनोभयप्राप्तेर्विकृतौ विधिनात्र किम् ॥

अनारभ्य श्रूयते 'यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोति'—इति । तत्राव्यभिचरितक्रतुसम्बन्धवतीं जुहू माश्रित्य तद्धेतुः पर्णत्वचो वाक्येन विधीयते,—या जुहूः सा पर्णमयीति । वाक्यञ्च प्रकृतिविकृत्योस्तुल्य मेव प्रवर्त्तते ; उभयत्राश्रयभूताया जुह्वाः सत्त्वात् । तस्मात्प्रकृतिविकृत्योरुभयोरप्ययं विधिरिति प्राप्ते ब्रूमः—किमयं विधिर्विकृतौ चोदकात्पूर्वं निविशते, पश्चाद्वा ? नाद्यः ; आश्रयभूताया जुह्वाः चोदक मन्तरेणासम्भवात् । द्वितीये तु पर्णत्व मपि जुह्वा सहैव चोदकेनातिदिश्यते, तत्र पुनर्विधि-वैयर्थ्यादयं विधिः प्रकृतिमात्रगः । एवं 'यस्य खादिरः स्रुवो भवति'—इत्युदाहरणीयम् ।

ननु का प्रकृतिः का विकृतिरिति चेत्, उच्यते—यत्र कृतेव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते, सा प्रकृतिः ; यत्र विशेषरूप मेव कर्तव्य मुत्योपदिश्यते, इतरत् सर्वं कर्मा-न्तरादतिदिश्यते, सा विकृतिः । स चातिदेशः प्रत्यक्षश्रुतिवच-नाद्वा साम्याद्वा लिङ्गाद्वावगन्तव्यः । तत्रैवं सप्तमाष्टमाध्यायाभ्यां बहुधा विचारितम् ।

प्रकृतिश्च द्विविधा ; मूलप्रकृतिरवान्तरप्रकृतिश्चेति । सर्वा-त्मना कर्मान्तरनिरपेक्षा मूलप्रकृतिः ; कतिपयेष्वङ्गेषु कर्मा-न्तरं चापेक्षते, स्वयञ्च कैश्चित् कर्मभिरपेक्षणीया भवति, सेय मवान्तरप्रकृतिः । तत्र तिस्रो मूलप्रकृतयः । ताश्चाष्टमाध्यायस्य प्रथमपादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिताः—

'इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता न हि ।
अस्ति वा नालौकिकत्वादियत्तानवधारणात् ॥
लोकवत् सन्निपत्याराद्‌पकारिद्वयश्रुतेः ।
इयत्ताया निश्चितत्वान्मूलप्रकृतिता त्रिषु ॥

अलौकिकत्वेनैतावद्भिरङ्गैः सम्पूर्ण उपकार इति निश्चेतु-मशक्यत्वात् इष्ट्यादीनां नास्ति मूलप्रकृतित्व मिति चेत्,–मैवम्; लौकिकसदृशत्वात्। यथा लोके भुजिक्रियाया मोदनः करणम्; तस्य सन्निपत्योपकारिणः पाकसूपादयः, आरादुपकारिणः पीठ-प्रदीपादयः। तथा भावनायां यागः करणम्; अवघातादयः सन्निपातिनः, प्रयाजादय आरादुपकारिणः। अतो नात्यन्तिक-मलौकिकत्वम्। इयत्ता तु लौकिके यथा प्रत्यक्षेण निश्चीयते, तथा श्रौते श्रुत्या निश्चीयताम्। तस्मादिष्ट्यग्निहोत्रसोमानां मूलप्रकृतित्व मस्ति। तासु प्रकृतिष्वेव 'महन् मे वोचः'–इत्यादि-मन्त्राणा मङ्गत्वेन प्रवेशोऽवगन्तव्यः; प्रकृतित्वस्य तत्रैव मुख्य-त्वात्। तास्वप्येते मन्त्राः सोमयागे नेतुं योग्याः; 'सोमं गमेयम्' —इत्यादिलिङ्गसम्भवात्, नानाविधब्राह्मणगताना मेतदीय-विनियोगाना मृषिभिः सूचितत्वाच्च। ते च विनियोगा अस्मा-भिस्तत्तन्मन्त्रव्याख्यानावसरे प्रदर्शयिष्यन्ते। यस्य तु मतं सोम-यागप्रकरण मिदं तस्य न कोऽपि सन्देहः ॥

'सोमयागे चार्षेर्त्विजो वरणीयाः। तथाह्यापस्तम्बेनोक्तम्— 'सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते'–इति। आश्व-लायनोऽपि दर्शपूर्णमासेष्टिपूर्वकत्वं सोमयागस्योक्त्वा पक्षा-न्तरोपन्यासपूर्वक मेव माह–'प्रागपि सोमेनैके, तस्यर्त्विजः, चत्वारस्त्रिपुरुषाः, तस्य तस्योत्तरे त्रयः, होता मैत्रावरुणो

ऽच्छावाको ग्रावस्तुदध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोतोद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति, एतेऽहीनैकाहैर्याजयन्ति, एत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा दीक्षित्वा समोप्याग्नींस्तन्मुखाः सत्रमासते'—इति (श्रौ० सू० ४.१.२—८.)। अस्याय मर्थः—दर्शपूर्णमासाभ्या मिष्ट्वा पश्चाद्वा तद्यजमानः पुरस्ताद्वा सोमेन यजेत; तस्य सोमयागस्य होता, अध्वर्युः, ब्रह्मा, उद्गातेति चत्वारः ऋत्विजो मुख्याः। ते च प्रत्येकं त्रिभिः पुरुषैरुपेताः, अतस्तत्र तस्य एकैकस्योत्तरे त्रयः पुरुषा भवन्ति। त एते होत्रादिनामकाः षोडशर्त्विजो द्विरात्रादिभिरहीनसंज्ञकैरग्निष्टोमादिभिरेकाहसंज्ञकैर्याजयन्ति। एते एव होत्रादयः षोडशर्त्विजः, स्वय मप्याहिताग्नयः, प्रथमयज्ञेनाग्निष्टोमेनेष्ट्वा गृहपतिसंज्ञकेन सप्तदशसंख्यापूरकेण सहिता द्वादशाहादिसत्रार्थं दीक्षित्वा स्वस्वसम्बन्धिनोऽग्नीनेकत्र स्थापयित्वा, तत्प्रधानाः सत्रमनुतिष्ठेयुरिति। एकाहाहीनसत्रात्मका य एते सोमयागाः, तदीयस्यर्त्विजो होत्रादिरूपस्य सामान्यलक्षणं द्राह्यायणाभिधो महर्षिश्छन्दोगसूत्रकार आह—'ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्म्यन्यूनाङ्गोऽनतिरिक्ताङ्गः'—इति (१. १. ७.)॥

तादृशमृत्विजं वरीतुं यजमानः सोमप्रवाकं प्रेषयेत्। सोमयागज्ञानान्त ऋत्विजो प्रकर्षेण वक्तीति सोमप्रवाकः। स च वरीष्यमाणस्य समीपं गत्वा ब्रूयात्—'अस्मदीयो यजमानः सोमेन यजते, स त्वां प्रत्यार्त्विज्य मर्थयते'-इति। एवमुक्ते इतरो यद्यार्त्विज्यं कर्तुं नेच्छेत् तदानीं सोमं नमस्कृत्यार्त्विज्यं परिहरेत्। तत्परिहारनिमित्तं प्रत्यवाय मपनेतुं नमस्कारः। प्रत्य-

यावच्च एवं श्रूयते–'यशसा वा एषोऽभ्येति य आर्त्विज्येन चरति, तस्य: प्रतिदुग्धे यशसा प्रतिदुग्ध'–इति (तै० सं० ६. ४. २. २.)। अथासावार्त्विज्यं कर्त्तुमिच्छेत् तदा सोमप्रवाकं प्रति सोमयागविषयं कुशलं सर्वं पृष्ट्वा स्वकीयं हर्षं द्योतयन् 'महन्मे वोचः'—इति मन्त्रं जपेत्। तदेतद्द्राह्यायणः सूचयामास—'सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रत्यावक्षीत महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेत'–इति (१. १. १२.)। आपस्तम्बोऽपि सूचितवान्—'ऋत्विजो वृणीते यून: स्थविरान्वानूचानानूर्ध्ववाचोऽनङ्गहीनांस्तेभ्य: सोमं प्राह तं पृच्छति क ऋत्विजः के याजयन्ति कच्चिन्नाहीन: कच्चिन्नव्यसनमार्त्विज्यं कच्चित् कल्याणी दक्षिणा इति छन्दोगब्राह्मणं भवत्यथ जपति महन्मे वोच इति'–इति। यद्यप्यापस्तम्ब एतन्मन्त्रजपं सर्वेषामृत्विजां साधारणमवोचत् तथाप्यत्र, द्राह्यायणः स्वकीयपरिभाषानुसारेणोद्गातारमभिलक्ष्य तस्य सोमप्रवाकविषयं प्रतिमन्त्रणं विधत्ते। परिभाषा चैव मुक्ता—'एकश्रुतिविधानान्मन्त्रान् कर्माणि चोद्गातैव कुर्यादनादेशे'–इति (१. १. ४.)। अस्यायमर्थः।—'महन्मे वोचः'-इत्यादिमन्त्रान् अथ कर्माणि च सामवेदोक्तानि उद्गातैवानादेशे कुर्य्यात्। कुतः? एकश्रुतिविधानात्; एकस्य कर्त्तुः श्रवणेन निर्द्देशेन विधानात्। प्रतिमन्त्रयेतेत्येकवचनविधानमुद्गातृलिङ्गत्वेनात्र परिभाष्यत इति।

ननूद्गातृपुरुषाः प्रस्तोतृप्रतिहर्तृसुब्रह्मण्या अपि सामवेदोक्तकर्माधिकारिणो न तु केवलमुद्गातैव। वाढम्! तथापि न तेषां वरणं नियतं किं तु होत्रध्वर्युब्रह्मोद्गातॄणां चतुर्णामेव नियतम्। तदाहापस्तम्बः–'तान्वृणीते चतुरः सर्वान्वैकैकशः'–इति। तथा

सति प्रस्तोत्रादीनां वरणाभाव माश्रित्य द्राह्यायण उद्गातुरेवेदं प्रतिमन्त्रणं मन्यते। यदि तेषा मपि वरण मङ्गीकुर्य्यात् तदा स्वकीयपरिभाषानुसारेण प्रस्तोता प्रतिमन्त्रयेतेत्येव मादिशेत्, तदादेशाभावादुद्गातुरेव वरणं प्रतिमन्त्रणं च तन्मत मित्यवगम्यते।

ननु तस्य मन्त्रस्य महन्म इतेत्रष आदिरिति प्रतीकग्रहणादेवावगम्यते, अन्तस्तु कथ मवगम्यते? इति चेत्,—उत्तरमन्त्रस्य आदिग्रहणादिति ब्रूमः; उत्तरादिः पूर्वान्तलक्षण मिति (यज्ञ प० ५२ सू०) सूत्रकारेण परिभाषितत्वात्। अत्र सूत्रकारो देवोदेव मेत्वितुत्तरमन्त्रादिं ग्रहीष्यति, तस्माद् भुक्षिषीयेत्यसौ पूर्वमन्त्रस्यान्त इति द्रष्टव्यम्॥"—इति॥

ताण्ड्यमहाब्राह्मणस्य द्वितीयप्रपाठकभाष्यभूमिकापि यथावदुद्धृतैव त्रयीसङ्ग्रहे यथास्थानम् (२०२ पृ०)।

ताण्ड्यमहाब्राह्मणस्य चतुर्थप्रपाठकीयभाष्यभूमिकात्वेवमस्ति—

"स्तोमानां दशरात्रस्य प्रोक्ता विष्टुतयः क्रमात्।
गवामयनिकानां च ता एवेत्यवगम्यते॥
शतानि त्रीणि षष्टिश्च विषुवांश्च चतुर्थके।
प्रोक्तानि गव्यसत्रस्य सुत्याहानि क्रमादिह।
तानि संगृह्य वक्ष्यन्ते बुद्धिव्युत्पत्तिसिद्धये॥

द्विविधं गवामयनम्;—दशमाससाध्यं द्वादशमाससाध्यञ्च। तत्र द्वादशमासनिर्वर्त्तस्य प्रायणीयोऽतिरात्रः प्रथम महः, ततश्चतुर्विंशः उक्थ्य आरम्भणीयः; ते उभे अहनी अनुष्ठाय ज्योतिर्गौरायुर्गौः आयुर्ज्योतिरित्याभिप्लविकः षडहः। स चतुर्वार मावर्त्तनीयः। ततस्त्रिवृदादिस्तोमषट्कसाध्यः पृष्ठ्यः षडहः। एवं

पञ्चभिः षडहैरेको मासः पूर्य्यते एतस्यैवावर्तनेन पञ्च मासाः सम्पाद्याः। ततः षष्ठे मासस्यादौ त्रयोऽभिप्लवाः षडहाः कार्य्याः, ततः एकः पृष्ठ्यः षडहः, ततोऽभिजिदेक महः, त्रयः स्वरसामानः, इत्येव मष्टाविंशत्यहानि; आद्याभ्यां प्रायणीयचतुर्विंशाभ्यां षष्ठमासपूरणम्। इत्थं पूर्वपक्षे अशीतुयत्तरशतसंख्यान्यहानि सम्पन्नानि। ततो विषुवानेक महः। सोऽस्य सत्रस्य प्रधानभूतः। सप्तमे मासस्यादौ त्रयः स्वरसामानः प्रतिलोमाः कार्य्याः, ततो विश्वजिदावृत्तः पृष्ठ्यः षडहस्त्रयस्त्रिंशादभ्यस्त्रिदुत्तमः; ततस्त्रयोऽभिप्लवाः षडहाः आवृत्ताः; एव मष्टाविंशत्यहानि स्युः। अस्य च मासस्य महाव्रतातिरात्रौ च ततोऽभिधास्यमानौ पूरकौ; स सप्तमो मासः। ततः पृष्ठ्यः षडहः, पूर्वैश्चतुर्भिराभिप्लविकैः प्रतिलोमक्रमेणानुष्ठितैरष्टमो मासः। स एवावृत्त्या नवमदशमैकादशा अपि सम्पाद्याः। द्वादशमासस्यादौ त्रयोऽभिप्लवाः षडहाः, ततो गोआयुषी द्वे अहनी, द्वादशाहस्य दशाहानि चेति त्रिंशदहानि; स द्वादशो मासः। ततो महाव्रत मुपान्त्य महः। तेन उदयनीयोऽतिरात्र इत्येतौ सप्तममासस्य पूरकाविति॥"—इति॥

ताण्ड्यमहाब्राह्मणभाष्यशेषे जैमिनीयन्यायमालायाः षष्ठाध्यायीयसप्तमपादान्ते चिन्तित एष आयुर्विचार उद्धृत—

"सहस्रवत्सरं सत्रं गन्धर्वादिर्नृणा मुत।
रसायनेन सिद्धानां कुलकल्पोऽथ वोक्षितः॥
तदायुर्वाथ सार्द्धद्विशताना मुत मासगाः।
वत्सरोक्तिरुत द्वादशरात्रिषु दिनेषु वा॥
आद्यो दीर्घायुषः सत्वान् नृणा मेवाग्निसम्भवे।

द्वितीयोऽस्तु रसस्यायुर्हेतुत्वे तृतीयकः ॥
कृत्स्नकर्त्तुः फलित्वेऽस्तु तूर्योऽर्थासम्भवे सति ।
पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सन्त्रिणो यदि ॥
षष्ठोऽस्तु यो मास एष संवत्सर इतीरणात् ।
सहस्रमासानाधानादूर्ध्वं वेदस्तु सप्तमः ॥
वत्सरप्रतिमा द्वादशरात्रय इति श्रुतेः ।
न रात्रिष्वब्दशब्दोऽत्र प्रतिमाया विशेषणात् ॥
स्वारस्यात् त्रिवृदा युक्तेरष्टमः पक्ष इष्यते ॥
त्रिवृदादिपदैः स्तोमविशिष्ट महरुच्यते ॥
नाहःसङ्ख्यतोऽहःसु गौणी संवत्सराभिधा ।
तस्माद्विश्वसृजां सत्रे सहस्रदिन मिष्यते ॥

इद माम्नायते—'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः, विश्वसृजाᳫं सहस्रसंवत्सरम्'—इति (ता० ब्रा० २५. १८. १.)। अत्र सहस्रसंवत्सरसत्रे गन्धर्वादीना मेवाधिकारः ? तेषां दीर्घायुषः सद्भावादित्याद्यः पक्षः । 'वसन्ते ब्राह्मणोऽग्नि मादधीत'—इत्यादिविधानान्मनुष्याणा मेवाहवनीयाद्यग्नयः सम्भवन्ति ; नान्येषां गन्धर्वादीनाम् । इति चेत्, तर्हि रसायनेन सिद्धानां दीर्घायुषां मनुष्याणा मधिकारः ? इत्यस्तु द्वितीयः पक्षः । रसस्यारोग्यपुष्ट्यादिजनकत्व मेव ; न त्वायुष्यहेतुत्वम् । इति चेत्, तर्हि एकस्मिन् कुले समुत्पन्नानां पितृपुत्रपौत्रादीनां बहूनां सहस्रायुःसम्भवात् कुलाधिकारः ? इति तृतीयः पक्षोऽस्तु । कृत्स्नकर्त्तुः फलं भवति ; न च पितृपुत्रपौत्रादिष्वेकोऽपि कृत्स्नं करोति, तस्मान्नास्ति कुलम् ? इति चेत्, तर्हि सत्रविधायक-

वचनबलादेव सत्त्रिणां दीर्घायुर्भविष्यति ? इति चतुर्थः पक्षोऽस्तु। न ह्यस्य वचनस्य सोऽर्थः सम्भवति ; तद्वाचकपदाभावात्, न च कल्पयितुं शक्यते ; सम्भावितायुष्काणा मपि सत्रान्तरेषु प्रवृत्तानां दैवात् म्रियमाणानां तत्सत्रविधिबलादायुर्वृद्ध्यदर्शनात्। इति चेत्, तर्हि पञ्चपञ्चाशत इत्यस्य शब्दस्य पुरुषपरत्व मङ्गीकृत्य सार्द्धद्विशतानां पुरुषाणा मधिकारेऽभिहिते वत्सरचतुष्टयेन सत्रस्य सहस्रसंवत्सरत्वं सम्पद्यते ? इति पञ्चमः पक्षोऽस्तु। 'चतुर्विंशतिः परमाः सत्र मासीरन्'–इति वचनादभ्यधिकानां न तत्राधिकारः। इति चेत्, तर्हि 'यो मासः स संवत्सर'–इति वचनात् संवत्सरशब्दस्य मासपरत्वे सति सहस्रमासं सत्रम् ? इत्येष षष्ठः पक्षोऽस्तु। अष्टमे वत्सरे उपनीतो द्वादशवर्षाणि वेद मधीत्य विंशतिवर्षवयस्को विवाहं कृत्वा जातपुत्रोऽग्नि मादधीत तस्मादाधानादूर्ध्व मस्यायूंषि न सन्ति सहस्रमासाः। इति चेत्, तर्हि 'संवत्सरस्य प्रतिमा वै द्वादशरात्रयः'–इति वचनात् संवत्सरशब्दो द्वादशरात्रिपरः, तथा सति रात्रीणां द्वादशसहस्राणि सम्पद्यन्ते, तासु च रात्रिषु षष्ट्युत्तरशतत्रयदिवसरूपसंवत्सरत्वेन गण्यमानासु त्रयस्त्रिंशत्संवत्सरेभ्य ऊर्ध्वं मासचतुष्टयं भवति ; तावत्परिमितञ्चायुराधानादूर्ध्व मपि सम्भवति ? इति सप्तमः पक्षोऽस्तु। 'संवत्सरस्य प्रतिमा वै द्वादशरात्रयः'-इत्यस्मिन्वाक्ये संवत्सरशब्दो न रात्रिपरः, किन्तु तेन शब्देन प्रतिमा विशिष्यते ; तस्मान्न सप्तमः पक्षो युक्तः। इति चेत्, एवन्तर्हि संवत्सरशब्दो दिनपर इत्यष्टमः पक्षोऽस्तु। तथा सति 'त्रिवृतः संवत्सराः'–इत्यादिवाक्यानां स्वारस्यं भवति। त्रिवृत् पञ्चदशः सप्तदशः एकविंशः इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्ते

एकैकस्मिन्नहनि यागरूपे लक्षणया वर्त्तते ; सर्वेषु तथाविध-प्रयोगबाहुल्यात्र त्वहःसङ्घे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः ; तैश्च शब्दैः सामानाधिकरण्यात् संवत्सरशब्दः स्वावयवभूतेऽहनि अवयवलक्षणया वर्त्तते ; 'त्रिवृतः संवत्सराः'–इत्युक्ते त्रिवृत्स्तोमकयागयुक्तान्यहानीतुरक्तं भवति । तस्माद्विश्वसृजामृषीणा मिदं सहस्रदिन मिति सिद्धान्तः ॥"–इति ॥

अथ षड्विंशब्राह्मणभाष्यभूमिका—

"व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ; ब्राह्मणं चाद्यं प्रौढं व्याख्यात मादरात् ।
अथ द्वितीयं षड्विंश-ब्राह्मणं व्याचिकीर्षति ॥

अस्मिन्ताण्डिशेषब्राह्मणे पूर्वाण्युक्तानि कर्माणि ; उक्ताना मपि ये भेदास्ते च पठ्यन्ते ।— तत्र प्रथमं सुब्रह्मण्योच्यते । तच्च सवनत्रयेऽपि ज्ञेयम् । ततो ब्रह्मकर्त्तव्यम् । ततो व्याहृति-होमादि नैमित्तिकं प्रायश्चित्तम् । ततः सौम्यचरुविधिः । ततो बहिष्पवमानधर्म्माः । ततः किञ्चित् प्रकीर्णकम् । ततो होत्रा-द्युपह्वः । तत आर्त्विजेषु ऋत्विगादिविधानम् । ततो नैमित्तिका होमाः । ततो अध्वर्युप्रशंसा । ततो देवयजने विज्ञेयं कर्म्म । ततोऽवभृथः । ततः अभिचारसंज्ञका विकृतयः । ततो द्वादशाहस्तुतिः । अथ श्येनादिविषयः । ततो वैश्वदेवं सत्रम् । ततोऽद्भुतानां शान्तिः । इत्येवं प्रतिपाद्यमानार्थाना मनुक्रमणिका ॥"–इति ॥

अथ सामविधानब्राह्मणभाष्यभूमिका—

"अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मण मादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात्ततः सामविधिर्भवेत् ॥

आर्षेयं दैवताध्यायं मन्त्रं वोपनिषत्ततः ।
संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिताः ॥

तत्र महाषड्विंशाख्ययोर्ग्रन्थयोर्यज्ञाधिकारिणाम् स्वर्गादि-फलप्राप्तये एकाहाहीनसत्रात्मका महाक्रतवः प्रतिपादिताः । अथ सामविधानाख्ये तृतीये ब्राह्मणे ग्रन्थे तेष्वनधिकृतानां वक्ष्यमाणाना मजपृश्निवैखानसादीनाम् तेष्वशक्ताना मन्येषाञ्च शुद्धयर्थं कृच्छ्रादिप्रायश्चित्तानि तैरपहृतपाप्मनां स्वर्गादिफलप्राप्तये बहुविधान्वाधानाग्निहोत्रादिप्रत्याम्नायरूपाणि सामानि विधास्यन्ते। तत एवास्य सामविधान मिति नाम सम्पन्नम् ॥"—इति॥

अथार्षेयब्राह्मणभाष्यभूमिकातः—

"प्रौढ़ादिब्राह्मणान्यादौ त्रीणि व्याख्याय, तुर्य्यकम् ।
आर्षेयं ब्राह्मणं चाद्य सायणो व्याचिकीर्षति ॥

तत्रादौ ब्राह्मणार्थं संगृह्य प्रदर्शयति—अथ खल्वय मिति । अथेत्यानन्तर्य्ये, खल्विति प्रसिद्धौ ; अय मनेन ब्राह्मणेन प्रतिपाद्योऽर्थः । 'आर्षः' ऋषिसम्बन्धी, 'प्रदेशः' उपदेशो 'भवति' ।
कः पुनरसौ त माह—ऋषीणामिति । ऋषीणां नामधेयैः गोत्रैश्च । उपलक्षण मेतत् ; ऋषिनामधेयगोत्रच्छन्दोदैवतादि-वाचकेन शब्देन साम्नां वाच्यत्वज्ञान मुपधारणम् । इदृशार्थोऽनेन ब्राह्मणेन प्रतिपाद्यत इत्यर्थः ॥"—इति ॥

अथ दैवताध्यायब्राह्मणभाष्यभूमिकातः—

"तत्राद्या ब्राह्मणग्रन्थाश्चत्वारो व्याकृताः पुरा ।
दैवताध्यायसञ्ज्ञस्तु ग्रन्थो व्याक्रियतेऽधुना ॥
साम्नान्निधनभेदेन दैवताध्ययनादयम् ।
ग्रन्थोऽपि नामतोऽन्वर्थो दैवताध्याय उच्यते ॥

तत्राद्ये बहुधा साम्नां देवताप्रीतिकीर्त्तिनाम् ।
द्वितीये छन्दसां वर्णास्तेषा मेव च देवताः ॥
तृतीये तन्निरुक्तिश्चेत्येवं खण्डार्थसङ्ग्रहः ॥"–इति ॥

अथ मन्त्रब्राह्मणस्य सायणकृतं भाष्य मद्यापि नोपलभ्यते; ततोऽत्र मया मन्त्रसञ्जीवनी नाम टीकैका प्रणीता। तदीय-भूमिकातः—

"अथैतद् मन्त्रं नाम ब्राह्मणं प्रपाठकद्वयात्मकं खलु सामवेदीयम्। कौथुमानां गृह्येऽग्नौ यावन्ति कर्माणि विहितानि, तेषु प्रयोक्तव्यानां प्रायः सर्वेषा मेव मन्त्राणा मेष ग्रन्थो मञ्जूषेव। अहो चित्र मेतत्—यदेतादृशबहुप्रयोजनीयस्यापि ग्रन्थस्य नैकं पुस्तक मपि दृष्टं मयात्र विस्तृते वङ्गे। अन्यत्राप्यस्य विरलप्रचार एव। विशुद्धो व्याख्यानग्रन्थश्चास्य कश्चिन्नाद्यापि प्रकाशित उपलभ्यते। तदेतत् सर्वं मालोच्यात्र पुस्तकबाहुल्यसिद्धये बोधसौकर्यापादनाय चेदं देवगिरा वङ्गभाषयापि यथामति व्याचक्षाणः समक्षत्र प्रकाशयामि। हन्त! पूर्वं युगाङ्कसिन्धिन्दुमितशाकाऽब्देऽप्येत्य मेव प्रकटित मेतन्मयैव; परं तद् गुणविष्णुभट्टादिमतानुसृतव्याख्यानयुतमिति सम्पन्नं भ्रमपूर्णमतोऽभूत्तत्तापायेत्यतस्तदनुतापनिवृत्तयेऽद्यैष यत्नो द्वितीयः।

ब्राह्मणञ्चैतत् सर्ववेदभाष्यकारस्य भगवतः सायणाचार्यस्य नये कौथुमशाखीयेषु षष्ठम्। तथाहि तत्कृतायां प्रौढब्राह्मणभाष्यभूमिकायाम्—"अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मण मादिमम्। षड्‌विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत्। आर्षेयं दैवतं चैव मन्त्रं चोपनिषत्ततः। संहितोपनिषद् वंशो ग्रन्था अष्टावितीरिताः॥"—इति। अस्मन्मते तु प्रतिशाख

मेकैक मेव ब्राह्मणम् । तथा च, यथा शाकलाना मैतरेयकम्, वाजसनेयिनां शतपथम्, तैत्तिरीयाणां तैत्तिरीयकम्; तथैव कौथुमानां ताण्ड्य मित्येक मेव चत्वारिंशदध्यायात्मकम् । यदुक्तं षड्विंशाख्यं द्वितीय मिति, तत्तु तस्यैव ब्राह्मणस्य षड्विंशाध्यायपञ्चकमात्रम् ; न तु ब्राह्मणान्तरम् । तदेवं कौथुमशाखीयब्राह्मणस्य श्रौतकर्मविधायकस्त्रिंशदध्यायात्मक आद्यो भागः प्रौढ मिति प्रसिद्धः स्वीकार्यः । अद्भुतब्राह्मणाख्यः षड्विंशषष्ठाध्यायस्तु बृहदारण्यकीयसप्तमाष्टमाध्यायवत् स्यादस्यैव खिलांशः । अतएव सायणीयषड्विंशब्राह्मणभाष्यभूमिकोक्तानुक्रमण्यां बहुषु पुस्तकेषु षष्ठाध्यायस्योल्लेखो नैव दृश्यते । यत्तूक्तं षष्ठत्वेन मन्त्रं वोपनिषदिति, तत्तु सामगप्रसिद्धिविरुद्ध मेव ; न हि कोऽपि सामगो मन्त्रं व्यवहरति उपनिषदिति, नाप्युपनिषदं मन्त्र मिति । वस्तुत एकस्यैव कौथुमब्राह्मणस्य द्वितीयो भागः सम्पन्नो गम्यते मन्त्रोपनिषदोर्मिश्रणेन ; तत्राद्याध्यायद्वयात्मकं मन्त्रम्, तृतीयाद्यध्यायाष्टकन्तूपनिषदिति प्रसिद्धं सामगेषु । तथाचैष गृह्यमन्त्रोपनिषन्मयोऽन्त्यभागो ब्राह्मणस्य तस्य सम्पन्नो दशाध्यायात्मकः । इत्थं श्रौतगृह्ययोरुभयोरध्यायानां सङ्कलनया चत्वारिंशदध्यायात्मकं कौथुमब्राह्मणं सम्पद्यते ताण्ड्यं नाम । दृश्यते चैव मैतरेयस्य ब्राह्मणस्याद्यो भागः श्रौतविधिपूर्णः, द्वितीयस्त्वन्यविध एवेति । दृश्यते चैवं तैत्तिरीयस्यापि ब्राह्मणस्याद्यो भागः श्रौतविधिपूर्णः ; द्वितीये तु गृह्यमन्त्रा उपनिषच्चेति । आथर्वणिकाना मप्येव मेव भवितव्यम् ; गोपथ मिति मुद्रितन्त्ववश्य मसमग्र मेवेति मन्यामहे । 'ताण्डि'-नाम्ना महर्षिणा प्रकाशितं रचितं वैतत् सर्वं मतएवैतत् ताण्ड्य मिति

व्यपदिश्यते; छान्दोग्य मिति समाख्या त्वस्य सिद्धैव, साम-वेदीयानां छन्दोगत्वप्रसिद्धेः। तदित्थं ताण्ड्यप्रतिख्यातस्य ब्राह्म-णस्यैव द्वितीयभागीयाद्याध्यायद्वयात्मकं यत् प्रसिद्धं मन्त्रब्राह्मण मिति तदेवैतत् सञ्जीवयितु मेष प्रबन्धः।

ननु प्रतिशाख मेकैक मेव ब्राह्मण मभ्युपगन्तव्यं चेत् साम-विधानादीनां का गतिरिति? अत्र ब्रूमः,—अस्तु तेषा मनु-ब्राह्मणत्व मिति; सङ्गच्छेत च तथा "अनुब्राह्मणादिनिः (४. २. ६२.)"-इत्येतत्पाणिनीयसूत्रस्योदाहरणम्; अन्यथा शिरो नास्ति शिरोव्यथेतिवत् सूत्रं तदानर्थक्य मेव व्रजेत्; क्वापि अनुब्राह्मणग्रन्थादर्शनात्। निदानसूत्रादावपि यदुपात्त मनु-ब्राह्मणं नाम, तदप्येतदभिप्रायेणैवेति। अतएव च ब्राह्मणवच-नोद्धृतिः श्रूयते त्वार्षेये (१.१.) "अथापि ब्राह्मणं भवति"-इति* ॥

* * * *

वैदिकछन्दःशास्त्रनिष्कर्षरूपाणि कतिचित् छन्दश्चक्राणि—

( क )

| | छन्दांसि ७ | अतिच्छन्दांसि ७ | | विच्छन्दांसि ७ | |
|---|---|---|---|---|---|
| १ | गायत्री २४ | अतिजगती | ५२ | कृतिः | ८० |
| २ | उष्णिक् २८ | शक्वरी | ५६ | प्रकृतिः | ८४ |
| ३ | अनुष्टुप् ३२ | अतिशक्वरी | ६० | आकृतिः | ८८ |
| ४ | बृहती ३६ | अष्टिः | ६४ | विकृतिः | ९२ |
| ५ | पङ्क्तिः ४० | अत्यष्टिः | ६८ | सङ्कृतिः | ९६ |
| ६ | त्रिष्टुप् ४४ | धृतिः | ७२ | अतिकृतिः | १०० |
| ७ | जगती ४८ | अतिधृतिः | ७६ | उत्कृतिः | १०४ |

* उद्धृत एवांऽयः किञ्चित्संशोध्येह प्रकाशितः।

( ख )

| छन्दः— | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

( ग )

| छन्दांसि | विराट् | निचृत् | शुद्धा | भूरिक् | स्वराट् |
|---|---|---|---|---|---|
| गायत्री | २२ | २३ | २४ | २५ | २६ |
| उष्णिक् | २६ | २७ | २८ | २९ | ३० |
| अनुष्टुप् | ३० | ३१ | ३२ | ३३ | ३४ |
| बृहती | ३४ | ३५ | ३६ | ३७ | ३८ |
| पङ्क्तिः | ३८ | ३९ | ४० | ४१ | ४२ |
| त्रिष्टुप् | ४२ | ४३ | ४४ | ४५ | ४६ |
| जगती | ४६ | ४७ | ४८ | ४९ | ५० |

अतिच्छन्दोविच्छन्दसोरप्येव मेव विराड़ादयः समूह्याः ।

षड्विंशत्यक्षराया ऋचः स्वराड्गायत्रीच्छन्दो निर्णय मुत विराडुष्णिक् छन्द इत्याद्याशङ्कानिरासायोक्तं पिङ्गलेन "आदितः सन्दिग्धे ( ३. ६१. )"—इति । तथाच सन्दिग्धच्छन्दस्के मन्त्रे आदिपाददर्शनादेव छन्दोनिर्णयः कर्त्तव्य इत्युपदेश फलितः ।

तदेवं यद्यादिपादो गायत्र्याः स्यात्, तर्हि स मन्त्रो स्वराड्-गायत्रीच्छन्दस्क एव; यद्यादिपाद उष्णिहः स्यात्, तर्हि स मन्त्रो विराडुष्णिकछन्दस्कः । एवं सर्वत्र ।

( घ )

१ अथ गायत्रीच्छन्दः प्रथमम् ।

| | |
|---|---|
| ८—८—८=२४ | त्रिपाद् गायत्री |
| ६—६—६—६=२४ | चतुष्पाद् ” |
| ७—७—७=२१ | पादनिचृत् ” |
| ६—८—७=२१ | अतिपादनिचृत् ” |
| ९—९—६=२४ | नागी ” |
| ६—९—९=२४ | वाराही ” |
| ६—७—८=२१ | वर्द्धमाना ” |
| ८—७—६=२१ | प्रतिष्ठा ” |
| ६—६—७=१९ | ह्रसीयसी ” |
| १२—८=२० | द्विपाद्विराट् ” |
| ११—११—११=३३ | विराट् ” |
| ६—७—११=२४ | उष्णिग्गर्भा ” |
| ७—६—७=२० | अतिनिचृत् ” |
| ५—५—५—५=२० | पदपङ्क्तिः ” |
| (षट्कश्चैकः) ५—५—५—५—६=२६ | |
| ५—५—५—४=१९ | |
| ७—१०—७=२४ | यवमध्या ” |
| ८—४—८=२० | पिपीलिकमध्या ” |
| ५—६—६—६=२३ | शङ्कुमती ” |
| ६—८—८=२२ | ककुम्मती ” |

( छ )

२ उष्णिक् छन्दो द्वितीयम् ।

८—१२—८ = २८ ककुबुष्णिक्

१२—८—८ = २८ पुरउष्णिक्

८—८—१२ = २८ परोष्णिक्

७—७—७—७ = २८ चतुष्पादुष्णिक्

११—१२—४ = २७ न्यङ्कुशिराः "

११—११—६ = २८ तनुमध्या "

५—८—८—८ = २९ अनुष्टुब्गर्भा "

८—५—८—८ } = २९ पिपीलिकमध्या "
८—८—५—८ }

( ज )

३ अनुष्टुप् छन्दस्तृतीयम् ।

८—८—८—८ = ३२ चतुष्पादनुष्टुप्

१२—१२—८ = ३२ कृतिः "

८—१२—१२ = ३२ त्रिपात् "

१२—८—१२ = ३२ पिपीलिकमध्या "

५—५—५—५—५—६ = ३१ महापदपङ्क्तिः "

९—१२—९ = ३० कविराट् "

९—१०—१३ = ३२ नष्टा "

१०—१०—१० = ३० विराट् "

१०—१०—११ = ३१ " "

( छ )

४ बृहतीच्छन्दश्चतुर्थम् ।

| | | |
|---|---|---|
| ८—८—१२—८ = ३६ | | पथ्या बृहती |
| | { | न्यङ्कुसारिणी ,, |
| ८—१२—८—८ = ३६ | | स्कन्धोग्रीवी ,, |
| | | उरोबृहती ,, |
| ८—८—८—१२ = ३६ | | उपरिष्टाद् बृहती |
| १२—८—८—८ = ३६ | | पुरस्ताद् बृहती |
| ९—९—९—९ = ३६ | | चतुष्पाद् ,, |
| १०—१०—८—८ = ३६ | | ,, ,, |
| | { | ऊर्द्ध्वबृहती |
| १२—१२—१२ = ३६ | | महाबृहती |
| | | सतोबृहती |
| ८—१०—१०—८ = ३६ | | विष्टारबृहती |
| १३—८—१३ = ३४ | | पिपीलिकमध्या ,, |
| ९—८—११—८ = ३६ | | विषमपदा ,, |

( ज )

५ पङ्क्तिच्छन्दः पञ्चमम् ।

| | |
|---|---|
| १२—८—१२—८ = ४० | सतःपङ्क्तिः |
| ८—१२—८—१२ = ४० | विपरीता ,, |
| ८—८—१२—१२ = ४० | आस्तारपङ्क्तिः |
| १२—१२—८—८ = ४० | प्रस्तारपङ्क्तिः |
| ८—१२—१२—८ = ४० | विष्टारपङ्क्तिः |
| १२—८—८—१२ = ४० | संस्तारपङ्क्तिः |
| ५—५—५—५ = २० | अक्षरपङ्क्तिः |

इय मेवाक्षरपङ्क्तिर्नाम कात्यायनमते पदपङ्क्तिर्गायत्री ; हलायुधमते त्वेषा ५—५ = १० इत्यं दशाक्षरात्मिकैवेति च ।

५—५—५—५—५—५—५—५ = ४० अल्पशः पङ्क्तिः

५—५—५—५—५ = २५ } पदपङ्क्तिः
४—६—५—५—५ = २५ }

९—८—८—८—८ = ४० पथ्या ”

१०—१०—१०—१० = ४० चतुष्पदी ”

( ऋ )

६ त्रिष्टुप् छन्दः षष्ठम् ।

११—८—८—८—८ = ४३ पुरोज्योतिः त्रिष्टुप्

८—८—११—८—८ = ४३ मध्येज्योतिः ”

८—८—८—८—११ = ४३ उपरिष्टाज्ज्योतिः ”

११—११—११—११ = ४४ चतुष्पाद् ”

१२—१२—११—११ = ४६ }
११—११—१२—१२ = ४६ } जगती वा, जगती, त्रिष्टुब्वा, त्रिष्टुप्
१२—११—१२—११ = ४६ }
११—१२—११—१२ = ४६ }

१०—१०—१२—१२ = ४४ अभिसारिणी त्रिष्टुप्

९—९—१०—११ = ३९ विराट्स्थाना ”

१०—१०—९—११—४० ” ”

११—११—११—८ = ४१ विराड्रूपा ”

१२—१२—१२—८ = ४४ ज्योतिष्मती ”

८—८—८—८—१२ = ४४ महाबृहती ”

इयं महाबृहत्येवोपरिष्टाज्ज्योतिर्नाम पिङ्गलस्य ।

८—८—१२—८—८ = ४४ यवमध्या त्रिष्टुप्

८—१०—१०—८—८ = ४४ पङ्क्त्युत्तरा, विराट्पूर्वा च

( ज )

७ जगतीच्छन्दः सप्तमम् ।

८ – ८ – ८ – ८ – ८ – ८ = ४८ षट्पदी जगती

१२ – १२ – १२ – १२ = ४८ चतुष्पाद् ”

१२ – ८ – ८ – ८ – ८ = ४४ पुरोज्योतिः ”

८ – ८ – १२ – ८ – ८ = ४४ मध्येज्योतिः ”

८ – ८ – ८ – ८ – १२ = ४४ उपरिष्टाज्ज्योतिः ”

८ – ८ – ८ – १२ – १२ = ४८ महासतोबृहती ”

८ – ८ – ७ – ६ – १० – ९ = ४८ महापङ्क्तिः ”

भट्टहलायुधेन तु षट्पदीजगत्येव पङ्क्तित्वेनोपन्यस्ता ।

* * * *

अथ न ज्ञायते क्रियमाण मिदं व्याख्यान मपव्याख्यानं वा प्रतिपत्स्यते ? वेदार्थस्त्वतिसूक्ष्मोऽहन्तु स्थूलः स्थूलधीश्च ; अपि स्मर्यते चैवं नैरुक्तनयोदधी—

“सेयं विद्या श्रुतिमतिबुद्धिः,

तस्यास्तपसा पार मीप्सितव्यम्”–इत्यादि ।

* * * *

तदत्र सप्रणिपातं याचे ‘सन्तः सन्त्ववलम्बनम्’–इति ।
जानामि चैतद् भट्टकुमारिलवचनम्—

‘आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।

न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥’–इति”-इति॥

संहितोपनिषद्ब्राह्मणस्य व्याख्यानं तदापि न प्रचारितम् ।

वंशब्राह्मणस्य त्विय मवतरणी सायणीया—

“प्रौढादिब्राह्मणान्यादौ सप्त व्याख्याय चान्तिमम् ।

वंशाख्यं ब्राह्मणं विद्वान् सायणो व्याचिकीर्षति ॥

अस्मिन् ब्राह्मणे ऋग्यजुःसामवेदाध्येतॄणां प्रवृत्तिरुत्पादनाय सम्प्रदायप्रवर्त्तका ऋषयः प्रदर्श्यन्ते ॥"—इति ॥

तस्यैतस्य सायणाचार्यस्य परिचयस्तदीययज्ञतन्त्रसुधानिधितः—

"वंशे चान्द्रमसे तदन्वयनिधिः श्रीसङ्गमोऽभूत् ।
तस्मात् प्रादुरभूदभीष्टसुरभिः श्रीबुक्कपृथ्वीपतिः ।
हरिहरनिभो भूमौ कामदोग्धो जगत्याम् ।
हरिहरनरपालस्तस्य चाभूत् कनिष्ठः ।

*　　*　　*　　*

तस्याभूदन्वयगुरुः सत्यसिद्धान्तदेशतः ।
सर्वज्ञः सायणाचार्यो मायणार्यतनूद्भवः ।
उपेन्द्रस्येव तस्यासीदिन्द्रः सुमनसां प्रियः ।
महाक्रतूनां आहर्त्ता माधवार्यसहोदरः ॥"—इति ।

माधवार्यो माधवाचार्य इत्यभिन्नः । तेन स्वकृतव्यवहार-माधवादिग्रन्थभूमिकादौ स्वस्य बुक्कामात्यत्वं स्वकुलवर्णनं चोक्तं विशेषतः । तद्यथा व्यवहारमाधवे—

"सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता ।
पञ्चस्कन्धकृती षडन्वयदृढ़ः सप्ताङ्गसर्वंसहः ।
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दिशाप्रत्ययः ।
स्मार्त्तोच्छ्रायधुरन्धरो विजयते श्रीबुक्कणः क्ष्मापतिः ॥
इन्द्रस्याङ्गिरसो, नलस्य सुमतिः, शैव्यस्य मेधातिथिः ।
धौम्यो धर्मसुतस्य, वैण्यनृपतेः स्वौजा निमेर्गौतमः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनः ।
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः ॥

*　　*　　*　　*

श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ।
यस्य बोधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः ॥"—इति ।

( ज )

७ जगतीच्छन्दः सप्तमम् ।

८ – ८ – ८ – ८ – ८ – ८ = ४८ षट्पदी जगती

१२ – १२ – १२ – १२ = ४८ चतुष्पाद् ”

१२ – ८ – ८ – ८ – ८ = ४४ पुरोज्योतिः ”

८ – ८ – १२ – ८ – ८ = ४४ मध्येज्योतिः ”

८ – ८ – ८ – ८ – १२ = ४४ उपरिष्टाज्ज्योतिः ”

८ – ८ – ८ – १२ – १२ = ४८ महासतोबृहती ”

८ – ८ – ७ – ६ – १० – ९ = ४८ महापङ्क्तिः ”

भट्टहलायुधेन तु षट्पदीजगत्येव पङ्क्तित्वेनोपन्यस्ता।

* * * *

अथ न ज्ञायते क्रियमाण मिदं व्याख्यान मपव्याख्यानं वा प्रतिपद्यते ? वेदार्थस्त्वतिसूक्ष्मोऽहन्तु स्थूलः स्थूलधीश्च; अपि स्मर्यते चैवं नैरुक्तत्रयोदशे —

"सेयं विद्या श्रुतिमतिबुद्धिः,

तस्यास्तपसा पार मीप्सितव्यम्"–इत्यादि ।

* * * *

तदत्र सप्रणिपातं याचे 'सन्तः सन्त्ववलम्बनम्'–इति। स्मरामि चैतद् भट्टकुमारिलवचनम्—

'आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।

न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥'–इति"-इति॥

संहितोपनिषद्ब्राह्मणस्य व्याख्यानं त्वद्यापि न प्रचारितम् ।

वंशब्राह्मणस्य त्विय भवतरणी सायणीया—

"प्रौढादिब्राह्मणान्यादौ सप्त व्याख्याय चान्तिमम् ।

वंशाख्यं ब्राह्मणं विद्वान् सायणो व्याचिकीर्षति ॥

अस्मिन् ब्राह्मणे कात्स्न्यसामवेदाध्येतॄणां प्रवृत्तिसमुत्पादनाय सम्प्रदायप्रवर्त्तका ऋषयः प्रदर्श्यन्ते ॥''—इति ॥

तस्यैतस्य सायणाचार्यस्य परिचयस्तदीययज्ञतन्त्रसुधानिधितः—

"वंशे चान्द्रमसे तदन्वयनिधिः श्रीसङ्गमोऽभूत् ।
तस्मात् प्रादुरभूदभीष्टसुरभिः श्रीबुक्कपृथ्वीपतिः ।
हरिहरनिभो भूमौ कामदोग्धो जगत्याम् ।
हरिहरनरपालस्तस्य चाभूत् कनिष्ठः ।

* * * *

तस्याभूदन्वयगुरुः सत्यसिद्धान्तदेशतः ।
सर्वज्ञः सायणाचार्यो मायणार्यतनूद्भवः ।
उपेन्द्रस्येव तस्यासीदिन्द्रः सुमनसां प्रियः ।
महाक्रतूना माहर्त्ता माधवार्यसहोदरः ॥"—इति ।

माधवार्यो माधवाचार्य इत्यभिन्नः । तेन स्वकृतव्यवहारमाधवादिग्रन्थभूमिकादौ स्वस्य बुक्कामात्यत्वं स्वकुलवर्णनं चोक्तं विशेषतः । तद्यथा व्यवहारमाधवे—

"सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता ।
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः ।
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दिशाप्रत्ययः ।
स्मार्त्तोच्छ्रायधुरन्धरो विजयते श्रीबुक्कणः क्ष्मापतिः ॥
इन्द्रस्याङ्गिरसो, नलस्य सुमतिः, शैव्यस्य मेधातिथिः ।
धौम्यो धर्मसुतस्य, वैण्यनृपतेः स्वौजा निमेर्गौतमिः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनः ।
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः ॥

* * * *

श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ।
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः ॥"—इति ।

तदेव मवगम्यते,—चन्द्रवंशीयस्य श्रीसङ्गमस्य नृपतेः कुल-
गुरुरासीत् सायणाचार्यः। तस्य राज्ञो बुक्कहरिहरौ पुत्रौ
सुयोग्यौ बभूवतुः; सायणस्य च माधव-सायण-भोगनाथास्त्रयः
पुत्रा आसन्। तत्र ज्येष्ठस्य बुक्कस्य गुरुरभूत् सायणस्य ज्येष्ठ-
पुत्रो माधवः, कनिष्ठस्य हरिहरस्य गुरुश्चासीत् सायणस्य मध्यम-
पुत्रो माधवानन्तरजातः सोदरः सायणः। सर्वकनिष्ठस्य भोग-
नाथस्य तु ताभ्यामल्पविद्यत्वात्, सर्वकनिष्ठत्वाद्वा बुक्कहरिहर-
योर्गुरुत्वालाभादनाश्रयत्वात् नैवाभूत् तथा प्रसिद्धिः, यथा तज्ज्येष्ठ-
योर्माधवसायणयोः। माधवाचार्येण हि बुक्कराजसाहाय्यात्
व्यवहारमाधवाधिकरणमालादयो ग्रन्थाः प्रणीताः, स्वानुजेन
सायणेन च कारितानि वेदभाष्याणि सर्वाणि। सायणाचार्येण
तु हरिहरराजसाहाय्यात् यज्ञतन्त्रसुधानिध्यादयः प्रणीताः।
सर्वदर्शनसङ्ग्रहकारी माधवस्त्वन्य एव, निर्वचनानुक्रमण्यादि-
ग्रन्थानाञ्च प्रणेता माधवोऽप्यन्यः सामवेदीयविवरणग्रन्थकारश्च
माधवो विभिन्न एव; तेषु 'वागीशाद्याः सुमनसः'—इत्यादि-
सायणवंशीयमङ्गलाचरणादिदर्शनाभावादिभ्यः।

तदनयोर्माधवसायणयोराश्रयौ यौ बुक्कहरिहरौ राजानौ,
तयोस्तु खी० १३४४-समाया मभ्युच्छासनारम्भ इति निर्णीत
मद्यतनीयैरैतिहासिकैः प्राय ऐकमत्यैव। तथाच १४००-संवत्
समातः परस्तादेव माधवाज्ञातः सायणेन प्रणीतानि वेद-
भाष्याणीति च गम्यते स्फुट मिति शम्॥

तिथिविद्यामिते शाके साल्वे त्रयीचतुष्टये।
त्रयीपरिचयाख्योऽयं प्रथमः पूर्णतां गतः॥

---

अस्मिन् ब्राह्मणे ऋक्सामवेदाध्येतॄणां प्रवृत्तिरुत्पादनाय सम्प्रदायप्रवर्त्तका ऋषयः प्रदर्श्यन्ते"—इति ॥

अथाथर्ववेदपरिचयाय च तत्संहितायाः सायणीयभाष्योपोद्घाततः किञ्चिदिहोद्ध्रियते—"तस्य ऐहिकामुष्मिकसकलपुरुषार्थपरिज्ञानोपायभूतस्य अथर्ववेदस्य नव भेदा भवन्ति। तद्यथा—पैप्पलादाः, तौदाः, मौदाः, शौनकीयाः, जाजलाः, जलदाः, ब्रह्मवदाः, देवदर्शाः, चारणवैद्याश्चेति। तत्र शौनकीयादिषु चतसृषु शाखासु अनुवाकसूक्तऋगादीनां गोपथब्राह्मणानुसारेण पञ्चभिः सूत्रैर्विनियोगोऽभिहितः। तानि च सूत्राणि,—कौशिकम्, वैतानम्, नक्षत्रकल्पः, आङ्गिरसकल्पः, शान्तिकल्पश्चेति। तदुक्त मुपवर्षाचार्यैः कल्पसूत्राधिकरणे—

"नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः।

तुर्य आङ्गिरसः कल्पः शान्तिकल्पस्तु पञ्चमः"—इति।

तत्र साकल्येन संहितामन्त्राणां शान्तिकपौष्टिकादिषु कर्मसु विनियोगविधानात् संहिताविधिर्नाम कौशिकं सूत्रम्। तदेव इतरैः सूत्रैरुपजीव्यत्वात् प्रधानं च। एतेषु बहुषु सूत्रेषु अथर्ववेदप्रतिपाद्यानि कर्माणि विप्रकीर्णत्वाद् दुर्बोधानीति सुखावबोधाय तानीह संगृह्यन्ते। तत्र तावत् कौशिकसूत्रे क्रमेण प्रतिपाद्यान्येतानि कर्माणि—

आदौ स्थालीपाकविधानेन दर्शपूर्णमासविधिः। ततो मेधाजननानि। ब्रह्मचारिसाम्पदानि। ग्रामनगरदुर्गराष्ट्रादिलाभार्थानि। पुत्रपशुधनधान्यप्रजास्त्रीकरितुरगरथान्दोलिकादिसर्वसम्पत्साधकानि। जनाना मैकमत्यसम्पादकानि सामनस्यानि। ततो राजकर्माणि। तानि च— शत्रुहस्तित्रासनानि, सङ्ग्राम-

जयसाधनानि, इषुनिवारणार्थानि, खड्गादिसर्वशस्त्रनिवारणानि, परसेनामोहनोद्वेजनस्तम्भनोच्चाटनादीनि, स्वसेनोत्साहपरिरक्षणाभयार्थानि, सङ्ग्रामे जयपराजयपरीक्षार्थानि, सेनापत्यादिप्रधानपुरुषजयकर्माणि, परसेनासञ्चरणप्रदेशेषु अभिमन्त्रितपाशासिकपाशप्रक्षेपणादीनि, जयकामस्य राज्ञो रथस्यारोहणम्, अभिमन्त्रितभेरीपटहादिसर्ववादित्रताडनम्, सपत्नक्षयकर्माणि, शत्रूत्सादितस्य राज्ञः पुनःस्वराष्ट्रप्रवेशकानि, राजाभिषेकः। पापक्षयार्थानि, निर्ऋतिकर्माणि, चित्राकर्मादीनि, पौष्टिकानि, गोसमृद्धिकर्माणि, लक्ष्मीकराणि, पुष्ट्यर्थमणिबन्धनानि, कृषिपुष्टिकराणि, अनडुत्समृद्धिकराणि, गृहसम्पत्कराणि, नवशालाकर्मादीनि, वृषोत्सर्जनम्, आग्रहायणीकर्म। जन्मान्तरकृतपापनिमित्ताचिकित्स्यविविधरोगभैषज्यानि,— तत्र प्रथमं सर्वव्याधिभैषज्यम्, ज्वरातिसारबहुमूत्रादिभैषज्यानि, शस्त्राद्यभिघातजरुधिरप्रवाहनिरोधकानि, भूतप्रेतपिशाचापस्मारब्रह्मराक्षसबालग्रहादिनिवारणानि, वातपित्तश्लेष्मभैषज्यानि, हृद्रोगकामिलाश्वित्रनिवारणानि, सन्ततज्वरैकाहिकादिविषमज्वरराजयक्ष्मजलोदरनिवारणानि, गवाश्वादीनां क्रिमिहराणि, कन्दमूलसर्पवृश्चिकस्थावरजङ्गमविषनिवारणानि, शिरोऽक्षिनासिकाकर्णजिह्वाग्रीवादिरोगभैषज्यानि, ब्राह्मणाद्याक्रोशनिवारणानि, गण्डमालादिविविधरोगभैषज्यानि। पुत्रादिकामस्त्रीकर्माणि,— सुखप्रसवकर्माणि, गर्भाधानगर्भदृंहणपुंसवनादीनि, सौभाग्यकरणानि। राजादिमन्युनिवारणानि। अभीष्टसिद्ध्यसिद्धिविज्ञानानि। दुर्दिनाश्न्यतिवृष्टिनिवारणानि। सभाजयविवादजयकलहशमनानि। सेत्वाती नदीप्रवाहकरणानि। वृष्टिकर्माणि। अर्थोत्थापनकर्म,

द्यूतजयकर्म, गोवत्सविरोधनिवारणम्, अग्निशान्तिः, वाणिज्यलाभकर्म, स्त्रियाः पापलक्षणनिवारणम्, वास्तुसंस्कारकर्म, गृहप्रवेशकर्म, कपोतवायसाद्युपहतगृहशान्तिविधिः, दुष्प्रतिग्रहायाज्ययाजनादिदोषनिवारणम्, दुःस्वप्ननिवारणम्, कुमारस्य पापनक्षत्रजननशान्तिः, ऋणापनोदनम्, दुःशकुनशान्तिः। आभिचारिकाणि, परकृताभिचारनिवारणानि। स्वस्त्ययनानि, आयुष्याणि, जातकर्मनामकरणचूडाकरणोपनयनादीनि। एकाग्निसाध्याः काम्या यागाः, ब्रह्मौदनस्वर्गौदनाद्या द्वाविंशतिः सवयज्ञाः। क्रव्याच्छमनम्। आवसथ्याधानम्, विवाहः। पैतृमेधिकानि, पिण्डपितृयज्ञः, मधुपर्कः। पांसुरुधिरादिवर्षणयक्षराक्षसादिदर्शनभूकम्पधूमकेतुचन्द्रार्कोपप्लवादि बहुविधोत्पातशान्तयः। आज्यतन्त्रविधिः, अष्टकाकर्म, इन्द्रमहः, ततोऽध्ययनविधिरिति॥

तथा वैतानसूत्रे दर्शपूर्णमासादिषु अयनान्तेषु त्रयीविहितकर्मसु ब्रह्मा ब्राह्मणाच्छंसी आग्नीध्रः पोतेति चतुर्णा ऋत्विजां कर्त्तव्यं प्रतिपाद्यते। तत्र अनुज्ञानुमन्त्रणादीनि ब्रह्मणः, शस्त्रादीनि ब्राह्मणाच्छंसिनः, आग्नीध्रस्य अन्वाहार्यश्रपणप्रस्थितयाज्यादीनि, पोतुः प्रस्थितयाज्यादीनि, इति विभागः॥

तत्रायं कर्मक्रमः— प्रथमं दर्शपूर्णमासौ। ततोऽग्न्याधानम्। अग्निहोत्रम्। आग्रयणेष्टिः। चातुर्मास्यानि,—वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणि। पशुयागः,— अग्निष्टोमोक्थ्यषोडश्यतिरात्रात्मकः प्रकृतिभूतचतुःसंस्थः सोमयागः, वाजपेयः, अप्तोर्यामः, अग्निचयनम्, सौत्रामणी, मैत्रावरुणामिक्षेष्टिः। गवामयनम्, राजसूयः, अश्वमेधः, पुरुषमेधः, सर्वमेधः। बृहस्पतिसवगोसवाद्य एकाहाः सोमयागाः। व्युष्टिद्विरात्रप्रकृत-

नैमित्तिककाम्यभेदेन। तत्र जातकर्मादीनि नित्यानि, दुर्दिनाशनिनिवारणाद्यग्न्यद्भुतकर्माणि च नैमित्तिकानि, मेधाजननग्रामसाम्पदादीनि काम्यानि। अत्र नित्यानां नैमित्तिकानां च अवश्यानुष्ठेयता; अकरणे प्रत्यवायस्मरणात्। तथा हि— 'नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया'–इति; काम्यानां तु इच्छातः प्रवृत्तिः"–इति॥

अथ सर्ववेदभाष्यकारस्य भगवतः सायणाचार्यस्य परिचयार्थमपीह किञ्चिदुच्यतामहे—

संवच्चतुर्दशशताब्दीशेषपादे आसीद्दाक्षिणात्येषु विजयनगरराज्येऽभिषिक्तः सङ्गमो नाम नरपतिः। आसीच्च तत्प्रधानमन्त्री भारद्वाजो मायणो नाम। श्रीमती नाम चासीत्तस्य मायणस्य धर्मपत्नी। तद्गर्भसम्भूताश्चाभवन् माधवः सायणो भोगनाथ श्चेति त्रय आचार्याः। काले दिवं गते सङ्गमभूपतौ तत्पुत्रस्य प्राप्तसिंहासनस्य बुक्कस्य बुक्कणस्य वा प्रधानामात्यत्वमवाप मायणपुत्रो माधवः। तदैव तेन आचारमाधवः, प्रायश्चित्तमाधवः, व्यवहारमाधव इति पराशरस्मृतिव्याख्यानपरं ग्रन्थत्रितयं विरचय्य तत्परिशिष्टरूपः कालमाधवश्चारचितः। ततो जैमिनीयन्यायमालाविस्तरं वैयासिकन्यायमालाविस्तरं च प्रणीय, तयोर्व्याख्याग्रन्थावप्यरचयत् स्वयम्। ततो राजादेशतः सर्ववेदार्थं प्रकटयितु मुद्यतः स स्वानुजं सायणं तत्र न्ययुङ्क्त। यज्ञविधावाध्वर्यवस्य प्राधान्यादाध्वर्यवव्याख्याने एव स सायणः प्रथमं प्रवृत्तः, स्वशाखाग्रन्थानां काण्वयजुस्तैत्तिरीयसंहिताब्राह्मणारण्यकानां 'वेदार्थप्रकाश'–नामकानि भाष्याणि प्राणयत्, ततः शाकलसंहिताब्राह्मणारण्यकानाम्, ततः सामच्छन्दआरण्यकोत्तराष्टब्राह्मणानाम्, ततः शुक्ल-

यजुर्ग्रन्थाना मप्याध्वर्यवेषु प्रयोजनीयत्व मनुभूय तेषा मपि व्याख्यानेऽभवन्निविष्टचित्तः। तत्र वाजसनेयिनां काण्वसंहिताया भाष्यस्य प्रणयनकाले प्रणयनान्ते वा स्वर्गते वार्द्धक्य मुपगते सन्न्यस्ते वा बुक्कमहीपतौ तदङ्गजस्य हरिहरस्याभवद्विजयनगरसिंहासनम्। तदा बुक्कादिष्टचतुर्वेदभाष्याणां प्रणयनस्य पूर्त्तौ व्यग्रस्य माधवाचार्यस्य विशेषोत्तेजनात एव, क्रमप्राप्तं वाजसनेयिब्राह्मणारण्यकव्याख्यान मकृत्वापि सायणेनारचितं स्यादथर्वसंहिताभाष्यम्। अथर्वब्राह्मणस्य गोपथस्यापि भाष्यं स्यात्प्रणीतं तदुत्तरम्। अथर्वारण्यकव्याख्याऽस्माभिर्न दृष्टम्, तत्तद्भाष्यदर्शनकथा दूरपराहतैव। तदानीं माधवाचार्यश्च जराग्रस्तः प्रविविक्तचित्तः सन्न्यस्तो वा गृहीतावसरोऽभवद्राजामात्यकार्यादिति तद्योग्यानुजः सायणाचार्यस्तत्पद मलमकरोत्। अथ स पुनरपि साक्षाद्राजादेश मवाप्य वाजसनेयिनां शतपथं नाम सारण्यकं ब्राह्मणं व्याख्यातवान्। काले त्रिपिष्टप मुपगते माधवे हरिहरराजसभासदा सभ्यर्थनयानेनैव सायणाचार्येण 'यज्ञतन्त्रसुधानिधिः' प्रणीतः। मायनपुत्रेषु कनिष्ठस्य भोगनाथस्य देहावसानन्तु जीवत्येव माधवेऽभवदिति सम्भाव्यते। तस्य कीर्त्तिप्रख्यापकः कश्चिद् ग्रन्थश्च नाद्याप्यस्माकं दृष्टिगोचरः सञ्जातः।

विरराज च तदानीं शङ्करानन्दशिष्यः, कश्चिद् भिक्षुर्विद्यारण्यनामा। भगवच्छङ्कराचार्यप्रवर्त्तिता हि यतीनां दश सम्प्रदायाः सम्पन्नाः। तद्यथा—'तीर्थाश्रमवनारण्यगिरिपर्वतसागराः। सरस्वती भारती च पुरी नामानि वै दश'–इति। तत्र विद्यारण्यः खलु अरण्यसम्प्रदायस्य शिष्यो यतिरासीत्। स एवैकोऽनयोर्माधवसायणयोर्विद्यागुरुः। गुरोः प्रत्यक्षनामग्रहणे सदाचार-

विरोधात् स एवैकः क्वचिद् विद्यातीर्थ इति, क्वचिद् विद्यातीर्थ-महेश्वर इति, क्वचिद् भारतीतीर्थ इति च परोक्षनामभिर्व्यपदिष्टोऽपि अथर्वसंहितोपक्रमे अलङ्कृत्यनुरोधात् सुव्यक्ताभिधः । अस्ति भारतीशब्दो विद्यापर्यायः, तीर्थशब्दोऽप्यस्ति गुरुपर्यायः, नारायण इति महेश्वर इति व्यपदिश्यन्ते च भिक्षवोऽद्यापि । इत एव तस्य परोक्षनामभिर्व्यवहारः सौकर्यमुपगतः । तेनापि हि विद्यारण्य-यतिना बहवो ग्रन्थाः प्रणीताः । तत्र प्रत्यक्तत्त्वविवेकादयः पञ्च विवेकग्रन्थाः, चित्रदीपादयः पञ्च दीपग्रन्थाः, योगानन्दादयः पञ्च ब्रह्मानन्दग्रन्थाः, अपरोक्षानुभूतिदीपिका–कैवल्योपनिषद्दीपिका–जीवन्मुक्तिविवेकादिग्रन्थाश्च प्रसिद्धाः । वैयासिकन्याय-मालापि एतेनैव भारतीतीर्थेन कृतेति प्रवादस्तु निर्मूल एव प्रतिभात्यस्माकम्; 'ये पूर्वोत्तरमीमांसे व्याख्यायातिसङ्ग्रहात्' –इतिश्लोकादुभयोरपि न्यायमालयोर्माधवैककर्तृत्वावगमात् । तत्र 'वागीशाद्याः'–इतिमङ्गलाचरणस्य 'प्रणम्य परमात्मानं विद्या-तीर्थरूपिणम्'–इति न्यायमालाविस्तरीयविद्यातीर्थप्रणामश्लोकस्य च दर्शनात्, जैमिनीयन्यायमालानुकृत्यवगमाच्च ज्ञायते सा नूनं माधवीयेति । 'वागीशाद्याः'–इति मङ्गलाचरणं हि तयोरेव महासौहार्दयुक्तयोर्भ्रात्रोर्माधवसायणयोः सर्वग्रन्थेषु दृश्यते, विद्या-तीर्थापरपर्यायो भारतीतीर्थ एव तयोर्गुरुरिति चोक्तम्, जैमिनीय-न्यायमालाया माधवीयत्वं च सर्वसम्मत मित्यलं प्रासङ्गिकप्रसङ्गेनेति प्रकृत मनुसरामः ।

एकत्रैव स्मार्तत्वं वैदिकत्वं चेति दुर्लभम्, तच्चासीत् माधवे सायणे चेति तयोर्विदुषोः सर्वज्ञ इति प्रशंसा सुविस्तृता; सर्व-शास्त्रज्ञ इति च तदर्थः ।

अथेह्योक्तानि प्रमाणयितुं विशेषतः प्रतिपादयितुञ्च त्रयोस्तेभ्य एव ग्रन्थेभ्यः कानिचिदुपक्रमोपसंहारवाक्यानि समुद्धृत्य प्रदर्श्यन्ते।

तथाचेमे आचारमाधवोपक्रमश्लोकाः —

"वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
सोऽहं प्राप्य विवेकतीर्थपदवी माम्नायतीर्थे परं
मज्जन् सज्जनसङ्गतीर्थनिपुणः सद्वृत्तितीर्थं श्रयन्।
लब्धा माकलयन् प्रभावलहरीं श्रीभारतीतीर्थतो
विद्यातीर्थ मुपाश्रयन् हृदि भजे श्रीकण्ठ मव्याहतम् ॥ २ ॥
सत्यैकव्रतपालको द्विगुणधीस्त्र्यर्थी चतुर्वेदिता
पञ्चस्कन्धकृती षडन्वयदृढः सप्ताङ्गसर्वंसहः।
अष्टव्यक्तिकलाधरो नवनिधिः पुष्यद्दशप्रत्ययः
स्मार्त्तौच्छ्रायधुरन्धरो विजयते श्रीबुक्कणक्ष्मापतिः ॥ ३ ॥
इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैव्यस्य मेधातिथि-
र्धौम्यो धर्म्मसुतस्य वैण्यनृपतेः स्वौजा निमेर्गौतमिः।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत् कुलगुरुर्मन्त्री तथा माधवः ॥ ४ ॥
प्रज्ञामूलमही विवेकसलिलैः सिक्ता बलोपघ्निका
मन्त्रैः पल्लविता विशालविटपा सन्ध्यादिभिः षड्गुणैः।
शक्त्या कोरकिता यशस्सुरभिता सिद्ध्या समुद्यत्फला,
सम्प्राप्ता भुवि भाति नीतिलतिका सर्वोत्तरं माधवम् ॥ ५ ॥
श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥ ६ ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी।

भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः ॥ ७ ॥

स माधवः सकलपुराणसंहिता-

प्रवर्त्तकः स्मृतिसुषमापराशरः ।

पराशरस्मृतिजगदीहिताप्तये

पराशरस्मृतिविहृतौ प्रवर्त्तते ॥ ८ ॥"—इति ।

प्रायश्चित्तमाधवे, व्यवहारमाधवे चैव मेव । कालमाधवे तु आदि-श्लोकत्रितयादनन्तरम्—

'व्याख्याय माधवाचार्यो धर्मान् पाराशरानथ ।

तदनुष्ठानकालस्य निर्णयं वक्तु मुद्यतः ॥'—

इत्यादयस्तद्ग्रन्थविषया अन्ये श्लोका अपि, न तु इन्द्रस्याङ्गिरस इत्यादयः । जैमिनीयन्यायमालायां तु 'वागीशाद्याः'—इतिश्लोकादनन्तरं सोऽहमित्यादिश्लोकयोः स्थाने श्लोकाविमौ—

'श्रुत्तिं मानवतीं विदन् स्थिरधृतिर्भेदे विशेषार्थभाग्

आसोहक्रमकृत्ययुक्तिनिपुणः श्लाघ्यातिदेशोन्नतिः ।

नित्यस्फूर्त्यधिकारवान् गतसदाबाधः स्वतन्त्रेश्वरो

जागर्त्ति श्रुतिसत्यसङ्गचरितः श्रीबुक्कणः क्ष्मापतिः ॥ २ ॥

यद् ब्रह्म प्रतिपाद्यते प्रगुणयत् तत्पञ्चमूर्त्तिप्रथां

तत्रायं स्थितिमूर्त्तिमाकलयति श्रीबुक्कणः क्ष्मापतिः ।

विद्यातीर्थमुनिस्तदात्मनि लसन् मूर्त्तिस्त्वनुग्राहिका

तेनास्य स्वगुणैरखण्डितपदं सार्वज्ञ मुद्योतते ॥ ३ ॥'—इति ।

ततश्चतुर्थः श्लोकस्तत्रापि 'इन्द्रस्याङ्गिरसः'—इत्यादिरेव । ततश्चेमे—

"स खलु प्राज्ञजीवातुः सर्वशास्त्रविशारदः ।

अकरोज्जैमिनिमते न्यायमालां गरीयसीम् ॥ ५ ॥

तां प्रशस्य सभामध्ये वीरबुक्कणभूपतिः ।

कुरु विस्तर मस्यास्त्व मिति माधव मादिशत् ॥ ६ ॥
स भव्यां भारतीतीर्थयतीन्द्रचतुराननात् ।
कृपा मव्याहतां लब्ध्वा पराङ्गप्रतिमो ऽभवत् ॥ ७ ॥
निर्माय माधवाचार्यो विद्वदानन्ददायिनीम् ।
जैमिनीयन्यायमालां व्याचष्टे बालवृद्धये ॥ ८ ॥
श्रुतिस्मृतिसदाचारपालको माधवो बुधः ।
स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उद्यतः ॥ ९ ॥
प्रणम्य परमात्मानं श्रीविद्यातीर्थरूपिणम् ।
जैमिनीयन्यायमाला श्लोकैः संगृह्यते स्फुटम् ॥ १० ॥"–इति ।

प्रज्ञामूल मित्यादयस्त्रयः श्लोकास्त्वत्र न सन्ति ।

अथ वेदभाष्येषु तैत्तिरीयसंहिताभाष्यस्यैव प्राथम्य मभ्युपगतं पुरस्तादिति तन्मुखबन्धश्लोका एवेहादावुद्ध्रियन्ते—

"वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा, यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त मह वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तु मुद्यतः ॥ ४ ॥
ब्राह्मणं कल्पसूत्रे द्वे मीमांसां व्याकृतिं तथा ।
उदाहृत्याथ तैः सर्वैर्मन्त्रार्थः स्पष्ट मीर्यते ॥ ५ ॥"–इति ।

तैत्तिरीयब्राह्मणभाष्येऽप्येतस्यादिश्लोकचतुष्टयमितएवोद्धृत्य तत उक्त एष पञ्चमः श्लोकः—

'व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता ।

तद्ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये ॥ ५ ॥'—इति ।

तैत्तिरीयारण्यकभाष्ये ऽपि त एव चत्वार आदिश्लोका उद्धृता दृश्यन्ते, तत्रैव पञ्चमः श्लोकः—

'व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता ।

तद्ब्राह्मणञ्च व्याख्यातं शिष्ट मारण्यकं ततः ॥ ५ ॥'—इति ।

ऋक्संहिताभाष्येऽपि आद्यश्लोकचतुष्टयं तैत्तिरीयसंहिता-भाष्यतो यथायथ मुद्धृतं दृश्यते, तत एष पञ्चमः श्लोकः—

'आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा ।

यजुर्वेदो, ऽथ हौत्रार्थं ऋग्वेदो व्याकरिष्यते ॥ ५ ॥'—इति ।

ऋग्ब्राह्मणभाष्ये, ऋगारण्यकभाष्येऽप्येवमेवाद्यश्लोकचतुष्टयम् ।

सामवेदीयेषु च दशसु भाष्येषु त एव आद्याश्चत्वारः श्लोका निविष्टा दृश्यन्ते । तत्तदुपरितना अपि प्रकाशिता इहैव पुरस्तात् (९९, १०८, ११८, ११९ पृ० ) । एतेषां परञ्च काण्वसंहिता-भाष्ये ऽप्येतदेव श्लोकचतुष्टयं विद्यते । ततश्चैष ग्रन्थः—

'ऋग्यजुस्सामवेदा ये व्याख्यातास्तेषु तद् यजुः ।

कृष्णं शुक्ल मिति द्वेधा, तत् कृष्णं तैत्तिरीयकम् ॥ ५ ॥

* * * *

व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते ॥ ११ ॥

* * * *

ततेदं काण्ववेदाख्यं शुक्लं यजुः पूर्वं न व्याख्यातम्, किन्तु तैत्तिरीयाख्यं कृष्णं यजुरेव व्याख्यातम्; तस्मादिदानीं काण्व-शाखा व्याख्यायते'—इति ।

अथाथर्वसंहिताभाष्योपक्रमश्लोकाः—

"वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
अविद्याभानुसन्तप्तो विद्यारण्यमहं भजे ।
यदर्ककरतप्तानामरण्यं प्रीतिकारणम् ॥ ३ ॥
तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः ।
अभूद्धरिहरो राजा क्षीराब्धेरिव चन्द्रमाः ॥ ४ ॥
विजितारातिव्रातो वीरश्रीहरिहरक्षमाधीशः ।
धर्मब्रह्माध्वन्यः कलिं व्यचरितेन कृतयुगं कुरुते ॥ ५ ॥
साधयित्वा महीं सर्वां श्रीमान् हरिहरेश्वरः ।
भुङ्क्ते बहुविधान् भोगानसक्तो रामवत् सुधीः ॥ ६ ॥
विजयी हरिहरभूपः समुद्वहन् सकलभूभारम् ।
षोडश महान्ति दानान्यनिशं सर्वस्य तुष्टये कुर्वन् ॥ ७ ॥
तन्मूलभूतमालोच्य वेदमाथर्वणाभिधम् ।
आदिशत् माधवाचार्यं तदर्थस्य प्रकाशने ॥ ८ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ९ ॥
व्याख्याय वेदत्रितयमामुष्मिकफलप्रदम् ।
ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति ॥ १० ॥"—इति ।

अत्रापि ते चत्वारः श्लोकाः सन्त्येवान्यान्यश्लोकगर्भाः, बुक्कनामस्थाने हरिहरनामोल्लेख इत्येव विशेषः । तत एव ज्ञायते दिवं गते बुक्के, हरिहरराज्यकालेऽयं ग्रन्थो रचित इति । 'क्षीराब्धेरिव चन्द्रमाः'—इत्युक्तेश्च गम्यत एव हरिहरस्य बुक्कापत्यत्वम् ।

किन्त्वेव मपि तदाख्यमात्रपरिवर्त्तनं न प्रतीयते ; 'आदिशन्मा-धवाचार्यम्'–इत्यस्य 'कृपालुर्माधवाचार्यः'–इत्यस्य चेहापि दर्शनात् । ननु 'आदिशत् सायणाचार्यम् ०—० कृपालुः सायणाचार्यः'–इति पाठोऽप्यस्ति, स एव किं नात्र मन्यसे ? अत्र ब्रूमः— सर्वभाष्यग्रन्थोपक्रमेषु निविष्टा ये वागीशाद्या इति चत्वारः श्लोका इहोद्धृत्य प्रदर्शिताः, तेषां तृतीयचतुर्थयोस्त्रिविधाः पाठाः प्रतीयन्ते, तदेकविधस्तूद्धृत एवेह पुरस्तात्— 'आदिशन्माधवाचार्यं ०—० कृपालुर्माधवाचार्यः'–इति । क्वचित् पुस्तके 'आदिशत् सायणाचार्यं ०—० कृपालुः सायणाचार्यः'–इति च, क्वचित् 'आदिशन्माधवाचार्यं ०—० कृपालुः सायणाचार्यः–इति च । एष्वाद्य पाठ एव युक्ततमोऽस्माकं प्रतिभाति; 'ये पूर्वोत्तरमीमांसे'–इत्यादिश्लोकार्द्धसाहचर्यात् । अतिसंग्रहात् पूर्वोत्तरमीमांसयोर्व्याख्याता हि माधव एव, न तु सायणः । सर्वत्र पुष्पिकासु 'माधवीये'–इत्युक्तिश्चात्रापरं मानम् । नन्वेवं वेदभाष्याण्यपि सर्वाणि माधवाचार्यकृतानीत्येव स्यान्मन्तव्यमिति चेन्न ; तत्र सर्वत्रैव पुष्पिकासु सायणाचार्यरचितत्वस्य विस्पष्टोल्लेखात् । तत्रापि लेखकसम्पादकानां पाण्डित्यमूलकाः प्रविभिन्नपाठाः सन्त्येवेति चेत् , पाठभेदशून्यः सर्वपुस्तकेषु दृष्टस्तदीयांशविशेषस्त्विह प्रामाण्य मधिरोहतु, तन्मात्रेणैवात्र भवेन्नूनं कृतकृत्यतेति । तथा ह्यय तत्पुष्पिकांशः— "सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे"–इति । तदेवं 'कृपालुर्माधवाचार्यो वेदार्थं वक्तु मुद्यतः' सन् स्वमध्यमानुजेन सायणाचार्येण 'वेदार्थप्रकाशं' कारयतीत्येव तत्र सर्वत्रोक्तम् । दृश्यते चैकस्मिन् तैलङ्गाक्षरलिखिते तैत्तिरीयसंहिताभाष्यपुस्तके तृतीयश्लोकादनन्तर मिमावपि श्लोकौ—

"स ह्याह नृपतिं राजन् सायणार्यो ममानुजः ।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम् ॥ ४ ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपतिः ।
अन्वगात् सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ५ ॥"–इति ।

अपिवा उभयोर्भ्रात्रोस्नेहातिशयैकमत्यादिनिबन्धनैकात्म्यप्रतिपादनायैव सुपक्रमव्यवहारः । तदुक्तं 'सायणो भोगनाथश्च मनोबुद्धी सहोदरौ'–इति ( १३७ पृ० ) । यज्ञतन्त्रसुधानिधेरुपक्रमग्रन्थीयत्रयोदशचतुर्दशश्लोकयोः समालोचनतोऽपि सायणाचार्यस्यैव सर्ववेदभाष्यकर्तृत्वं स्फुट मवगम्यते । तथाहि—

"ते तपस्तेजसां राशि मासीनं परमासने ।
सर्वज्ञं सायणाचार्यं पर्यपृच्छन् सभासदः ॥ १३ ॥
अधीताः सकला वेदास्ते च दृष्टार्थगोचराः ।
त्वत्प्रणीतेन तद्भाष्यप्रदीपेन प्रथीयसा ॥ १४ ॥"–इति ।

यज्ञतन्त्रसुधानिधिप्रणयनात् पूर्वम् अथर्वभाष्यप्रणयनादुत्तरञ्च शतपथभाष्यं प्रणीत मिति गम्यते । तदुपक्रमे हि वागीशाद्या इति यस्य निःश्वसित मिति च श्लोकावुक्त्वा आहेमांश्च श्लोकान्—

"तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः ।
कृतावतरणः क्षीरसागरादिव चन्द्रमाः ॥ ३ ॥
विजिताखिलशातो वीरः श्रीहरिहरः क्षमाधीशः ।
धर्मब्रह्माध्वन्यः समादिशत् सायणाचार्यम् ॥ ४ ॥
ऋग्यजुस्सामशाखाना मेकैका व्याकृता त्वया ।
तावता तत्समानार्थां ज्ञातुं शक्यास्ततः पराः ॥ ५ ॥
वासना विशदा यत्र मन्त्रार्थानां विशेषतः ।
प्रायेणाध्वर्यवं कर्म पूर्णं शाखान्तरैर्विना ॥ ६ ॥

करामलकवद्यत्र परं तत्त्वं प्रकाशितम् ।
या काचित्तादृशी शाखा त्वया व्याख्यायतामिति ॥ ७ ॥
सर्वज्ञः सायणाचार्यो विस्रब्धोदीरितान् गुणान् ।
माध्यन्दिने शतपथे ब्राह्मणे, व्याकरोति तत् ॥ ८ ॥
सञ्चारः पदवाक्यार्थन्यायानां दर्शितः पुरा ।
वेदानामर्थवत्त्वादि यच्चान्यदुपयुज्यते ॥ ९ ॥
सर्वशाखासमत्वेन विज्ञेयं तदिहाखिलम् ।
यत्तु सन्दिग्धमज्ञातमत्र तद्धि परीक्ष्यते ॥
सम्मत्या कल्पसूत्राणां ब्राह्मणानां च सङ्ग्रहात् ॥१०॥''—इति ।

अथर्वसंहिताभाष्यं यदा प्रणीतम्, तदा राजपरिवर्त्तने गम्यमानेऽपि अमात्यपरिवर्त्तनस्य मानं न प्रतीयते; अत्र तु 'ये पूर्वोत्तरमीमांसे'—इतिश्लोकस्यादर्शनात् अमात्यपरिवर्त्तनञ्चैतर्ह्यभवदित्यपि प्रतीयत एव। अत एव ज्ञायतेऽस्याथर्वसंहिताभाष्योत्तरजत्वम्, यज्ञतन्त्रसुधानिधेश्चतुर्दशश्लोकाच्चावगम्यते यज्ञतन्त्रतः पूर्वजत्वमपि ।

यज्ञतन्त्रसुधानिध्युपक्रमाष्टमश्लोकपाठादवगम्यन्ते चेमानि त्रीणि सत्यानि — सायणाचार्यो माधवाचार्यस्य कनिष्ठ इति, यज्ञतन्त्रसुधानिधिप्रणयनप्रस्तावात् पूर्वमेव स दिवं गत इति, सर्वकनिष्ठस्य भोगनाथस्य देहावसानकालस्तु तदा बहुतिथो व्यतीत इति च। सोऽयं श्लोकः—

'उपेन्द्रस्येव तस्यासीदिन्द्रः सुमनसां प्रियः ।
महाक्रतूनामाहर्त्ता माधवार्यः सहोदरः ॥ ८ ॥''—इति ।

अत्र माधवस्येन्द्रसादृश्यात्सायणज्येष्ठत्वम्, आसीदित्यतीतनिर्देशाद्दिगतदेहत्वञ्च भोगनाथस्योल्लेखाभावात्तद्दूपूर्वस्तत्वमपीति ।

किं चैतत्तृतीयश्लोकपरार्द्धाद्यालोचनात् सायणाचार्यस्य हरिहरराजामात्यत्वकाले एवायं यज्ञतन्त्रसुधानिधिः प्रादुर्भूत इत्यवगम्यते स्फुटम्। तथा च ते इमे श्लोकाः—

"वंशे चान्द्रमसे तदन्वयनिधिः श्रीसङ्गमोऽभूत्,
तस्मात् प्रादुरभूदभीष्टसुरभिः श्रीबुक्कपृथ्वीपतिः ॥ ३ ॥
हरिहरनिभभूमा कामदोग्धा जगत्याम्,
हरिहरनरपालस्तस्य चाभूत्तनूजः।
परिणमति धरित्री यन्नृपस्यास्य कीर्त्तिम्,
प्र × × नपरिणाहैर्व्यक्त माद्यद्दिनश्रीः ॥ ४ ॥

* * *

तस्याभूदन्वयगुरुः सत्यसिद्धान्तदेशतः।
सर्वज्ञः सायणाचार्यो मायनार्यतनूद्भवः ॥ ७ ॥"—इति।

एतदीयचतुर्थश्लोकद्वितीयचरणे 'चाभूत्तनूजः'—इत्यस्य स्थाने 'चाभूत् कनिष्ठः'—इति पाठं स्वीकृत्यैव मया निरुक्तालोचने हरिहरस्य बुक्कानुजत्वं वर्णितम् (पृ० ३) । ततोऽथर्वभाष्योपक्रमश्लोकदर्शनात् (१४१ पृ०) शतपथभाष्योपक्रमश्लोकदर्शनाच्च (१४२ पृ०) तादृशोक्तेर्भ्रमजन्यत्वं स्वभावसंपातित्वञ्चावगत्यानुतप्यतेऽपि। निरुक्तालोचनादुत्तरत्र प्रकाशिते एकस्मिन् भारतेतिहासग्रन्थे तु द्वौ हरिहरौ स्वीकृतौ दृश्येते; तत्रैको बुक्कानुजोऽपरस्तु बुक्काङ्गजः। तत्रैकस्याथर्वसंहिताभाष्योपक्रमश्लोको वीजं स्यादपरस्य निरुक्तालोचनप्रकाशितं मदुक्तमिति सम्भाव्यते। तत्र हरिहर आसीदेको बुक्कानुजोऽपीति मतं तु निर्वीजमेवेत्यस्माकम्। एवं 'चाभूत्तनूजः'—इत्यस्य स्थाने 'भूणुस्तनूजः'—इतिपाठोऽप्यसाधुरेव; एवमादिषु शीलार्थण्णुप्रत्ययस्यानुपयोगात् ॥

अथायं सायणाचार्यो हरिहरपितामहस्य (बुक्कपितुः) सङ्गमस्य भूपते रमात्यत्व मप्येकदा गत मित्यप्यवगच्छामः। तथाहि तत्कृत-धातुवृत्त्युपक्रमे—

"अस्ति श्रीसङ्गमक्ष्मापः पृथ्वीतलपुरन्दरः।

× × ×

तस्य मन्त्रिशिखारत्न मस्ति मायनसायणः।

यः ख्यातिं रत्नगर्भेति यथार्थयति पार्थिवीम्।

\+ + +

तेन मायनपुत्रेण सायणेन मनीषिणा।

आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते॥"–इति।

अत्र तदानी मेतज्ज्येष्ठसोदरो माधवाचार्यः केनचित् पीडादिनो-पहत आसीदिति तत्प्रतिनिधितयैवाय मासवान् तद्धरिहरराजा-मात्यत्व मिति सम्भाव्यते, सम्भाव्यते च ज्येष्ठे भ्रातरि भक्त्यतिश-यात् तत्प्रतिनिधित्वेन कृतत्वाद्वा तदा तद्ग्रन्थस्य नामकरणं माधवीयेति।

यत्तु केनचिदिह मायनसायण इतिपदस्य सायणवंशीयो मायन इति व्याख्यान मकारि, न तद्रोचते ऽस्माकम्; सत्येवं विशेषणीभूतस्य सायणस्यैव हि प्राक्प्रयोगः स्यात्, तथाच सायणमाधव इत्येव पाठः समुपलभ्येत। तस्मादिह मायनपुत्रः सायण इत्येव तत्पदव्याख्यानं युज्यते; व्यक्तञ्च तदनुपदं 'मायन-पुत्रेण सायणेन'–इति।

तदित्थं सर्वदर्शनसङ्ग्रहकारो माधवः, सायणज्येष्ठो माधवस्वा-मित इति मत मपि स्याच्छिन्नमूलम्। वस्तुतस्तन्मतं तु भ्रम-विजृम्भित मेव; तत्र 'वागीशाद्याः सुमनसः'–इतिसायण-

माधवीयस्य सर्वग्रन्थमङ्गलाचरणस्यादर्शनात्, शार्ङ्गपाणितनयस्य विष्णोर्गुरुत्वोल्लेखाच्च । सायणमाधवीयसर्वग्रन्थानां हि आदौ वागीशाद्या इति मङ्गलाचरणश्लोको विद्यत एव, मायनपुत्रो माधवः खलु भारतीतीर्थस्यैव शिष्य इत्यत्र च न सम्भवेन्नातान्तरता । किञ्चैतदीयग्रन्थोपक्रमेषु सर्वत्रैव राजनामोल्लेखश्च दृश्यते, नात्र तथा; तद् ब्रूत तथावादिनः कस्यामात्यत्वकाले एष रचितस्तेन,— सङ्गमस्य, बुक्कणस्य, हरिहरस्य वेति । मायनपुत्रस्य माधवस्य ग्रन्थानां पुष्पिकास्वपि राजनामोल्लेखो दृश्यते सर्वत्र । तद्यथा—'इति श्रीमन्महाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-श्रीबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवाचार्यस्य कृतौ पराशर-स्मृतिव्याख्यायां आचारमाधवः समाप्तः'—इति । अपि ग्रन्थोपक्रमे आनन्तर्योल्लेखोऽपि तत्र बहुनियमः । तद्यथा—'स्मार्तं व्याख्याय सर्वार्थं द्विजार्थं श्रौत उच्यते'—इति ( १२८ पृ० ) । इत्थं ग्रन्थानां पौर्वापर्यं ज्ञायते । यदि नाम सर्वदर्शनसङ्ग्रहोऽपि एतेनैव प्रणीतः स्यात्, तर्हि नूनमस्य कालोऽपि निर्णीतः स्यात्तेनैव ग्रन्थकर्त्रा,— आचारमाधवादिप्रणयनादनन्तरम्, उत न्याय-मालयोः प्रणयनात्, सर्ववेदभाष्याणां प्रणयनाद् वेति । वस्तुतोऽत्र नामैक्यमेवैवं भ्रमविजृम्भितत्वे निदानम् । सर्वदर्शनसंग्रह-कारस्तु माधवो सायनकुलजोऽपि न तु माधववंशीयः, अपि तु सायणवंशीयस्तस्माद् बहुपरजश्च ; अत एवोक्तं तदुपक्रमे—

"श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।

क्रियते माधवार्येण सर्वदर्शनसङ्ग्रहः ॥"-इति ।

एवं निर्वचनानुक्रमणीकारो माधवोऽप्यन्यः, सामवेदीयसंहिता-विवरणकारो माधवोऽप्यन्यः, स्कान्दपुराणीयब्रह्मगीतायास्ता-

त्वर्थदीपिकानामटीकायाः प्रणेता माधवोऽप्यन्यः, नारायणोपनिषद्भाष्यकारो माधवश्च भिन्न एवेति । अथ सन्ति चानयोर्माधवसायणयोः कृता इति प्रसिद्धाः पुरश्चर्याकौमुदी–दत्तकमीमांसा–कर्मविपाक–पुराणसार–सूतसंहिताव्याख्यानादयोऽपि ग्रन्थास्ते चैवं परीक्षणीया एवेति दिक् ॥

अथास्य माधवस्य सायणस्य वा महामहोपाध्याय इति वर्णनमिदानीं यत्र क्वचिद् दृश्यते, तन्नूनं कस्यचिद् दृढवाङ्गस्य कस्मैचित् प्राड्विपाकाय 'नगरपालस्त्वं भूयाः'–इत्याशीःप्रदानप्रवादतुल्यं पदमर्यादाज्ञानमूलकम्; न ह्याचार्यपदमादधानाः केऽपि उपाध्यायेतिप्रसिद्धिं वाञ्छेयुर्नापि महच्छब्दयोगादुपाध्यायशब्दः स्वार्थं वृत्तिं प्रजहाति, न हि श्लीपदी गलगण्डी वा देवदत्त उच्यते तदन्य इति । तदिमे शङ्कर–रामानुज–भास्कर–माधव–सायणादयो वेदाध्यापकाः खल्वाचार्या एव प्रसिद्धाः, न तु वेदाध्ययनाध्यापनशून्यानां शूलपाणिवाचस्पतिमिश्ररघुनन्दनादीनामिवोपाध्याया इत्यत्र मिह वागाडम्बरेणेति शम् ॥

त्रयीचतुष्टयस्याद्यस्त्रयीपरिचयोऽंशकः ।
तिथिविद्यामिते शाके त्रयीबोधाय वर्णितः ॥ १ ॥

इति श्रीमदावसथभट्टाचार्यान्वयेन सामश्रमीतिलब्धोपनाम-
सामगेन श्रीसत्यव्रतशर्मणा प्रणीयमाने त्रयीचतुष्टये
त्रयीपरिचयाभिधः प्रथमो भागः समाप्तः ॥

---

# ॥ त्रयीटीका ॥

( त्रयी चतुष्टय-तृतीयभागः )

"उपयामि होइ। आदित्यं प्राश्चं वल सुमद्यामि होइ ।०—०। दैवा महे हाउ। धियं धारयिष्यते" [ सा० आर० आ० ६. २. २. १. १ ]

१८१६ शकाब्दे

आवसथ्यौपासनव्रतसामश्रमिभट्टाचार्येण प्रणीतः।

कलकत्ता—सत्ययन्त्रतः

( १६—१, पोपिन् लेन )

श्रीहितव्रतचट्टोपाध्यायेन मुद्रयित्वा ग्रन्थकर्त्रा प्रकाशितः।

॥ शाकाः १८१८। संवत् १९५३। खी० १८९७ ॥

## ॥ सत्यसाम ॥

सत्य ऋषिः, गायत्रीच्छन्दः, परमात्मा देवता ।

३ १ २ ३ १ २क ३ १ २र ३ १ २
तस्मै दाधार भाव्यम् पश्यन् धर्म्माणि सूरः ।

३ २उ १ ३ २ १ २
ऋतं नि घ्नन् प्र मा मृड ॥ १ ॥

हुँ३म् (हिं) । तस्मैदाधारभाविर्योम् (प्र) । ओ३म् (आ) । पाश्यन्धर्म्माणि सूरा२ः । ऋतन्निघ्नन्प्रमा १२१२ (उत्) । हुम् । आ२ (प्रति) । माडौ (उप) । आ३४५ ( नि ) ॥ १ ॥

---

# ॥ त्रयीटीकासूचीपत्रम् ॥

## ॥ परिच्छेदसूची ॥



## ॥ विषयसूची ॥

---

## ॥ सङ्केताक्षरसूची ॥

| | |
|---|---|
| अ० | अध्यायः |
| अ० कौ० | अलङ्कारकौस्तुभः |
| अ० त० | अक्षरतन्त्रम् |
| अथ० स० | अथर्ववेदसंहिता |
| अधि० | अधिकरणम् |
| अधि० मा० | अधिकरणमाला |
| अने० | अनेकार्थसङ्ग्रहः |
| अम० को० | अमरकोषः |
| आ० | आदिभक्तिः |
| आप० | आपस्तम्बीयम् |
| आ० ब्रा० | आर्षेयं ब्राह्मणम् |
| आर० आ० | आरण्यकार्चिकः |
| आर० गा० | आरण्यकगानम् |
| आश्व० | आश्वलायनीयम् |
| उ० आ० | उत्तरार्चिकः |
| उणा० | उणादिः |
| उत्० | उद्गीथभक्तिः |
| उप० | उपद्रवभक्तिः |
| ऊह० | ऊहगानम् |
| ऊह्य० | ऊह्यगानम् |
| ऋ० नै० | ऋषिनैगेयः |
| ऋ० प्राति० | ऋक्प्रातिशाख्यम् |
| ऋ० सं० | ऋक्संहिता |
| ऐ० आ० | ऐतरेयारण्यकम् |
| ऐ० उप० | ऐतरेयोपनिषत् |
| ऐ० ब्रा० | ऐतरेयब्राह्मणम् |
| क० सू० | कणादसूत्रम् |
| कठ० उप० | कठोपनिषत् |
| कात्या० | कात्यायनीयम् |
| के० | केशवसूत्रम् |
| कौ० | कौशिकसूत्रम् |
| कौषी० उप० | कौषीतक्युपनिषत् |
| ख० | खण्डः |
| गृ० | गृह्यसूत्रम् |

| | |
|---|---|
| गे० गा० | गेयगानम् |
| गो० | गोभिलीयम् |
| गो० ब्रा० | गोपथब्राह्मणम् |
| गौ० सू० | गौतमधर्मसूत्रम् |
| गौ० सू० | गौतमन्यायसूत्रम् |
| चु० उ० | चुलिकोपनिषत् |
| छ० आ० | छन्द आर्चिकः |
| छ० आर० | छन्दोगारण्यकम् |
| छ० नै० | छन्दोनैगेयः |
| छान्दो० उप० | छान्दोग्योपनिषत् |
| जै० सू० | जैमिनीयं सूत्रम् |
| टी० | टीका |
| ता० ब्रा० | ताण्ड्यब्राह्मणम् |
| तै० आ० | तैत्तिरीयारण्यकम् |
| तै० उप० | तैत्तिरीयोपनिषत् |
| तै० ब्रा० | तैत्तिरीयब्राह्मणम् |
| तै० सं० | तैत्तिरीयसंहिता |
| दुर्ग० | दुर्गाचार्यः (नि० टी०) |
| दौ० वृ० | दौर्गी वृत्तिः |
| दै० नै० | दैवतनैगेयः |
| द्र० | द्रष्टव्यम् |
| धा० पा० | धातुपाठः |
| ना० शि० | नारदीया शिक्षा |
| नि० | निधनभक्तिः |
| नि० वृ० | निरुक्तवृत्तिः |
| निघ० | निघण्टुः |
| निरु०, नैरु० | निरुक्तम् |
| निदा० सू० | निदानसूत्रम् |
| नृ० पू० | नृसिंहपूर्वतापनी |
| न्या० मा० | न्यायमालाविस्तरः |
| प० सू० | पञ्चविधसूत्रम् |
| पा० | पादः (अध्यायस्य) |
| पा० वा० | पाणिनिवार्त्तिकम् |
| पा० शि० | पाणिनिशिक्षा |
| पा० सू० | पाणिनिसूत्रम् |
| पार्ष० | पार्षदसूत्रम् |
| पि० सू० | पिङ्गलसूत्रम् |
| पू० | पूर्वभागः |
| पृ०, पं० | पृष्ठा, पङ्क्तिः |
| प्र० | प्रपाठकः |
| प्र० | प्रस्तावभक्तिः |
| प्र० उप० | प्रश्नोपनिषत् |
| प्रति० | प्रतिहारभक्तिः |
| प्रा० वि० | प्रायश्चित्तविवेकः |
| बृह० उ० | बृहदारण्यकोपनिषत् |
| ब्र० वै० पु० | ब्रह्मवैवर्त्तपुराणम् |
| ब्र० सू० | ब्रह्मसूत्रम् |
| भग० गी० | भगवद्गीता |
| भा० | भाष्यम् |
| भा० पु० | भागवतपुराणम् |

| | | | |
|---|---|---|---|
| भू० | भूमिका | वे० सू० | वेदान्तसूत्रम् |
| म० | मण्डलम् | शत० ब्रा० | शतपथब्राह्मणम् |
| म० ब्रा० | मन्त्रब्राह्मणम् | श० स्वा० | शवरस्वामी |
| म० सं० | मनुसंहिता | शा० भा० | शाङ्करभाष्यम् |
| महा० भा० | महाभारतम् | शौ० | शौनकीयः |
| मार्कं० पु० | मार्कण्डेयपुराणम् | श्लो० | श्लोकः |
| मिता० | मिताक्षरा (या० टी०) | श्रौ० | श्रौतसूत्रम् |
| मु० उप० | मुण्डकोपनिषत् | श्वेता० उ० | श्वेताश्वतरोपनिषत् |
| मेदि० | मेदिनीकोषः | ष० ब्रा० | षड्विंशब्राह्मणम् |
| मी० सू० | मीमांसासूत्रम् | सा० | सामवेदीयम् |
| मी०न्या० | मीमांसान्यायमाला | सा० त० | सामतन्त्रम् |
| य० | यजुर्वेदः | साङ्खा० | साङ्खायनीयम् |
| य० गा० | यज्ञगाथा | सा० भा० | सायणीयभाष्यम् |
| य० प० | यज्ञपरिभाषा | सा० वि० | सामविधानब्राह्मणम् |
| या० सं | याज्ञवल्क्यसंहिता | सा० सू० | सामसूत्रम् |
| रघु० | रघुवंशं काव्यम् | सि० कौ० | सिद्धान्तकौमुदी |
| रामा० | रामायणं (वाल्मीकीयं) | सुश्रु० | सुश्रुतः |
| रौद्रदत्तो | आप० श्रौ० टी० | सू० | सूत्रम् |
| लाट्या० सू० | लाट्यायनसूत्रम् | सू० भा० | सूत्रभाष्यम् |
| वायु० पु० | वायुपुराणम् | स्तो० प० | स्तोभपदपाठः |
| वा० सं | वाजसनेयसंहिता | हरि० | हरिवंशः |
| वा० सं० उ० | वा०-सं०-उपनिषत् | हिं० | हिङ्कारः |
| विश्व० | विश्वकोषः | हे० | हेमचन्द्रीयः |
| वे० सा० | वेदान्तसारः | ०—० | ग्रन्थांशत्यागः |

———

॥ अथ ॥

# ॥ त्रयीटीका ॥

## ॥ यजुरारण्यकस्य ॥

विश्वरूपं प्रणम्यादौ नन्दरामं च छान्दसम् ।
त्रयीचतुष्टये रम्ये त्रयीविद्याप्रचारणे ।
त्रयीपरिचयं कृत्वा त्रयीसंग्रह माकरोत् ।
करोत्यद्य त्रयीटीकां श्रीसत्यव्रतसामगः ॥

अथ त्रयीसङ्ग्रहं व्याख्यास्यामः। तत्र त्रयीपदव्याख्या तु त्रयीपरिचये अभिहिता; ततो 'वेदम्'-इति पदं वर्त्तते (१पृ०६पं०), वेदशब्दोऽपि व्याख्यातस्तत्रैव तदनन्तरम्; इह तु विविच्यते कदा प्रभृति ग्रन्थपरो वेदशब्दः प्रचलित इति। तत्र वयं पश्यामः,— संहिताकालत एव वेदशब्दः प्रसिद्धः; तत्र च पुरा मन्त्रमात्रार्थं एवासीत्, ततो मन्त्रब्राह्मणोभयपरः सम्पन्नः, विद्यापरपर्यायश्च सदैवेति। तदत्र कानिचिन्निदर्शनानि दर्शयामः — यो वेदेन ददाश मर्त्तो अग्नये ऋ०सं० ८, १९, ५। वेदेन रूपे व्यपिबत् सुतासुतौ प्रजापतिः वा० स० १९, ७८। ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः। देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिना। अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः। जह्नूनां चाधिपत्ये दैवे वेदे च गाथिनाम् ऐ० ब्रा०

७, ३, ६ ; ४, ३५, ६ ; ५, ५, ७ ; ६, ३, ७। वेदं विद्वांस मभितो वदन्ति अथ० सं० १०, ८, १७ ; १५, ३, ७ ; ७, ५४, २। शत० ब्रा० ५, ५, ५, १० ; ११, ३, ३, ७ ; १२, ३, ४, ११ ; १४, ४, ३, ६ ; ९, २, ४ ; १३, ४, ३, ३। आश्व० गृ० १, १५, ३ ; ३, ४, १ ; ११, १। आश्व० श्रौ० १०, ७। निरु० पुरुषविद्यानित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे १, १२ ; स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् १,६, २ ; साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्त्सम्प्रादुरुपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च १, ६, ५। भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यं मुवास। तऽ ह जीर्णिऽ स्थविरऽ शयानम् इन्द्र उपव्रज्योवाच। भरद्वाज यत्ते चतुर्थ मायुर्दद्याम्, किं मेतेन कुर्या इति। ब्रह्मचर्यं मेवैतेन चरेय मिति होवाच। तऽ ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषाऽ हैकैकस्मान्मुष्टि माददे। स होवाच भरद्वाजेत्यामन्त्र्य। वेदा वा एते, अनन्ता वै वेदाः, एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्त मेव। एहीमं विद्धि, अयं वै सर्वविद्येति तै०ब्रा०३,१०,११,३ ; ४। म०सं०२अ० वेदोऽखिलो धर्ममूलम् ६, सर्वोऽभिहितो वेदे ७, श्रुतिस्तु वेदो विज्ञेयः १० ; पुनस्तत्रैव तत उत्तरम्—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ १६५,
वेद मेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः पर मिहोच्यते ॥ १६६,

आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥१६७,
योऽनधीत्य द्विजो वेद मन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्व माशु गच्छति सान्वयः ॥ १६८ ;
५ अ० अनभ्यासेन वेदाना माचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥ ४ ;
११अ० जपन् वान्यतमं वेदं योजनानां शतं व्रजेत् ।
ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः ॥ ७५,
सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत् ।
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ॥ ७६,
हविष्यभुग्वानुसरेत् प्रतिस्रोतः सरस्वतीम् ।
जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम् ॥ ७७ ;
ततः— शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः ।
संवत्सरं यवाहारस्तत्पाप मपसेधति ॥ १९८ ;
किञ्च— हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः ।
ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किञ्चन ॥ २६१,
ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ।
साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥ २६२,
यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं विनश्यति ।
तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥ २६३,
ऋचो यजूंषि चान्यानि सामानि विविधानि च ।
एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥ २६४ ।
रामा० १,४,६— स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः ॥

१पृ० ६पं० अनूच्येति। अनुवचनं वेदाध्यापनम्, तदनन्तरम्। 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्यो गृहस्थाश्रम मावसेत् (मनु० सं० ३, २)'-इत्यस्य 'ब्रह्मचारी वेद मधीत्योपन्याहृत्य गुरवेऽनुज्ञातो दारान् कुर्वीत (गो० गृ० ३, ४, १)'-इत्येवमादीनाञ्च वचनानां पर्यालोचनया त्ववगम्यते वेदाध्ययनात् परमेव दारग्रहणं विहित मिति। अधीतवेदवेदाङ्ग एवोच्यते ऽनूचानः। तथाह्यमरः—'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः'-इति २, ७, १०। तदेवम् अनूचानः सन् दारग्रहणाय समावर्त्तने यदा प्रवर्त्तते ऽन्तेवासी, तदैवेत्यर्थः। 'द्वादश वर्षाण्येकवेदे ब्रह्मचर्यं चरेत्। प्रतिद्वादश वा सर्वेषु। ग्रहणान्तं वा। विद्यान्ते गुरुरर्थेन निमन्त्र्यः। कृत्वानुज्ञातस्य वा स्नानम्' गौत० सू० २, ४५—४८।

१—६— आचार्य इति। अथ० सं०— आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भ मन्तः ११,५,३ ; १७। निरु०—आचार्य आचारं ग्राहयति, आचिनोत्यर्थान्, आचिनोति बुद्धि मिति वा १,२,२। मनु० सं०—

२ अ० उपनीय तु यः शिष्यं वेद मध्यापयेद् द्विजः।
सकल्पं सरहस्यं च त माचार्यं प्रचक्षते ॥ १४०

ततः—य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ।
स माता स पिता ज्ञेयस्तन्न द्रुह्येत् कदाचन ॥ १४४,
उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता।
सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते ॥ १४५,
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥ १४६,

कामान्माता पिता चैनं यदुत्पादयतो मिथः ।
सम्भूतिं तस्य तां विद्याद् यद् योनावभिजायते ॥ १४७,
आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः ।
उत्पादयति साविव्या सा जात्या साजरामरा ॥ १४८ ;
अपिच— मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ १६९,
तत्र यद् ब्रह्मजन्मास्य मौञ्जीबन्धनचिह्नितम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ १७० ;
पुनः— वेदप्रदानादाचार्यं पितरं परिचक्षते ।
न ह्यस्मिन् युज्यते कर्म किञ्चिदा मौञ्जिबन्धनात् ॥ १७१;
किञ्च— आचार्यो ब्रह्मणो मूर्त्तिः, पिता मूर्त्तिः प्रजापतेः ।
माता पृथिव्या मूर्त्तिस्तु, भ्राता स्वो मूर्त्तिरात्मनः ॥२२५,
आचार्यश्च पिता चैव माता भ्राता च पूर्वजः ।
नार्त्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ २२६ ;
४अ० आचार्यो ब्रह्मलोकेशः, प्राजापत्ये पिता प्रभुः ।
अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः ॥ १८२ ।
याज्ञ०सं०— स गुरुर्यः क्रियाः कृत्वा वेद मस्मै प्रयच्छति ।
उपनीय ददद्वेद माचार्यः स उदाहृतः ॥ १, ३४ ।

अथ छान्दो० उप०— आचार्यवान् पुरुषो वेद ६,१४,२ । बृह० उप०४,१,२ । नीलकण्ठधृता स्मृतिश्चेयम्— आचार्यात् पाद मादत्ते पादं शिष्यः स्वमेधया । कालेन पाद मादत्ते पादं सब्रह्मचारिभिः ।

१— ६— अन्तेवासिनमिति । छात्रान्तेवासिनौ शिष्ये अम० को० २, ७, ११ । शत० ब्रा० ५,१,५,१७ ; १४,९,३,१५ —२० । छान्दो० उप० ३,११,५ । कात्या० श्रौ० १४,३,१९ ।

अन्ते समीपे वसति वेदग्रहणायेति वसेर्णिनिः सप्तम्या अलुक् च। 'आचार्योपसर्जनश्चान्तेवासी'-इति पाणिनिः ६,२,२६।

१— ६— अनुशास्तीति। 'लिङर्थे लेट् ( पा० ३,४,७ )'-इति विहितस्य लेटो रूपम्, तथा च अनुशिष्यादिति विधिः सम्पद्यते ; यथा मीमांसकानां जुहोतीत्यस्यार्थो जुहुयादिति।

१— ८— प्राग् ब्रह्मविज्ञानादिति। सञ्जाते ब्रह्मविज्ञाने निरर्थकः कर्मोपदेश इति भावः।

१— ८— श्रौतकर्माणीति। कल्पो नाम वेदाङ्गविशेषः। स च श्रौतगृह्यसामयिकाचारेतिभेदात् त्रिविधः, प्रतिमूलशाख-मेकैकश्च। तत्र, श्रौतसूत्रनामकल्पविहितानि एकाहाहीनसत्रा-त्मकानि अग्न्याधेयादीनि श्रौतकर्माणीत्युच्यन्ते, वैतानिकानि च ; गृह्यसूत्रनामकल्पविहितानि ब्रह्मयज्ञादीनि, विवा-हादिसंस्कारादीनि च गृह्यकर्माणीत्युच्यन्ते, स्मार्तानि च ; सामयाचारिकसूत्रनामकल्पविहितानि वर्णधर्माणि आश्रमधर्मा-दीनि च सामयाचारिकाणि, स्मार्तानि चाख्यायन्ते। सामया-चारिकसूत्राण्येव हि धर्मसूत्राणीति प्रसिद्धानि।

१— ६— पुरुषसंस्कारत्वात्। श्रौतगृह्यस्मार्तानि यज्ञ-विवाहादीनि सर्वाण्येव पुरुषस्य संस्कारायैव विहितानि। अत-एव गौतमधर्मसूत्रे श्रौत-गृह्य-यज्ञाना मपि संस्कारेष्वेव परि-गणनम्। प्रदर्शयिष्यामश्च तदुपरिष्टादिहैव 'धर्मज्वर (३—१—)' -इत्यस्य व्याख्यानावसरे। गोभिलसूत्रादौ निष्क्रमणं नाम चैक मपर मप्यस्तोकं संस्कारकर्म। तदपि पुरुषस्यैवोप-युज्यते। हिरण्यकेशिसूत्रादौ विहित मन्त्येष्टि नाम संस्कारकर्म तु मृतशरीरस्येति न पुरुषस्य।

१—१८—विद्योतपत्त्यर्थानीति । तदेवं शाङ्करमतेऽपि कर्मणां नानर्थक्य मपि त्वनुष्ठेयत्व मेव ।

१—१९—अविद्ययेति । इह शाङ्करमते विद्या ज्ञानम् ; तच्चेह देवताविषयकं ग्राह्यम् ; अविद्या अज्ञानम्, तच्च तज्जन्यं कर्मैव लक्ष्यम् । तथाहि तद्भाष्यम्—"'अविद्यया' कर्मणा अग्निहोत्रादिना 'मृत्यु' स्वाभाविकम् । कर्मज्ञानं च मृत्युशब्दवाच्यम् । उभयं 'तीर्त्वा' अतिक्रम्य, 'विद्यया' देवताज्ञानेन 'अमृत' देवतात्मभावम् 'अश्नुते' प्राप्नोति । तद्ध्यमृत मुच्यते यद् देवतात्मगमनम्"–इति । अस्मन्मते तु विद्या ज्ञानम् ; तच्च इह आत्ममनःसंयोगजं ध्यान मेव लक्ष्यम् । तद्धि आध्यात्मिक माधिदैविक मधियज्ञ मिति त्रिविधं श्रुतिविहितम् । तेनैव अमृतम्, अमृततुल्य मुपादेयं फलं लभते मनुष्यः । तच्चामृत मपि आत्मज्ञान-देवविज्ञान-यज्ञफलञ्च इति यथायथं त्रिविध मेव । अविद्या अज्ञानम् ; तच्च इह आत्मेन्द्रियव्यापारजं कर्मैव लक्ष्यम् । तदपि योगशास्त्रगम्यं नेतिधौतीत्यादिकम्, चक्रशास्त्रगम्यं व्यायामादिकम्, वैद्यशास्त्रगम्यं कुटीप्रवेशादि चेति त्रिविधम् । तेनैव मृत्युं तरति मनुष्यः ; शरीरदार्ढ्यं लभत इति यावत् । अतः शरीरदार्ढ्याय कर्मयोगः प्रयोजनीयः ; आत्मज्ञानादिलाभाय ध्यानयोगश्चापेक्षितः । अस्ति चैतयोः परस्परापेक्षत्व मित्येव समुच्चय इष्टः । तत्र श्रुतौ विहितश्च स एव । वा॰ सं॰ उप॰—अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।

ततो भूय इव ते तमो य उ विद्यायाᳫं रताः ॥ ९,

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।

इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १०,

विद्याञ्चाविद्याञ्च यस्तद् वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृत मश्नुते ॥ ११ ॥

२—१— पूर्वेनेति । इहैव तैत्तिरीयशाखीयाऽऽरण्यके ।

२—१५ — सत्यमिति । सते हितं सत्यम् । श्रद्धा सत्यं तदित्युत्तमं मिथुनम्; श्रद्धया सत्येन मिथुनेन स्वर्गांल्लोकान् जयन्ति ऐ० ब्रा० ७, २, ८ । प्रजापतिर्वाचः सत्य मपश्यत् तै० ब्रा० १, १, ५, १; ८, २, ३; ४ । विदुषा सत्य मेव वदितव्यम् ऐ० ब्रा० ५, २, ८ । सत्यं बृहदृत मुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति अथ० सं० १२, १, १ । इद मह मनृतात् सत्य मुपैमि वा० सं० १, ५ । सत्यं वदति शत० ब्रा० १, २, २, १८; सत्यं वै चक्षुः १, ३, १, २७ । ब्रह्मवादिनो वदन्ति तस्मात् सत्यात् अस्मिन् लोके बहवः कामा इति तै० ब्रा० ३, ८, ३, २; ३ । अथ मनुसंहितायाम्—

२अ०— मौनात् सत्यं विशिष्यते ८३;

८अ० समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिद्ध्यति ।
तत्र सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते ॥ ७४,
साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्य्यसंसदि ।
अवाङ् नरक मभ्येति प्रेत्य स्वर्गाच्च हीयते ॥ ७५,
यत्रानिबद्धोपीक्षेत शृणुयाद्वापि किञ्चन ।
पृष्टस्तत्रापि तद् ब्रूयाद् यथादृष्टं यथाश्रुतम् ॥ ७६;

किञ्च— सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान् ।
इह चानुत्तमां कीर्त्तिं वागेषा ब्रह्मपूजिता ॥ ८१,
साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् ।
विवशः शत माजातीस्तस्मात् साक्ष्यं वदेदृतम् ॥ ८२;

अपिच—ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ८८ ;
अन्यच्च—असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः ।
न विन्दंस्तत्त्वतः सत्यं शपथेनापि लम्भयेत् ॥ १०९,
एवम्—यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥ २१९ ;
'सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते'-इति भाग० ८,१९,३९ ।
'अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति, ता अस्य दक्षिणाः'-इति छा० उ० ३, १७, ४ । अथ० सं० ४, १६—
'ये ते पाशा वरुण सप्तसप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः ।
सिनन्तु सर्वे अनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु ॥'-इति ।
तथा—'अग्नौ ह सत्यवादिन उत्तमे लोक आ दधत्' १२,४,११ ।
ऐ० ब्रा०—'अथो खल्वाहुः कोऽर्हति मनुष्यः सर्वं सत्यं वदितुं सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति विचक्षणवतीं वाचं वदेच्चक्षुर्वै विचक्षणं वि ह्येनेन पश्यतीत्येतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुस्तस्मादाचक्षाणमाहुरद्रागिति स यद्यदर्शमित्याहाथास्य श्रद्दधति यद्यु वै स्वयं पश्यति न बहूनाञ्चनान्येषां श्रद्दधाति तस्माद्विचक्षणवतीमेव वाचं वदेत्सत्योत्तरा हैवास्य वागुदिता भवति'—इति १, १, ६ । 'सत्यं परं, परꣳ सत्यꣳ, सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन, सताꣳ हि सत्यं, तस्मात् सत्ये रमन्ते'-इति तै० आ० १०,६२,१ ; 'सत्येन वायुरावाति, सत्येनादित्यो रोचते दिवि, सत्यं वाचः प्रतिष्ठा, सत्ये सर्वं प्रतिष्ठितं, तस्मात् सत्यं परमं वदन्ति'-इति च ६३,२ । 'सा मा सत्योक्तिः परि पातु विश्वतः'-इति ऋ० सं० १०, ३७, २ ॥

२—८—सरहस्यमिति। 'रहस्य मुपनिषद्'-इति मेधातिथि-कुल्लूकभट्टौ (म० सं० २, १४० ; १०६५) 'रहस्यानि सामान्या-रण्यकाधीतानि'-इति चाह मेधातिथिः (म० सं० ११,२६२)। अस्मन्मते न केवल मुपनिषद एव रहस्यपदवाच्याः, अपि तु रहसि एकान्ते मनःस्थैर्ययोग्यस्थाने उपदेश्यं यत् किञ्चित्, तत् सर्व-मेवेह रहस्यपदवाच्यं भवेत्। तथाच उपनिषत्, आरण्यकः, सामवेदीयौ द्वितीयचतुर्थगानग्रन्थौ चेति सर्वाण्येव रहस्यानि ; एषु सर्वेष्वेव तथैवाभियुक्तव्यवहारदर्शनञ्च। तथाहि। सायणीय-यज्ञतन्त्रसुधानिधौ उद्गातृप्रयोगे प्रातःसवने 'मनो हिङ्कार इति रहस्यब्राह्मणम्'—इति। मनो हिङ्कार इत्यादि तु छान्दोग्यो-पनिषद्येव (२, ११)। श्रूयते च सामविधानब्राह्मणे 'रहस्य उदुत्तमं वरुण पाशमिति'-इति (२,१,२)। स चोदुत्तमं वरुण पाश मिति मन्त्रः सामारण्यके एवाम्नातः (१,४) ; न च तस्या-रण्यकग्रन्थस्योपनिषदिति व्यपदेशो दृश्यते क्वापि। तथा प्रोक्त मेतत् पुष्पसूत्रे—'ह्रस्वे द्वितीये सन्धितरे चोति'-इति। 'ह्रस्वे' रहस्ये ऊह्याख्ये चतुर्थे गाने इत्येव तदर्थः ; ऊहोह्ययोर्विधा-नायैव पुष्पसूत्ररचनारम्भादिति ॥

२—१—धर्म्मञ्चरेति। 'यतो ऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः'-इति काणादाः १,२। 'चोदनालक्षणो ऽर्थो धर्म्मः'-इति जैमिनिः १,२। 'वेदो धर्म्ममूलम्। तद्विदां च स्मृतिशीले'-इति गौतमसूत्रे १,१;२। मनुस०—वेदः स्मृतिः सदाचारः स्वस्य च प्रिय मात्मनः।

एतच्चतुर्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम् ॥ २, १२।

विश्वामित्रः—'य मार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः।

स धर्मो, यं विगर्हन्ति त मधर्म्मं प्रचक्षते'-इति।

स्मृतः—'प्रवृत्तञ्च निवृत्तं च द्विविधं कर्म वैदिकम् ।
प्रवृत्तसंज्ञको धर्म्मो गुणतस्त्रिविधो भवेत्'—इत्यादि ।

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः'—इति ऋ० सं० १, १६४, ५० । 'प्रतिरसि धर्म्माय त्वा धर्म्मं जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एव यज्ञं प्राह'—इति तै० सं० ३, ५, २, २ । 'धर्मोऽस्मि विशि राजा प्रतिष्ठितः'—इति वा० सं० २०, ९ । 'तदेतत् क्षत्रस्य क्षत्रं यद्धर्म्मस्तस्माद् धर्म्मात् परं नास्त्यथो अबलीयान् बलीयांस माशंसते धर्म्मेण यथा राज्ञैवं यो वै स धर्म्मः सत्यं वै तत् तस्मात् सत्यं वदन्त माहुर्धर्म्मं वदतीति'—इति शत० ब्रा० १४, ४, २, २६ । 'यो हि परमतां गच्छति तं हि धर्म्म उपयन्ति'—इति च ५,३,९ । 'प्रज्ञा वर्द्धमाना चतुरो धर्मान् ब्राह्मणं मभिनिष्पादयति'—इति च ११, ५, ७, १ । 'श्रीश्च श्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्म्मश्चैतानि मा माहासिषुः'—इति तै० आ० ४,४२,३० । 'धर्म्म-इति धर्म्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुश्चरं तस्माद्धर्म्मे रमन्ते'—इति च तत्रैव तत उत्तरम् १०, ६२, ६ ॥ 'असुराणां हन्ता ऽजनि ब्रह्मणो गोप्ता ऽजनि धर्म्मस्य गोप्ता ऽजनीति त मभ्युत्कृष्टं प्रजापतिरभिषेक्ष्यन्नेतयर्चाभ्यमन्त्रयत'—इति ऐ० ब्रा० ८, ३, १ । 'त्रयो धर्म्मस्कन्धा यज्ञो ऽध्ययनं दान मिति'—इति छान्दो० उप० २, २३, १ । 'सह धर्मं चरतः'—इति आश्व० गृ० १, ६ । 'धर्मान् कुर्यात् न उक्ता ब्राह्मणेन'—इति लाट्या० सू० ८, २, १ ।

अथ निरुक्ते—'न पापा मन्यामहे ;—नाधनाः, न ज्वलनेन

हीनाः ; अस्यस्मासु ब्रह्मचर्य मध्ययनं तपो दानकर्म्म इत्यृषि-रवोचत्' ६, ५, २। 'सप्त मर्यादाः कवयश्चक्रुः। तासा मेका-मप्यधिगच्छन्नंहस्वान् भवति। स्तेयम्, तल्पारोहणम्, ब्रह्म-हत्याम्, भ्रूणहत्याम्, सुरापानम्, दुष्कृतस्य कर्म्मणः पुनः पुनः सेवाम्, पातके नृतोद्य मिति' ६,५,४। 'ब्राह्मणाय बुभुक्षितायौ-दनं देहि, स्नातायानुलेपनम्, पिपासते पानीय मिति' ७,३,१०।

मनुः ६अ० चतुर्भिरपि चैवैतैर्नित्य माश्रमिभिर्द्विजैः।

दशलक्षणको धर्म्मः सेवितव्यः प्रयत्नतः॥ ९१,

धृतिः क्षमा दमो ऽस्तेयं शौच मिन्द्रियनिग्रहः।

धीर्विद्या सत्य मक्रोधो दशकं धर्म्मलक्षणम्॥ ९२,

दश लक्षणानि धर्म्मस्य ये विप्राः समधीयते।

अधीत्य चानुवर्त्तन्ते ते यान्ति परमां गतिम्॥ ९३,

दशलक्षणकं धर्म्म मनुतिष्ठन् समाहितः।

वेदान्तं विधिवच्छ्रुत्वा सन्न्यसेदनृणो द्विजः॥ ९४,

सन्न्यस्य सर्वकर्माणि कर्म्मदोषानपानुदन्।

नियतो वेद मभ्यस्य पुत्रैश्वर्य्ये सुखं वसेत्॥ ९५ ;

महाभा०—इज्याध्ययनदानानि तपः सत्यं क्षमा दमः।

अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः॥ ३, १२७।

विष्णुः- 'क्षमा सत्यं दमः शौचं दान मिन्द्रियसंयमः।

अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया।

आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्।

अनभ्यसूया च तथा धर्मः सामान्य उच्यते।'—इति २अ०।

ब्रह्मवैवर्त्ते—'विद्या दया दमः शौचं सत्य मस्तेयता तपः।

जितेन्द्रियत्व मक्रोधो लज्जा धर्म इति स्मृतः।'—इति।

बृहस्पति:—"दया क्षमा ऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्य मस्पृहत्वं सर्वसाधारणानि च ॥
(१) परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यं तु दयैषा परिकीर्त्तिता ॥
(२) वाह्ये वाध्यात्मिके चैव दुःखे चोत्पातिके क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता ॥
(३) न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते सा ऽनसूया प्रकीर्त्तिता ॥
(४) अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौच मेतत् प्रकीर्त्तितम् ॥
(५) शरीरं पीड्यते येन सुशुभेनापि कर्म्मणा ।
अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते ॥
(६) प्रशस्ताचरणं नित्य मप्रशस्तविवर्जनम् ।
एतद्धि मङ्गलं प्रोक्त मृषिभिस्तत्त्वदर्शिभिः ॥
(७) स्तोकादप्युपकर्त्तव्य मदीनेनान्तरात्मना ॥
अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम् ॥
(८) यथोपपन्ने सन्तोषः कर्त्तव्योऽप्यल्पवस्तुनि ।
परस्य चिन्तयन्नर्थं सा स्पृहा परिकीर्त्तिता ॥"—इति ।

तदेव मष्टप्रकाराः सर्वसाधारणधर्माः निरूपिताः । धर्मभेदादिकञ्चैव माह भविष्यपुराणीय मिति हेमाद्रिव्रतखण्डे—

"वर्णधर्म्मः स्मृतस्त्वेक आश्रमाणां मतः परम् ।
वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥
वर्णत्व मेक माश्रित्य यो धर्म्मः सम्प्रवर्त्तते ।
वर्णधर्म्मः स एवोक्तो यथोपनयनं नृप ॥

आश्रमं च समाश्रित्य यो धर्मः सम्प्रवर्त्तते ।
स खल्वाश्रमधर्मो हि भिक्षादण्डादिको यथा ॥
वर्णत्व माश्रमत्वञ्च योऽधिकृत्य प्रवर्त्तते ।
स वर्णाश्रमधर्मस्तु स्यान्मौञ्जीमेखला यथा ॥
यो गुणेन प्रवर्त्तेत गुणधर्मः स उच्यते ।
यदा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनम् ॥
निमित्त मेक माश्रित्य यो धर्मः सम्प्रवर्त्तते ।
नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥"—इति ।

मनुः ८अ० धर्म्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ॥१५,
वृषो हि भगवान् धर्म्मस्तस्य यः कुरुते ह्यलम् ।
वृषलं तं विदुर्देवास्तस्माद् धर्मं न लोपयेत् ॥ १६ ;

'चतुष्पात् सकलो धर्म्मः'--इत्यादि च तत्रैव १अ० ८१,८२ । 'विद्या दानं तपः सत्यं धर्म्मस्येति पदानि च'-इति भाग० पु० ३, १२, ३१ ।

तदेतद्धर्म्मज्ञानोपदेशबाहुल्यायैव प्रवृत्तं वेदाङ्गकल्पशास्त्रम् । तच्च तावत् प्रथमं त्रिविधम् ; श्रौतस्मार्त्तसामयिकाचारेतिभेदात् । ततः शाखाभेदबाहुल्यादप्यनेकसंख्यम् ।

श्रौतसूत्राण्येव वैतानिकान्युच्यन्ते । वितानो यज्ञः तेषां तदर्थत्वात् । सर्वेष्वेव च तेषु श्रौतसूत्रेषु अग्निहोत्रादयः श्रौता धर्मा उपदिष्टाः । गृह्याग्निः ; गृहकर्म्मसु गर्भाधानादिसंस्कारादिषु स्थापनीयत्वात् । तदग्निसन्निधौ कर्त्तव्यानि तानि, येषु सेतिकर्त्तव्यताकानि विहितानि, तान्येव गृह्यसूत्राणि । सामयिकाचारसूत्रेषु तु ब्रह्मचर्यादिसमये भूपालनादिसमये आपत्सम-

यादौ च आचरितव्यानि आश्रमधर्मराजधर्मापद्धर्मादीन्युक्तानि। तेष्वविशेषतः श्रौतानि स्मार्त्ताणि चोपदिष्टितानीति तानि सर्व-धर्मकर्मणा मुपदेशकत्वात्ततो धर्मसूत्राण्युच्यन्ते। तद्यथा गौत-मीये चत्वारिंशत् संस्काराः अष्टावात्मगुणाश्चोक्ताः—

"गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरणान्न-प्राशन-चौलोपनयनम्। चत्वारि वेदव्रतानि। स्नानं सह-धर्मचारिणीसंयोगः पञ्चानां यज्ञाना मनुष्ठानं देवपितृमनुष्य-भूतब्रह्मणाम्। एतेषां च। अष्टका पार्वणः श्राद्धं श्रावण्याग्रहा-यणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः। अग्न्याधेय मग्नि-होत्रं दर्शपौर्णमासा वाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः। अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोम-संस्थाः। इत्येते चत्वारिंशत् संस्काराः। अथाष्टावात्मगुणाः। दया सर्वभूतेषु क्षान्ति रनसूया शौच मनायासो मङ्गल मकार्पण्य मस्पृहेति।"—इति ८, १४—२३।

३—५—धर्मशब्देनेत्यादि। सायणभाष्यमित्थं प्रौढ्योक्त मिव लक्ष्यते; प्रत्यक्षश्रुतिविहितानामेवात्र विवक्षा चेत् स्मार्त्तेषु च कर्मसु कथ माचार्यस्य तात्पर्यं प्रतीयेतेति। किञ्च येनैव सूचितं 'चोदनालक्षणोऽर्थो धर्मः (१,१,२)'—इति, तेनैवेद मपि—'अपि वा कर्तृसामान्यात् प्रमाण मनुमानं स्यात् (१, ३, २,)'—इति; अन्यदपि—'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् (१,३,६)'—इति। तदेवं जैमिनिना हि प्रत्यक्षश्रुतिविहितानां श्रौता-नाम्, अनुमेयश्रुतिमूलानां स्मार्त्तानाम्, लोभादिकारणशून्य-सदाचारतोऽप्यवगतानां चाचारकर्मणां धर्मत्वं स्वीकृत मिति

प्रत्यक्षश्रुतिविहिताना मेव कर्मणां धर्मत्वं कथ मुपन्यस्तं भवेद् जैमिनिमत मिति चिन्त्य मेव ।

२—८—स्वाध्यायादिति । “जुगुप्साविरामप्रमादार्थाना मुपसंख्यानम्”-इति पञ्चमी । तथाच स्वाध्यायसम्बन्धी प्रमादो न कार्य इत्यर्थः सम्पद्यते । स्वाध्यायो वेदः ; ‘स्वाध्यायोऽध्येतव्यः’-इति ( तै० आ० २,१५,७ ), ‘स्वाध्याय मधीते’--इति ( शत० ब्रा० ११,५,६,२ ), ‘स्वाध्याय मधीयानः’--इति (छा० उप० ८, १५ ) चैवमादिषु तथैवावगमात् । स्वशाखासारभूतः प्रतिदिनपाठ्यो ब्रह्मयज्ञश्च स्वाध्यायः ; ‘स्वाध्यायो वै ब्रह्मयज्ञः’-इति श्रुतेः ( शत० ब्रा० ११,५,६,३ )। एव मन्यान्योऽपि वेदभागः स्वाध्याय उच्यते ; तद्यथा— ‘संशये बहिर्वेदि स्वाध्यायप्रयोगः’--इति ( आश्व० श्रौ० ८,१२,११ ) ‘य इमं स्वाध्याय मधीयते’-इत्यादिषु च (आश्व० गृ० १,१, ५)’ तथैव प्रतीतिः । वेदाध्ययन मपि स्वाध्याय इति गम्यते ; ‘स्वाध्यायेन व्रतैर्होमैः (म० सं० २,२८)’-इत्यादिषु तथैव बोधात् । इह लक्ष्यते वेद एव स्वाध्याय इष्ट आचार्यस्य ; उत्तरत्र ( ५ पृ० १२ पं० ) प्रवचनसाहचर्यात् अध्ययनार्थस्य स्वाध्यायस्यापि प्रमादनिषेधप्रतीतेः । ‘प्रमादोऽनवधानता’-इत्यमरः १,१,३० । ‘कर्त्तव्याकरणं यत्राकर्त्तव्यस्याथवा क्रिया । उच्यते द्वितयं तत्र प्रमादोऽनवधानतेति’ । तदित्थं वेदस्य पाठविस्मरणम्, अर्थास्मरणम्, अयथार्थकरणम्, निषिद्धदेशकालादावध्ययन मेव स्वाध्यायप्रमादः, स एवानेन निषिध्यते ।

२—१५—प्रियमिति । ‘अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः’-इति कठ० उप० २,१ । ‘विद्यान्ते गुरु-



रर्थेन निमन्त्र्यः’-इति गौ० सू० २,४२ । ‘आचार्यः श्रेष्ठो गुरूणाम्’--इति च तत्रैव ५० ।

२—१६—प्रजातन्तुमिति । ‘मा तन्तुश्छेदि वयतो धियं मे’-इति ऋ० सं० २, २८, ५ । ‘नापुत्रस्य लोकोऽस्ति’-इति तै० ब्रा० ३, १२, ८, २ । ‘संवेष्टमानं बहुभिर्मोहात्तन्तुभिरात्मजैः । कोषकार इवात्मानं वेष्टयन्नावबुध्यसे’-इति, ‘त्वयि तन्तुश्च पिण्डश्च धृतराष्ट्रस्य दृश्यते’-इति च महा० १२ ; ६ । ‘अस्मिन् प्रजातन्तौ कुरूणाम्’-इति भाग० १, १२, १५ । ‘तेषा मुत्पन्नतन्तूना मपत्यं दाय मर्हति’-इति मनुः ९, २०२ । ‘ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद् गार्हस्थ्यस्य’—इति गौ० सू० ३, ३६ । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ‘ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः। एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी’-इति तै० सं० ६,३,१० । तथैतरेयके—

“हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस । तस्य ह शतं जाया बभूवुः । तासु पुत्रं न लेभे । तस्य ह पर्वतनारदौ गृह ऊषतुः । स ह नारदं पप्रच्छ—

‘यन्विमं पुत्र मिच्छन्ति ये विजानन्ति ये च न ।
किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारद ॥’-इति ।
स एकया पृष्टो दशभिः प्रत्युवाच—
‘ऋण मस्मिन्सन्नयत्यमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥
यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिनां भूयान् पुत्रे पितुस्ततः ॥
शश्वत् पुत्रेण पितरो ऽत्यायन् बहुलं तमः।

आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी ॥
किन्नु मलं किमजिनं किमु श्मश्रूणि किं तपः ।
पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः ॥
अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो विवाहाः ।
सखा ह जाया कृपणं ह दुहिता ज्योतिर्ह पुत्रः परमे व्योमन् ॥
पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥
तज्जाया जाया भवति यदस्यां जायते पुनः ।
आभूतिरेषा भूतिर्बीज मेतन्निधीयते ॥
देवाश्चैता ऋषयश्च तेजः समभरन्महत् ।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥
नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः ।
तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति ॥
एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः ।
तं पश्यन्ति पशवो वयांसि च तस्मात्ते × × × मिथुनीभवन्ति'
-इति ह स्मा आख्याय ॥ ७ । ३ । १ ॥"-इति ।
मनुश्च ४अ० "महर्षिपितृदेवानां गत्वानृण्यं यथाविधि ।
पुत्रे सर्वं समासज्य वसेन्माध्यस्थ्य माश्रितः ॥ २५७ ;
पुनः ६अ० ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥ ३५,
अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥ ३६,
अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान् ।
अनिष्ट्वा चैव यज्ञैश्च मोक्ष मिच्छन् व्रजत्यधः ॥३७॥"-इति ।

४—८—सत्यादिति। सत्यसम्बन्धी प्रमादोऽपि न कार्य इत्यर्थः। तथाच असत्य मेव सत्य मिति धिया, सत्यं चाप्रियम्, अन्यथा सन्त मात्मान मन्यथा प्रतिपादयन्, अन्यद् ब्रुवाणो ऽन्यत्सत्यमिति वचोभङ्ग्या प्रत्याययन्, कस्याप्यनिष्टं चिकीर्षन्न-पृष्टः स्वयम्प्रवृत्तश्च सत्यमपि न वदेदित्यभिप्रायः; एवं निषिद्ध-स्थलेषु कथमपि न वक्तव्य मिति चावधार्यम्। तथाहि मनुः—

'सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्य मप्रियम्।
प्रियञ्च नानृतं ब्रूयात् एष धर्मः सनातनः॥'—इति।

किञ्च—'योऽन्यथा सन्त मात्मान मन्यथा सत्सु भाषते।
स पापकृत्तमो लोके स्तेन आत्मापहारकः'—इति ४,२५५।

'वर्णिनां तु वधो यत्र तत्र साक्ष्यनृतं वदेत्'—इति या०सं०२,८५।

'प्राणात्यये सर्वधनापहारे विप्रस्य चार्थे ह्यनृतं वदेच्च।
विवाहकाले रतिसम्प्रयोगे पञ्चानृतान्याहुरपातकानि॥'

—इति च महाभारते कर्णपर्वणि॥

३—९—धर्म्मादिति। धर्मसम्बन्धी प्रमादोऽपि न कार्यः। तथाच देशकालपात्रादीनि विचारयन् दानादिकं कुर्यात्, धर्म्मानाचरंश्च दम्भादियुक्तो माभूत्, तथा वेदविरुद्धान् म्लेच्छ-शाक्यादेर्धर्म्मांश्च भ्रान्त्यापि नाचरेत्,—किमधिकेन स्वशाखा-विरोधिपरशाखोक्तधर्म्मानपि नाचरेत्। अपरञ्च स्मृत्युक्तधर्म्मा-नपि विचार्यैव कुर्यात्। मीमांसादर्शने चैतत् स्फुटमेवोपपादि-तम् (जै० सू० १,३,३;४)। तथाह्यारचितानीमान्यधिकरणानि न्यायमालायां प्रथमाध्यायीयतृतीयपादे—

'औदुम्बरी वेष्टनीया सर्वेत्येषा स्मृतिर्मितिः।
अमितिर्वेतिसन्देहे मितिः स्यादष्टकादिवत्।

औदुम्बरीं स्पृष्टोद्गायेदिति प्रत्यक्षवेदतः ।
विरोधान्मूलवेदस्यानुमानादमानता ॥ १ ॥
प्रत्यक्षानुमितश्रुत्योर्यद्वा व्याघातदर्शनात् ।
अमात्वे शङ्किते बाधो ऽनुमानस्यात्र वर्ण्यते ।
परप्रत्यक्षवेदोऽत्र मूलच्छेद् वेष्टनस्य तत् ।
अस्त्वेव मय्यनुष्ठानं स्वप्रत्यक्षानुरोधतः ॥ २ ॥
वैसर्जनाख्यहोमीय-वाससो ग्रहणस्मृतिः ।
प्रमा न वा श्रुत्यबाधात् प्रमा स्यादष्टकादिवत् ।
दृष्टलोभैकमूलत्वसम्भवे श्रुत्यकल्पनात् ।
सर्ववेष्टनवद्बाधस्तेनाप्येषा न हि प्रमा ॥ ३ ॥'-इति ।
सदाचारदर्शनाच्च धर्मज्ञान मसुलभ मिति च तत्रैव—
'यो मातुलविवाहादौ शिष्टाचारः प्रमा न वा ।
इतराचारवन्मात्व ममात्वं स्मार्त्तबाधनात् ।
स्मृतिमूलो हि सर्वत्र शिष्टाचारस्ततोऽत्र च ।
अनुमेया स्मृतिः, स्मृत्या बाध्या प्रत्यक्षया तु सा ॥ १ ॥'-इति ।
उद्धृतञ्च तत्रैवैतत् प्राचीनवचनम् अत आहुरिति—
'आचारात् स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् ।
तेन द्व्यन्तरिते तेषां (सदाचाराणां) प्रामाण्यं विप्रकृष्टकृतः ।'-इति ॥
४—१७—कुशलादिति । 'ब्राह्मणं कुशलं पृच्छेत्'-इति मनुः२,१२७।
'यथा यथा निषेवन्ते विषयान् विषयात्मकाः ।
तथा तथा कुशलता तेषां तेषूपजायते'-इति च १२,७३ ।
'योगकर्मसु कौशलम्'-इति च भग० गी० २, ५० ॥
५—५—भूत्यै इति 'षष्ठ्यर्थे चतुर्थीति वाच्यम्'-इति चतुर्थी ।
तथाच भूतिसम्बन्धी प्रमादश्च न कार्य इत्यर्थः सम्पद्यते । भूतिश्च

सम्पत्तिः। सम्पत्तेरुपार्जनाय रक्षणाय व्ययकाले च 'प्रमादः' कर्त्तव्याकर्त्तव्यज्ञानशून्यभावात्मिका अनवधानता, नूनं परिहार्य्येतुरुपदेशः फलितः। अथवा भूत्यै भूतिलाभायैवेत्येव व्याख्येयम्। तथाच सम्पत्त्युपार्जनार्थं ब्रह्मचर्य्यादिकं नावलम्बनीयम्;—नापि आलस्यादिक मवलम्ब्य दारिद्र्य माकर्षणीय मिति भावः॥

५—१२—स्वाध्यायप्रवचनाभ्यामिति। स्वाध्यायो वेदाध्ययन मिह गम्यते, प्रवचनसाहचर्य्यादित्युक्तं पुरस्तादेव; प्रवचनञ्च वेदस्याध्यापनम्। तत्रोभयत्रैव प्रमादो यथा न स्यात् तथा यतितव्यम्। देशकालादिकं विचार्य्यैव वेदस्य अध्ययनाध्यापनयोः प्रवर्त्तेत, अनलसः सदैव तयोर्वर्त्तेतेति च;—अदेशे नाधीयीत, अपात्रं नाप्यध्यापयेत्; किन्तु देशे यथावसरं त्वधीयीतैव, पात्रं च यथाज्ञान मध्यापयेदेव चेति॥

७—८—शिष्टकृतान्यपीति। तदेव मेतद्वचनं प्रत्युक्तम्—

"वेदा विभिन्नाः स्मृतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्नम्। धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥"-इति।

एष श्लोको महाभारतीये वनपर्व्वणि ३१२ अध्याये द्रष्टव्यः।

वस्तुतो वचन मेतत् तत्र प्रक्षिप्त मिवैवावगम्यते; वेदादीनां धर्मे प्रामाण्याभावे महाजनत्वनिर्णय एव न स्यादिति, श्रुत्यादुक्तधर्मवादिजैमिनिमन्वादीनां मतविरोधाच्च। अस्ति चात्र—पाठान्तरता 'तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम्'-इति। अहो नास्तिक्य मेवैतदाचष्टे किमु?

६—६—मातृदेव इति। 'सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते'-इति (२, १४५), 'माताग्निर्दक्षिणः स्मृतः'-इति (२, २३१), 'माता पृथिव्या मूर्त्तिः'-इति च (२२५) मनुः।

दायभागे सप्त मातरः परिगणिताः—

'मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः ॥'–इति।
'मातरित्येव शब्देन यां च सम्भाषते नरः।
सा मातृतुल्या सत्येन धर्म्मः साक्षी सता मपि'–इति।

ब्र०वै०पु० व्रतखण्डे १० अ०। तत्रैव पुनः जन्मखण्डे २५ अ०—

'गुरुपत्नी राजपत्नी विप्रपत्नी तथा वधूः।
पित्रोः स्वसा शिष्यपत्नी भृत्यपत्नी च मातुली।
पितृपत्नी भ्रातृपत्नी श्वश्रूश्च भगिनीसुता।
गर्भधात्रीष्टदेवी च पुंसः षोड़श मातरः'–इति॥

६—७—पितृदेव इति। 'पितेव पुत्रान् प्रति नो जुषस्व'–इति ऋ० सं० ७, ५४, २। 'कथा पुत्रस्य केवलं कथा साधारणं पितुः'–इति तै० सं० २, ६, १, ६। म० सं०—'आचार्याणां प्रतं पिता'–इति २,१५५, 'पिता मूर्त्तिः प्रजापतेः'–इति २२५, 'पिता वै गार्हपत्योऽग्निः'–इति च २३१। अथ प्रायश्चित्तविवेके—

'जनकश्चोपनेता च यश्च कन्यां प्रयच्छति।
अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः'–इति॥

६—८—आचार्यदेव इति। तदाह मनुसंहितायां २अ०—

"चोदितो गुरुणा नित्य मप्रचोदित एव वा।
कुर्यादध्ययने यत्न माचार्यस्य हितेषु च॥ १९१,
शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च।
नियम्य प्राञ्जलिस्तिष्ठेद् वीक्षमाणो गुरोर्मुखम्॥ १९२,
नित्य मुद्धृतपाणिः स्यात् साध्वाचारः सुसंयतः।
आस्यता मिति चोक्तः सन्नासीताभिमुखं गुरोः॥ १९३,

हीनान्नवस्त्रवेशः स्यात् सर्वदा गुरुसन्निधौ ।
उत्तिष्ठेत् प्रथमं चास्य चरमञ्चैव संविशेत् ॥ १८४,
प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ।
नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १८५,
आसीनस्य स्थितः कुर्यादभिगच्छंस्तु तिष्ठतः ।
प्रत्युद्गम्य त्वाव्रजतः पश्चाद्धावंस्तु धावतः ॥ १८६,
पराङ्मुखस्याभिमुखो दूरस्थस्यैत्य चान्तिकम् ।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १८७,
नीचं शय्यासनञ्चास्य सर्वदा गुरुसन्निधौ ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ १८८,
नोदाहरेदस्य नाम परोक्ष मपि केवलम् ।
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ १८९,
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ २००
परीवादात् खरो भवति श्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ २०१,
दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
यानासनस्थश्चैवैन मवरुह्याभिवादयेत् ॥ २०२,
प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंश्रवे चैव गुरोर्न किञ्चिदपि कीर्त्तयेत् ॥ २०३,
गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥ २०४,
गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत ॥ २०५,

विद्यागुरुष्वे तदेव नित्या हत्तिः स्वयोनिषु ।
प्रतिषेधत्सु चाधर्म्मान् हितञ्चोपदिशत्स्वपि ॥ २०६,
श्रेयःसु गुरुवद्वृत्तिं नित्य मेव समाचरेत् ।
गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबन्धुषु ॥ २०७,
बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मान मर्हति ॥ २०८,
उत्सादनञ्च गात्राणां स्नापनोच्छिष्टभोजने ।
न कुर्याद् गुरुपुत्रस्य पादयोश्चावनेजनम् ॥ २०९,
गुरुवत् प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ २१०,
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादन मेव च ।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥ २११,
गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२,
स्वभाव एष नारीणां नराणा मिह दूषणम् ।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३,
अविद्वांस मलं लोके विद्वांस मपि वा पुनः ।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ २१४,
मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांस मपि कर्षति ॥ २१५,
कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्यादसावह मिति ब्रुवन् ॥ २१६,
विप्रोष्य पादग्रहण मन्वहं चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्म्म मनुस्मरन् ॥ २१७,

यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।

तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥ २१८ ॥’-इति ॥

६—९—अतिथिदेव इति । ‘प्रशंसमानो अतिथिर्न मित्रियोऽग्नी रथो न वेद्यः’-इति ऋ०सं०८.१९.८ । कठोपनिषदि १.१.७,८—

‘‘वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।

तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ।

आशाप्रतीक्षे सङ्गतꣳ सूनृताञ्चेष्टापूर्तं पुत्रपशूंश्च सर्वान् ॥

एतद् वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥’’

‘नृयज्ञो ऽतिथिपूजनम्’—इति मनुः ३. ७० ।

तत्रैवाग्रे—‘कृत्वैतद् बलिकर्मैव मतिथिं पूर्व माशयेत् ।

भिक्षां च भिक्षवे दद्याद् विधिवद् ब्रह्मचारिणे ॥’ ९४ ;

ततः—‘सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके ।

अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥ ९९,

शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः ।

सर्वं सुकृत मादत्ते ब्राह्मणोऽनर्चितो वसन् ॥ १००,

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।

एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ १०१,

एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।

अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ १०२,

नैकग्रामीण मतिथिं विप्रं साङ्गतिकं तथा ।

उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा ॥ १०३,

उपासते ये गृहस्थाः परपाक मबुद्धयः ।

तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् ॥ १०४,

अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना ।

कालं प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥ १०५,
न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् ।
धन्यं यशस्य मायुष्यं स्वर्ग्यञ्चातिथिपूजनम् ॥ १०६,
आसनावसथौ शय्या मनुव्रज्या मुपासनाम् ।
उत्तमेषूत्तमं कुर्य्याद्धीने हीनं समे समम् ॥ १०७,
वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥ १०८,
न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् ।
भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः ॥ १०९,
न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते ।
वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥ ११०,
यदि त्वतिथिधर्म्मेण क्षत्रियो गृह माव्रजेत् ।
भुक्तवत्सूक्तविप्रेषु कामं तमपि भोजयेत् ॥ १११,
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ ।
भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥ ११२,
इतरानपि सख्यादीन् सम्प्रीत्या गृह मागतान् ।
सत्कृत्यान्नं यथाशक्ति भोजयेत् सह भार्य्यया ॥ ११३,
सुवासिनीः कुमारांश्च रोगिणो गर्भिणीस्तथा ।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥११४॥'-इति ॥

६—१—देवपितृकार्याभ्यामिति । 'होमो दैवः'-इति, 'पितृयज्ञस्तु तर्पणम्'—इति च मनुः ३अ० ७० ।

———

## ॥ अथ यजुःसंहिताब्राह्मणयोः ॥



२८—१२—दर्शयागश्चिकीर्षुरिति। तत्रायं क्रमः—चतुर्दश्यां रात्रौ सायं प्रातर्दशाग्निहोत्रं हुत्वा स्थालीस्थस्य प्रातर्हुतशेषस्य सायंहुतस्य वातञ्चनार्थं स्थापनम्। सान्नाय्यवति दर्शयागे करिष्यमाणे चतुर्दश्यां दध्ना होमो नान्यथा। अमावास्यायां पञ्चभूसंस्कारपूर्वकं पूर्वाह्णे एवाग्न्योरुद्धरणम्। ततोऽग्न्यन्वाधानम्। ततो मांसमैथुनवर्जनसङ्कल्पः। वपनं च। ततो वैश्वदेवः। ततोऽपराह्णे पिण्डपितृयज्ञः। ततो दर्शश्राद्धम्। जीवत्पितृकस्य पितृयज्ञाभावः। पिण्डपितृयज्ञो दर्शाङ्गमिति कर्कादयः सर्वे भाष्यकाराः; नेति सम्प्रदायः। "(पिण्ड)पितृयज्ञः स्वकालत्वादनङ्गं स्यात्"—इति जैमिनिः (४.४.१९.)। अनाहिताग्नेरप्ययं पिण्डपितृयज्ञो भवति। जीवत्पितृकस्य चतुर्दश्यां वा उद्धरणादुपक्रमः; अमावास्यायां यागः। पिण्डपितृयज्ञस्यानङ्गत्वपक्षे मृतपितृकस्यापि विकल्पः; अङ्गत्वपक्षे तु मृतपितृकस्यामावास्याया मेवोपवासनियमः। श्राद्धानन्तरं पत्नीयजमानौ व्रतं गृह्णीतः। ततो ऽध्वर्युः पलाशशाखां छिनत्ति इषे त्वेति (सं० १. १.); शमीशाखां वा। या शाखा हृच्छात् प्राच्यां प्रसृता, उदीच्यां वा, ऐशान्यां वा, सा छेत्तव्या इषे त्वा छिनद्मीति मन्त्रेण। ऊर्जे त्वा सन्नमयामीति (सं० १.१.) मन्त्रेण तस्याः शाखायाः पर्णादि पातयति। ततो व्रतग्रहणम्। ततः षड्भिर्गोभिः सह षड्वत्सान् संसृज्य तान्वत्सान् प्रत्येकं शाखयोपस्पृशति वायव स्थेति (सं० १.१.) मन्त्रेण। शाखोपस्पर्शनेन गोभ्यो वियोजयतीत्यर्थः।

प्रतिवत्सं मन्त्रावृत्तिः। सान्नाय्ये स्त्रीवत्सा अपि गावो भवन्ति। केचिद्वायव स्थोपायव स्थेत्येवं मन्त्रं पठन्ति। ततो मातृभ्यो वत्सा-न्वियोज्य पशूनां गवां मध्ये एकां गां देवो वः सवितेति (सं० १.१.) शाखयोपस्पृशति। आप्यायध्व मघ्न्या (सं० १. १.) 'इन्द्राय भागम्', 'महेन्द्राय भागम्'-इति वा मन्त्रे विशेषः। सान्नाय्यस्य दध्नो दुग्धस्य च इन्द्रो देवता महेन्द्रो वेत्यादिविकल्पः। प्रथमे प्रयोगे याङ्गीकृता, इन्द्रो वा, महेन्द्रो वा, सैव यावज्जीवं भवति। तत्रापि शाखान्तरे व्यवस्थोक्ता—'नागतश्रीर्महेन्द्रं यजेत; त्रयो ह वै गतश्रिय इतुरक्त मौर्वो गौतमो भारद्वाजस्ते ऽनन्तरऽ सोमे-ज्याया महेन्द्रं यजेरन् यो वा कश्चित्'-इत्यापस्तम्बः। मानवे च —'सोमयाजिनां गतश्रीरौर्वो गौतमो भारद्वाजस्ते महेन्द्रं यजे-रन्न लितरे; संवत्सरमिन्द्र मिष्ट्वाग्नये व्रतपतयेऽष्टाकपालं निरूप्य ते महेन्द्रं यजेरन्निति। ततो यजमानस्य पशूनिति (सं० १.१.) मन्त्रेण गार्हपत्यागारस्य पुरस्तादाहवनीयागारस्य पुरस्ताद्वा शाखा मुपगूहति। ततः प्रादेशमात्र मधिकं वा शाखाया अग्रं परिशिष्य तूष्णीं छित्त्वा मूलं पृथक् कुर्यात्। ततस्तस्मान्मूलाद-रत्निमात्रं वेषोऽसीत्युपवेषं करोति प्रादेशमात्रं वा। ततो वसोः पवित्र मसीति (सं० १.२.) मन्त्रेण प्रादेशमात्री या शाखा परि-शेषिता, तस्यां साग्रौ द्वौ कुशौ पवित्रं बध्नाति; त्रीन्वा कुशान्। तस्यां रात्रौ सायं प्रातश्च नियमेन यवाग्वा स्वय मग्निहोत्रहोमः सान्नाय्यं कुर्वतो यजमानस्य भवति। तण्डुलशिथिलपक्वा यवा-गूरिति कर्कः। यवागूर्विरलद्रवा इत्यपरे। यवागूरल्पतण्डुल-चूर्णमिश्रं द्रवरूप मन्न मिति स्मृतिचन्द्रिकाकारः। पेया यवा-गूरिति धर्त्तस्वामिनः। ततोऽग्निहोत्रे हुते अध्वर्युरुपसृष्टां

प्रस्नुतादिति दोग्धारं प्रति प्रेष्यति। दोग्ध्रा उपसृष्टेति प्रत्युक्तेऽध्वर्युर्द्यौरसीति ( सं० १.२. ) स्थालीमादत्ते। मातरिश्वन इति ( सं० १.२. ) गार्हपत्ये स्थालीमधिश्रयति। वसोः पवित्रमसीति ( सं० १.२. ) स्थाल्या उपर्युदगग्रं प्रागग्रं वा पवित्रं निदधाति। वाग्यतोऽध्वर्युस्तिस्रो गा अशूद्रेण दोहयति 'गां धुक्ष्व'-इति प्रैषेण। ततः प्रेषितो दोग्धा काष्ठमये दोहने प्रथमामाहूतां गां दोहयित्वा आनीय, दोहनेनैव स्थाल्यां यजमानेनान्वारब्धायां पवित्रस्योपरि दुग्धमासिञ्चति। अध्वर्युरासिच्यमाने पयसि देवस्त्वा सवितेति ( सं० १. ३. ) जपति। ततोऽध्वर्युः का मधुक्षः? इति ( सं० १. ३. ) दोग्धारं पृच्छति। दोग्धा अमूमिति गोनाम द्वितीयैकवचनान्तेन प्रत्युक्ते, सा विश्वायुरित्याह (सं० १.४.)। पुनः 'गां धुक्ष्व'-इति दोग्धारं प्रेष्यति। ततः प्रेषितो दोग्धा द्वितीयां गां दुग्ध्वा पुनः स्थाल्यां यजमानेनान्वारब्धायां पवित्रस्योपरि निनयति। अध्वर्युरपि निनीयमाने पयसि देवस्त्वेति जपति। ततः कामधु०। अमूमिति दोग्ध्रा प्रत्युक्ते सा विश्वकर्मेत्यध्वर्युराह ( सं०१.४. )। पुनर्गां०। ततः तृतीयां गां दुग्ध्वा तत्पयः स्थाल्यां पूर्ववदासिञ्चति। ततः कामधु०। स प्रत्याह अमुकीमिति। ततोऽध्वर्युः सा विश्वधाया (सं० १.४.) इत्याह। अध्वर्युर्वाचं विसृज्य अत ऊर्ध्वं तिस्रो गा दोहयति। अत ऊर्ध्वं यजमानस्य स्थाल्यन्वारम्भो न भवति। ततो 'गां धुक्ष्व'-इति अध्वर्युः दोग्धारं प्रेष्यति। दोग्धा दुग्ध्वा-दुग्ध्वा आनीय स्थाल्यामासिञ्चति। आसिच्यमानेऽध्वर्युः पूर्ववज्जपति। षष्ठीं दोहयित्वा येन पात्रेण दोहयति, तस्मिन् पात्रे स्तोकमुदकमासिच्य तत्पात्रं प्रक्षाल्य तत्प्रक्षालनजलं स्थाल्यां दुग्धमध्ये आसिञ्चति सम्पृच्यध्वमिति।

ततः स्थाली मुद्दास्य स्थापितेन प्रातरग्निहोत्रशेषेण दध्ना स्थाली-स्थेनातनक्ति इन्द्रस्य त्वेति (सं०१.४.)। महेन्द्रपक्षे महेन्द्रस्य त्वा भागमिति। ओषधयः पूतिकाः कलास्तण्डुलाः पर्णवल्का इत्या-तञ्चनविकल्पाः। उच्छेषणाभावे तण्डुलैरातञ्च्यात्तण्डुलाभावे ओष-धीभिरित्यापस्तम्बः। ततोऽन्मयेन पात्रेण सोदकेनोत्तानेन दोहस्थाली मपिदधाति विष्णो हव्यमिति (सं०१.४.)। ततस्तां सुगुप्ते देशे निधाय प्रातर्दोहार्थं मातृभिर्वत्सान् संसृज्य तेषां पूर्व-वदपाकरणं शाखोपगूहनान्तं कुर्यात्। रात्रौ आहवनीयागारे गार्हपत्यागारे वा यजमानः सपत्नीकः शयीत। प्रातः स्वयमेव यवाग्वाग्निहोत्रं हुत्वा अनुदिते एव सूर्ये तन्त्रोपक्रमं कृत्वा ब्रह्म-वरणादि कर्मापवर्गान्तं कुर्यात्। इति सान्नाय्ययाजिनः। अन्यत् सर्वं पौर्णमासेष्टिवत्। तस्या एवेष्टेः प्रथमोपदेशः कात्यायन-सूत्रादौ विहितः।

अथासान्नाय्ययाजिनस्तु उद्धरणादि पूर्ववत्। शाखाच्छेदादि-वत्सापाकरणान्तस्याभावः। न च यवाग्वा होमनियमः। होमा-नन्तरमुपसृष्टाप्रैषादिवत्सापाकरणस्याभावः। प्रातरनुदिते ब्रह्म-वरणादि। पात्रासादने विंशतिः कपालानि। द्वयोः पुरोडाशयोः साधारण्येकैव पुरोडाशपात्री। दोहनचतुष्टयस्याभावः। उपवेषो वारणः। हविर्ग्रहणे आग्नेयपुरोडाशग्रहणानन्तरं ऐन्द्राग्नस्य ग्रहणम्। तत्र इन्द्राग्निभ्यां जुष्टं गृह्णामीति। विभज्यालम्भने इदमग्नेः इदमिन्द्राग्न्योरिति। कपालोपधाने आग्नेयस्याष्टौ कपालान्युपधायोत्तरत ऐन्द्राग्नस्य द्वादशकपालोपधानम्। अग्नी-षोमीयवत् उत्तरस्थलारीति विशेषः। प्राणदाने अग्निं गच्छ, इन्द्राग्नी गच्छेति। उत्तमप्रयाजत्यागे इदमग्नये, सोमायाग्नये,

विष्णवे, इन्द्राग्निभ्यां, देवेभ्य इत्यादि। आग्नेययागानन्तरं वैष्णव उपांशुयाजः। तत्र विष्णवे उपांशु अनुब्रूहीत्युच्चैः। ध्रुवातश्चतुरवत्त माज्य मवदायोत्थायाश्राव्य विष्णु मुपांशु यजेति प्रथमस्वरेण प्रेष्यति। इदं विष्णवे इति त्यागः। ततः इन्द्राग्निभ्या मनुब्रूहि जुह्वा मुपस्तारः। ऐन्द्राग्नस्य हविषो मध्यात्पूर्वार्धाच्चावदायाभिघार्यावदाने प्रत्यभिघार्योत्थायातिक्रम्याश्राव्यैन्द्राग्नौ यजेति सम्प्रेष्य मध्ये जुहोति। इद मिन्द्राग्निभ्यामिति त्यागः। ततः स्विष्टकृदादि। ऐन्द्राग्नस्य प्राशित्रेडाव्यतिरिक्तं किमपि न भवति। व्यूहने अग्नेर्विष्णोरिन्द्राग्न्योरुक्तिरिति,— अग्निर्विष्णुरिन्द्राग्नी तमपनुदन्त्विति। अत्राप्युपांशुयाजस्य देवताया विष्णोरुपांशूच्चारणम्। प्रस्तरहोमे इदमग्नये, सोमायाग्नये, विष्णवे, इन्द्राग्नीभ्यां, देवेभ्य इति विशेषः। अन्यत्सर्वं ससान्नाय्यामावास्येष्टिवत् ॥

सोमयाजिनो नियमेन सान्नाय्यं भवति; असोमयाजिनस्त्विच्छया सान्नाय्यं भवति ॥

त्रिंशद्वर्षाण्येव दर्शपूर्णमासाभ्यां यागो भवति; यावज्जीवं वा। दाक्षायणयागपक्षश्चेत् पञ्चदशवर्षाण्येव; यावज्जीवं वेति ॥

---

## ॥ अथ ऋक्संहितायाः ॥

४८—५—दैर्घतमस मिति। श्रूयते ह्येवं सामवेदे—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा पद्यते प्र वा मीयते पापीयान् भवति; तस्मादेतानि मन्त्रे-मन्त्रे विद्यात्"-इति आ०ब्रा० १.१।

अतोऽस्य सूक्तस्य ऋषिज्ञानायोक्तं दैर्घतमस मिति। "ऋषिः दर्शनात्; स्तोमान् ददर्शेत्यौपमन्यवस्तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्तदृषीणा मृषित्व मिति विज्ञायते"-इति निरुक्तम् २.३.२। "ऋषिर्दर्शनादिति; पश्यति ह्यसौ सूक्ष्मान् अर्थान्। 'स्तोमान् ददर्शेत्यौपमन्यवः' मन्त्राः स्तोमाः, तानसौ तपोजन्येन ज्ञानेन पश्यतीति औपमन्यव आचार्यो मन्यते। ब्राह्मण मपि चैतस्मिन्नर्थे दर्शयति—तद्यदेनानित्यादि। 'तत्' एतत् उच्यते यत्कृत मृषीणा मृषित्वम्। 'यत्' यस्मात् 'एनान्' 'तपस्यमानान्' तप्यमानान् 'ब्रह्म' ऋग्यजुःसामाख्यं 'स्वयम्भु' अकृतकम् 'अभ्यानर्षत्' अनधीतमेव तत्त्वतो दृष्टाः तपोविशेषेण। 'तदृषीणा मृषित्वम्'-'इति' एवं ब्राह्मणमपि 'वि' विचार्यमाणं 'ज्ञायते' गम्यते-इति च तद्वृत्तिः।

ब्राह्मणं चैतत् तैत्तिरीयारण्यके श्रुतम्—"अजान् ह वै पृश्नीं-स्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत् तदृषयोऽभवत् तदृषीणा मृषित्वं तां देवता मुपातिष्ठन्त यज्ञकामास्त एतं ब्रह्मयज्ञ मपश्यन् त माहरन् तेनायजन्त"-इति तै० आ० २.९.१।

"दीर्घतमा औचथ्यः (ऋ० सं० भा० १.१४०.१)"-इत्यनुक्रमणीवचनात् दीर्घतमा हि उचथ्यापत्यमिति ज्ञायते, "आङ्गिरसस्योचथ्यस्य"-इतिलेखात् (ऋ० सं० भा० ९.५०.१) गोत्रतः स आङ्गिरस इत्यपि। 'ममता' चास्य दीर्घतमसो जननिः; ततोऽस्य मामतेय इति च नामान्तरं श्रूयते मन्त्रे ब्राह्मणे च। तथाहि मन्त्रः ऋ० सं० १.१५८.६.—

"दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे।<br>अपा मर्थं यतीनां ब्रह्मा भवति सारथिः॥"-इति।

"'दीर्घतमा' एतन्नामा महर्षिः। स च 'मामतेयः' ममतायाः पुत्रः। 'दशमे युगे' दशयुगपर्यन्तम्। महानुभावयोरश्विनोः प्रभावात् पूर्वोक्ताद् दुःखाद्विमुक्तोऽत्यन्तसुखी स्वपुत्रभार्यादिभिः सहितो जीवितवान्। दशमे युगेऽतीते सति 'जुजुर्वान्' जीर्णो वलीपलितगात्रो बभूव। एवम्भूतः सन् 'अर्थं' पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकम्। 'यतीनां' प्राप्नुवतीनाम् 'अपाम्' अप्कार्याणां प्रजानाम्। यद्वा, 'अपाम्' अपसां कर्मणाम्, 'अर्थं' प्रयोजनम्, 'यतीनां' तासां प्रजानाम्। 'ब्रह्मा' ब्रह्मसदृशः परिवृढो 'भवति'। किञ्च 'सारथिः' तद्गन्निर्वाहको भवति; देवो भवतीत्यर्थः। एवमस्य वृत्तान्तं मन्त्रो ऽनुवदति। स्वयं वा स्वात्मानं पारोक्ष्येणाश्विनोर्महानुभावत्वं प्रकटयितुं ब्रवीति॥"—इति च तद्भाष्यं सायणीयम्। अस्मन्मते तु 'दशमे युगे' तृतीयत्रेतायां, विद्यमानः; 'यतीनां' चतुर्थाश्रमाणां भिक्षूणा मित्यर्थः॥

ब्राह्मणञ्च इद मैतरेयकम्—"एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौष्मन्ति मभिषिषेच"—इति ८. ४. ९। एतेनावगम्यते आर्त्विज्यमपि कृतं तेनेति॥

अस्यैव पुत्रः कक्षीवान्। तथाहि "प्रातारत्नं (ऋ० सं० १. १२५. १.)"—इतिसूक्तीयभाष्योपक्रमणम्—

"अत्रेतिहास माचक्षते। दैर्घतमसः * कक्षीवान्नाम ऋषिर्ब्रह्मचर्यं चरिष्यन्वेदाभ्यासाय गुरुकुले चिरकाल मुषित्वा, वेदान् सम्यगधीत्य, व्रतानि च चरित्वा, तेनानुज्ञातः पुनः स्वगृहं प्रति प्रयास्यन्, मध्ये मार्गे रात्रौ विश्रान्तः। प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजानुचरैः संक्रीड़मानो ऽकस्मात्कक्षीवतो ऽन्तिक

* दीर्घतमसः पुत्र इत्यर्थः।

माससाद। स च रभसा प्रतिबुद्धः सहसोत्तस्थौ। तं च राजा पाणिं गृहीत्वा स्वकीये चासने उपवेश्यास्य सौन्दर्यमवगत्य स्वकन्याप्रदानमनाः पप्रच्छ भगवन् कस्य पुत्रः किन्नामा त्वमिति। स च पृष्टो मातरं पितरं च स्ववृत्तान्तं चाचचक्षे। स च राजा सम्भाव्य इत्यवगत्य मुदितमनाः स्वगृहं प्राप्यास्मै मधुपर्कमारचय्य वस्त्रमाल्यादिभिः पूजयित्वा स्वरथा दश कन्याः शतं निष्कानश्व-शतं पुङ्गवानां शतं गवां षष्ट्युत्तरसहस्रं पुनरेकादश रथांश्च प्रादात्। स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽन्तिकमागत्य तस्मै प्रादर्शयत् ॥"–इति।

स च कक्षीवान् उशिक्संज्ञाया अङ्गराजस्य महिष्या दास्यां दीर्घतमसा उत्पादितोऽतो दासीपुत्रः। ऋ० सं० १. ११६, १२५. सूक्तयोः सायणीयभाष्ययोः, महाभारतस्य आदिपर्वणि १०४ अध्याये च द्रष्टव्यम्।

एतेन हि दीर्घतमसा पञ्चविंशतिसूक्तानि दृष्टानि; तानि दैर्घतमसानि ऋक्संहितायाः प्रथममण्डले (१४०—१६४.) श्रुतानि। 'दीर्घतमसो व्रतम्' (आ० गा० ५. १. १२.)'–इत्येकम्, 'दैर्घतमसम् (गे० ३. १. १०, ११, १२.)'–इत्यात्मानि त्रीणि, 'दीर्घतमसोऽर्कः (आ० गा० १. २. ४.)'–इति चैकमिति पञ्च सामानि च तेन दीर्घतमसैव दृष्टानि। अतएवास्य ऋषित्वम्। उचथ्येन दृष्टानि च त्रीणि सूक्तानि श्रूयन्ते ऋक्संहितायाम् (९. ५०—५२.)। अतोऽस्य ऋषिपुत्रत्वमपि। कक्षीवतश्चैकादश सूक्तानि पञ्चर्चश्च श्रूयन्ते ऋक्संहितायाम् (१. ११६—१२५, १२६. १—५; ९. ७४)। अतोऽस्य ऋषिपितृत्वञ्च। दैर्घतम-सेषु सूक्तेष्वेकम् (ऋ० सं० १म० १४२ सू०) आङ्गिरसानामाप्री-

सूक्त मिति च प्रसिद्धम् । तत्र सूक्त नराशंसतनूनपादुभयवत् ; "मैधातिथ' दैर्घतमस' प्रैषिक मित्युभयवन्ति"-इति हि नैरु-क्तम् ८. २. ७ ।

तदित्थ मस्य दीर्घतमस एव परिचयः सम्पद्यते—

दीर्घतमाः—पञ्चविंशतिसूक्तानां पञ्चानां साम्नां च द्रष्टा ऋषिः ।
तद्गोत्रः—आङ्गिरसः ; स अङ्गिरसां कुले जात इत्यर्थः ।
तत्पिता—उचथ्यः, सूक्तत्रयाणां द्रष्टा ऋषिः ।
तन्माता—ममता, ऋग्वेदस्य संहितायां ब्राह्मणे च विश्रुता ।
तत्पुत्रः—कक्षीवान्, एकादशसूक्तानां पञ्चर्चां च द्रष्टा ऋषिः ।
तज्जाया—उशिक्, अङ्गराजमहिष्या दासीति ऐतिहासिकाः ।
तत्कालः—दशमो युगः ; तृतीय-त्रेतेति यावत् ।
तदायुः—जरावस्थायां सत्यस्त इतिश्रुतेः पूर्णम् ।
तत्सम्मानम्—तुर्याश्रमेऽपि 'यतीनां ब्रह्मा'-इति श्रुतौ वर्णितम् ।
तत्कार्यम्—आर्त्विज्यम्, ब्राह्मणे वर्णितम् ।
तत्समकालिकोराजा—दौष्यन्तिर्भरतः (शकुन्तलायाः पुत्रः) ॥

५०—१०—दैवतेति । "यत्काम ऋषिर्यस्यां देवतायामार्थ-पत्य मिच्छन् स्तुतिं प्रयुंक्ते, तद्दैवतः स मन्त्रो भवति"-इति नैरु-क्तम् ७.१.१. । " 'यत्' अर्थवस्तु कामयमानः 'ऋषिः' 'यस्यां देव-तायाम्' अभिष्टुतायाम् 'आर्थपत्यम्' अर्थपतिभाव मात्मनः 'इच्छन्' अमुष्या देवतायाः प्रसादेनाह ममुष्यार्थस्य पतिर्भविष्यामीत्येतां बुद्धिं पुरोधाय 'स्तुतिं प्रयुंक्ते', 'तद्दैवतः' एव 'स मन्त्रो भवति' । एतत् मन्त्रे दैवतालक्षणम् । एतेन लक्षणेन सर्वमन्त्रेषु दैवतोप-लब्धा । अथवा 'देवतायाम्' अस्यार्थस्येय' देवता दातुं समर्था इति जानानः स्तुतिं प्रयुंक्ते येन मन्त्रेण, सा प्राधान्यस्तुतिभाग्

देवता। सा पुनरियं स्तुतिः चतुर्विधा ;—नाम्ना, बन्धुभिः, कर्म्मणा, रूपेणेति"-इति तत्र दौर्गी वृत्तिः ॥

४९—१५—अल्पस्तवनमिति। एतत्सूक्तस्य दैर्घतमसमिति साधारणं नाम, दैर्घतमसामनेकत्वात्; अल्पस्तवनमिति त्वसाधारणम्।

५०—१९—अस्यवामीयमिति त्वस्य सूक्तस्य तृतीयं नाम सर्वत्र सुग्रहणाय।

५०—१८—विनियोगमिति। 'अनेनेदन्तु कर्त्तव्यं विनियोगः प्रकीर्त्तितः'-इति योगियाज्ञवल्क्यः।

५०—२२—सूत्रितमिति। सूत्रस्य तस्य पूर्णस्वरूपं त्वेवम्—"उत्तमादाभिप्लविकात् तृतीयसवन मन्यद् वैश्वदेवान्निविद्धानादस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशत मानोभद्रीयञ्च तस्य स्थान ऐकाहकौ वैश्वदेवस्य प्रतिपदनुचरौ"-इति (५.३.२.)। अस्य चैतत् सायणीयं भाष्यम्—

"अभिप्लवनामके षडहे यदुत्तमं षष्ठमहस्तस्मादह्नोऽस्मिन्महाव्रतनामकेऽह्नि 'तृतीयसवनम्' अतिदेष्टव्यम्। विश्वेषां देवानां स्तुतिवाचकानि निवित्पदानि यस्मिन्नानोभद्रीयसूक्ते (१.८९.) प्रक्षिप्यन्ते, तत् सूक्तं 'वैश्वदेवं निविद्धानं'; तस्मात् 'अन्यत्' पूर्वभावि सर्वम्, आभिप्लविकवत् प्रयुज्यते। 'तस्य' निविद्धानस्य, 'स्थाने' 'अस्यवामस्य'-इत्येतत्, 'आनोभद्रीयञ्च'-इत्येतदुभयं पठनीयम्। 'अस्य वामस्य'-इति सूक्तं (१.१६४.) द्विपञ्चाशदृचम्, तस्मिन्नन्तिमा एकादश परित्यज्यावशिष्टमेकचत्वारिंशत्सङ्ख्याकमृक्समूहं पठेत्। स च समूहः 'सलिलस्य' सम्बन्धी; 'गौरीर्मिमाय सलिलानि तक्षति'-इति (१०५ पृ०) तन्नत्याया मृच्यभिधानात्। दीर्घतमा नाम कश्चिदृषिस्तेन दृष्टः, वेदिषदे

प्रियधामायेत्यादिको ( १. १४०. ) बहूनां सूक्तानां मन्त्रः 'दीर्घतमसः'; तस्मिन् सङ्गे 'अस्यवामस्य' इत्येतदपि सूक्त मवस्थितम् । तस्य सूक्तस्यात्र सलिलमम्बन्धो दीर्घतमस्सम्बन्धयानुक्रमणार्थं मभिहितः । चोदकप्राप्तस्य वैश्वदेवनिविद्धानस्य स्थाने 'अस्य वामस्य', 'आ नो भद्रा'-इति द्वयं पठेत् । इत्येतावानत्र विशेषः । —एकाहे विश्वजिन्नामके भवौ 'ऐकाहिकौ' यौ 'प्रतिपदनुचरौ' 'वैश्वदेवस्य' अभिहितौ, तावेवात्र महाव्रतेऽपि 'वैश्वदेवस्य प्रतिपदनुचरौ' कर्त्तव्यौ । प्रारम्भे पठनीयस्तृचः 'प्रतिपत्'; तदनन्तरभावी तृचः 'अनुचरः' । तत्सवितुर्वृणीमह इत्येष तृचः प्रतिपत् ; अद्या नो देव सवितरित्ययं तृचोऽनुचर इत्यर्थः ।"-इति ॥

५१—१—योऽयं दिवीति । अथ त्रिविधानि मन्त्रव्याख्यानानि भवन्ति ;— अधियज्ञ मधिदैवत मध्यात्मं चेति । यज्ञ मधिकृत्येत्यर्थे प्रथमम्, दैवतं देवताविज्ञान मधिकृत्येत्यर्थे द्वितीयम्, आत्मानं देह मिन्द्रियादिकं चेतनं ब्रह्म वा अधिकृतेत्यर्थे टचि समासान्तं रूपं तृतीयम् । तथाहि नैरुक्तम्—" अर्थं वाचः पुष्पफल माह । याज्ञदैवते पुष्पफले, दैवताध्यात्मे वा"-इति १. ६. ४ । "आह,— किम्पुनर्वाचः पुष्पफलम् ? इति । उच्यते, —'अर्थं वाचः पुष्पफल माह' एतस्मिन् मन्त्रे मन्त्रदृगाह । कः पुनरसावर्थः ? इति । याज्ञदैवत मध्यात्म मितोष वाचः समासतोऽर्थः । स पुनरेष रूपककल्पनया पुष्पफलविभागेन द्विधा प्रविभज्यते,— 'याज्ञदैवते' पुष्पफले 'दैवताध्यात्मे वा'-इति । यज्ञपरिज्ञानं याज्ञम्, देवतापरिज्ञानं दैवतम्, आत्मन्यधि यद् वर्त्तते तदध्यात्मम् । स एष सर्वोऽपि मन्त्रब्राह्मणराशिरेवं त्रिधा विभक्तः । तत्रैवं सति, यदा अभ्युदयलक्षणो धर्मोऽभिप्रेयते,

तदा याज्ञपुष्पं दैवतफलम् । किं कारणम् ? पूर्वं हि पुष्पं भवति फलार्थम् ; याज्ञ मपि पूर्वं तन्यते देवतार्थम् ; इतेरतस्मात् सामान्याद् याज्ञं पुष्पम्, दैवतं फलम् । यदा पुनर्निःश्रेयसलक्षणो धर्मोऽभिप्रेयते, तदोभे एव याज्ञदैवते पुष्पत्व मेव बिभ्रतः । दैवते हि याज्ञ मन्तर्भूत मेव तदर्थत्वात्, अतो न पृथगुच्यते । यत् पुन रधिदैवतं सर्व मपि प्रतिविशिष्टज्ञानेनोपासकेन मुमुक्षुणा निरूप्य चेतसा आत्मान मेव प्रतिसम्पाद्यते कार्यकारणाधिदेवताद्वारेण, सोऽय मेव मधिदैवत मधियज्ञं चोच्छ्रिद्याध्यात्म मेवाभिसम्पादयति ; तथा पुष्पभाव मुच्छिद्य पुष्पं फलभावायेति । एवं सोऽय मात्मयाज्येवाभिसम्पद्यते । तन्नैवं सति, अध्यात्मार्थत्वादधिदैवतस्य, अध्यात्मस्य च पुरुषार्थस्य निष्पन्नत्वाद्, दैवतं पुष्पम्, अध्यात्मं फल मित्युक्तम्"--इति तत्र दौर्गी वृत्तिः । तदत्र येषां मन्त्राणा मधियज्ञ मेव व्याख्यानं युज्यते, तेऽधियज्ञा इत्युच्यन्ते ; तथा दैवं दैवतं देवताविज्ञान मेव अधिकृत्य दृष्टा मन्त्रा आधिदैविकाः ; एव माध्यात्मिकाश्च मन्त्रा भवन्ति । तदुक्तं मनुना ( ६. ८३. )—

"अधियज्ञं ब्रह्म जपेदाधिदैविक मेव च ।
आध्यात्मिकञ्च सततं वेदान्ताभिहितं च यत् ॥"-इति ।

केषाञ्चिन्मन्त्राणा मुभयविधमपि व्याख्यानं दृश्यते निरुक्तादौ । तद्यथा—"सोमं मन्यते ( ऋ० सं० ८. ३. २०. ३. )"-इति मन्त्रस्य 'इत्यधियज्ञम्'-इति अधियज्ञं व्याख्यान मुक्त्वा 'अथाधिदैवतम्'-इति अपरविध मपि व्याख्यानं प्रदर्शितम् ( निरु० ११. १. ४. ) । तथा 'सप्त ऋषयः प्रतिहिताः ( य० वा० सं० ३४. ५५. )'-इत्यस्य, 'तिर्यग्बिलश्चमसः ( अथ० सं० १०.

२६. ८. )'-इत्यस्य, 'ऋचो अक्षरे परमे ( ऋ० सं० २. ३. २१. ४. )'--इत्येवमादीनाञ्च मन्त्राणाम् 'इत्यधिदैवतम्'-इत्यधिदैवतं व्याख्यानं मुक्ता 'अथाध्यात्मम्'-इति अपरविधमपि व्याख्यानं प्रदर्शितम्। बहूनां च मन्त्राणां त्रिविध मपि व्याख्यानं भवितु मर्हति। अतएव 'विश्वकर्मा विमना आद् ( ऋ०सं०८.३. १७.२. )'-इतिमन्त्रस्य व्याख्यानं निरुक्ते अधिदैवत मध्यात्मञ्च इति द्विविधं प्रदर्शितम्; सायणेन पुनः आधियज्ञमपि स्वीकृतम्—'अयं मन्त्रोऽधियज्ञाध्यात्मयोर्भेदेन द्विधा व्याख्येयः'-इति।

वस्तुतः आधियज्ञा आध्यात्मिकाश्च मन्त्राः स्वल्पा एव, आधिदैविका एव बहवः। देवाना मग्न्यादीना स्थानक्रियास्वरूपादिज्ञानमेव दैवविज्ञानम्; तत एव भूविद्या-खविद्या-नौविद्यादिः समुद्भवः; सर्वविद्यानिलयश्चैष विद्यापरपर्यायो वेदः। हन्त! एतर्ह्यस्मद्देशे तादृशविज्ञानचर्चा लुप्तकल्पैवेति कोऽर्हति वेदस्यातिगम्भीरस्यास्याधिदैविकं व्याख्यानं यथायथं पुनः प्रकटयितुम्? अतएव प्रायः सर्वेषा मेव मन्त्राणां यज्ञे व्यवहार्यत्वात् सौकार्यादुपयोगिव्याख्यानस्यैव प्राशस्त्य मिति मन्वानैः सायणाचार्यप्रभृतिभिर्यज्ञपरायणैर्यज्ञपर मधियज्ञं नाम व्याख्यान मेवाकारि प्रायः सर्वत्र; येषां तु आधिदैविक आध्यात्मिको वोभयविधो वार्थो निगदसिद्ध इव प्रतिभाति, तेषा मनन्यगत्या तथातथैव व्याख्यान मलेखि च। तदस्य मन्त्रस्य प्रथम माधिदैविकं व्याख्यानं चिकीर्षुराह योऽयमित्यादि श्रुतिरित्यन्तम्॥

५२—७—भावनयेति। आधिदैविकमन्त्रस्यापि अद्वैतब्रह्मोपासने उपयोग इति मन्वान आहैतत्। वस्तुतो एवंविधमन्त्राणां पदार्थविज्ञाने एव तात्पर्यं मवगम्यते; निरुक्ते ऽप्यैवंविधस्यान्यस्य

वा कस्यचिदप्यौपासनिकत्वानुक्तेः, 'अपाञ्च ज्योतिषश्च मिश्रीभावकर्म्मणो बधकर्म्म जायते, तदौपमार्थेन युद्धवर्णा भवन्ति ; अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च ( २. ५. २. )'--इत्यादि-पदार्थपरिचायक व्याख्याबाहुल्यदर्शनाच्च। सर्वविद्यानिधानस्यास्य वेदस्य सर्वेषामेव पदार्थानां तत्त्वविज्ञानायापि यत्नः समुचित एव ; अन्यथानुपलब्धेः। ऐहिकामुष्मिकफलद्वयसाधनायैव प्रवृत्तोऽस्मद्वेदः कथं न ब्रूयाद् ऐहिकसुखहेतुभूतं पदार्थविज्ञानम्। किञ्च पदार्थज्ञानादामुष्मिकं फलञ्च स्वीकृतं वैशेषिकैर्नैयायिकैश्च। तथाहि— 'द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्म्यवैधर्म्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम् ( १. १. ४. )'–इति-काणादाः, दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानाना मुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ( १. १. २. )'–इति च गौतमीयाः। न्यायकन्दल्यामपि तत्प्रयोजनसूत्र मित्थं विवृतम्— 'यस्य वस्तुनो यो भावः, तत् तत्त्वम्, साधारणो धर्म्मः साधर्म्यम् ; असाधारणो धर्मो वैधर्म्यम् ; तयोस्तत्त्वज्ञानं निःश्रेयसहेतुः'--इति ॥

५२—८— श्रुतितात्पर्यमेतत् । माध्यन्दिनीपाठस्त्वेवम्— 'योऽसावादित्ये पुरुषः सोऽसावहम् ( ४०. १७. )'–इति, काण्व-पाठस्तु— 'योऽसावसौ पुरुषः सोऽहमस्मि'--इति। अपि वा स्यात्कोऽपि पाठः कस्याश्चिच्छाखायाः।

५२—८—एवंवेति। इतः प्रभृति आध्यात्मिकं व्याख्यानम्।

५२—११—प्रसिद्धमिति। "आत्मा वा इद मेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नुसृजा इति। स इमाँल्लोकानसृजत"--इत्यादि ऐ० उ० १. ३. १—४। "सदेव सौम्येद मग्र आसीदेकमेवाद्वितीयम् × × × तदैक्षत बहु स्यां प्रजा

येयेति"-इत्यादि छा० उ० ६.२. १—४। "स ऐक्षत कथं नु प्रजायेयेति"-इति शत० ब्रा० ६. २. ४. १। "प्रजापतिर्जनयति प्रजा इमाः"-इति च अथ० सं० ७. १९. १। इत्येवमादयः श्रुतयः। तथा मनुस्मृतावपि १अ० ५श्लोकतः—

"आसीदिदं तमोभूत मप्रज्ञात मलक्षणम्।
अप्रतर्क्य मविज्ञेयं प्रसुप्त मिव सर्वतः॥
ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।
सर्वभूतमयोऽचिन्त्यः स एव स्वय मुद्बभौ॥
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।"-इति॥

५२—१६—घृतमिति। निघण्टौ १. १२. १०।

५२—१८—निरक्तमिति। ४. १. ३ द्रष्टव्यम्।

५२—१८—प्रदीप्तपृष्ठ इति। घृतमिति 'घृ क्षरणदीप्त्योः' जुहोत्यादिः (१४), तस्य रूपमिति स्वीकारात्। अतएव "जिघर्म्यग्निं हविषा घृतेन (ऋ०सं० २.१०.४.)"-इत्यस्य भाष्ये 'जिघर्मि = दीपयामि' इत्याह सायणः।

५२—२३—सप्त लोका इति। 'सप्त इमे लोकाः'-इति मुण्ड० उ० २. १. ८।

५२—१५—श्रुतिरिति। तत्पूर्णपाठस्त्वेवम्। - "स होवाच वायुर्वै गौतम तत्सूत्रम्, वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति, तस्माद्वै गौतम पुरुषं प्रेत माहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं

ब्रूहीति"–इति बृ० उ० ३. ७. २। अस्य चैतच्छाङ्करं भाष्यम्।— "स होवाच याज्ञवल्क्यः। ब्रह्म लोका यस्मिन्नोताश्च प्रोताश्च, वर्त्तमाने काले यथा पृथिव्यप्सु, तत्सूत्र मागमगम्यं वक्तव्यमिति तदर्थं प्रश्नान्तर मुत्थापित मतस्तन्निर्णयायाह— 'वायुर्वै गौतम तत्सूत्रम्' नान्यद्वायुरिति सूक्ष्म माकाशवद्विष्टम्भकं पृथिव्यादीनां, यदात्मकं सप्तदशविधं लिङ्गं कर्मवासनासमवायि प्राणिनां, यत्तत्समष्टिव्यष्ट्यात्मकं, यस्य बाह्या भेदाः सप्तसप्त मरुद्गणाः समुद्रस्येवोर्म्मयः; तदेतद्वायव्यं तत्त्वं सूत्र मित्यभिधीयते। 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति' सङ्ग्रथितानि भवन्तीति प्रसिद्ध मेतत्। अस्ति च लोके प्रसिद्धिः। कथम्? यस्माद्वायुः सूत्रं वायुना विधृतं सर्वं 'तस्माद्वै गौतम पुरुषं प्रेत माहुः' कथयन्ति 'व्यस्रꣳसिषत' विस्रस्तानि 'अस्य' पुरुषस्य 'अङ्गानि'–इति। सूत्रापगमे हि मण्यादीनां प्रोताना मवस्रंसनं दृष्टम्, एवं वायुः सूत्रं तस्मिन्मणिवत् प्रोतानि यद्यस्याङ्गानि स्युः, ततो युक्त मेतद्वायूपगमेऽवस्रंसन मङ्गानाम्। अतो 'वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीति' निगमयति। 'एव मेवैतद्याज्ञवल्क्य' सम्यगुक्तं सूत्रम् तदन्तर्गतं त्विदानीं तस्यैव सूत्रस्य नियन्तारम् 'अन्तर्यामिणं ब्रूहीति' उक्त आह"–इति॥

५३—६—स्वरसत्वाभावादिति। तथाच अधियज्ञव्याख्याने एव स्वारस्यं सायणाचार्यादीना मिति सुव्यक्तम्। एतयैवोक्त्या स्फुटं प्रतीयते चैतदपि,— प्रायः सर्वेषा मेव मन्त्राणा माधिदैविकाध्यात्मे अपि व्याख्याने युज्येते इति। अतएव सायणीयभाष्यादिदर्शनाद् ये मन्त्रा नून मधिदैवताः, सायणादिमते सुतरा मधियज्ञा एव

प्रतीयन्ते, तेषामपि केषाञ्चिदध्यात्मपरतयोपनिषत्सु समुल्लेखः श्रूयते । तद्यथा—

"तदेते द्वे ऋचौ भवतः— 'आदित् प्रत्नस्य रेतसः', 'उद्वयं तमसस्परि ० ० ०'-इति।"-इति छा० उ० ३. १६. ६। स एष आदित्प्रत्नस्येति मन्त्रो (ऋ० सं० ८. ६. ३०) महाव्रते सत्रे विनियोज्यतया सायणादिभिर्व्याख्यातः ; एव मुद्वयन्तमसस्परीति मन्त्रोऽपि (ऋ० सं० १. ५०. १०) अवभृथेष्टौ विनियोज्यतया च व्याख्यातः। अत्रैव चास्यवामीये सूक्ते यः पञ्चपादम्पितर-मिति (६४ पृ०) मन्त्रोऽधियज्ञतया व्याख्यातः, प्रश्नोपनिषदि (१. ११.) स एवाध्यात्म इत्युद्धृतो दृश्यते। अथाधियज्ञाधि-दैवताभिन्नः सायणादेः ; यज्ञासिद्धिमात्रैकफलत्वाद्देवतावर्ण-नस्य। अस्माकन्तु विभिन्नावेवाधियज्ञाधिदैवतौ ; निरुक्ते "इत्यधियज्ञ मथाधिदैवतम् (११, १. ४)"-इत्यसकृदुक्तेः। अधिदैवतानाञ्च मन्त्राणां पदार्थविज्ञानोपदेशमात्रे तात्पर्यम् ; विद्यापरपर्यायस्य सर्वविद्यानिधानस्य वेदस्य तादृशोपदेशस्या-प्यतिकर्त्तव्यत्वात् ।

५२—८—प्रतिपादयाम इति। अनन्यगत्येति भावः।

५३—१०—अनुसन्धेयमिति (नि० ४.४.५.)। तथाहि—

"अस्य वामस्य वननीयस्य पलितस्य पालयितुर्होतुर्ह्वातव्यस्य तस्य भ्राता मध्यमो अस्त्यशनो भ्राता भरतेर्हरतिकर्म्मणो हरति भागं भर्त्तव्यो भवतीति वा तृतीयो भ्राता घृतपृष्ठो अस्यायमग्नि-स्तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिं सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्र मिति वा सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मय इति वदन्ति"-इति।

यास्केन त्विह यद्यपि अस्येतिपदस्य वाच्यार्थो नावोचि, तथापि सप्तादित्यरश्मय इत्युपसंहृतमिति आदित्यस्येतीव प्रतीयते। अतएव दौर्ग्यां वृत्तौ अस्य सूर्यस्येति भाषितम्। तदेव मस्य मन्त्रस्याधिदैवतं व्याख्यान मेव यास्कसम्मतम्।

अश्न इत्यस्य अशन इत्यर्थः कृतो यास्केन। तस्य चार्थो व्यापनो वायुरिति दुर्गः। मन्मते तु विद्युदग्निरपि स्यात्; तस्यापि व्यापनत्व-माध्यमिकत्वोक्तेः। तथाहि निरुक्तम्— "यत्र वैद्युतः शरण मभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद् भवत्युदकेन्धनः शरीरोपशमनः"–इति ७,६,६। भ्रातेतिपदस्य भागहर्त्ता भर्त्तव्यो वेत्यर्थद्वयं यास्कीयम्। तदपि वायौ विद्युति चोभयत्रैवोपपद्यते; "अग्निः पृथिवीस्थानः, वायुर्वेन्द्रो वान्तरिक्षस्थानः, सूर्यो द्युस्थानः (७. २. १.)"–इत्युक्तेः, "त्रयः केशिनः ०—० एक एषाम् ०—० पृथिवीं दहति सर्वम्, एकोऽभिविपश्यति ०—० गतिरेकस्य दृश्यते न रूपम् (१२.३.८.)"–इत्युक्तेश्च। सूर्यवाय्वग्नीनां सूर्यविद्युदग्नीनां वा अन्योन्यभरणीयता त्वेतस्मादेव यास्कीयार्थानुगतमन्त्रलिङ्गादवगम्यते। घृतपृष्ठ इत्यस्यार्थोऽयमग्निरितिप्रवाह यास्कः। 'घृतेन स्पृष्टः आज्यस्पृष्टः अयमेवाग्निः पृथिवीस्थानः'–इति च तदर्थो दौर्गः। अत्र = तत्र इत्यर्थो यास्कीयः। 'तत्र = एतस्मिन् त्रिधा विभक्ते ज्योतिषि'–इति च तद्वृत्तिः। निर्द्धारणे चैषा सप्तमी दुर्गाचार्यस्य; तदन्तर मेव 'प्रधानत्वेनैत मेवाह सपश्यम्'–इत्युक्तेः। तथा चैषु त्रिषु भ्रातृषु सप्तपुत्र मादित्य मेव विश्पतिं प्रजापतिम् अपश्यं विज्ञात मिति सूर्यस्यैव प्राधान्य मुक्तं भवति। अन्यत्र चैव मुक्तं मन्त्रसानप्रदर्शनपूर्वकं यास्केन — "आदित्यः सर्वेषां ज्योतिषां

राजा"-इति (२.६.४. निरु०)। पार्थिवाग्नेस्तु आदित्यत उत्पत्ति-रित्यपि वर्णितं तेनैव। तथाहि—"अथादित्यादुदीचिप्रथम-समावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमय मसंस्पर्शयन् धारयति तत् प्रदीप्यते सोऽय मेव सम्प-द्यते"-इति निरु० ७. ६. ७। सप्तपुत्रमितिपदस्य सप्तमपुत्र मितिव्याख्यानादैतिहासिकं मतं प्रकटितम्; ततः स्वसिद्धान्त मुक्तं सर्पणपुत्रमिति। 'सर्पणा हि तस्य रश्मयो मुहुर्त्त मप्यनव-स्थायिनो यस्य पुत्राः सोऽयम्'-इति च तद्व्याख्या। वैज्ञानिक-व्याख्यान मपि तत उत्तर मुक्तं सप्तादित्यरश्मय इति वदन्ति, मन्त्रविद इति शेषः।

अथेह निरुक्तानुक्त मपि किञ्चित् तर्कयामि—

(१) पलितस्येतिपदस्य वृद्धस्येत्यर्थोऽपि स्यात्। यथा—'युवानं सन्तं पलितो जगार (ऋ० सं० १०.५५.५.)'-'पलितो जामदग्नियो न सञ्जानाति (तै० सं० ७. १. ९. १.)'-'न वा ऊर्वौ पलितौ सञ्जानाते (ता० ब्रा० २१. १०. ६.)'-'भरद्वाजो ह वै कृशो दीर्घः पलित आस (ऐ० ब्रा० ३. ५५.)'-इत्येतेषु।

(२) लोके जुहोतेरेव कर्त्तरि होतृशब्दः सम्पद्यते; वेदे तु ह्वयतेरपि (पा० ६. १. ३४.); किञ्च लोके कर्त्तर्येव, वेदे तु स्यात् कर्मण्यपि। जुहोतेर्दाने आदाने चवृत्तिरवगम्यते धातु-पाठात्; प्रीणने च भाष्यात्; ह्वयतेः खलु स्पर्द्धायां शब्दे च। अस्ति आदित्यस्य वृष्टिहेतुत्वमिति दातृत्वम्, रसहरणादा-दातृत्वम्, तमोहरणादिभिः प्रीणयितृत्वम्, सर्वग्रहोपग्रहबन्धन-नाभिरूपेणैकत्रावस्थानात् स्पर्द्धाकत्वम्, तापदत्वात् तत्सम्बद्ध-वायुहेतुशब्दजनकत्व मिति शब्दकत्वञ्च। तदत्र होतुरित्यस्य दान-

कर्त्तुः, आदानकर्त्तुः, प्रीणनकर्त्तुः, स्पर्शाकर्त्तुः, शब्दकर्त्तुश्चेति पञ्चैव प्रतिवचनानि किं न स्युः। स्पर्शाकरण माह्वान मित्यनर्थान्तरम्, ग्रहोपग्रहाणा माकर्षण मेवात्रादित्यस्याह्वानं गम्यते स्फुटम्।

(३) विश्पतिः प्रजापतिश्चाभिन्नः। प्रजापतेः प्रजोत्पादकत्वं श्रुतिस्मृतिषु प्रसिद्धम्। अत इह पालन मुत्पादन मेव गम्यते। अन्यथा पलितस्य:=पालयितुरित्युक्त्वा विश्पतिं=पालयितार-मिति कथनं कथं न पुनरुक्तं प्रतीयादिति ध्येयम्।

तदिहाधिदैवतार्थपक्षे इमानि विज्ञानान्युपदिष्टानि भवन्ति—

अग्निः पृथिव्यां सर्वत्र प्रयोजनीयः, स्नेहयोगाद् वर्द्धते च। वायुर्नभोमध्यचारी सर्वव्यापी च। आदित्यः सर्वेषा मस्माकं पालयिता, आदित्यः सर्वेष्वस्मासु वृद्धः पूर्वजः, आदित्यो वृष्टि-जलानां दाता, आदित्यो वाष्पाणा माहर्त्ता, आदित्यः प्रका-शक इति प्रीणयिता, आदित्यो ग्रहोपग्रहाणा माह्वाता= आकर्षयिता, आदित्यः शब्दहेतुश्च, आदित्यः प्रजोत्पादकः, आदित्यः सप्तसङ्ख्याकरश्मियुक्तः। आदित्यरश्मयश्च सर्वत्र प्रसरणशीलाः। अग्निवाय्वादित्याना मन्योन्यभर्त्तव्यरूपो भाग-हारिरूपश्च भ्रातृभावोऽस्ति। सर्वेष्वेषु आदित्यस्यैव प्राधान्यं चेति बोध्यम्॥

अथात्राध्यात्मपक्षे सायणानुक्तमपि किञ्चिद् वच्मि—"अत्र" 'तत्र' त्रिविधे ज्योतिषि एव व्यापकत्वेन तन्मयत्वेन वा स्थितम्, 'सप्तपुत्रम्' भूरादिसप्तलोका एव पुत्रस्थानीया यस्य तम्, सर्पणशीलं जगदिदं पुत्रस्थानीयं वा यस्य तम्, "विश्पतिं" 'सर्वस्य पातारं' जगत्पालयितारम् ( विशः प्रजाः, तासां सर्वासां पालकम् ), परमात्मानम् "अपश्यम्"-इति॥

[ २ ]

५३—१६—त्रीणि चक्राणीति। तद्यथा—ऋ० सं० १. १५७. ३; १८३. १; ४. ३६. १; १०. ४१. १; ८५. १४। सप्तचक्रमपि श्रूयते—१. १६४. ३; १२; २. ४०. ३। अष्टाचक्रमपि अथ० सं० ११. ४. २२। वस्तुतः एकचक्रं रथ मित्युक्ते सूर्यस्य, सौरजगन्मण्डलस्य, भ्राम्यमानकालस्य वा बोधो भवति; त्रिचक्रमित्युक्ते त्रिलोकाभिन्न-चक्रत्रयोपेतस्य सौरजगन्मण्डलस्य तथाविधकालस्य वा बोधः; एवं सप्तचक्रमित्युक्ते चक्राकार सोमादिपृथिव्यन्तसप्तग्रहोपेतस्य सूर्यस्यैव बोधः; अथाष्टचक्रमित्युक्ते सूर्यसहिताष्टग्रहोपेतस्य सौरजगन्मण्डलस्य, तादृशस्य महाकालस्य वा बोधो जायत इति।

५३—१७—रंहण०। "रथो रंहतेर्गतिकर्मणः, स्थिरतेर्वा स्याद् विपरीतस्य, रममाणोऽस्मिंस्तिष्ठतीति वा, रपतेर्वा, रसतेर्वा"-इति निरु० ६. २. १। रंहणस्वभावमित्याद्युक्त्या सूर्यस्य रथारोहणपूर्वक गतिमत्त्वं सूचितम्; पौराणकालजातस्यैतस्य सायणस्य नैतच्चित्रम्, कविकल्पनायां वा कास्ति वक्तव्यता। नैरुक्तार्थपर्यालोचनया तु न तथा गम्यते; स्थिरतेर्विपरीतस्य च भवति रथ मिति सूर्यः स्थिर इत्येव गम्यते। वस्तुतोऽत्र मन्त्रे एकचक्रं रथं सौरजगन्मण्डलं, महाकालचक्रं वा मन्तव्यम्; तथैव नैरुक्तदर्शनात्॥

५४—२—वायुरिति। अपि स्यात् जन्मकालदोषत एवैव मुक्त मिह सायणेन? निरुक्ते तु "सप्तादित्यरश्मय इति वदन्ति"-इत्युक्त्वा तदुदाहरणप्रदर्शनायैवोद्धृत एष मन्त्रः सप्त युञ्जन्तीति। ततः 'अश्वः' इत्यस्य 'आदित्यः'-इत्यर्थः, 'सप्तनामा'-इत्यस्य

त्यादित्य एवार्थः "सप्तनामादित्यः ; सप्तास्मै रश्मयो रसानभि-सन्नामयन्ति"-इति स्फुटम्। तथाच सूर्यएव एकत्र स्थितः सोम-मङ्गल-बुध-गुरु-शुक्र-शनि-राहु ( पृथिवी )-इतिसप्तग्रहगैः सुतरां सप्तधा विभक्तैः रश्मिभिरिमं ग्रहोपग्रहादिकल्पितं सौरजगच्चक्रं वहति भ्रामयतीति भावः। बहुत्र रश्मीनाञ्च साक्षाद् वाह-कत्वं श्रूयते। तद्यथा—"उदु त्यं जातवेदसं देवं वहन्ति केतवः"-इति ( ऋ० सं० १. ५०. १ )। तत्र सप्तसु लोकेषु सूर्य-तापप्रापकत्वरूपं वाहकत्व मेव रश्मीनां गम्यते। वस्तुतो जगद्वाहकत्वं स्थिरस्य सूर्यस्यैव एकस्य, रश्मीनां तत्साधनत्वमिति सूर्यस्याश्वत्वं रश्मीनाञ्चाश्ववल्गात्व मिति सिद्धान्तः। अश्वरश-नाया रश्मीति नाम प्रसिद्धम्, तत्साम्यादेव दिवाकरनिकर-स्यापि विज्ञानौपचारिकं नाम सम्पन्नं रश्मीति च स्यान्नासङ्गत मिति।

५४—४—च्छिद्र०। भूरादिलोकत्रय मेव अत्र नाभित्रय-मिष्टं गम्यते।

५४—५—अजरम्। जगतोऽविनाशित्वपक्षे तु वक्तव्य मेव नास्ति, कालचक्रविशेषणेऽपि तथैव; पक्षान्तरे आकल्प-स्थायीत्यर्थः।

५४—५—अनर्वम्। 'अप्रत्यृत मन्यस्मिन्'-इति यास्कः। 'अनाश्रितम्'-इति तत्र दौर्गी वृत्तिः। अनन्याश्रितमिति भावः ; तथाचैतच्चक्रं सूर्यमात्राश्रितमितीह विज्ञानोपदेशः प्रतीयते।

५४—८—यद्वेति। इत आरभ्य व्याख्यान मेव यास्क-सम्मतम्, पूर्वकथितन्तु स्वकपोलकल्पित मेव ; यास्काद्यनुक्तेः। तत्रापि रश्मीनां सप्तत्वापादने युक्ति मबुद्ध्वेव यदुक्तं सप्तप्रकारे-

त्यादि युञ्जन्तीत्यन्तम्, तत्त्वयास्कीय मेव। वस्तुतः सूर्यरश्मयः सौरचक्रस्थितेषु सप्तग्रहेषु व्याप्ता इत्येव सप्तविभागाः सप्तैवोच्यन्ते। यद्यपि नव ग्रहा इत्यस्ति वादः, परं केतुर्न राहुतो विभिन्न इति सूर्याद्यास्तेऽष्टावेव। राहुश्च पृथिव्या एव नामान्तरं बुध्यते; पृथिव्याश्छायापाते राहुणा ग्रस्त इति प्रवादात्। तत्रैकः सूर्यः स्थिरः, स एवान्यान् सप्त ग्रहान् स्वरश्मिभिर्व्याप्य रसहरणादिकं करोति; सप्तानाञ्चैषां सूर्येण सम्बन्धो योगः खलु रश्मिकृत एवेत्युक्त मृषिणा सप्त युञ्जन्तीति॥

५५—६—(नि० ४.२७. = नि० ४.४.६.)। अथ हि ज्ञायते निरुक्तकाले यद्यप्यासीदेव विज्ञानचर्चा सायणादिकालतोऽप्यधिकैव, परं न मन्त्रप्रकटनकालतुल्येति; अतस्तदापि सर्ववेदमन्त्राणां प्रकृतार्थनिर्वचनं स्थितं दुरूह मेवेति। अन्यथा कथं नोक्त मिह यास्केन रश्मीनां सप्तत्वनिदानं सुव्यक्त मिति ध्येयम्। स्वय मेवोक्तं च तेनान्यत्र— "सांशयिकस्तृतीयः पादः"-इति (७.३.२)। अथवा नासीदेव तदानीं रश्मीनां सप्तत्वे काचिद् जिज्ञासा; सर्वेषा मेव विज्ञानबाहुल्यादिति। अपिवा यदुक्त मिह यास्केन सप्तनामेतिपदनिर्वचनावसरे— "सप्तैनं ऋषयः स्तुवन्ति"-इति, तेनैव प्रकटितं सप्तभुवनव्यापित्वनिबन्धनं रश्मीनां सप्तत्वम्। 'एनम्' आदित्यं 'सप्त' 'ऋषयः' = ज्योतींषि = भुवनानि = तत्स्था जीवाः 'स्तुवन्ति'। तदेवं सप्तभिः सप्तभुवनसंस्थैर्जीवैः नम्यते स्तूयत इति तन्निर्वचनं सम्पन्नम्। "सप्त ऋषीणानि = ज्योतींषि, तेभ्यः पर आदित्यः"-इत्यादीनि (१.३.२; १२.२.१८.) च नैरुक्तवचनानीहानुसन्धेयानि॥

---

[ २ ]

५५—८— इम मिति। अस्मन्मते त्वस्यैवं व्याख्यया भवितव्यम्—'इमं रथं' पूर्ववर्णितं सौरजगन्मण्डलम्, 'ये' यानि 'सप्त' भुवनानि, पूर्वमन्त्रे उक्तानि सोमादिग्रहात्मकानि, तान्येव 'अधि तस्थुः' [ 'छन्दसि लुङ्लङ्लिटः'–इति ( पा० ३.४.६. ) धात्वर्थसम्बन्धे सर्वकालेषु लिट् ] चिर मधितिष्ठन्ति। अत एव स रथः सप्तचक्रो ऽपि व्यपदेश्यः। एतेन तानि सप्तैव भुवनानि चक्रवद् गोलाकाराणीति, चक्रवद्भ्रमणशीलानीति च सूचितम्। तादृशं 'सप्तचक्रं' रथं 'सप्त अश्वाः' सुतरां सप्तधा विभक्ताः [अशनं व्यापनं] व्यापनशीलाः रश्मयः 'वहन्ति' सूर्याभिमुखं नयन्ति ; तानि तु भुवनानि विपरीतं यातुं यतन्ते, तत एव भ्रमन्ति, अतो 'वहन्ति' –इत्येतस्य भ्रामयन्तीत्येवार्थः पर्यवस्यते। 'सप्त' भुवनानि तानि 'स्वसारः' स्वसृभावापन्नानि। परस्पर मुपकार्योपकारकभावेन सम्बद्धानि, एकविधानि, एकपितृकाणीति च रूपकार्थः ; स्वरादित्यः, तेन सारितानीति तु प्रकृतार्थः ; "स्वसा— सु असा, स्वेषु सीदतीति वा"–इति च यास्कीयोऽर्थः ( ११.३.११. )। तदत्र चत्वारि विज्ञानान्युपलभ्यन्ते— पृथिव्यादीनि सप्तैव भुवनानि स्वसृवत् परस्परसम्बद्धानि, एकविधानि, एकप्रभवाणि चेत्याद्यम् ; सूर्येण सारितानि चालितानि भवन्तीति द्वितीयम् ; सुन्दरं विद्यन्ते, अविध्वंसमानान्येव चिरात् सन्तीति यावदिति तृतीयम् ; स्वेषु आत्मीयेष्वेव बलेषु स्वस्वकक्षासु सन्ति ; अन्यथा रविकराकर्षणबलात् रवावेवापतन्ति विनश्येयुरिति चतुर्थम्। 'यत्र' येषु सप्तसु 'गवां' सूर्यकिरणानां 'सप्तनाम' सप्तधा विभक्ता अवयवाः 'निहिता' आसक्ताः सन्ति, चिर मिति शेषः। तानि सप्तैव

'अभि सन्नवन्ते' आदित्याभिमुखं सदैव गच्छन्ति। एतेन सर्वग्रहाणां प्राङ्मुखाभिगमनं स्फुटम्। "सन्नवन्ते— आदित्ये एकं भवन्तीत्यधिदैवतम्, अथाध्यात्मम्—एतस्मिन्नात्मन्येकं भवन्ति" —इति नैरुक्तम् १३.२.१५। एतस्मादेव नैरुक्तबलादस्यापि मन्त्रस्य स्यादाध्यात्मिकी व्याख्येति दिक्॥

---

[ ४ ]

५७—१६— मास्तीत्यर्थ इति। सायणीयैतद्भाष्यानुसारतोऽस्यैषोऽभिप्रायः प्रतीयते,— अग्निविशिष्ट एष लोकः पूर्वम् अग्निशून्ये परमात्मनि विलीन आसीत्, ततो जायमानो न केनापि दृष्टः; यतः तादृशे आदिसृष्टिकाले भूमिसम्बन्धिप्राणरक्तविशिष्टो सजीवदेहः क्वापि नासीत्, तत एव प्रष्टा प्रश्नोत्तरदाता च नैवासीदिति।

अस्मन्मते तु ददर्शेति सार्वकालिके लिटि रूपम्; अत एव तत उक्तं बिभर्त्तीति वर्त्तमानार्थे लड्वचनं सङ्गच्छते। सृष्टिविषयकतत्त्वोपदेशद माद्यं चरणम्, स्थितिविषयकतत्त्वोपदेशदं द्वितीयम्, लयविषयकतत्त्वोपदेशदञ्च तृतीयम्, सर्वोपसंहारवचनं चान्तिमम्। तथाचात्रेमे उपदेशाः प्रतीयन्ते— (१) एष विश्वः पूर्वं नासीत्, सृष्टिकर्त्ता सृष्ट इति सत्यम्; परं सैष त्रैकालिकः सृष्टिव्यापारो न केनापि दृष्टः दृश्यते द्रक्ष्यते वा। किञ्च (२) एष विश्वो व्यक्तः, एतस्य कारण मव्यक्तम्, तेनैवाव्यक्तेन स्वभावेन धृतः पोषितश्चैषो भवति सदैव। अपि (३) पार्थिवे शरीरे प्राणो रक्तञ्चेति द्वे एव प्रधाने, तथाच शारीरे प्राणयन्त्रं रक्तयन्त्रं चेमे विशेषतो रक्षणीये। तादृशे च रक्तनिर्मिते प्राणन-

युक्ते पार्थिवदेहे समाश्रितो वासनाबद्धो जीवो देहं परित्यज्य न क्वाप्यन्यत्र याति, प्रत्युत देहाद्देहान्तर मेव भ्रमति, आमोक्षात् । अथ (४) सृष्टिस्थितिलयतत्त्वानि सदा साधारणैर्जीवैरगम्या-न्येव; पर मेतत् ज्ञातुं विद्वत्समीपे प्रश्नः कर्त्तव्यः; बहुषु च जीवेषु कश्चिदेको भाग्यवान् तादृशं प्रष्टुं यतते, नान्य इति ॥

—१९— परमेश्वरः । सिद्ध मित्थं परमेश्वरस्य सदैवादेहत्वं प्रत्यक्षायोग्यत्वञ्चेति । वस्तुत इह "अनया"-इति स्त्रीलिङ्ग-दर्शनात् साङ्ख्यमतसिद्धायाः प्रकृत्या एव कर्त्तृत्वं गम्यते; वेदे तु सैव 'अदितिः'-इति श्रूयते । वैदिकपुराणे लौकिकेतिहा-सादौ च सा अष्टपुत्रा; "अष्टौ पुत्रास अदितेः (ऋ० सं० १०.७२. ८,९ । शत० ब्रा० ३.१.३.२,३. )"-इत्यादिश्रवणात् । पृथिव्या-दीनि सप्त भुवनानि सप्त ग्रहाः, आदित्यश्चैक इत्यष्टौ ह्येव तदु-त्पन्नाः पुत्रस्थानीया इति दिक् ॥

---

[ ५ ]

५८—३—पाक इत्यादि । सर्व मेतद् व्याख्यान मधियज्ञम्। वस्तुतोऽस्य मन्त्रस्य आधिदैविकमन्त्रमध्यगत्वात् अधियज्ञपदानु-पेतत्वाच्च अधिदैवतव्याख्यान मेव युक्ततरम् । तथाहि— "पाकः पक्तव्यो भवति"-इति नैरुक्तम् ३.२.६ । 'पक्तव्यप्रज्ञः'-इति च तत्र दुर्गः । तथाचास्य प्रथमचरणस्य व्याख्यानं सायणीयेन तुल्यम् । "रश्मयोऽत्र देवा उच्यन्ते"-इति नैरु० १२.१.११ । "पादः पद्यतेः, तन्निधानात् पदम् । पशुपादप्रकृतिः । प्रभागपादः । प्रभागपाद-सामान्यादितराणि पदानि । एव मन्येषा मपि सत्त्वानाम्"-इति नैरु० २.२.३ । "अया एना इत्युपदेशस्य"-इति नैरु० ३.

४.४। 'प्रत्यक्षाभिधान मिहोपदेशोऽभिमतः'-इति तत्र देवराजः (नि० ३.२९.२१,२२.)। निहितानीत्यर्थे निहिता। "सुपां सुलुक् (पा० ७.१.३९.)"-इति शस आत्वे रूपम्। 'वत्से'-'बष्कये'-इत्यनयोरर्थौ तु सायणीयावेव ग्राह्यौ ; पर मिह यद्यपि सत्वनामसु बडिति प्रथमम् (नि० ३.१०.१.), तथापि तन्मूलिका कष्टकल्पना महती वंशस्तस्मान्नष्टानुकर्षण मिवैव स्यात्। अस्मन्मते तु पृथिव्यादीनां समाना मेषां ग्रहाणां लोकानां वा वत्स इव प्रियः सूर्य इति तस्य वत्सत्वव्यपदेशः ; किञ्च स हि वत्स इव गोरूपाणा मेषां दुग्धस्थानीयान् रसान् पिबति, पीतावशिष्टानन्यानपरान् पाययति चेति सिद्ध मित्थं तस्य वत्सत्व मेषां लोकानां गोत्वं च। इत एव गौरिति पृथिव्या नामान्तरं वेदलोकयोः प्रसिद्धम्, पृथिवीत्वं च प्राण्याद्याधारत्वरूपगुणभावात् सर्वेषा मेव लोकानाम्। 'बष्कयः' एकहायनो गोवत्सः। सर्वेष्वेवाब्देषु दिनर्त्वयनमासाङ्गाना मेकरूपत्वात् सूर्यस्य सदैवैकहायनत्वम्। अधीत्युपसर्गश्रुतेर्योग्यक्रियाध्याहर्त्तव्येति 'अधिष्ठितान्'-इति लभ्यते, तच्च सप्त तन्तूनित्यस्य विशेषणम्। सप्त तन्तवश्चेह सप्तलोकरूपसप्तगोषु सक्ताः, तन्तुनिर्मितवत्सबन्धन रज्जुरूपा रश्मय एव। गोजङ्घायां वत्सस्य बन्धन मार्यव्यवहारस्य। तदुक्तं विष्णुशर्मणा— "मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने"-इति। तन्तुशब्दस्य लुप्तोपमानतयार्थग्रहो ऽन्यत्रापि भवत्येव। तद्यथा— "तेषा मुत्पन्नतन्तूना मपत्यं दाय मर्हति" -इति म० सं० ९. २०२। गोबन्धनरज्ज्वा वत्सबन्धनरज्ज्वाश्च तन्तीति नाम लोके तन्तीति वेदे प्रसिद्ध मेव। तद्यथा "यस्य वाचा प्रजाः सर्वा गावस्तन्त्येव यन्त्रिताः"-इति भा० पु० ३.१५.९।

तथा—"न लङ्घयेद् वत्सतन्त्रीम्"—इति म० सं० ४.३८। "इयं तन्ती गवां माता"—इति तु म० ब्रा० १.८.८ ॥

---

[ ६ ]

५८—६—नेत्याह। 'नापृष्टः कस्य चिद् ब्रूयाद् न चान्यायेन पृच्छतः। जानन्नपि हि मेधावी जडवल्लोक आचरेत्'—इति म० स० २. ११०।

—९—श्रुतिः। छा० उ० ८,४,१।

—१०—निरुक्तम्। ४. ३. ३।

—११—लोकाः सप्त। 'सप्त इमे लोकाः'—इति मु० उ० २. १. ८। महा० भा० ३. १३। पौराणिकादिनये सप्त व्याहृतय एव सप्त लोकाः। तदाह योगियाज्ञवल्क्यः—

"भूराद्याश्चैव सत्यान्ताः सप्त व्याहृतयस्तथा।
लोकास्ता एव सप्तैते उपर्युपरि संस्थिताः॥"—इति,

तथा—'सप्त व्याहृतयः प्रोक्ताः पुरा यस्तु स्वयम्भुवा।
ता एव सप्त च्छन्दांसि लोकाः सप्त प्रकीर्त्तिताः॥"—इति,

तथा—(१) भवन्ति चास्मिन् भूतानि स्थावराणि चराणि च।
तस्माद् भूरिति विज्ञेया प्रथमा व्याहृतिः स्मृता॥

(२) भवन्ति भूयो भूतानि उपभोगक्षये पुनः।
कल्पान्ते उपभोगाय भुवस्तस्मात् प्रकीर्त्तिताः॥

(३) शीतोष्णवृष्टितेजांसि जायन्ते तानि वै सदा।
आलयः सुकृतीनाञ्च स्वर्लोकः स उदाहृतः॥

(४) अधरोत्तरलोकेभ्यो महांस्तु परिपालितः।
हृदयं सर्वलोकानां महस्तेन निगद्यते॥

(५) कल्पदाहप्रलीनास्तु प्राणिनो हि पुनः पुनः।
जायन्ते नु पुनः सर्गे जनस्तेन निगद्यते ॥
(६) सनकाद्यास्तपःसिद्धा ये चान्ये ब्रह्मणः सुताः।
अधिकारनिवृत्ताश्च तिष्ठन्त्यस्मिंस्ततस्तपः ॥
(७) सत्यन्तु सप्तमो लोको ब्रह्मणस्तदनन्तरम्।
सर्वेषां चैव लोकानां मूर्ध्नि सन्तिष्ठते सदा।
ज्ञानकर्म्मसु निष्ठानां तथा सत्यस्य भाषणात्।
प्राप्यते चोपभोगार्थं प्राप्य न च्यवते पुनः।
तत्सत्यं सप्तमो लोकस्तस्मादूर्द्ध्वं न विद्यते ॥"–इति ॥

अस्माभिस्तु वैदिकग्रन्थानामालोचनया ज्ञायते भूर्भुवस्स्वरिति तिस्र एव व्याहृतयः प्रधानाः, लोकवाचकाश्च त एव भूरादिशब्दाः; मह आदीनां तदन्तर्व्याहृतित्वेऽपि लोकवाचकत्वं बहुप्रयोगश्च नैवेति। तथाहि – 'स भूरिति व्याहरत् स भूमि मसृजत। × × ×। स भुवरिति व्याहरत् सोऽन्तरिक्ष मसृजत। + + +। स सुवरिति व्याहरत् स दिव मसृजत। + + +। एता वै व्याहृतय इमे लोकाः"–इति तै० ब्रा० २. २. ४. ३। तै० सं० १, ६. १०. २; ५. ५. ५. ३। तै० आ० ४. ४२. २। ऐ० ब्रा० ५. ५. ६; ८. २. ३; ३. २। शत० ब्रा० १. १. १. १३; २. ५. १३; ५. २. ५; १६; २. १. ४. १०। सा० ष० ब्रा० १. ६। आश्व० गृ० सू० ३. ४. १। आश्व० श्रौ० सू० २. १४. २८। कात्या० श्रौ० २. १. ६; १२. ४. १६। गोभि० गृ० सू० १. ८. १५। निरु० १३. १. ९। तदेवं प्रायः सर्वत्रैव संहितात्राह्मणसूत्रादिषु तिसृणामेवावगमः। प्राचीनस्मृतावपि प्रायस्तथैव; तद्यथा—'तिस्रो महाव्याहृतयोऽव्ययाः'–इति म० सं०

२. ८१ ; ७८ । याज्ञ० सं० १. १५ । तैत्तिरीयारण्यके तु तिसृणा मेव व्याहृतीनां लोकवाचकत्वम्, चतुर्थ्यास्तु ब्रह्मवाचकत्वं स्फुट माम्नातम् । तद्यथा— "भूर्भुवस्सुवरिति वा एतास्तिस्रो व्याहृतयः । तासा मु ह स्मैतां चतुर्थीं माहाचमस्यः प्रवेदयते मह इति । तद्ब्रह्म । स आत्मा"–इत्यादि ७. ५.१–३ । तैत्तिरीयखिलकाण्डे ( तै० आ० १०. २७. ), गोभिलीयसन्ध्यासूत्रादौ च यद्यपि सप्तव्याहृतीना मपि विद्यमानतोपलभ्यते, परं न हि तासां लोकवाचकत्वे श्रुत मस्ति किञ्चित् प्रमाणम् ; प्रत्युत प्रदर्शिततैत्तिरीयश्रुतिबलाद् यथा महसो ब्रह्मवाचकत्वं नूनं स्वीकार्यम्, तथैव स्यादन्यासा मपि पञ्चम्यादीनाम् । अस्त्यप्रयोगश्च मह आदीनाम् ; प्राणायामादिमात्रविषयत्वात् ।

अथापि मह इति सान्तस्य तेजोवाचत्वं लोके च, तथा महरिति रान्तस्यैव लोकवाचकत्वं पुराणादौ दृश्यते । तद्यथा— भाग० २. १. २८ ; ५. २८ ; ८. २०. ३३ ; मार्कं० १०१. २५ ; ४६. ३९ ; वायु० २१३. ६३२ । वैदिकसंहिताब्राह्मणेषु खलु रान्तो महःशब्दो बह्वनुसन्धानेनाप्येकोऽपि लभ्येत न वेति सन्देहः । तदयं सान्त एव महःशब्दः कालवशात् रान्ततां गत इत्येव सारम् ।

तदेवं यत् श्रूयते मुण्डकोपनिषदि 'सप्त इमे लोकाः'–इति, तत्र भूरादीनां सत्यान्तानां सप्तव्याहृतीनां ग्रहणे श्रुतिमानं किमपि स्याच्चेत् पुराणविद्भिर्भवेत् तत् प्रदर्शनीय मिति ॥

वस्तुतः प्रधानतो लोकास्त्रय एव । तथाहि – 'यस्य लोका इमे त्रयः'–इति अथ० सं० १०.२.२.३१ ; 'त्रयो लोकाः सम्मिता ब्राह्मणेन द्यौरेवासौ पृथिव्यन्तरिक्षम्'-इति च तत्रैव १२. ३. १. २० । 'त्रय इमे लोकाः'–इति तै० ब्रा० १. ७. १०. ६ । छा०

उप० २. २१. १। श्व० उ० ३. ५. १६। मनु० सं०—'त एव हि त्रयो लोकाः'—इति २. २३०, २३२, २३३; ११. २६१; १२. ८७। महाभा० १; ३; १२। रामा० १. ६. २; २. ८६. ४५; ६. १०२. २३। त एव चैते ऊर्ध्वाधोमध्येतित्रिधाक्लृप्तस्य-स्याण्डरूपसौरजगन्मण्डलस्य त्रयो भागाः। तथा चाथर्वणिकाः समामनन्ति—"त्रेधा भागो निहितो यः पुरा वो देवानां पितॄणां मर्त्यानाम्'—इति ११. १. १. ५। शतपथब्राह्मणेऽप्येवमेव—'अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति'—इति १३. १. ७. ३। मनुसंहितायामपि—'ताभ्यां स शकलाभ्यां च दिवं भूमिञ्च निर्ममे। मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम्'—इति १.१३। शाश्वत मपां स्थानं तु मेघोत्पत्तिस्थानव्यूहम्। 'अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः' —इति नैरु० ७. २. १। 'अयं हि सर्वतो मनुष्यैर्हितो ऽग्नि मेव तदस्मिंल्लोक आयातयति'—इत्येवमादि चैतरेयकम् २. ५. २।

तदित्थ मिदं निष्पन्नम्,— मरणधर्मिणा मस्माकं स्थित्युत्पत्ति-मरणनिलय एष एव भूलोकः; मरणानन्तर माजनु वायवीयदेह-स्थितानां मस्मत्पितॄणां विहरणस्थानं भुवः = अन्तरिक्षलोकः, एष आकाश इति यावत्; 'देवानां' सूर्यरश्मीनां (नैरु० १२. ४. ५.—निघ० ५. ६. २६.) मूलस्थानं स्वः = द्युलोकः, सूर्यः सूर्य-स्यातिसमीपगतमण्डलञ्च। स्वरिति सूर्यस्य नामान्तरम्, तत्स-न्निहितस्थानस्य च तत्सम्बन्धेनैव। अत एव निघण्टौ 'स्वः। पृश्निः। नाकः। गौः। विष्टप्। नभः। इति साधारणानि'—इत्युक्तम् १. ४। 'साधारणानि उत्तराणि षट् दिवश्च आदित्यस्य च'—इति तद्भाष्यं यास्कीयम् २. ४. १। 'स्वरादित्यो भवति'

–इत्यादिः, 'एतेन द्यौर्व्याख्याता'–इत्यन्तो नैरुक्तग्रन्थश्चेहालोच्यः (२. ४. २.)। आदित्यवाचकस्वरादिशब्दाना मुदाहरणानि च देवराजीयनैघण्टुकव्याख्यानादवगन्तव्यानि। 'स्वर्गकामो यजेत (शा० ता० ब्रा० १६. ३. ३.)'–इत्येवमादौ तु प्रायः सुखभोग-साधनं लोकान्तर मेव गम्यते। सोमलोक एव पितॄणां स्वर्ग-भोगाय विद्यत इति च बृहदारण्यकच्छान्दोग्यादिश्रुतिभ्यो ऽवगम्यते (६. २. १६; ५. १०. ४.)। सोमलोकश्चन्द्रलोक इत्यनर्थान्तरम्। चन्द्रलोकस्तु पृथिवीसन्निहितो ऽन्तरीक्षे एव; 'चन्द्रमा अप्स्व-न्तरा (ऋ० सं० १. १०५. १.)'–इत्यादिश्रुतेः। 'दिवि सोमो अधिश्रितः (ऋ० सं० १०. ८५. १.)'–इत्यस्य तु 'दिवि' सूर्ये 'सोमः' चन्द्रः 'अधिश्रितः' आश्रितः इत्येवार्थः। एव मेव हि शतपथादुक्तं पितॄणा मन्तरीक्षवासित्व मप्यविरुद्धम्।

अथार्षज्योतिषशास्त्रे सूर्यः, सोमः, मङ्गलः, बुधः, बृहस्पतिः, शुक्रः, शनैश्चरः, राहुः, केतुश्चेति नव ग्रहाः प्रसिद्धाः। तत्र सोमः = चन्द्रो यद्यपि पृथिवीसन्निहित एकः, परं शनैश्चरादौ भुक्तस्तुल्या अन्येऽपि बहवोऽपि; तेषां सर्वेषा मेव वदे चन्द्र इत्येव ग्रहण मिष्टम्; चन्द्रत्वेन सर्वेषा मेवैक्यात्। राहुरिति तु पृथिव्या एव नामान्तरं गम्यते; पृथिव्याश्छायापातस्यैव राहुग्रास-व्यपदेशात्। केतुस्तु राहोरपरभाग इति प्रसिद्धेस्ततोऽभिन्न एव। एषु नवसु वस्तुतोऽष्टसु सूर्यो द्युरूपो द्युलोकमध्यस्थस्तदन्येषां सोमादीनां सप्तानां धारको भ्रामको रक्षकश्च; सोमादयस्त्विमे सप्तैव भूलोकाः; 'भवत्यस्यां सर्व मिति भूः'–इति शब्दप्रवृत्ति-निमित्तस्यात्र सर्वत्रैव प्रतीतेः। अतएव 'चकार मह्रीरवनीरहभ्यः (७. ८७. १.)', 'अवनयो न यन्ति (७. १९०. ७.)', 'सचन्त

क्षितिषु ध्रुवासु ( १. ७३. ४. )', 'वृषभः क्षितीनाम् ( १. १७७. ४. )', 'क्षितीः सुभगो नाम पुष्यन् ( ५. ३७. ४. )', 'ध्रुवासु त्वासु क्षितिषु क्षियन्तः ( ७. ८८. ७. )', 'क्षितीः करत ऊर्जयन्तीः ( ७. ६५. २. )'–इत्येवमादिषु ऋक्षु सप्तवनिक्षितिशब्दाना मन्यत्रान्यत्र च बहुत्र भूवाचकक्षौण्यादिशब्दानां च बहुवचनान्तः प्रयोगः सङ्गच्छते । यद्यपि तत्र सर्वत्रैव सायणीयभाष्ये ऽन्यविध मेव व्याख्यानं दृश्यते सत्यम्, परं न तत् प्रकृतं भवितु मर्हति ; तत्र स्वकपोलकल्पनाप्रतीतेः, सूर्यस्य सप्ततन्तु-सप्तजिह्व-सप्तास्य-सप्ताश्व-सप्तरश्मीतिपञ्चनामश्रुतेः, परिस्फुटार्थान्यबहुमन्त्राम्नान-श्रवणाच्च ।

अथ सोमादीना मेषां लोकानां ग्रह इति व्यपदेशः स्यादध्युगीयः ; मन्त्रेषु तदर्थग्रहशब्दादर्शनात्, ऋषिशब्दत एव तदर्थप्रतीतेश्च । तद्यथा— "तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन् यशो निहितं विश्वरूपम् । अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः"–इति अथ० सं० १०. २६. ८ । शतपथब्राह्मणे ऽप्ययं मन्त्रः श्रूयते किञ्चित्पाठव्यतिक्रमेण 'अर्वाग्बिलश्चमस०—० ब्रह्मणा संविदानः'-इत्येवं तत्र पाठः ( १४. ५. २. ४. ) । "यत्रा सप्त ऋषीन् पर एक माहुः"–इति ऋक् सं० ८. ३. १७. २ । 'यत्र एतानि सप्त ऋषीणानि ज्योतींषि, तेभ्यः पर आदित्यः, तानि एतस्मिन् एकं भवन्तीत्यधिदैवतम्'–इति च तस्या यास्ककृतं व्याख्यानम् । सोमादीनां सर्वेषा मेव ग्रहाणां लोकानां वा नक्तं ज्योतीरूपेणावभासात् वेदे लोके च ज्योतिरिति व्यवहारः । एषा मेव गत्यादिनिरूपणाय हि ज्योतिःशास्त्र मिति प्रसिद्धम् । 'सूर स्मिन्ज्योतिः'–इति ऐ० आ० २. ४. ७, ८ । 'द्वितीय मिव चाकाशं

पुष्यज्योतिर्गणावृतम्'-इति च रामा० ५. १०. ७। ऋक्संहिता-यान्तु लोकाना मेषां ज्योतिष्मत्त्वं स्फुट मेव श्रुतम्—"लोका यत्र ज्योतिष्मन्तस्तत्र मा ममृतं कृधि"-इति ९. ११३. ९। तथा पृथिव्या ज्योतिष्मत्वं च श्रूयते तत्रैव— "ज्योतिष्मती मदितिं धारयत् क्षितिं स्वर्वतीम्'-इति १. १३६. ३। अस्य भूलकस्य च ज्योतिष्मत्व माथर्वणिका अपि समामनन्ति — "ज्योतिष्मन्त मभि लोकं जयेतम्"-इति सं० ८. ३. १. ६। "सप्त ऋषयो भूत-कृतः"-इति चाथर्वणम् ११. १. १. १; ३। भूतकृत, भूमिः, भूः इत्येतानि समानार्थानि पदानि। तथाचावगम्यते समाना मेवैषां ग्रहेतिप्रसिद्धानां सोमादिलोकानां भूत्त्वम्। भूत्त्वं पृथि-वीत्वं चानर्थान्तर मित्यत्र च किमस्ति वक्तव्यम्।

अतएव सूर्यस्य क्षितिगणसम्बन्धिनाभित्वं स्थूणावत्त्वं चाम-नन्ति बह्वृचाः— "वैश्वानर! नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययन्थ"-इति १. ५९. २। सौरजगन्मण्डलस्यास्य विश्व-ब्रह्माण्डस्य नाभिः = बन्धनं सूर्य एवेति च बहुधा बहुत्रैवाम्ना-तम्— "विश्वस्य नाभिं चरतो ध्रुवस्य (ऋ० सं० १०. ५. ३.)" -इत्यादि। समाना मासां पृथिवीनां भगिनीत्वेन वर्णन मन्य-त्रापि श्रूयते। तद्यथा—"सप्त स्वसॄररुषीर्वावशानो विद्वान्"-इति ऋ० सं० १०. ५. ५। "लोकान् सूर्यवतो जयेम (सं० ९. ३. १. १८.)"-इत्याथर्वणिकश्रुत्यादितः समाना मेवैषां लोकानां सौरजगदन्तःस्थितत्वं चावगम्यते।

अपि सूर्य एवैक आसां सप्तपृथिवीनां रक्षको भ्रामकश्चेत्यपि बहुश्रुतितोऽवगम्यते स्फुटम्। तद्यथा— "सूर्यस्य रश्मीनन्नु याः सञ्चरन्ति मरीचीर्वा या अनुसञ्चरन्ति। यासा मृषभो दूरतो

वाजिनीवान् सद्यः सर्वाँल्लोकान् पर्येति रक्षन्"–इति अथ० सं० ४. ८. ३. ५।

अमुष्मिन् सौरमण्डले सूर्यस्य एकत्र स्थायित्वं गतिविरहत्वं च श्रूयते। तद्यथा – "आ सूर्यो बृहतस्तिष्ठदज्रान्"–इति ऋ० सं० ४. १. १०। स्थाधातोर्गतिनिवृत्यर्थः प्रसिद्ध एवेति।

अथान्ययोरपि अह्नयोश्च सौरजगन्मण्डलेऽस्तित्वं विज्ञातं वा आसीत् पूर्वयुगीयानां ऋषीणाम्? तथाहि—

"नव भूमीः समुद्रा उच्छिष्टे ऽधिश्रिताः दिवः।
आ सूर्यो भात्युच्छिष्टे ऽहोरात्रे अपि तन्मयि॥"
–इति अथ० सं० ११. ७. १. १४।

तदेवं युगावसानकालेऽतियत्नतो रक्षिते ऽपि चतुर्वेदे तदानीन्तना ज्यौतिषग्रन्था विलयं गता इत्यत एवाद्यप्रचलितार्यज्योतिषेषु न तयोल्लेख इति च सम्भाव्यते; नान्यथा प्रदर्शितः श्रौतो नवभूमिवादः सङ्गच्छत इति दिक्॥

५९—१६—अर्चिरादिमार्गेण। छा० उप० ५. १०. १, २। बृह० उप० ६. २. १५।

—२०—य एषः। छा० उप० १. ६. ६।

—२२—'त्रिविटान्भूलोकांश्च'–इति मुद्रणशोधकप्रमादजः; 'त्रिविधान् द्युलोकान् त्रिविधान् भूलोकांश्च'–इत्येव पाठो विशुद्धः।

६०—१—निगमः। ऋ० सं० २. २७. ८। एतस्य मन्त्रस्य च सायणीयं भाष्यं ग्रहस्वरूपाविज्ञानमूलक मिति गम्यते; तत्रैव भाष्ये दृष्टान्तत्वेन प्रदर्शितस्य 'यो द्वितीयस्यां तृतीयस्यां पृथिव्यां (वा० सं० ५. ९.)'–इत्यस्य च सोमादिग्रहपरत्वे का क्षतिः? यद्वा स्यात्तत्र त्रिलोकपरत्व मिहान्यथैव तेन किमिति। तत्त्वतस्तु

एतत्पृथिवीवासिना अस्माकं स्वावासलोकादेतस्मात् अन्ये ये सन्ति षट् लोकाः, य इदानीं ग्रहा उच्यन्ते ज्यौतिषिकैः, तेषु सोमादीनां त्रयाणां पृथिवीसान्निध्यात् पृथिवीत्वेनैव वेदे बहुत्र व्यपदेशः, बृहस्पत्यादीनां तु त्रयाणा मितो बहुदूरस्थत्वात् द्युत्वेनैवेति ॥

—४— श्रुतेः। काठ० उ० २. १. ११।

अस्मन्मते त्वस्य मन्त्रस्य तृतीयचरणान्त एव प्रश्नः, तुरीयचरण मेव तत्समाधानम्, किञ्च "षट् रजांसि" सप्तानां भूरादिलोकानां राहादिग्रहाणां वा अन्तरालभूतानि आकाशान्येव; पूर्वमन्त्रे सप्तलोकानां स्थितिकारणं वत्सभूतः सूर्य इत्युपदिश्य, अत्र तेषा मन्तरालभूतानां सुतरां षट्खण्डाना माकाशानां स्थितिकारणस्यैव वक्तव्यावशिष्टत्वात्। तथाचास्यैव मर्थः सम्पद्यते—

'इमा' इमानि 'षट् रजांसि' आकाशानि 'यः' 'वि तस्तम्भ' विष्टभ्नाति, सदैव विष्टभ्नन्नस्ति, तम् 'अचिकित्वान्' अहम्, 'अत्र' विषये 'चिकितुषश्चित् कवीन्' पृच्छामि;—यतः अहं 'न विद्वान्' अतः 'विद्मने' एव पृच्छामीति। एतत्प्रश्नस्योत्तर मिदम्—'अजस्य' ब्रह्मणः 'रूपे' प्रतिरूपे आकाशे, तन्मूले इति यावत् 'किमपि' अनिर्वाच्यम् 'एकं स्वित्' सङ्ख्यैक मेव अस्तीति। तथाहि बृहदारण्यके— "अथ ह वाचक्नव्युवाच"—इत्युपक्रम्य, "आकाश एव तदोतं च प्रोतं चेति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। स होवाचैतद्वै तदक्षरं गार्गि"—इत्यादि ५. ८. ८। सायणप्रदर्शितं "लोका रजांस्युच्यन्ते"—इति नैरुक्त मप्यत्रा विरुद्ध मेव; आकाशापरपर्यायस्यान्तरीक्षस्य लोकत्वेन सर्वत्र स्वीकारात्। "अयं षडुर्वीरमिमीत धीरो न याभ्यो भुवनं कच्चनारे (ऋक्० सं० ६. ४७. ३.)"—इत्येवमादयश्च श्रुतय एव मेव व्याख्येयाः॥

उर्वी पृथिवीत्यनर्थान्तरम्; पृथिवीति चान्तरिक्षनामसु नवमं पदम् ( निघ० १. ३. ), "स दाधार पृथिवीं द्या मुतेमाम् ( ऋ० सं० १०. १२१. १ )"–इति च स्कन्दस्वाम्यादिप्रदर्शित-स्तन्निगम इति ॥

---

[ ७ ]

६० —६—इह ब्रवीतु। 'अस्य' पुरतो दृश्यमानस्य, 'वामस्य' वननीयस्य, आदित्यस्य यत् 'पदम्' विद्युद्रूपम् 'इह' सर्वत्रान्त-रिक्षे 'निहितं' निगूढं स्थित मस्ति, 'ईम्' एतत् 'यः' कश्चन 'वेद' तत्त्वतो जानाति, सः 'अङ्ग' क्षिप्रं 'ब्रवीतु', तत् तस्य मिति यावत्। इत्येवात्र प्रश्नः प्रतीयते। तस्योत्तरम्— 'वेः' इति। विः = अन्नम् इति शत ब्रा० १४. ८. १३. ३। "विरिति शकुनि-नाम, वेतेर्गतिकर्म्मणः"–इति च निरुक्तम् २. २. २। चतुर्थ्यर्थे षष्ठी ( पा० सू० २.३.६२. )। अन्नोत्पत्त्यर्थम्, अस्माकं गतिसाधन-श्चेति। 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढ मस्य पांसुरे ( ऋ० सं० १. २. ७. २ )'–इतिमन्त्रलिङ्गात् ज्ञात मेवा-दित्यस्यैकं पदं सर्वत्रान्तरिक्षे निगूढ मिति। "प्यायनेऽन्तरिक्षे पदं न दृश्यते; अपिवोपमार्थे स्यात् समूढ मस्य पांसुल इव पदं न दृश्यते"–इति तद्व्याख्यायां नैरुक्तम् १२. २. ८। "स्वपन मेत-न्माध्यमिकं ज्योतिरनित्यदर्शनम्"–इति च ५. १. ३। एत-देव वृष्टिनिदानम्। तच्चोक्तं यास्केन —"अपाञ्च ज्योतिषश्च मिश्री-भावकर्मणो वर्षकर्म जायते"–इति २. ५. २। 'वृष्टेरन्नं ततः प्रजाः'–इति तु प्रसिद्ध मेव। तदन्नोत्पत्तिमूलवर्षप्रकारं चोत्त-रार्द्धेन प्रकटयति— शीर्ष्णः इत्यादिना "कृष्णं नियानं हरयः

( ऋ० सं० २. १. २३. १. )"—इतिमन्त्रे वर्षप्रकारः स्फुटतरः । एतस्यैव मन्त्रस्य व्याख्यावसरे उद्धृतयैव ब्राह्मणग्रन्थो ( शत० ब्रा० २. ४. १०. २. ) यास्केन— "अग्निर्वा इतो वृष्टिं समीरयति, धामच्छद् दिवि भूत्वा वर्षति, मरुतः सृष्टां वृष्टिं नयन्ति, यदासावादित्योऽग्निं रश्मिभिः पर्यावर्त्तते ऽथ वर्षतीति"—इति ७. ७. १ । दुह्रते इति 'बहुलं छन्दसि ( पा० सू० ७. १. ८. )'-इति रुडागमे रूपम् । 'पदा' आदित्यांशरूपेण तेनैव वैद्युताग्निना सहायभूतेनेति । "शिर आदित्यो भवति, यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति । इद मपीतच्छिर एतस्मादेव ; समाश्रितान्येतदिन्द्रियाणि भवन्ति"-इति च नैरुक्तम् ४. २. ५ ।

तदत्र मन्त्रे एतानि विज्ञानान्युपदिष्टानि— (१) यदिदं माध्यमिकं ज्योतिर्विद्युदिति, तदस्यैवादित्यस्यांशरूपम् । (२) तदेवास्माकं मन्त्रहेतुर्गतिसाधनञ्च । ( ३ ) तत्साहाय्येनैवात्र वृष्टिर्भवति । ( ४ ) आदित्यस्यामुष्य शिरोवत् सर्वजगन्मध्यस्थत्वं सर्वजगदाश्रयत्वञ्च । ( ५ ) प्रकाशितेष्वादित्यरश्मिषु नक्षत्रसोमादीनां सर्वेषा मेव ज्योतिषां ज्योतींष्यभिभूतानि भवन्ति । ( ६ ) आदित्यरश्मिभिरेव पार्थिवरसाः समुन्नीयन्ते चेति षट् ॥

६०—१० । 'मविचारे' इत्यस्य स्थाने 'मविचारेण'-इति ॥

---

[ ८ ]

६१—२—मातेति । अधिदैवतपक्षे अस्माकं माता इयं पृथिवी, अस्माकं पितरं द्युलोकम् ; 'द्यौष्पिता ( ऋ० सं० ६. ५१. ५. )'-इत्यादिश्रुतिभ्यः ; द्युस्थं सूर्यं मिति यावत् । द्यौरिति सूर्यस्यैव सञ्ज्ञेत्यपि ; 'इति षट् साधारणानि'-इत्युक्तेः

(निघ० १.४.)। पक्षान्तरे जननिजनकपरत्वेऽपि व्याख्यानं तुल्यम्। जननिजनकपरव्याख्यानपक्षे 'ऋते' सत्ये, सत्यस्वरूप-जीवात्म-रूपसन्ततिलाभनिमित्तभूते। 'धीत्या' कर्मणा, सूर्यस्याभितो भ्रमणरूपेणेत्येवेह वक्तुमुचितम्; न हि पृथिवी यागादिकं कर्म करोति। पक्षान्तरे भर्तृसमीपगमनेन। 'अग्रे' तदुत्तरमित्येवेह सुवचम्। 'मनसा' स्त्रीसङ्गमे हि मनसोऽस्त्येव साधनत्वम्; मनसिजप्रादुर्भावमन्तरा तत्र प्रवृत्त्यभावात्। द्युलोकस्य वृष्टि-धाराभिः पृथिवीसङ्गमे ऽप्यस्त्येव मनसः साहित्यम्; चन्द्रलोक-प्रत्यागतानां मनोबन्धनबद्धानां प्रादुर्बुभूषूणां जीवानां वृष्टि-धाराश्रितत्वात्। 'सं हि जग्मे' "व्यवहिताश्च (पा० १.४.८२.)" –इतीह हि-व्यवधानेऽपि समं उपसर्गत्वम्। गमेः सार्वकालिके लिटि (पा० ३. ४. ६.) "समो गम्यृच्छिभ्याम् (पा० १.३.२९.)" –इत्यात्मनेपदम्। 'सा' पृथिवी, जननी च। यदा 'बीभत्सुः' ऋतुमतीति भावः। पृथिवी ह्यम्बुवाच्या ऋतुमती भवति। अम्बु, जलं तद्वर्षणं वाचयति सूचयतीत्यम्बुवाची। मृगशिरसि भुक्ते यदा आर्द्रायाः प्रथमपादोपभोगार्थं रविर्गच्छति तदा पृथिवी ऋतु-मती भवति। तथाहि—'रवौ रौद्राद्यपादस्थे भूमेः सञ्जायते रजः'–इत्यादि राजमार्त्तण्डे। 'गर्भरसा' गर्भरसेन, गर्भहेतुभूतेन रसेनेति यावत्। इह तृतीयाया आत्वे रूपम् (पा० ७.१.३९.)। 'निविद्धा' भवतीति शेषः; 'अस्तिर्भवन्तिपरः प्रयुज्यते'–इति हि महाभाष्यम्। एवम्प्रकारेण 'नमस्वन्तः' नमः अन्नम् (निघ० २.७. २२.), तद्वन्त ओषधयः; अन्नाश्रिता जीवाश्च। 'इत्' एव; नान्ये अनन्नाश्रिताः। 'उपवाकम्' वचनीयभावम्, नाम, नाम-वाच्यं रूपञ्चेति भावः। 'ईयुः' यन्ति, प्राप्नुवन्तीत्यर्थः, सदैवेति ॥

इह वृष्टिक्रियायाः सातत्यम्, अन्नानां प्राणिनां चोत्पत्ति-प्रकारसाम्यम्, गर्भोत्पत्तिनिदानञ्चेति त्रयः प्रधानत उपदिष्टाः ; प्रसङ्गतः सूर्यस्यास्मत्पितृस्थानीयत्वम्, पृथिव्यास्तत्पत्नीरूपत्वम्, पञ्चजन्मातृस्थानीयत्व मपि, सूर्यस्यैकत्रस्थायित्वम्, पृथिव्यास्तद्भ्रम-णाय गतिमत्त्वम्, जीवाना मत्राश्रितत्वम्, अनन्ताश्रितानां मनेवं-विधोत्पत्तिमत्त्वञ्चेति सप्त ज्ञानानि सूचितानि ॥

---

[ ९ ]

६२—१०— माता द्यौः । अस्मात्ते त्विह सूर्यरश्मीनां मातृत्वेन ग्रहणं युज्यते ; तद्योगादेव हि 'दक्षिणायाः' पृथिव्याः सूर्यप्रदक्षिणरूपभ्रमणं सिध्यति । अत एव रश्मीनां 'गावः' इति नैघण्टुकी समाख्या ( १. ५. ३. ) । तेषां धुरि योगश्चान्यत्र श्रूयते—'को अद्य युङ्क्ते धुरि गा ऋतस्य'–इति ( ऋ० सं० १. ६. ८. १. )। "मातरः = भासः, निर्मात्र्यः"–इति चाह यास्कः ( १२. १. ७. ) । अथवा सूर्यापरपर्यायोऽप्यस्ति द्युशब्दः ( निघ० १. ४. ), तारस्थ्यात्तच्छब्द इति तदीयाकर्षणशक्तिरेवात्र द्यौरित्येव सायणाभिप्रायस्तेन क्षतिः ; पृथिव्याः भ्रमणाय तद्धुरि सौराकर्षण-शक्तेर्योगस्येष्टत्वात् ।

—११— 'दक्षिणायाः' पृथिव्याः । यत एवेयं पृथिवी सूर्यं प्रदक्षिणं कुर्वन्ती सदैवागच्छति, अत एव दक्षिणेत्युच्यते । तदाह यास्कः— "दक्षिणा, × × × अपि वा प्रदक्षिणागम-नात्"–इति ( १. ३. २. ) ।

—१२—'गर्भः' सूर्य इत्येवेहार्थोयुक्ततर इव प्रतिभाति । "गर्भः गृभेर्गृणात्यर्थे, गिरत्यनर्थानिति वा"–इति हि नैरुक्तम् ( १०. २.

१०.)। 'अथ गर्भः कस्मात्? गृभेर्गृणात्यर्थे वर्त्तमानस्य; सर्वस्य स्तुत्यो हि गर्भः। 'गिरत्यनर्थानिति वा, सर्वान् अनर्थान् असौ गिरति नाशयति'-इति तद्दौर्गी वृत्तिः। सायणो ऽप्यन्यत्रोक्तम्— 'गर्भो भवसि, अग्निरूप आदित्यरूपश्चेति'-इति (ऋ० सं० १०. १. २.)।

—१३—'उदकवत्सु मेघपङ्क्तिषु'-इत्यर्थे मानं मृग्यम्। अस्मन्मते तु 'वृजनीषु' शक्तिषु 'अन्तः' मध्ये इत्येवार्थः सुवचः; बलनामसु पठितं हि वृजन मिति (निघ० २. ९. २२.)। 'अरिष्टासो वृजनीभिर्जयेम (अथ० सं० ७. ५०. ७.)'-इत्यादौ चैव मेव व्याख्यातम्। अतिष्ठदिति गतिनिवृत्त्यर्थस्य तिष्ठतेः सार्वकालिके लुङि रूपम्; अत एव प्रतिपद मुक्तं सायणेन तिष्ठतीति। तथा च सदैव निवृत्तगमनः स सूर्य इति गम्यते स्फुटम्।

—१४— वत्सः। 'वत्सम् ०—० आदित्यम्'-इति चाह यास्कः (११. ४. ८.)। 'स हि तस्याः (पृथिव्याः) रसहरणाद् वत्सः'-इति च तत्र दौर्गी वृत्तिः।

—१५— मेघरश्मिवायुसंयुक्तेषु सत्सु। एषोऽर्थो ऽसङ्गतः किं नेति विचार्य्य मेव। न हि उदकसङ्घो मेघाद् भिन्नः, नाप्यन्यत्र क्वाप्यनेनैवं व्याख्यान मुक्तम्, न च योजन मितिपदस्य युक्त मित्यर्थः प्रमाणवचनयोग मन्तरा भवेत् स्वीकार्य इति। अस्मन्मते त्विह पृथिव्यां चतुर्णां महाभूभागानां संयोगकराणि डमरूमध्यरूपाणि त्रीणि भूखण्डानि सन्ति; आसीच्च पुरापि। एवमादिषु तान्येव भूखण्डानि योजनशब्दप्रतिपाद्यानि भवितु मर्हन्ति। तथान्यत्रापि श्रूयते— "अष्टौ व्यख्यत् ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून्"-इति ऋ० सं० १. ३५. ८।

तत्र हि "सविता देवः 'पृथिव्याः' 'अष्टौ' 'ककुभः' दिशः, 'त्री' त्रीणि 'धन्व' धन्वानि मरुस्थानानि, अपि त्रीण्येव 'योजना' योजनानि, 'सप्त सिन्धून्' 'व्यख्यत्' प्रकाशयति"—इत्येवार्थो गम्यते स्फुटम्। सायणीयभाष्ये तु यत् धन्वेत्यस्य योजनेत्यस्य च कष्टकल्पनया व्याख्यानान्तरं कृतम्, तत् तदाचार्यस्य भौगोलिकशब्दापरिज्ञानमेवावेदयति। तदेवं 'त्रिषु योजनेषु'—इत्युक्ते सर्वत्रैव पृथिव्यामित्युक्तं सम्पन्नम्।

—१५— वर्षणसमये। अस्मन्मते तु सदैव पृथिवी भ्रमति, तद्भ्रमणशब्दस्य नूनं भवत्येव सदैव; स एव शब्दो वत्सरूपस्य सूर्यस्य हम्बारव इत्युपचरितोऽत्र मन्त्रे। "चत्वारि शृङ्गाः (४.५८.३.)"—इत्यादौ 'वृषभो रोरवीति'—इत्यादिश्रुतेर्यास्कादिव्याख्यानदर्शनाच्च सूर्यस्य रावहेतुत्वं रावस्य नित्यत्वं चावगच्छामः।

—१६— विश्वरूप्यम्। अस्मन्मते तु "रूपादाहतप्रशंसयोर्यप्"—इति (पा० ५. २. १२०.) विश्वरूप्यमित्यस्य प्रशस्तबहुरूपवत्त्वमित्येवार्थः सुगमः। 'रूपैरपिंशद् भुवनानि विश्वा (ऋ० सं० १०.११०.९.)'—'त्वष्टा रूपाणि पिंशतु (ऋ० सं० १.१८८.९.)' —इत्यादिश्रुतेः सूर्यस्यैव रूपवैविध्यकारित्वम्। नामरूपमात्रं जगदिति सिद्धान्ते तु रूपवैविध्यं जगद्वैचित्र्यं चानर्थान्तरम्। तथाचास्मन्मतेऽस्य मन्त्रस्यैव मर्थः सम्पद्यते—

'दक्षिणायाः' सूर्यप्रदक्षिणं कुर्वन्त्याः पृथिव्याः 'धुरि' निर्वहणे 'माता' सृष्टिनिर्माणहेतुः रश्मिपुञ्जः, सौराकर्षणी शक्तिर्वा 'युक्ता' 'आसीत्' सदैवास्ति। 'गर्भः' स्तुत्यः सर्वानर्थनाशको वा सूर्यः 'वृजनीषु' ग्रहोपग्रहाणां मार्गवर्षणीषु शक्तिषु 'अन्तः' मध्ये 'अतिष्ठत्' सदैव स्थाणुरिव निवृत्तगमनः आस्ते। 'वत्सः' पृथि-

व्याजधेनोः रसरूपदुग्धानां पाता सूर्यः 'गाम्' निरन्तरगमनवतीं रसदात्रीं धेनुरूपां पृथिवीम् 'अपश्यत्' सदैव पश्यति; पश्यंश्च 'अनु' 'अमीमेत्' हम्बारवं करोति। तदेवान्यत्र श्रुतं 'वृषभो रोरवीति'-इति। अथानेनैव प्रकारेण 'त्रिषु' एव 'योजनेषु' योजननामभूखण्डेषु ( सर्वत्रैव पृथिव्या मिति यावत् ) 'विश्व-रूप्यं' पीतहरितादिवर्णवैविध्यं सृष्टिवैविध्यं वा भवतीति शेषः॥

इत्थ मत्र चतुर्षु पादेष्विमानि चत्वारि विज्ञानान्युपदिष्टानि —

( १ ) पृथिवीयं सूर्यप्रदक्षिणं कुर्वन्ती सदैव चलति।

( २ ) सूर्यः सर्वशक्त्याश्रयः सन्नचलः सदैकत्रास्ते।

( ३ ) पृथिवीभ्रमणादेव नादः चिरं अवणाय भवति।

( ४ ) अत एव च योजनत्रयात्मिकाया मिह पृथिव्यां रूप-वैविध्यं भवति। प्रसङ्गतः पृथिव्या मिहास्ति त्रीणि 'योजन'नाम-भूखण्डानीत्यपि ज्ञापितं स्फुट मिति॥

---

[ १० ]

६३—३—स्नापयन्ति। 'स्नपयन्ति'–इति शुद्धः पाठः।

—८—लोकत्रयाभिमानिनः। इदं विशेषण मिहादित्य-पक्षे नोपयुज्यते; आदित्यसूर्ययोरेकार्थत्वात्,—'अग्निवायुपर्ज-न्याख्यान्'–इत्येवंहि विशेष्य मिष्टम्। नापि हि अग्न्यादयः पृथि-व्यादिलोकाभिमानिनः, अपि तु पृथिव्याद्यन्तस्थाध्यधिपतयः। अस्मन्मते तु चन्द्रसूर्यातिरिक्तानां राहुपत्नामपृथिव्यादीनां षसां ग्रहाणा मेव मातृत्वपितृत्वाभ्या मिह ग्रहण मिष्टम्; चन्द्रस्य बहुत्वात्, शनैश्चरादिषु सर्वेषु ग्रहेषु सर्वत्र साधारणत्वेन विद्यमा-नत्वान्नेहाग्रहणम्; सूर्यस्तु धारक एवैषाम्। अथवा स्तुः पृथि-

व्यन्तरीक्षद्याव एव तिस्रो मातरः, स्युश्च अग्निवायुसूर्या एव त्रयः पितरः; एकः परमेश्वर एवैषां धारकः; एवं मीश्वरपरं व्याख्यान मपि नासङ्गतम् ॥

—११—नावग्लापयन्ति । इह भूतानां तेषा मेव षण्णां कर्तृत्वं न्याय्यम्; तेषां पृथिव्यादीनां धारणात् सूर्य ईश्वरो वा न ग्लानि मनुभवतीति भावः ।

—१२—द्युलोकस्य । 'मञ्चाः क्रोशन्ति'—इतिवत् दिव इति पदस्य द्युस्था देवा इत्यर्थोऽपि नासुलभः। तत्र पक्षे 'अमुष्य'—इत्यस्य अन्तरीक्षस्येत्येवार्थः सुवचः ।

—१५— गर्जितलक्षणाम् । अन्तरीक्षोदरस्थमेघसंहननोत्थ-गर्जनशब्द एव अन्तरीक्षस्थायिदेवगणोक्ता सूर्यस्य परमेशस्य वा पूर्वोक्तषड्वस्तुष्टतिरूपयशोवर्णनात्मिका वाणीति कविकल्पना । किञ्च यद्यपि तादृशी यशःकथा सर्वविदितैव, परं न तल्लक्षणजा मेघध्वन्यात्मिका सा सर्वव्यापिनी; न ह्येकक्षण एवेह जगति सर्वत्र मेघोदयस्तद्गर्जनश्रुतिश्चेति ॥

इह परमेश्वरस्यैवैकस्य, तत्प्रतिनिधिभूतस्य तत्प्रथमात्मजस्य सूर्यस्यैवैकस्य वा सौरजगद्धारकत्वम्, सर्वेषा मेवास्मदादीनां तदाश्रितत्वम्, कथ मपि नैतद्धारकस्य ग्लानिसम्भवः, हिताहित-बोधसमर्थानां सचेतनानां कथा दूरे आस्तां मचेतना अपि मेघा-स्तस्य विभोर्गुणान् गायन्ति, मेघगर्जनस्य सर्वविदितत्वे ऽप्यसर्व-व्यापित्व मित्युपदेशा लभ्यन्ते ॥

---

[ ११ ]

६४—५—द्यां परि । 'द्यां' सूर्यं 'परि' सर्वतः, प्रदक्षिणी-

क्वेति भावः। 'परीति सर्वतोभावे'–इति हि नैरुक्तम् ( १. १. ५. )। द्युशब्दस्येहान्तरीक्षवाचित्वे, द्या मित्यस्य षष्ठ्यन्तत्वेन व्याख्येयत्वे च, न किञ्चिन्मानं नापि प्रयोजनं लक्ष्यते ऽस्माभिः।

—६—द्वादशारम्। अरायेह मासा इत्येव; 'द्वादश प्रधयः ( ऋ० सं० १. ६४. ४८. )'–इत्यादौ मासाना मेव ग्रहणं निरुक्तादौ दर्शनात्। नापि मेषादिसंख्यानानां सर्वतः सूर्यस्रमणं विज्ञानसम्मतम्।

—८—सर्वदा गमनयुक्त!। कुतोऽय मर्थो लब्धः सायणेन? निरुक्तादौ त्वन्यथा दृश्यते ( नि० ७. ४. १. )। अगिधातोस्तु कुटिलगमने वृत्तिः, तच्च तच्छिखाकम्पने भवति प्रत्यक्ष मेव। एतत्पूर्वतनो दुर्गाचार्यस्तस्य व्याख्यान मेव माह— "अग्निशब्दोऽस्मिन् मन्त्रे सम्बोधनान्तः, षष्ठ्या विपरिणस्यते; अग्नेः पुत्रा आतस्थुरिति। अग्निस्त्रात्रादित्य एवाभिप्रेतः, तस्याहोरात्राख्येव पुत्रत्वेनोच्यन्ते; तत्कृतत्वादहोरात्राणाम्"–इति।

—१०— मिथुनासः। 'मिथुनाः द्वन्द्वाः'–इत्येवात्र दुर्गाचार्यः, अहोरात्ररूपयुग्मा इति तद्भावः।

—१५—इत्यारण्यकम् ( ऐ० आ० ३. २. १. ४. )। "एषो ऽहस्सम्मानः"–इति पाठः।

अत्रेदं नैरुक्तम्—" 'षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्राः'–इति च ब्राह्मणं समासेन; 'सप्तशतानि विंशतिश्च तस्थुः', 'सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः'–इति च ब्राह्मणं विभागेन"–इति ( ४. ४. ६. )। 'समासेन'–इत्यस्य 'अहोरात्रयोरेकत्वेनेत्यर्थः'–इति तत्र व्याख्यानं दौर्गम्॥

इह संवत्सरस्य चक्रतुल्यत्वम्, अजरत्वेन नित्यत्वम्, द्वादश

महाविभागाः, विंशत्यधिकसप्तशतसङ्ख्याश्च विभागाः, तेषां युग्मत्वं चोपदिश्यन्ते ॥

---

[ १२ ]

६५—२—षड्डर । 'षळर'–इति शुद्धम् । भाष्येऽप्येवम् ।

—३—एतदित्यादि । 'पञ्चर्त्तवो हेमन्तशिशिरयोः समासेन' इति, 'द्वादश मासाः पञ्चर्त्तवः संवत्सरः'–इति च ऐतरेयब्राह्मणम् ( १. १. १ ; ३. ५.) । 'पञ्चर्त्तुतया'–इत्यादि च निरु० ४. ४. ६ ।

—६—उदकनाम । निघण्टौ १. १२. १२. द्रष्टव्यम् ।

—१०—अथेमेऽपीत्यादि । तदेवं केषाञ्चित्सन्निधौ अस्या ऋचः पूर्वार्द्धोक्तं तत्त्व मवगतम्, अपरेषां सन्निधौ अपरार्द्धोक्तं तत्त्व मिति भावः ।

—१३—'सप्त चक्रे' बुधमङ्गलपृथिवीगुरुशुक्रशनैश्चरचन्द्रात्मके सौरजगन्मण्डले इत्यस्माकम् ।

—१५—'षडरे' षडर्त्तौ संवत्सरे इति यावत् । 'षडर आहु रर्पित मिति षड्तुतया'–इति चात्र नैरुक्तम् ( ४. ४. ६. ) । 'षड् वा ऋतव ऋतुश एव तत् संवत्सर माप्नुवन्ति'–इति हि ऐतरेयकम् ( ४. ३. २. ) ।

—"— एतदुक्तं भवतीत्यादि तु 'सप्त युञ्जन्ति ( ऋ० सं० १. १६४. २.)'–इत्यस्या ऋचः पूर्वार्द्ध मादित्यप्रधानतया व्याख्याय ततो यदुक्तं यास्केन 'संवत्सर प्रधान उत्तरोऽर्द्धर्चः'–इति ( ४. ४. ६ ), तदनुसृत्यैवोक्तम्; परं नेय मृक् ततोऽभिन्नेति विवेक्तव्यम् । अस्मन्मते हि संवत्सरस्य पञ्चर्त्तुत्व मेकेषां षडर्त्तुत्व मन्येषा मिति ज्ञापनायैवेह 'अथेमे'–इति मतान्तरता सूचितेति ॥

६६—७— संवत्सर० । संवत्सरः, परिवत्सरः, इदावत्सरः, इदुवत्सरः, इद्वत्सरश्चेति पञ्चविधो वत्सरः । वा० सं० २७. ४५; ३०. १५. । तै० सं० ५. ७. २. १ । तै० आ० ४. १९ । अथ० सं० ६. ५५. ३ । वस्तुत इह काल एव सामान्यतः चक्रत्वेन कल्पितः । अतएवैवं दुर्गभाष्ये— 'कालचक्रे हि सर्वं मेवेदं जगदधिरूढ़ं बम्भ्रमीति'—इति (निरु० ४. ४. ६.)।

—८— भुवनानि । अस्मन्मते भूरादयः सप्त लोकाः ।

—९— अक्षः । 'संवत्सराख्यः'—इति दुर्गभाष्यम् (४.४.६.)।

—१२— यथेत्यादि । ईदृक् कोऽसौ ? अस्मन्मते तु सूर्य एव; 'मूर्द्धा दिवो नाभिरग्निः (ऋ० सं० ५९. २.)'—इत्यादौ नाभिशब्देन सूर्यस्यैव परिग्रहात् । इह हि नाभिवाच्येव 'सनाभिः' प्रतीयते । वस्तुत इह 'स नाभिः'—इत्येव मेव पदपाठो युक्तः । सनाभिशब्दो हि अङ्गुलिवाची (निघ० २. ५. १५.), ज्ञातिवाची च (निरु० ४. ३. ५.); अपि प्रायो बहुवचनान्त एव प्रयुक्तः श्रूयते ऽन्यत्रान्यत्र (९. ८९. ४.; १०. ७४. ४.) योऽस्ति च दशमे एकवचनान्तः (१०. १३३. ५.), स हि ज्ञातिवचनः; न चात्र तथा व्याख्यान मुपपद्यते । अत एव दुर्गभाष्येऽत्र सत मेवैवं व्याख्यानम्— "आह यदक्षो न तप्यते शीर्यते वा, किमेव मतिबलीयसा अक्षेण घृष्यमाणा नाभिः तप्यते शीर्यते वा ? इति । नेत्युच्यते —'स नाभिः न शीर्यते' न तप्यते । नाभिरादित्य एवाभिप्रेतः"—इति (४. ४. ६.)॥

अत्र मन्त्रे भुवनानां कालाश्रितत्वाद् भ्रमणशीलत्वम्, संवत्सरात्मकालस्य च नाभिरूपसूर्याश्रितत्वम्, नाभिरूपसूर्यस्य त्वविनाशित्वञ्चेति चत्वारि ज्ञानानि सूचितानि ॥

[ १४ ]

६७—२— सनेमि । यत् 'सनेमि' पदं निघण्टौ पुराणनामसु पठितम् ( ३. २७. ४. ), यच्च निरुक्ते क्षिप्रार्थं दृश्यते ( १२. ४. १०. ); त उभे एव अव्यये ; इह श्रुतं त्वेतत् समानो नेमिर्यस्य चक्रस्येति नेमिना सहेति वा समस्तं ज्ञायते ; पदपाठे 'सऽनेमि' –इति समासचिह्नस्य विद्यमानत्वात् ॥

—४— संवत्सराख्यम् । एतेन संवत्सरस्य च ससीमत्वं द्योतितम् । तेन सौरजगन्मण्डलाद् बहिर्नैव संवत्सरव्यवहार इति सिध्यति । नन्वेव मपरजगन्मण्डलेषु संवत्सरव्यवहाराभाव आपद्येतेति चेत् , मैवम् ; जगन्मण्डलत्वेन सर्वेषा मेवेह ग्रहणस्येष्टत्वात् । पूर्वमन्त्रे महाकालस्यैव चक्ररूपत्वं स्वीकृत्य संवत्सरस्यात्वत्व मुक्तं दुर्गाचार्येण ; तन्मते महाकालस्यापि ससीमत्वं बोधितं स्यादिति चेत् , इष्ट मेव तत् ; महाकालस्य सर्वजगद्व्यापित्वेऽपि ईश्वरव्याप्यत्वस्य स्वीकारात् । ग्रहोपग्रहविशिष्टं सौरजगन्मण्डल मेवैवमादिषु मन्त्रेषु चक्र मिति व्यपदिष्ट मिति मते तु न भवेच्छङ्कावसरः ; एतत्सौरजगन्मण्डलस्य सर्वस्मात सान्तत्वनिर्णयात् ।

—५— उत्तानायाम् । पृथिव्या मित्यर्थः । अन्यत्रान्यत्र सायणेनाप्युक्त मेव मेव ( ऋ० सं० १०. २७. १३ , १४२. ५. ) । साक्षाच्छ्रुतिश्चात्र मानम्— 'यथेयं पृथिवी मह्युत्ताना गर्भ मादधे'–इति ऋ० सं० ८. ८. ४२ । 'उत्तानयोश्चम्वोः ( ऋ० सं० १. १६४. ३३.)'–इत्यस्य व्याख्यानाय 'उत्तानः, उत्ततान ऊर्ध्वंतानो वा'–इत्युक्तं यास्केन ( ४. ३. ५. ) । पृथिवीत्वेन च सोमादीनां सर्वेषा मेव ग्रहणं सुकरम् ।

—६— दश। अङ्गिरस इत्येवात्र सुवचम्; 'दश प्राक् सानु वि तिरन्त्यश्नः (ऋ० सं० १०. २७. १५.)'-इत्येवमादिभ्य-स्तथैव प्रतीतेः। "'दश' दशसङ्ख्याकास्ते 'अश्नः' अशनवतः इन्द्रस्य 'प्राक्' प्रदेशे स्थिताः 'सानु' समुच्छ्रित मुदकं तेजो वा 'वि तिरन्ति'"-इति तु तद्भाष्यं सायणीय मेव। अङ्गिरसः खलु रश्मय एव; निघण्टुनिरुक्तयोः समालोचनेन तथैवावगमात् (निघ० ५. ५. १०-१५.। निरु० ११. २. ३-७.)। ते च दशसु दिक्षु परिव्याप्ता इति दशसङ्ख्याका उच्यन्ते।

—७— वहन्ति। दशसु दिक्षु स्थिता रश्मयो ऽनुक्षण मेव पृथिव्यादीन् लोकान् 'वहन्ति' सूर्यं नयितुं चेष्टन्त इत्यस्माकम्।

—१०— चक्षुः। दर्शनम्, ज्योतिरिति भावः।

—११— निरुक्तम्। (४. १. ३.)। 'चक्षुः ख्यानम्'-इति च निरुक्तम् १२. २. ५।

—१२— रजसा। 'रजो रजतेः, ज्योती रज उच्यते, उदकं रज उच्यते, लोका रजांस्युच्यन्ते, असृगहनी रजसी उच्येते'-इति यास्कीयवचनानि (निरु० ४. ३. ३.)। तदेवं तच्चक्षुः वर्षसमये मेघगर्भादिकेन, ग्रहणकाले पृथिव्यादिलोकच्छायापातेन, मानव-शरीरादौ रक्तमांसादिभिः, अन्यत्र स्वज्योतीरूपप्रचण्डदिवालोकेन च आहृत मेव; अस्माभिर्विशुद्धं सूर्यज्योतिरुपभोक्तुं प्रायो न शक्ये-तेति भावः।

—१३— तादृशे०। अस्मन्मते त्वत् तस्मिन् सूर्यचक्षुष्येव वाच्यम्; तस्यैवातिसन्निहितत्वात्। 'विश्वा', 'भुवना', 'आर्पिता' -इति पदानि 'सुपां सुलुग् (पा० ७. १. ३९.)'-इति जस आत्वेन साध्यानि। 'आर्पिता'-इति न तु आङ्पूर्वस्य रूपम्;

पदपाठे तथादर्शनात्। अपि वा 'आ अर्पिता'–इत्येव पदपाठः स्याद् युक्ततरः; पदकारस्यापि हि भ्रमः प्रदर्शितो यास्केन "वायः, * *। वेति च य इति च चकार शाकल्यः। उदात्तं त्वेव माख्यात मभविष्यदसुसमासश्चार्थः'–इति निरु० ६. ५. ५.॥

---

[ १५ ]

६८–६– त्रयोदशः। 'त्रयोदशो मास इत्याहुः'–इति शत० ब्रा० ८. १. १. ४२; ३. ३. १८। 'त्रयोदशो मासः'–इति अथ० सं० ५. ६. ४; 'त्रयोदशं मासम्'–इति च १३. ३. ८। 'त्रयोदशो मासो नानुविद्यते'–इति ऐत० ब्रा० १. ३. १।

–७–इच्छब्दः। दुर्गाचार्योऽपि क्वचिदिच्छब्दस्यैवार्थतो-पन्यस्ता। तद्यथा–'यदा दीध्ये (ऋ० सं० १०. ३४. ५.)'–इत्यस्यतृतीयर्चो व्याख्याने 'एमि इत्' इत्यस्य 'आगच्छाम्येव'–इत्यर्थः कृतः। यास्कमते त्वनर्थक एवेच्छब्दः। तथाहि–'अथ ये प्रवृत्तेऽर्थे ऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते, मिताक्षरेष्वनर्थकाः कम्–ईम्–इद्–उ-इति'–इति निरु० १. ३. ५।

–११– स्मृतेः। 'असंक्रान्तमासो ऽधिमासः स्फुटः स्याद्, द्विसंक्रान्तमासः क्षयाख्यः कदाचित्,–इत्याहतुर्ज्योतिःसिद्धान्त-भीमपराक्रमौ। 'यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वय मेव वा। मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत्'–इति काठकगृह्यम्।

–१४– आम्नातः। "तेऽस्मिन्नैच्छन्त स रस मह वसन्ताय प्रायच्छद् यवं ग्रीष्मायौषधीर्वर्षाभ्यो व्रीहीञ्छरदे माषतिलौ हेमन्तशिशिराभ्याम्"–इति तै० सं० ७. २. १०।

तदेव मिह मन्त्रे सायणमते अन्नमासस्यादित्ता, सप्तमर्तुत्वम्, असौरत्वञ्चावेदितम् ।

निरुक्तमित्येव प्रसिद्धे निरुक्तपरिशिष्टे त्वय मन्यथा व्याख्यातः । तद्यथा—'सहजातानां षण्णा मृषीणा मादित्यः सप्तमस्तेषां मिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वाद्भिः सह सम्मोदन्ते यत्रैतानि सप्त ऋषीणानि ज्योतींषि तेभ्यः पर आदित्यस्तान्येतस्मिन्नेकं भवन्तीत्यधिदैवत मथाध्यात्मं सहजातानां षण्णा मिन्द्रियाणा मात्मा सप्तमस्तेषा मिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह सम्मोदन्ते यत्रेमानि सप्त ऋषीणानीन्द्रियाण्येभ्यः पर आत्मा तस्मिन्नेकं भवन्तीत्यात्मगति माचष्टे'—इति निरु० १३. २. १९ । 'षण्णा मृषीणाम्' बुधमङ्गलपृथिवीवृहस्पतिशुक्रशनैश्चराख्यानाम् । 'सप्त ऋषीणानि ज्योतींषि' सूर्यसहिताः सोमरहिताः पृथिव्यादयः सप्त ग्रहाः । 'षण्णा मिन्द्रियाणाम्' मनःषष्ठानाम् । 'सप्त ऋषीणानि' आत्मसहितानीति ॥

---

[ १६ ]

६८—७— अन्नस्तान् ( पा० ७. १. ७६. ) ।

—८— विचेतत्, विजानात्, असत्, इमानि लेटि रूपाणि ।

—१२— आचिकेतेति सार्वकालिके लिटि रूपम् ( ३. ४. ६. ) ।

—१४— पितुः पिता । मन्त्रे पितुष्पितेति तु 'षष्ठ्याः पतिपुत्र०'—इति सत्वे रूपम् ( पा० ८. ३. ८३. ) ।

—१९— 'तान् उ'—इति स्थिते 'दीर्घादटि० ( पा० ८. ३. ९. )'—इति रुत्वादिषु रूपम् ।

—२१— श्रूयते हि ( श्वे० उप० ४. ३. ) ।

७०—२— स्मृतिरपि ( श्वे० उप० ५. १०. ) । तत्र 'चोद्यते' इत्यत्र 'युज्यते'–इति पाठो दृश्यत इत्येव विशेषः ।

—१०— ब्राह्मणम् । ( ता० ब्रा० १२ प्र० ३ ख० ) ।

—१४— इत्यभिप्रायः । निरुक्तेतिप्रसिद्धे निरुक्तपरिशिष्टे ( १३. ३.१. ) त्वन्यथा व्याख्यानं दृश्यते । तद्यथा— "स्त्रिय एवैताः शब्द-स्पर्शरूपरसगन्धहारिण्यस्ता अमुं पुंशब्देन निराहारः प्राण इति पश्यन् कश्चाक्ष विजानात्यन्धः कविर्यः पुत्रः न इमा जानाति यः स इमा जानाति स पितुष्पितासदित्यात्मगति माचष्टे"–इति ॥

अस्मन्मते त्वेतत्प्रथमचरणस्यापर मपि व्याख्यानं सम्भवति । तद्यथा— य इमे दृश्यमाना घटपटादयो हस्तपदादयो जलजल-धरादयश्चक्षुरादयश्च सर्व एवैते पदार्थाः, यद्यपि वस्तुतः 'स्त्रियाः' निरन्तरविपरिणामरूपप्रसवधर्मिण्याः प्रकृतेः परिणामभेदास्ततः संस्त्यानवत्यः प्रकृतयः ; अतएव 'सतीः' सत्यः, चिरविद्यमानाः, नाशशून्याः, नित्याः ; तथापि 'तान् उ' तानेवेमान् 'मे पुंसः' पुरुषरूपस्य मम इति 'आहुः' मूढा जनाः । सत्त्वपुरुषान्यता-ख्यातिज्ञानाभावादिति भावः । तत्त्वतः पुरुषस्य घटपटादि-भिर्नास्ति कार्यकारणसम्बन्धः, हस्तादिभिर्नैवास्त्यवयवावयवि-सम्बन्धः, जलजलधरादिभिश्च न विद्यते जन्यजनकसम्बन्धः, न च चक्षुरादिभिः सम्भवेत् तादात्म्याद्यन्यतमः कोऽपि सम्बन्धः ; पुरुषस्यापरिणामत्वानवयवित्वाकर्तृत्वाजडत्वादिभ्यः । तदेवं पुरु-षस्य ममेत्युक्तिः नूनं भ्रममूलिकैव ; पुरुषातिरिक्ताः सर्व एवैते पदार्थाः प्रकृतयो नित्याश्चेत्येवोपदिशत्ययं मन्त्र इति दिक् ॥

———

[ १७ ]

७१—१— आहुतिः । याज्ञिकानां यज्ञसम्बद्धवस्त्वन्तरा कि मस्त्यपरं द्रष्टव्यं ज्ञातव्य मुपदेष्टव्यं वा ?

—५— स्तुतेः । ( म० स० ३. ७३. ) ।

—१२— आदित्यरश्मिसमूहः । 'सर्वेऽपि रश्मयो गाव उच्यन्ते'–इति यास्कः २. २. २ ।

—१४— वत्सवत् । तद्देशोऽर्थोऽप्याधियज्ञीय एव ।

—१८— स्तुतेः । ( मु० उप० १. २. ५. ) ।

—१९— इन्द्रादिलोके । व्याख्यैषा सिद्धान्तविरुद्धेव प्रतिभाति ; आदित्यलोकगतानां हि लोकान्तरगमनं श्रुतिविरुद्धम् । तथाहि— "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्य मभिजयन्ते । एतद्वै प्राणाना मायतन मेतदमृत मभय मेतत् । परायण मेतस्मान्न पुनरावर्तन्त इत्येष निरोधस्तदेष श्लोकः"–इत्यादि प्र० उप० १. १० । 'एतत् परायणं परा गतिः'–इति च तत्र शाङ्करभाष्यम् ।

अस्मन्मते त्वेतदादिभिस्त्रिभिर्मन्त्रैः मेघोत्पत्त्यादिकं प्रवर्ग्यं मनसो निदान मेव वक्तव्यं स्यात् । तदस्यैवं व्याख्यानं युज्येताधिदैविकम्—

'गौः' गोरूपो रश्मिसमूहः, 'परेण' उपरिप्रसृतेन 'पदा' स्वावयवेन 'अवः' अधस्तात् ( रसानि आकृष्य ) 'वत्सं' वत्सरूपं पर्जन्यम्,—'अवरेण' अधःप्रसृतेन ( च ) पदा 'परः' उपरिष्टात् ( आकृष्य ) 'एना' एनं वत्सम् 'बिभ्रती' धारयन्ती पोषयन्ती 'उत्' ऊर्ध्वम् 'अस्थात्' तिष्ठति । 'सा' पर्जन्यधारिणी गौः 'कद्रीची' अनिश्चयगमना सती 'अर्द्धम्' लोकसमीपं 'कंस्वित्' क मपि

स्थानम् 'परा अगात्' परागच्छति, पराङ्मुखः प्रतिगच्छतीति भावः। किञ्च 'कश्चित्' कुत्रापि अनिर्दिष्टैकस्थाने 'सूते' तं गर्भभूतं वत्सम्। 'हि' निश्चय मेतत्— 'यूथे' स्वसजातीयावासस्थानेऽन्तरीक्षलोके 'अन्तः' मध्ये 'न' सूते इत्यन्वयः॥

---

[ १८ ]

७२ —१३— इत्यर्थः। अथान्यद् व्याख्यानम्—

'परेण' पदा 'अवः' अधस्तात्, 'अवरेण' च पदा 'परः' परस्तात् 'एना' एनं 'पितरं' पर्जन्यं बिभ्रती इति यत् पूर्व मुक्तम्, 'यः' पुरुषः 'अस्य' तत्त्वम् 'अनुगम्य 'वेद' जानाति, सः 'कवीयमानः' कविवदाचरन् भवति। 'इह' तदन्यः 'कः' जनः 'देवं' द्युतिमत् 'मनः' अन्तःकरणं 'कुतः अधिजातम्' इति 'प्रवोचत्' वक्तुं समर्थो भवेत्? न कोऽपि। यः खलु पूर्वोक्तयोः पर्जन्यधारणपोषणयोः फलतत्त्वं जानाति, स एव द्युतिमतो मनसः प्रभव मपि जानाति नान्य इति भावः। तदित्थं मनस उत्पत्तये एव रश्मिगोः पर्जन्यवत्सस्य जगत्पितुर्वा धारणपोषणे इति सूचितम्। वस्तुतः पर्जन्यादन्नानि भवन्ति, अन्नविकृतान्येव मनांसि। तथाहि छान्दोग्ये—"अन्न मशितं त्रेधा विधीयते,— तस्य यः स्थविष्ठो धातुः, तत् पुरीषं भवति; यो मध्यमः, तन्मांसं; योऽणिष्ठः, तन्मनः"–इत्यादिः "अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति"–इत्यन्तो ग्रन्थः समालोच्यः (६ प्र० ५–७ ख०)॥

---

[ १८ ]

७२ — ६ — द्वादशादित्यानां । 'धातार्यमा च मित्रश्च वरुणो-ऽंशुर्भगस्तथा । इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः । ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः'—इति महा० भा० १प० ।

—''— विवस्व० । अत्रैवं विशुद्धपाठेन भवितव्यम् — 'विवस्वदिन्द्रपूषान इत्युक्तत्वात् । अथ सपीन्द्रः स च युवा'—इति ।

—१४— तद्वत् । अथान्यविधव्याख्यानम् —

'ये' ग्रहाः लोका वा 'अर्वाञ्चः' 'तान्' 'उ' एव 'पराचः' 'आहुः' ऋषय इति शेषः ; 'ये' 'पराञ्चः' 'तान् उ' 'अर्वाचः' 'आहुः' । तदेव मर्वाक्त्वं पराक्त्वं च आपेक्षिक मेव, न वास्तविकम्; किञ्च य एवाद्यार्वाक् दृश्यते, स एव कालान्तरे परागपि भवति; अथापर मपि य एवास्माभिरर्वाक् स्थित इति निश्चीयते, ततस्थैरेषोऽपि लोक स्तथैव निश्चीयत एवेति । 'इन्द्रः' सूर्यः 'च' अपि 'सोम' सोमः चन्द्रमाः, इमौ देवौ 'या' यानि 'चक्रथुः' योजयतः, 'तानि' एव पृथिव्यादीनि भूमण्डलानि 'धुरा' धुर्यं 'युक्ताः' 'न' इव 'रजसः' ज्योतींषि रश्मयः 'वहन्ति' सदैवेति ॥

तदेव मिह सूर्यरश्म्याकर्षणवशादेवेमे लोका भ्रमन्ति, तत एव सर्वेषा मेवैषां लोकानां कस्यापि कदाचित् अर्वाक्त्वं कदाचित् पराक्त्वं चेत्युपदेशः सम्पन्नः ; सोमश्चैषु सर्वत्र रसान् वितरति, सूर्यश्च तान् हरति ; तदुक्तं ''मित्रं हुवे पूतदक्ष मित्यत्र ( ऋ० सं० १. २. ७. ) ; एवं रसानां प्रदानादानाभ्या मेवैषां लोकानां पोषणं भवतीत्येतदपीह सूचितम् ॥

———

[ २० ]

७५—५—आमनन्ति। मु० उप० ३.१.२। श्वे० ४ प० ४.७।

२१—स्मृतेः। 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशै-र्जन्ममृत्युप्रहाणिः। तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः'—इति श्वे० उप० १.११। 'कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्याप्त-कामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः'—इति मु० ३.२.२।

२२—अध्यस्तम्। "आह कोऽय मध्यासो नामेति ? उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः। तं केचिद् 'अन्यत्रान्यधर्मो-ऽध्यासः'—इति वदन्ति, केचित्तु 'यत्र यदध्यासस्तद्विवेकाग्रह-निबन्धनो भ्रमः'—इति, अन्ये तु 'यत्र यदध्यासस्तस्यैव विपरीत-धर्मत्वकल्पना माचक्षते'—इति। सर्वथापि त्वन्यस्यान्यधर्मावभा-सतां न व्यभिचरति। तथा च लोकेऽनुभवः—'शुक्तिका हि रजतवदवभासते एकश्चन्द्रः सद्वितीयवत्'"—इति शाङ्करभाष्यम् (ब्र० सू० १.१.१.)॥

७६—२—(नि० १४.३०.)=(निरु० १३.४.२.)। "द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्त्तारौ दुष्कृतं पापं परिसारक मित्याचक्षते सुपर्णा सयुजा सखायेत्यात्मानं (दुरात्मानं) पर-मात्मानं प्रत्युत्तिष्ठति शरीर एव तज्जायते वृक्षं वृक्षं शरीरं वृक्षे पक्षी प्रतिष्ठापयति तयोरन्यो भुक्तान्न मनश्नन्नन्यो सरूपतां सलो-कता मश्नुते य एवं विद्वाननश्नन्नन्यो अभिचाकशीतीत्यात्मगति माचष्टे"—इति। मुण्डकोपनिषदि चायं श्रूयते (३.१.१.)। तत्रेदं शाङ्करभाष्यम्—"द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ

पक्षिसामान्याद्वा सुपर्णौ सयुजा सयुजौ सहैव सर्वदा युक्तौ सखा-
या सखायौ समानख्यानौ समानाभिव्यक्तिकारणौ एवम्भूतौ सन्तौ
समान मविशेष मुपलब्ध्यधिष्ठानतया एकं वृक्षं वृक्ष मिवोच्छेदन-
सामान्याच्छरीरं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ। सुपर्णा-
विवैकं वृक्षं फलोपभोगार्थम्। अयं हि वृक्ष ऊर्ध्वमूलोऽवाक्शाखो-
ऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसञ्ज्ञकः सर्वप्राणिकर्मफलाश्रयः। तं
परिष्वक्तौ सुपर्णाविवाविद्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मे-
श्वरौ। तयोः परिष्वक्तयोरन्य एकः क्षेत्रज्ञो लिङ्गोपाधिवृक्ष माश्रितः
पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वाद्वनेकविचित्रवेदना-
स्वादरूपम् अत्ति भक्षयत्युपभुङ्क्ते ऽविवेकतः। अनश्नन्नन्य इतर
ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सर्वसत्त्वोपाधिरीश्वरो
नाश्नाति। प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्ता-
मात्रेण। स त्वनश्नन्नन्योऽभिचाकशीति पश्यत्येव केवलम्। दर्शन-
मात्रं हि तस्य प्रेरयितृत्वं राजवत्"–इति। श्वेताश्वतरोपनिषदि
चायं श्रूयते (४. ६.) तत्रापि व्याख्यातश्चैव मेवाचार्येण।

७७—१६— कण्ठचामीकरन्यायश्चैषः – "चामीकरशब्दः
चामीकरनिर्मितभूषणपरः। तद्वि यथा कण्ठगत मपि चिरप्राप्त
मपि विस्मृतं सत् दुःखाकरोति, आप्तोदेशात् प्राप्त मिव भवत्
सुखाकरोति; न तु वस्तुतो ज्ञानातिरिक्ता तस्य प्राप्तिरस्ति; चिर-
प्राप्तत्वात्। एवं यस्य प्राप्तस्य नष्टभ्रान्त्या दुःखं सदुपदेशेन तज्-
ज्ञानाच्च सुखं यत्नोपदिश्यते, तत्रास्य प्रवृत्तिः। तथा जीवस्य
स्वतःसिद्धब्रह्मात्मकस्य अज्ञानादिदोषात् तद्विस्मरणं तत्त्व-
मस्यादिवाक्यजन्यसाक्षात्कारेण अप्राप्तस्य प्राप्तिरिव भवतीत्युप-
चर्यते"–इति वाचस्पत्यम्।

—१८ — ( नि० ३.१२. )=( निरु० ३.२.६. )। तद्यथा—
"यत्र सुपर्णाः सुपतना आदित्यरश्मयो ऽमृतस्य भाग मुदकस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषां भूतानां गोपायितादित्यः, स मा धीरः पाक मत्राविवेशेति। धीरो धीमान्, पाकः पक्तव्यो भवति, विपक्कप्रज्ञ आदित्य इत्युपनिषद्वर्णो भवतीत्यधिदैवतम्। अथाध्यात्मं यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषा मिन्द्रियाणां गोपायितात्मा, स मा धीरः पाक मत्राविवेशेति। धीरो धीमान्, पाकः पक्तव्यो भवति, विपक्कप्रज्ञ आत्मेत्यात्मगति माचष्टे"–इति।

७८—५ – मधु। निघ० १. १२. ११। 'मधु सोम मित्यौपमिकम्; माद्यतेः'–इति निरु० ४. १. ८.।

—६ – निविशन्ते सुवते च सदैव; रश्मिस्वभाव एवैषः।

—११ – 'न वेद' न जानाति इत्यस्माकम्।

—१४— 'सुपर्णाः' जीवाः इत्येव वक्तव्यम्; न हि परमात्मनः इन्द्रियाणि सन्तीति। अथवा परमात्मनीत्येव न वक्तव्यम्, आत्मनीत्येवास्तु। तदेव मध्यात्मपक्षे ऽपि व्याख्याद्वैविध्यं सुकरम्।

—१५ — मध्वदः। कठ० उप० ४. ५ –

'य इमं मध्वदं वेद आत्मानं जीव मन्तिकात्।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥'–इति।

—१६ — स्वापकाले। परमात्मनः स्वापोऽसम्भवः, अत इह परमात्मशब्देन आत्मैव बोध्यः; अपि परमात्मपक्षे तु निवेशाभ्युदयौ प्रलयसृष्टिकालापेक्षाविति।

७९—१— पितरम्। सर्वस्य जनकं परमात्मान मिति वा।

—४ — 'यद्वा'-इत्यशुद्धम्, 'यदा'-इति पठितव्यम् ।
सा श्रुतिस्त्वियम् ( श्वे० उप० ६. २० )—
'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देव मविज्ञाय दुःखस्यान्तो भविष्यति ॥'-इति ।

७९—१६— सद्योत्पन्नत्वात् । तथाहि ( तै० ७. १. १. )— "प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत त मग्निर्देवतान्वसृज्यत गायत्रीच्छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणा मजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त"-इति ।

—१७—श्रुतिः । तै० सं० २. २. ५. ५. ।

८०—६— अधिलोक मधिदैवत मित्यनर्थान्तरम् ।

—१५ — श्रुतिः । 'गायत्रं प्रातःसवनम् × × + ॥ ५ ॥ + + + त्रैष्टुभं माध्यन्दिनं सवनम् + + + जागतं तृतीयसवनम् × × × ॥ ६ ॥'-इति तै० सं० २. २. ९ । सवनत्रयोत्पत्तिकथा त्वैतरेयके द्रष्टव्या ( ब्रा० ३. ३. ३. ) ।

—१९— सम्पद्यते । होता प्रातस्सवने शोंसावो मिति त्र्यक्षरेण मन्त्रेणाध्वर्यु माह्वयते । तस्याय मर्थः — हे अध्वर्यो ! 'शोंसावः' शंसनं कुर्वतः 'ॐ' इत्यनुज्ञार्थम्; त्वया अनुज्ञा देयेत्युक्तं भवति । सोऽयं त्र्यक्षरो मन्त्रः । ततोऽध्वर्युः शंसा मोदैवो मिति पञ्चाक्षरेण 'प्रतिगृणाति' उत्तरं ब्रूयात् । तस्याय मर्थः — हे होतः ! 'शंसा' त्वं शंसनं कुरु, तत्र 'मोदैव' हर्ष एवास्माकम्; अतोऽनुज्ञा दत्तेति भावः । तदेतन्मन्त्रद्वयं मिलित्वाष्टाक्षरं सम्पद्यते । तत्र पूर्वो मन्त्र आहाव उच्यते, उत्तरस्तु प्रतिगरः । तदाहाश्वलायनः— 'अनभिहिङ्कृत्य शोंसावो मित्युच्चैराहूय तूष्णींशंसं शंसेदुपांशु सप्रणव मसन्तन्वन् । एष आहावः

प्रातस्सवने शस्त्रादिषु । × × × । शस्त्रस्तरः प्रतिगर श्रोथा मोदैवेति शोंसा मोदैवेत्याह्वावे'–इति ५. ८. १–५ ।

—१३— गायत्रस्थापनम् । होता शस्त्रं पठित्वा उक्थं वाचीति चतुरक्षरं मन्त्रं ब्रूयात् । तस्यार्थः— मदीयायां वाचि उक्थं सम्पन्नम् । ततोऽध्वर्युः ओ मुक्थशाः इति चतुरक्षरं मन्त्रं ब्रूयात् । 'ॐ'–इति अङ्गीकारे, 'उक्थशाः' त्वं शस्त्रशंसी भवसीत्यर्थः । तदेतन्मन्त्रद्वयं मिलित्वाष्टाक्षरं सम्पद्यते । एव मेवोत्तरत्रापि ।

८१—१५— 'देवविशः कल्पयितव्याः'–इति खण्डस्त्वयम्—"देवविशः कल्पयितव्या इत्याहुश्छन्दश्छन्दसि प्रतिष्ठाप्य मिति ; शोंसावो मित्याह्वयते प्रातस्सवने त्र्यक्षरेण, शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तदष्टाक्षरं सम्पद्यते ; ऽष्टाक्षरा वै गायत्री, गायत्री मेव तत्पुरस्तात्प्रातस्सवने ऽचीक्लृपताम् ; उक्थं वाचीत्याह शस्त्वा चतुरक्षर मो मुक्थशा इत्यध्वर्युश्चतुरक्षरं, तदष्टाक्षरं सम्पद्यते ; ऽष्टाक्षरा वै गायत्री, गायत्री मेव तदुभयतः प्रातस्सवने ऽचीक्लृपताम् ; अध्वर्यो शोंसावो मित्याह्वयते मध्यन्दिने षळक्षरेण, शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तदेकादशाक्षरं सम्पद्यत, एकादशाक्षरा वै त्रिष्टुप्, त्रिष्टुभ मेव तत्पुरस्तान्मध्यन्दिने ऽचीक्लृपताम् ; उक्थं वाचीन्द्रायेत्याह शस्त्वा सप्ताक्षर मो मुक्थशा इत्यध्वर्युश्चतुरक्षरं, तदेकादशाक्षरं सम्पद्यत, एकादशाक्षरा वै त्रिष्टुप्, त्रिष्टुभ मेव तदुभयतो मध्यन्दिने ऽचीक्लृपताम् ; अध्वर्यो शोशोंसावो मित्याह्वयते तृतीयसवने सप्ताक्षरेण, शंसा मोदैवो मित्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण, तद्द्वादशाक्षरं सम्पद्यते, द्वादशाक्षरा वै जगती, जगती मेव तत्पुर-

स्तात्तृतीयसवने ऽचीक्लृपताम्; उक्थं वाचीन्द्राय देवेभ्य इत्याह ग्रस्त्वैकादशाक्षर मो मित्यध्वर्युरेकाक्षरं, तद् द्वादशाक्षरं सम्पद्यते, द्वादशाक्षरा वै जगती, जगती मेव तदुभयतस्तृतीयसवने ऽचीक्लृपतां; तदेतदृषिः पश्यन्नभ्यनूवाच— 'यद् गायत्रे अधि गायत्र माहितं; त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत, यद्वा जगज्जगत्याहितं पदं, य एतद्विदुस्ते अमृतत्व मानशुः'—इति; एतद्वै तच्छन्दश्छन्दसि प्रतिष्ठापयति कल्पयति देवविशो य एवं वेद"—इति ३. २. १।

—१६—(१.८.), अस्य स्थाने (३.२.१.) इदं ज्ञातव्यम्।

—२०— भावः। इदं त्वधियज्ञं व्याख्यान मैतरेयब्राह्मणत एव यथायथं लब्धं सायणाचार्येण, न तु स्वमनीषया ज्ञात मिति भवेत् प्रमाणपरतन्त्राणां तोषायैव।

८२—५— निरुक्तम्। (५. १. ५.)।

—८— गायत्र०। 'गायत्ररथन्तरादिसञ्ज्ञकं'—इति शुद्धम्। गायत्रं नाम साम सावित्र्या मुत्पन्नं, चतुर्ष्वपि गानग्रन्थेभ्यः पृथगेवाधीयते। तद्विधायकं ब्राह्मणन्तु 'इमे वै लोका गायत्रम्'—इत्यादि ता० ब्रा० ७. १.। तदार्षेयन्तु ब्रा० १. १। रथन्तरं नाम साम 'अभि त्वा शूर नोनुमः (छ० आ० ३. १. ५.१.)'—इत्यस्या मुत्पन्नम्, आरण्यके गीतम् (२. १. २१.)। तदार्षेयं ब्रा० ३.१३। तद्विधायकं ब्राह्मणन्तु 'प्रजापतिरकामयत'—इत्यादि, 'अभीति रथन्तरस्य रूपम्'—इति च ता० ब्रा० ७. ६. ११. ४।

—१०— 'एकं साम तृचे क्रियते स्तोत्रियम्'—इति हि सिद्धान्तः। त्रयीपरिचये १०० पृ० २३ पं०, १०५ पृ० ११ पं० १०८ पृ० ७,८ श्लो०, इह चाग्रे १८२ पृ० १२ पं०।

—१२— 'पश्चादन्योन्यां'—इत्यस्य स्थाने 'पश्चाद् यद्योन्यां'—

इत्येव पाठ्यम् । 'यद् योन्यां तदुत्तरयोर्गायति'–इति च सिद्धान्तः ।

८३—३— सप्त छन्दांसि पार्षदसूत्रे ( ३. ४. १. ) यथा—

'गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः ।

पङ्क्तिस्त्रिष्टुब् जगती च सप्तच्छन्दांसि तानि ह ।

अष्टाक्षरप्रभृतीनि चतुर्भूयः परं परम्'–इति ।

'छन्दः'–इत्यधिकारपठितानि 'गायत्री'–इत्यारभ्य आग्निवेश्यस्त्रन्ता-न्तानि षड्विंशतिसङ्ख्याकानि पैङ्गलसूत्राणि द्रष्टव्याणि ( ३-७. ) ।

—१७—ऋ० ७. ३२. २२ = छ० आ० ३.१.५.१. तद्यथा—

"अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः ।

ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः"–इति ।

८४—१— साम ब्राह्मणेन ( ता० ब्रा० ७. ७. ) ।

८३—९— सिन्धुं । निरुक्ते—'सिन्धुः स्रवणात्' ५.४.९ ; 'सिन्धुं + + नदीम्' ७. ५. ३ ; 'सिन्धौ अधि निवसतः' ९. १.१० ( 'सिन्धौ सिन्धुदेशे ; यद्वा लक्षणया सिन्धुतीरे समुद्रतीरे' –इति ऋ० सं० १. १२६. १. सायणः ) ; '( सिन्धूनाम् ) स्यन्द-मानाना मासा मपाम्' १०. १. ५ ; 'सिन्धुं × × नदीम्' १२. ४. ५ ; 'सिन्धुः ( नदः ) स्यन्दनात्' ९. ३. ५ ; 'सिन्धुः' ( 'सिन्धुश्च नदः' दुर्गाचार्यः ) १२. ३. ११ ; अथात्मनो महतः प्रथमं भूत-नामधेयान्यनुक्रमिष्यामः । × × × सिन्धुः' १३. २. ११ । 'सूर्य आत्मा जगतस्तस्थुषश्च' ऋ० सं० १.८.७८ । य० वा० सं० ७.४२ ।

—१०— 'रथन्तरं साम भवति' तै० ब्रा० २. ७. १. १ । ऐ० ब्रा० ८. १ । शत० ब्रा० १. ७. २. १७ ; ८. १. १९ । साङ्ख्या० श्रौ० १०. ९. २०. ११. २. १२ ; १३. २९. १४ । छा० उप० २. १२. १, २ । कौषी० उप० १.५ । ता० ब्रा० ८.८.१२ ।

—११— 'गायत्रोऽग्निः' तै० सं० २. २. ५. ५ ।

—,,— समिधः । 'अग्नेर्विश्वाः समिधो देवयानीः'–इति ऋ० सं० १०. ५१. २ ।

—१२— मह्ना = महत्त्वेन निरु० १०. १. १० ; ११.४.२ ।

—,,— महित्वम् = महत्वम् निरु० ६. २. ५ ; = महाभाग्यम् ७. ६. ३ ; महित्वा ('महत्वेनोपेतम्' ऋ० सं० ८. १. १६. ५. सा० भा० ) १३. २. १८ ।

८४—१०—भवति । अस्मन्मते त्वस्यार्थान्तरतापि स्यात् । तद्यथा— यः 'मह्ना' महान् देवः 'जगता' सूर्यरश्मिबलेनोद्गच्छता रसेन 'दिवि' अन्तरीक्षे 'सिन्धुं' स्यन्दनशीलं पर्जन्यम् 'अस्तभायत्' ; 'रथन्तरे' सौरजगन्मण्डलमध्ये 'सूर्यं' 'पर्यपश्यत्' परिपश्यति, लोको यत्प्रसादेनेति शेषः ; यत्कृते 'गायत्रस्य' भूलोकाधिपतेः अग्नेः 'तिस्रः' एता भूराद्या व्याहृतयः 'समिधः' समिन्धनरूपाः, इति च 'आहुः', विज्ञातार इति शेषः ; सः 'महित्वा' महत्त्वेन 'ततः' तेभ्यो लोकत्रयेभ्यः, तत्तद्देवताभ्यः, तस्मात् समुदिताद् विश्वाच्च 'प्ररिरिचे' अतिरिक्तोऽस्ति ; एतस्मात्सौरजगन्मण्डलाद्बहिरप्यस्तीति ॥

———

[ २६ ]

८४—११— प्रवर्ग्ये । 'शिरो वा एतद् यज्ञस्य यत् प्रवर्ग्यः ग्रीवा उपसदः । पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति'–इति तै० आ० ५. ६. १. । अत्रैतत् सायणीयं भाष्यम्—"तत्र प्रथमं तावत् प्रवर्ग्यस्य कालं विधत्ते—'शिरो वा ०—० प्रतिदधाति'–इति । प्रवर्ग्यस्य यज्ञशिरोरूपत्वात्, उपसदां च यज्ञग्रीवारूपत्वात्, उभयोः

सामीप्याय उपसदा मनुष्ठानात् प्रागेव प्रवर्ग्यं कर्मानुतिष्टेत् । तप्ते घृते पयःप्रक्षेपः प्रवृञ्जनम् , तद् यस्मिन् कर्मविशेषे विद्यते, सोऽयं प्रवर्ग्यः; स कर्मविशेषो यथा सम्पद्यते तथा प्रवृञ्जनं कुर्यादित्यक्षरार्थः"–इति । 'तस्मादध्वर्यू घर्मं सम्भरतस्तं सम्भृत्या-हतुर्ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहीति'–इति ऐ० ब्रा० १. ४. १; ३. ४. २. । शत० ब्रा० ३. ४. ४. १; ७. २. २. १; १०. २. ५. २; १४. १. १. १०, २७; ३. १२; ३. २. २२, ३० । साङ्ख्या० ब्रा० ८. ७ । आश्व० श्रौ० ४. ६; ५. १२; १२. ४ । कात्या० श्रौ० ८. ३. १९; २६. २. १, २ । साङ्ख्या० श्रौ० ५.१२.१ । लाट्या० १.६. १ । 'एषो खा दिक्षा ये ते पुरा प्रवर्जनात्'–इति च शत० ब्रा० ७.१.२.९; १४.२.२.४७ ।

—,,—घर्मधुगा० । घर्मदुघा गौः भवति । 'तेषां ( अङ्गि-रसां ) पृश्निर्घर्मदुघासीत्' तै० ब्रा० २. १. १. १. । 'घर्मधुगिति याज्ञिकाः' निरु० ११. ४. ८ । तत्रैव 'घर्मं = हरणम्'–इति च । 'घर्मं हरणं पयसाम्'–इति च तट्टीका तत्र दुर्गाचार्यस्य । 'घर्मं क्षीरस्य क्षरणशीलम्'–इति चाग्रे इहैव सायणः ( ८७ पृ० ११ पं० ) । 'अध्वर्युर्घर्मदुघा माह्वयति'–इति आश्व० श्रौ० ४. ७. २ । शत० ब्रा० ४. ३. ७. ४; १४. ३. ४. १५; ३. १. ३२ । कात्या० श्रौ० २६. ७. ४२ । 'अस्मै द्यावापृथिवी भूरि वामं दुहाथां घर्मदुघे इव धेनू' अथ० सं० ४. ५. २. ४ । 'किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्'–इति ऋ० सं० ३. ३. २१. ४ । "आशिरं सोममिश्रणयोग्यं पयो 'न दुह्रे' न दुहन्ति, किञ्च घर्मं प्रवर्ग्याख्यकर्मोपयुक्तं महावीरपात्रं, स्वपयःप्रदानद्वारेण 'न तपन्ति' न दीपयन्ति । एतेन सान्नाय्या-

र्थमपि नोपयुज्यन्त इत्यपि सूचितं भवति"-इति तत्र सायणः।

अत्र यदुक्तं घर्म मितिपदस्य व्याख्यानं महावीरपात्र मिति, तद् घर्मशब्दस्य मुख्येऽर्थे न तपन्तीत्येतस्यान्वयानुपपत्त्या लक्षणया तदाधारे वृत्तिस्वीकारात्। एव मन्यत्रापि यत्र यत्र घर्म-प्रवर्ग्य-महावीर-शब्दाना मेकार्थतया व्याख्यायते, तत्र सर्वत्रैवौपचारिकत्वेन समाधेयम्। वस्तुतः, प्रवर्ग्यो नाम घर्मोत्पादनार्थः तप्ते घृते पयःप्रक्षेपरूपः प्रवृञ्जनाख्यः कर्मविशेष; घर्मस्तु तत्र समुत्पद्यते उपादेयखाद्यविशेषः, महावीरः खलु तत्सम्पादनायाधारभूतः कटाहविशेषः, उखा चुल्लीत्यनर्थान्तर मिति विवेकः।

'इन्द्राय घर्मवते पुरोडाश मेकादशकपालं निर्वपेद् ब्रह्मवर्चसकामः। ब्रह्मवर्चसं वै घर्म इन्द्र मेव घर्मवन्तꣳ स्वेन भागधेयेनोपधावति, स एवास्मिन् ब्रह्मवर्चसं दधाति, ब्रह्मवर्चस्येव भवति'-इति तै० सं० २. २. ७. २।

८५—७ – तैत्तिरीयकम् ( तै० आ० ५. १. ५. ४.)। "यद् ग्राꣳ३ इत्यपतत्"-इति तत्रत्यो पाठः।

—७— तदुशब्दः। तत्, उशब्द एवकारार्थः। 'अथाप्युकार एतस्मिन्नेवार्थे उत्तरेण मृषेमे वदन्ति सत्य मु ते वदन्तीत्यथापि पदपूरण इद मु तदु'-इति यास्कः (१. २. ४.)। "अथाप्युकारः०। विनिग्रहार्थे भवति। स पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तो प्रयुज्यते। तद्यथा— 'मृषा' 'इमे' वृषलाः 'वदन्ति', 'सत्यम्' 'उ' 'ते' ब्राह्मणाः 'वदन्ति' 'इति'। विनिग्रहो नाम विभागेनावस्थितयोः यज्ञदत्तदेवदत्तयोरेकस्मिन् यज्ञदत्ते अभिमतज्ञापनस्य नियमेन ग्रहणं यत् स विनिग्रहः; तदर्थो विनिग्रहार्थः; विनिग्रहार्थ एव विनिग्रहार्थीयः। 'अथापि'

उकारः 'पदपूरणः' भवति— 'इद मु ( ऋ० सं० ४. ५१. १. )' + + + । 'इदं' तत् ज्योतिः + + + उकारः पदपूरणः । + + + । 'तदु ( ऋ० सं० १. ६. २. ६. )' । + + + । 'तत्' × × × 'उ' इति पदपूरण एव। × × × "–इति च तद्वृत्तिः । अन्यत्रापि 'ये प्रवृत्तेऽर्थे ऽमिताक्षरेषु ग्रन्थेषु वाक्य-पूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कम् ईम् इत् उ इति'–इति निरु० १. ३. ५ ।

—८— यद्वा। 'वागेषा माध्यमिका; धर्मधुगिति याज्ञिकाः' –इति(११.४.८.)यास्कोक्तिस्वारस्यात् व्याख्यानान्तरमाह यद्वेति ।

—१७— च्लेरङ् ( पा० ३. १. ५२. )। अड्भावः ( पा० ६. ४. ७५. )। अत्रेदं यास्कव्कृतं व्याख्यानम् ( ११. ४. ८. )— "उपह्वये सुदोहनां धेनु मेतां कल्याणहस्तो गोधुगपि च दोग्ध्ये-नां श्रेष्ठं सवं सविता सुनोतु न इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकं यद्वा पयो यजुष्मदभीद्धो धर्मस्तं सु प्रब्रवीमि"–इति ॥

---

[ २७ ]

८६—७— अघ्न्या। निघण्टौ गोनामसु प्रथमम् पदम् (२. ११. १.)। 'अघ्न्या अहन्तव्या भवति, अघघ्नीति वा'–इति निरु० ११. ४. ८. ।

—१०—अत्रापि। निरुक्ते 'तस्या एषापरा भवति ( ११. ४. १० )'–इति अत्रापि व्याख्याद्वैविध्यसूचनात्। निरुक्ते त्वेषा ऋक् 'निगदव्याख्याता'–इत्युक्तम् ( ११. ४. ११. )। निगद्यमानेनैव मन्त्रपाठेनैव विस्पष्ट माख्यातेति तस्यार्थः; तैत्तिरीयारण्यकादौ सायणादिभिस्तथैव बोधितत्वात् ( तै० आ० १.८.४. )।

—१६— वाय्वादित्यौ। 'अश्विभ्यां द्यावापृथिवीभ्यां सूर्या-चन्द्राभ्यां वा वर्षाय दुहां दुग्धां प्रचरतां पयः उदकम्'–इति हि तत्र ( निरु० ११. ४. १० ) दुर्गभाष्यम् ॥

---

[ २८ ]

८६—१८— अभिष्टये। 'अध्वर्यू घर्मं सम्भरतस्तं सम्भृत्या-हतुर्ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहीति ( १. ४. १. )' –इत्यारभ्य ऐतरेयब्राह्मणोक्त मभिष्टवकाण्डं द्रष्टव्यम्। तत्रैव 'गौरमीमेदनु वत्सं मिषन्तम्'–इति च ( १. ४. ५. )। आश्व-लायनीयश्रौतसूत्रे च ( ४. ६. ७ ) तथैव।

८७—७— मीमयतिः। धातुपाठः १३. २५। पुरस्ता-च्चोक्त मेव मेव ( ६२ पृ० ८ ऋ० )।

—८— मातवै। तुमर्थे तवै-प्रत्ययः ( पा० ३. ४. ९. )।

—१४— अत्रापि। निरुक्ते त्वस्य मेघपरतया व्याख्यान मेव मुख्य मिति सूचितम्। तद्यथा— '(गौः) वागेषा माध्य-मिका; घर्मधुगिति याज्ञिकाः'–इति ११. ४. ८। तदेवं घर्म-धुगिति निरुक्तकारस्य न तु स्वमत मिति स्पष्टम्। निघण्टौ च वाङ्नामसु गौरिति चतुर्थं पदम् ( १. ११. )।

८८—३— करोति। अत्रैतद्यास्कीयं व्याख्यानम्— ''गौरन्व-मीमेद्वत्सं निमिषन्त मनिमिषन्त मादित्य मिति वा मूर्धान मस्याभिहिङ्ङकरोन्मननाय सृक्वाणं सरणं घर्मं हरण मभि वावशाना मिमाति मायुं प्रप्यायते पयोभिर्मायु मिवादित्य मिति वा''–इति ११. ४. ८. ॥

---

[ २८ ]

८८—१६— रूपनाम। निघ० ३. ७. २।

—१७— अथ मेकार्थः। अधियज्ञीय इति भावः। शाकपूणिमते यास्कमते चाय मर्थो रूपक एव, न तु वास्तविकः; एतद्व्याख्याने 'वागेषा माध्यमिका'—इत्येतस्यानुक्तेः (निरु० २. २. ५.)। वस्तुतोऽत्र सूक्ते य एव मन्त्रा याज्ञिकैरधियज्ञतया व्याख्यायन्ते, तेषां सर्वेषा मेवाधिदैवतानि व्याख्यानान्येव मुख्यानि; यास्कीयनिरुक्तवचनभङ्ग्या तथैवप्रतीतेः, तादृशार्थमात्रतः शाकपूणेः संशयोच्छेदवर्णनाच्चेति दिक्।

—१८— शाकपूर्णिः। शाकपूणिरित्येव स्याद् विशुद्धम्; निरुक्ते बहुत्र तथैव दर्शनात् (३. ११; ८. ५, ६, १४; १२. १९; १३. १०, ११)। अन्यत्र च साङ्ख्या० ब्रा० ४. १०। निदा० सू० ४. ९। वायु पु० ३. ४. २३। 'शाकानि यः पूणयति संहन्ति, स शाकपूणः, तस्यापत्यं शाकपूणिराचार्यः'—इति निरुक्तवृत्तौ दुर्गाचार्यः (२. २. ४.)।

८९—४—(नि० २. ८.) = (२. २. ४.)। तन्निरुक्तपाठो यथा—'शाकपूणिः सङ्कल्पयाञ्चक्रे सर्वा देवता जानामीति, तस्मै देवतोभयलिङ्गा प्रादुर्बभूव, तां न यज्ञे, तां पप्रच्छ विविदिषाणि त्वेति सास्मा एता मृच मादिदेशैषा मद्देवतेति'—इति निरु० २. २. ४।

९०—१८— अमेदाभिप्रायेण। अत्रैतद् यास्कीयं व्याख्यानम्—"अयं स शब्दायते येन गौरभिप्रवृत्ता 'मिमाति मायुं' शब्दङ्करोति; मायु मिवादित्य मिति वा; वागेषा माध्यमिका 'ध्वंसने' मेघेऽधिश्रिता; सा चित्तिभिर्निकरोति मर्त्यं, विद्युद्

भवन्ती प्रत्यूहते वव्रिं'; वव्रिरिति रूपनाम, वृणोतीति सतो वर्षेण प्रच्छाद्य पृथिवीं; तत् पुनरादत्ते"—इति २. २. ५ ॥

---

[ ३० ]

८१—१— जीवनवता जीवितशरीर मिति यावत्। जीवशब्दः पुंलिङ्ग आत्मवाची, क्लीबलिङ्गस्तु जीववच्छरीरवाचीति विवेकः। 'जीवं वै देवानां हविः' शत० ब्रा० १. २. १. २०।

—,,— तुरगातु। 'तुरः इति यमनाम; तरतेर्वा, त्वरतेर्वा, त्वरया, तूर्णगतिः'—इति निरु० १२. २. ३। तुरश्चाति = तूर्णं मश्नुतेऽध्वानम्' निरु० २. ७. ६। 'तीव्रयाणः = तूर्णयानः' निरु० ५. ३. ३ ( निघ० ४. २. ५४. )। गातुं = गमनम् निरु० ४. ३. ५। अनयोर्बहुव्रीहिः ॥

—२— सदेजच्छये। सत् एजत् शये। निवण्टौ गृहनामसु ( निघ० ३. ४ ) 'पस्त्यम्'—इति षष्ठं पदम्।

—४— आकारः। 'आ इत्यर्वागर्थे'—( १. १. ५. ) इति, 'एतस्मिन् ( समुच्चये ) एवार्थे × × × आकारः'—इति ( १. २. ३. ), 'आकार उपसर्गः पुरस्तादेव व्याख्यातः; अथाप्युपमार्थे दृश्यते'—इति ( ३. ३. ४ ), 'आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः; अथाप्यध्यर्थे दृश्यते'—इति ( ५. १. ६ ) च निरुक्ते।

—६— पूर्वं। अस्मन्मते तु पूर्ववचनं निरर्थकम्; अन्नापरपर्यायरयिरूपस्य नामरूपवतो देहस्य ब्रह्म-हिरण्यगर्भ-प्राणरूपस्य जीवस्य च एकस्मात् परमात्मन एवोत्पत्तिश्रुतेः। तथाहि—'तस्मादेतद् ब्रह्म नाम रूप मन्नञ्च जायते'—इति मु० उप० १. १. ९। किञ्च 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं

वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'–इति च २. १. ३। मुण्डकेऽपि ( २. १. ) जीवसृष्टिः श्रूयत एव । तथाहि—'तदेतत् सत्यम्, यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षरात् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति'–इति ।

—८—जीवापीतं । 'जीवापितं' इतीह पाठ्यम् ; जीव्-धातोर्णिचि छान्दसे पुगि रूपम् ।

—९— श्रुतेः । ( छा० उप० ६. ११. ३. )। 'जीवापेतं'–इति शुद्धम् । 'न जीवो म्रियते'–इति तच्छेषः ।

—,,— जीवः । 'जीवा ज्योतिरशीमहि' ऋ० सं० ७. ३२. २६ । 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' श्वेता० उप० ५. ९ । छान्दो० उप० ६. ३. २ ; ११. १ ; २ । प्रश्न० उप० ५. ५ । 'जीवसञ्ज्ञो ऽन्तरात्मान्यः सहजः सर्वदेहिनाम् । येन वेदयते सर्वं सुखं दुःखं च जन्मसु' म० सं० १२. १२, २२, २३, ५३ । याज्ञ० सं० ३. १२४ । 'अयं कर्तृत्वभोक्तृत्वाभिमानित्वेन इहलोक-परलोक-गामी व्यावहारिको जीव इत्युच्यते'–इति वेदान्तसारः ।

—,,— स्वधाभिः । 'स्वधा'–इति निघण्टौ उदकनामसु ( १. १२. ९७. ), अन्ननामसु ( २. ७. १७. ) च । निरुक्ते ७. ७. ३. स्वधया = अन्नेन, १०. १. ६. स्वधावन् = अन्नवते, १२. २. ६. स्वधावः = अन्नवन् । उदकस्य 'निगमोऽन्वेषणीयः'–इत्युक्तं निघण्टुभाष्ये देवराजेन ।

—१०— स्वधाकारपूर्वकदत्तैः । पिण्डादिभिरित्यर्थः । 'स्वधा पितृभ्यो अजरां कृणोमि' ऋ० सं० १२. २. ३२ । 'नमो

देवेभ्यः स्वधा पितृभ्यः' वा० सं० २. ७। 'स्वधा वै पितृणामन्नम्' शत० ब्रा० १३. ८. ४. ४। 'आ स्वधा अस्तु स्वधा' तै० ब्रा० १. ६. ९. ५। 'ओं स्वधा' शत० ब्रा० २. ६. १. १४। 'नमस्कारो देवानां स्वधा पितृभ्यः' तै० सं० ६. ३. २. ५। अस्मन्मते तु स्वधाशब्दस्य स्वधाकारपूर्वकेऽन्ने लक्षणास्वीकारो निरर्थकः; अन्नवाचित्वेनापि वेदे तस्य सुप्रहत्वात्। 'अन्नाद् भूतानि जायन्ते' (तै० उप० २. २.)'-इत्यादिश्रुतेः, छान्दोग्ये बृहदारण्यकेऽपि जीवगतिप्रकरणाम्नानाच्च (५. ३. १-१०; ६. २. १-१६.) जीवानां मन्नैश्वरत्वं स्फुटम्॥

---

[ ३१ ]

९२—१—आदित्यम्। व्याख्यानमेतदधिदैवतपक्षे; अध्यात्मपक्षेऽप्यस्य व्याख्यानं सायणसम्मतम्। अतएवोक्तमिहैव एतत्सूक्तोपक्रमे (४९ पृ०) 'अपश्यं गोपा मित्यादिना ब्रह्मसाक्षात्काररूपस्य प्रशंसा'-इति। तदाध्यात्मिकं व्याख्यानं त्वेवं दृश्यते निरुक्तपरिशिष्टे— "आवरीवर्त्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद् ब्रह्म तत् सत्यं तत् सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके तत् क्षेत्रं तज्ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी (रजः) इति कामद्वेषस्तम इत्यविज्ञातस्य विसृज्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते प्रतिभातिलिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्तमोऽपि निलयलिङ्ग आकाशः"-इति (१३. २. ३.)।

—३— भौमादित्यानां। भौमादीना मिति शुद्धम्।

—४— लङ्कादिप्रदेशेषु। भूविद्याया: खविद्यायाश्चाल्प परिचय: स्यात् सायणस्य।

—६— अस्मद्ब्राह्मणम्। ऋग्ब्राह्मणम्, ऐतरेयक मिति यावत् ( ऐ० आ० २. १. ६. ६. )। वस्तुत: सायणस्तु न ऋग्वेदी, 'शाखा तस्य च याजुषी'–इतिपरिचयग्रन्थस्य विद्यमानत्वात्। अतोऽत्र 'अस्य ब्राह्मणम्'–इत्येव पाठो युक्ततर: स्यात्।

—८— तैत्तिरीयकम्। ( तै० आ० ५. ६. ४. )। शतपथेऽपि—'अपश्यं गोपा ०—० एष वै गोपा य एष तपति, एष हीदं सर्वं गोपायति'–इति १४. १. ४. ८। 'गोपा इति, एष हि सर्वेषां भूतानां गोपायितादित्य:'–इति च निरुक्तम् ७. ३. २। इहैव पुरस्तादपि ( ७६ पृ० ) गतम् 'इनो विश्वस्य भुवनस्य गोपा:'–इति॥

---

[ ३२ ]

८२—१०— ईम्। ई मित्यव्ययम्। सायणीयभाष्ये प्राय: सर्वत्रैव इदमर्थक मवगम्यते, यत्रेदमर्थकं पदान्तरं श्रूयते तत्रानर्थकं च भवति। यथा— 'ए मेनं सृजता सुते' ऋ० सं० १. ९. २। उदाहृतं चैतदेव निरुक्ते निपातप्रकरणे 'अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थका: कम् ईम् इत् उ इति'–इति ( १. ३. ५. )। 'प्रवृत्ते' परिसमाप्ते 'अर्थे' अन्यैरेव वाक्यगतै: पदै:, 'अमिताक्षरेषु' गद्यग्रन्थेषु 'वाक्यपूरणा:', 'मिताक्षरेषु' पद्यग्रन्थेषु 'पदपूरणा:' इत्येव तदर्थ: सर्वसम्मत:। तदेवं यत्रान्यै: पदै: अर्थो न

परिसमाप्तः, तत्र तु नेमेऽनर्थका इत्यपि फलितं भवति। अत एवेहैव पुरस्तात् (६०, ६२, ६८ पृ०) त्रिषु व्याख्यात मी मिदमर्थकम्, एवार्थकञ्चैकत्र (६८ पृ०) सायणेन। यद्यप्येवं तथापि नैरुक्तनिगमेष्वपि बहुष्वेव 'ईम्' श्रूयते; तेषु सर्वेष्वेव तस्यानर्थक्य मेव सूचितं यास्केन (१. ३. ५; २. २. ४; ४. ३. २; ५. ४. १०; १२. ३. १.), पञ्चमे पुनस्तदानर्थक्यं स्मारितञ्च। निघण्टौ तु नैघण्टुके काण्डे (१. १२. ६२.) उदकनामस्वेकं पठित मीम् पदम्, नैगमेऽप्यपरम् (४. २. ८०.)। नैघण्टुक-परिपठित मीमिंशब्दो व्याख्यातो यास्केन 'अथ ये प्रवृत्तेऽर्थे'-इत्यादिना (८८ पृ० १८ पं०); क्रमप्राप्तस्य नैगमस्य 'ईम्'-शब्दस्य व्याख्यानावसरेऽपि (५. ४. १०.) तदेव संस्मृतम्।

—१०— चकार। "चकारेति करोति-किरती सन्दिग्धौ वर्षकर्मणा"-इति निरुक्तम् २. २. ४। 'करोति-किरती सन्दिग्धौ धातू वर्षकर्मणा सम्बध्यते'-इति तट्टीका।

—,,— निरुक्ते तु (२. २. ४.) 'सः' = मध्यमः (मेघः)।

—११— ह्वरगिति निघण्टावन्तर्हितनामसु (३. २५.) चतुर्थं पदम्। अस्य चेह 'आदित्योपह्वितम्'-इति व्याख्यानं कृतं यास्केन (निरु० २. २. ४.)। 'आदित्यस्य रश्मिजालेन वर्षं मनभिव्यक्तम्'-इति तट्टीका।

—१२— मातुर्योना परिवीतः। 'माता अन्तरिक्षम्, निर्मीयन्तेऽस्मिन् भूतानि। योनिरन्तरिक्षम् महानवयवः; परिवीतो वायुना। अय मपीतरो योनिरेतस्मादेव; परियुतो भवति'-इति निरु० २. २. ४। तदेव भिन्नार्थैकवाचिनोः मातृयोनिशब्दयोरेकत्र श्रवणादेकस्यार्थसङ्कोचः स्यादित्याह

दुर्गाचार्यः—'योनिरन्तरिक्षम्, आकाशस्यैव प्रदेशविशेषः कश्चित्' -इति। वस्तुतोऽन्तरीक्षस्य क्वचिदंशे एव मेघः समुत्पद्यते, स च वायुना परिवीतस्तिष्ठति; स्त्रीयोनावपि गर्भस्य स्थितिर्जलेन परियुत एव; वायुनेव वा स्यात्; दुर्गाचार्यस्त्वाह 'स्नावा मांसेन च'-इति (२. २. ४.)।

—१२— बहुप्रजाः। 'बहुप्रजाः कृच्छ्र मापद्यते इति परिव्राजकाः'-इति परिव्राजकमत मुक्त्वावदद् यास्कः स्वमतम्—'बहुप्रजा भूमि मापद्यते'-इति। तदेव मिह बहुप्रजाः बहुधारो वृष्टिरिति यास्कमतम्, बहुप्रजाः बह्वपत्यो दरिद्र इत्यपरमतम्। किञ्च यास्कमते निर्ऋतिशब्दोऽत्र पृथ्वीवाचकः, अपरमते तु दुःखवाचक इति विशेषः। 'आविवेश'-इत्यस्यैवार्थः कृतो यास्केनात्र 'आपद्यते'-इति (२. २. ४.)।

८३—२४— अस्मन्मते त्वस्य मन्त्रस्य साङ्ख्यनयेऽप्यर्थः सम्भवेत्। तद्यथा—'यः' महान्, प्रकृतेः प्रथमपरिणामः 'ईं' जगत् 'चकार', 'सः' 'अस्य' तत्त्वं फलं वा सुखदुःखलक्षणं 'न वेद' नैव जानाति; अचेतनत्वात्। 'यः' तु पुरुषः 'ईं' जगत् 'ददर्श' पश्यति, स 'नु' तस्मात् जगतः महतो वा 'हिरुक्' पृथगेव; निर्लिप्तत्वात्। तदेवं प्रकृतेः कर्त्तृत्वं, पुरुषस्य द्रष्टृत्वं चाख्यात मिति सिद्धं साङ्ख्यमत मिति दिक् ॥

---

[ २१ ]

८४—६— द्युलोकः। द्युस्थः सूर्य एवात्राभिप्रेतः; सूर्यलोक एव हि द्युलोक उच्यते।

—८— नाभिरत्र। 'अत्र' सौरजगन्मण्डले 'नाभिः' नाभि-

भूतः, स एव। यथा शारीर-नाभिः सर्वेषां नाड्यादीनां ग्रन्थि-भूतः तिष्ठति, यथा च चक्रमध्यभागे अरादीना माश्रयस्तिष्ठत्येव नाभिः, तथैतज्जगन्मण्डलमध्यदेशे सर्वेषां ग्रहोपग्रहाणां ग्रन्थि-रूपस्तिष्ठति सूर्यः, ततः सोऽपि नाभिरिति व्यपदिश्यते। तदुक्तं यास्केनास्यैव मन्त्रस्य व्याख्याने— 'नाभिः सन्नहनात्, नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुः। एतस्मादेव ज्ञातीन्सनाभय इत्याचक्षते'—इति ४. ३. ५।

—११— बन्धुः। 'अत्र' जगन्मण्डलमध्ये स्थितः स एव सूर्यः 'नाभिः' नाभिभूतः, 'बन्धुः' बन्धनं च सर्वेषां पृथिव्यादीनां तथास्माक मपि तत्रत्याना मित्यर्थोऽस्माकम्। अत एवोक्त मिह यास्केन— 'बन्धुः सम्बन्धनात्, नाभिः सन्नहनात् ०—० ज्ञातीन्सनाभय इत्याचक्षते सम्बन्धव इति च'—इति ४. ३. ५।

—१६— द्युलोकइत्यादिः रश्मिभिरित्यन्तो ग्रन्थः स्वानि-कल्पविरुद्धः; तत्र हि सुव्यक्त मुक्तम्— 'पिता दुहितुर्गर्भ माधात् पर्जन्यः पृथिव्याः'—इति ४. ३. ५। तदेव मिह पितेति पर्जन्य एव ग्राह्यो न त्वन्यः कथमपीत्यस्माकम्।

—१७— दुहितुः। 'दुहिता— दुर्हिता, दूरे हिता, दोग्धे-र्वा'—इति निरु० ३. १. ४।

८५—१— ब्रह्मोद्ये। ब्रह्मोद्यम्, ब्रह्मवद्यम्, ब्रह्मवा-द्यम्, इमानि त्रीण्येव पदान्येकार्थान्येव, शाखाभेदात् पाठभेदाः। 'अथ ब्रह्मोद्यं वदन्ति'—इत्यादि ऐ० ब्रा० ५. ४. ६.। ब्राह्म-णाना मुद्य संवादो ब्रह्मोद्यम्'—इति तत्रैव सा० भा०। तत्स्व-रूपन्तु 'त्रमेधस्य परुच्छेपस्य ब्रह्मवाद्य मवदेता मस्मिन् दारावार्द्रे' ऽग्निं जनयाव यतरो नौ ब्रह्मीयामिति त्रमेधो ऽभ्यवदत् स धूम

मजनयत् पतङ्ग्नोऽब्रवद्त् सोऽग्नि मजनयद्’–इत्यादिश्रुतेः ( तै० सं० २. ५. ८. ३, ४ ) अवगन्तव्यम्। “ब्रह्मोद्यं वदन्ति,— कः स्विदेकाकी चरति क उ स्विज्जायते पुनः। किंस्विद्धिमस्य भेषजं किंस्विदावपनम्महदिति होताध्वर्युं पृच्छति। सूर्य एकाकी चरति चन्द्रमा जायते पुनः। अग्निर्हिमस्य भेषजं भूमिरावपनं महदिति प्रत्याह। किंस्वित् सूर्यसमं ज्योतिः किं समुद्रसमं सरः। कः स्वित् पृथिव्यै वर्षीयान् कस्य मात्रा न विद्यत इत्यध्वर्युर्होतारं पृच्छति। सत्यं सूर्यसमं ज्योतिर्द्यौः समुद्रसमं सरः। इन्द्रः पृथिव्यै वर्षीयान् गोस्तु मात्रा न विद्यत इति प्रत्याह। पृच्छामि त्वा चितये देवसख यदि त्व मत्र मनसा जगन्थ। केषु विष्णुस्त्रिषु पदेष्वस्थः केषु विश्वम्भुवन माविवेशेति ब्रह्मोद्गातारं पृच्छति। अपि तेषु त्रिषु पदेष्वस्मि येषु विश्वं भुवन माविवेश। सद्यः पर्येमि पृथिवी मुत द्या मेकेनाङ्गेन दिवो अस्य पृष्ठ मिति प्रत्याह। केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि। एतद् ब्रह्मन्नुपवल्हामसि त्वा किंस्विन्नः प्रति वोचास्य- त्रेत्युद्गाता ब्रह्माणं पृच्छति। पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः- पुरुषे अर्पितानि। एतत् त्वात्र प्रतिमन्वानो अस्मि न मायया भवस्युत्तरो मदिति प्रत्याह। प्राञ्च मुपनिष्क्रम्यैकैकशो यजमानं पृच्छन्ति, पृच्छामि त्वा पर मन्तं पृथिव्या इति; इयं वेदिः परो अन्तः पृथिव्या इति प्रत्याह”–इति आश्व० श्रौ० १०. ९. १–३। तैत्तिरीयब्राह्मणे पुनरेषां मन्त्राणां किञ्चिद् व्याख्यान मपि श्रूयते। तद्यथा— ‘होता च ब्रह्मा च ब्रह्मोद्यं वदतः०—० दक्षिणतो ब्रह्मा भवति ०—० उत्तरतो होता भवति ०—० किं स्विदासीत् पूर्वचित्तिरित्याह, द्यौर्वै वृष्टिः पूर्वचित्तिः, दिव मेव

वृष्टिं मव रुन्धे'-इत्यादि ३. ८. ५। एवं शत० ब्रा० ४. ६. ९. २०; ११. ४. १. २; ५. ३. १; ६. २. ५; १३. २. ६. ९; ५. २. ११; १४. ६. ८. १। कात्या० श्रौ० १२. ४. २०। म० सं० २.२२१ (ब्रह्मोद्या)।

—६— पृच्छामीति, इयं वेदीति च द्वे ऋचौ वाजसनेयिनो ऽप्यामनन्ति (२३. ६१, ६२.)।

—१५— तैत्तिरीयकम्। तै० आ० ५. ३. ५।

८६—१०— श्रुतिः। तै० ब्रा० ३. २. ९. १२।

—१७— पर्यवसानाच्च। एतयोर्ऋचोर्व्याख्यानपर मेतदस्ति तैत्तिरीयकं ब्राह्मणम्— (१) "पृच्छामि त्वा पर मन्तं पृथिव्या इत्याह, वेदिर्वै परो अन्तः पृथिव्याः; वेदि मेवाव रुन्धे। (२) पृच्छामि त्वा भुवनस्य नाभिरित्याह, यज्ञो वै भुवनस्य नाभिः; यज्ञ मेवाव रुन्धे। (३) पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह, सोमो वै वृष्णो अश्वस्य रेतः; सोमपीथ मेवाव रुन्धे। (४) पृच्छामि वाचः परमं व्योमेत्याह, ब्रह्म वै वाचः परमं व्योम; ब्रह्मवर्चस मेवाव रुन्धे"–इति ३. ९. ५। 'ब्रह्मोद्य-नामका होतृब्रह्मकथितप्रश्नोत्तररूपाः संवादा उच्यन्ते,–इति च तद्भाष्योपक्रमः। तदेतस्माद् ब्राह्मणग्रन्थादेव मवगम्यते,—अनयोः पूर्वस्या ऋचि एकैकचरणे एकैकप्रश्न इति प्रश्नचतुष्टयम्, उत्त-रस्यान्त्वनुक्रमेण तथैवोत्तरचतुष्टय मिति; किञ्चैतत्प्रश्नोत्तरविज्ञा-नाद् पृथिवीस्वरूपादितत्त्वज्ञानलाभ एव फल मिति।

तानि च तत्त्वानि देशकालपात्रोपदेष्टृभेदादिभिन्नानि स्युः; अस्माभिस्त्वेव मुपलब्धानि,—

(१) परो ऽन्तः शेषसीमा। 'इयं' सन्निहिता आसनस्थानत

वेदिरेव पृथिव्याः शेषसीमा। पृथिव्याः सीमानं पश्येय मिति धिया इतो वेदित एव यदि कश्चिद्दजुगत्या प्राङ्मुखो ऽगमिष्यत्, स नूनं तथा प्राङ्मुख एव गच्छन्नस्यां वेद्या मेव प्रत्यागमिष्यत्; एवं प्रत्यङ्मुखो निर्गच्छन्नपि प्रत्यङ्मुख एव प्रत्यागमिष्यदित्यादि। पृथिव्याः गोलाकृतित्व मेवात्र निदानं सूचितम्। एवं यदि कश्चिदस्या मेव वेद्या मृजु रन्ध्र मेव मकरिष्यत्, यत् सर्वां पृथिवीं भित्त्वा परपृष्ठस्य माकाशं स्पृशेत्, तर्हि स नून मज्ञास्यत् यथा तस्य रन्ध्रस्यैकोऽन्तः परपृष्ठाकाशसंलग्नस्तथैवापरोऽन्त एतद्वेदीगत इति, पूर्णपृथिवीभिद्रन्ध्रान्तनिर्णयादेव च पृथिव्याः परमान्तनिर्णयः सुवचः। पृथिव्या निराधारत्वेन शून्यस्थत्व मेवेह निदानम्। तदित्थं प्रदर्शितोभयथापि सम्पद्यते 'इयं वेदिः परो अन्तः पृथिव्याः'–इति।

(२) सूर्यस्य नाभित्व मेषां भुवनाना माकर्षकत्वेन बन्धनरूपत्वादिति तूक्त मेवासकृत्; सूर्यस्य रश्म्याकर्षणेनैव हि बद्धानीमानि भुवनानीति।

(३) सोमशब्देन चन्द्रः, जीवशरीरस्थो बलहेतू रसविशेषः, वल्लीरूपौषधिविशेषश्च गम्यन्ते। त एते त्रय एव वर्षहेतुभूतस्यास्य सूर्यस्य रेतोरूपाः, तद्रेतोजन्या इति भावः। सूर्यस्य रश्मिसंयोगाद्रसाना मादानधारणाभ्यां मेघा जायन्ते, ततो वृष्टिर्भवति; अत एव सूर्यस्य वर्षहेतुत्वम्। तथाहि— 'अथास्य ( आदित्यस्य ) कर्म रसादानं रश्मिभिश्च रसधारणम्'–इति निरु ७. ३. ४। 'अपाश्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते'–इति च निरु॰ २. ५. २। तत्र यथा वल्लीरूपस्य सोमस्य शारीरसोमस्य च सौरातपजलजन्यत्वेन सौररेतस्त्व मवगन्तव्यं, न तथान्तरिक्ष्य-

सोमस्य चन्द्रस्य ; तस्य तु सौरप्रभया प्रभावत्त्वेनैव तद्रेतोजन्यत्व-व्यपदेश इति विशेषः। तदुक्तं ऋषिणा— "अत्रा ह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे"—इति ऋ० सं० १.८४.१५ ; "सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः"—इति च वा० सं० १८.४०। यास्कोऽप्याह—'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति'—इत्यादि २.२.२।

(४) ब्रह्मणः परमव्योमेत्येव वाचो गम्यत्वम्। परमव्योमत्वं नामाकाशस्याप्याश्रयत्वम्। तथात्वेन हि वर्णित मन्यत्रान्यत्रापि। तद्यथा—"सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति। स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। स होवाचैतद्वै तदक्षरं गार्गि"—इति बृह० उप० ३.८.६—८।

इत्थमिहेमानि चत्वारि विज्ञानानि लभ्यन्ते—

(१) एतस्याः पृथिव्या गोलाकारत्वं निराधारत्वञ्च।

(२) सौरजगन्मण्डले सूर्यस्य नाभिरूपत्वेन बन्धनहेतुत्वम्।

(३) वल्ली-शारीर-चन्द्रप्रभारूपाणां सोमानां सौररेतःप्रभवत्वम्।

(४) ब्रह्मण आकाशाकाशत्व मनिर्वचनीयत्वं चेति॥

———

[ २६ ]

६७—२— सप्तार्धगर्भा। अथर्वसंहिताया मप्येष मन्त्रः श्रूयते (९.२७.७.)। निरुक्तपरिशिष्टे त्वस्यैवं व्याख्याने दृश्येते—

"सप्तैतानादित्यरश्मीनय मादित्यो गिरति । मध्यस्थानोऽर्द्धशब्दः । यान्यस्मिंस्तिष्ठन्ति, तानि धीतिभिश्च मनसा च विपर्य्ययन्ति । परिभुवः परिभवन्ति सर्वाणि कर्म्माणि वर्षकर्म्मणा । इत्यधिदैवतम् । अथाध्यात्मम् । सप्तेमानीन्द्रियाण्यय मात्मा गिरति । मध्यस्थानोऽर्द्धशब्दः । यान्यस्मिंस्तिष्ठन्ति, तानि धीतिभिश्च मनसा च विपर्य्ययन्ति । परिभुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्म्मणा । इत्यात्मगति माचष्टे"—इति निरु० १३. ३. ३ ।

एतदनुसारतोऽस्य ये द्वे व्याख्याने प्रतीयेते, तत्रेद माद्य मधिदैवतम् – "विष्णोः" व्यापकस्यादित्यस्य "सप्त" सप्तसङ्ख्याकाः "अर्द्धगर्भाः" अर्द्धे 'मध्ये' अन्तरिक्षे गर्भाः 'गिलिताः' गृहीताः (तेनैवादित्येन) 'रश्मयः', "भुवनस्य" भूतजातस्य "रेतः" रेतसां वृष्ट्युदकलक्षणानां "विधर्म्मणि" विधारणाख्ये कर्म्मणि नियुक्ताः सन्तः "प्रदिशा" प्रदिक्षु, दिक्षु विदिक्षु च "तिष्ठन्ति" विद्यन्ते । "परिभुवः" भूलोकानां परितो विद्यमानाः "ते" रश्मयः, "ते" 'तानि' "विपश्चितः" आदित्यस्य स्वभूतानि "विष्ठतः" विष्ठरूपाणि 'सर्वाणि कर्म्माणि' सृष्टानि भूलोकादीनीमानि "धीतिभिः" विधारणाख्यैः स्व-कर्म्मभिः "मनसा" मनोनिदानान्ननिदानेन 'वर्षकर्म्मणा' च "परिभवन्ति" 'विपर्य्ययन्ति' परिवर्त्तयन्ति, सदैवेति शेषः । इहार्द्धगर्भा मेघा इति केचित्; सप्तलोकीयत्वेन च तेषां सप्तत्वम् ॥

एवञ्चेहेमानि विज्ञानानि निष्पद्यन्ते—

(१) रश्मय इतो रसानाकृष्य अन्तरिक्षं यावत् गच्छन्ति, तत ऊर्द्ध्वं वायोर्गत्यभावात् तत्सखिभावापन्नानां तेषा मपि गतिनिवृत्तिः सुतरां सम्पद्यते ।

( २ ) रश्मिकृतेन रसानां विधारणेनैव मेघोत्पत्तिपूर्विका वृष्टिर्जायते ।

( ३ ) रश्मयः खलु सदैवेमान् लोकान् परिवर्त्तयन्ति । एतेनैव परिवर्त्तनेन दिवसरजनी सम्पद्येते, शीतग्रीष्मादयो भवन्ति, भूम्यादीनां सरसनिरसत्वादीनि च जायन्त इति भावः ॥

अथाध्यात्मम् । "विष्णोः" व्यापकस्यात्मनः "सप्त" सप्तसङ्ख्याकानि "अर्द्धगर्भाः" अर्द्धगर्भाणि अर्द्धे 'मध्ये' हृदयभागे 'गर्भाणि' 'गिलितानि' गृहीतानि ( तेनैवात्मना ) 'इन्द्रियाणि', "भुवनस्य" शरीरस्य "रेतः" रेतसः वीर्यलक्षणस्य "विधर्मणि" विधारणाख्ये कर्म्मणि नियुक्तानि सन्ति "प्रदिशा" प्रदिक्षु स्वस्वायतनेषु "तिष्ठन्ति" विद्यन्ते । "परिभुवः" शारीरकामक्रोधादीनां भावयितॄणि "ते" तानि 'इन्द्रियाणि', "विपश्चितः" आत्मनः स्वभूतानि "ते" 'तानि' "विश्वतः" विश्वानि 'सर्वाणि कर्म्माणि' दर्शनश्रवणादीनि "धीतिभिः" प्रज्ञाभिः "मनसा" अन्तःकरणेन 'ज्ञानकर्म्मणा' च "परिभवन्ति" 'विपर्ययन्ति' परिवर्त्तयन्ति, बहिर्मुखानि तानि अन्तर्मुखानि कुर्वन्तीति यावत् ॥ इहार्द्धगर्भा रसरक्तादयो धातव इति केचित् ॥

सप्तेन्द्रियाणि— पायूपस्थौ, पञ्च ज्ञानेन्द्रियाणि च ( चक्षुः, श्रोत्रं, नासा, जिह्वा, त्वगिति पञ्च ) । 'धीतिः प्रज्ञा'—इति निरु० १०. ४. ४ । 'धीतिभिः कर्मभिः'—इति च निरु० ११. २. ४ । ज्ञानसमुच्चितानि आत्मज्ञानमूलानि अग्निहोत्रादीनि, ज्ञानसाधनानि ध्यानधारणाप्रत्याहारादीनि वा कर्माणीह ज्ञानकर्माणि विवक्षितानीति ॥

———

[ ३७ ]

८८—८— यदिवेदं । 'यदि, वा, इदम्'—इति दुर्गाचार्यकृतः पदच्छेदस्तु पदपाठविरुद्ध इत्युपेक्ष्य एवास्माक मनार्षत्वात् । 'यत् ऽइव, इदम्'—इति ह्याह पदकारः शाकल्यः ।

—१५— 'इदं सर्वं यदय मात्मा'—इति बृ० उप० २. ४. ६ । 'ब्रह्मैवेदं सर्वं'—इति मु० उप० २. २ । 'आत्मैवेदं सर्वम्'—इति छा० उप० ७. २५. २ । 'तदैक्षत बहु स्यां प्रजायेय'—इति छा० उप० ६. २. ३ ।

—१७—'तदनन्यत्वमारम्भणशब्दादिभ्यः'—इति वे०सू०२.१.१४।

—१८— इवशब्दः । इह इवशब्दोऽप्यर्थ इति स्वीकृत्य पूर्व मुक्तं यदपीद मिति ( ८ पं० ) । उपमार्थ इवशब्दस्तु सुप्रसिद्ध एव, निघण्टावपि उपमाननामस्वेव पठितः ( ३. १३. १. ) । उपमार्थाः सर्व एव व्याख्याता यास्केन 'अथात उपमा'—इत्यादिनैकपादेन ( ३. ३. १–५. ), निपातव्याख्यानेऽपीवशब्दस्योपमार्थतोक्ता ( १. २. १. ), एकत्र तु तस्य समुच्चयार्थतापि प्रकटिता ( १. ३. ५. ), 'इवः परिभवार्थे वा'—इत्यप्युक्त मेकत्र प्रसङ्गतः ( ८. ३. ८. ) । ईषदर्थ इति तत्तात्पर्यं मन्यते दुर्गाचार्यः । उपमालक्षणादिकं त्वेव मुक्तं निरुक्ते— "यदतत् तत्सदृश मिति गार्ग्यस्तदासां कर्म ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा ऽप्रख्यातं वोपमिमीते ऽथापि कनीयसा ज्यायांसम् । 'तनूत्यजेव तस्करा वनर्गू ( ऋ० सं० १०. ४. ६. )' ०—० 'वनर्गू' वनगामिना वह्निमन्थनौ बाहू तस्कराभ्या मुपमिमीते ०—० ज्यायांस्तत्र गुणोऽभिप्रेतः ०—० 'विधवेव देवरम् ( ऋ० सं० १०. ४०. २. )"—इत्यादि ३. ३. १, २, ३ । अत्रेयं दौर्गी वृत्तिः—

“यत् किञ्चित् अतत् भवति तत्सरूपञ्च, अनग्निः खद्योतः अग्निसरूपं च, सोऽग्निनोपमीयते— अग्निरिव खद्योत इति। एव मतत्सरूपेण गुणेन गुणसामान्यात् उपमीयते। इत्येवं गार्ग्य आचार्यो मन्यते। ‘तदासां कर्म’ स आसा मुपमानाना मर्थः। ०—० ‘ज्यायसा’ उत्कृष्टेन ‘गुणेन’, यो यस्मिन् द्रव्ये उत्कृष्टो गुणः तेन, ‘कनीयांसम्’ अनुत्कृष्टं गुणम् ‘उपमिमीते’। तद्यथा— सिंहो माणवकः। सिंहे शौर्य मुत्कृष्टम्, माणवक मेतेनोपमिमीते; सिंह इव माणवको विक्रान्त इति। ‘प्रख्याततमेन वा’ ‘अप्रख्यातम्’ उपमिमीते। प्रख्यातश्चन्द्रमाः, अप्रख्यातो माणवकः, तं तेनोपमिमीते; चन्द्र इव कान्तो माणवक इति। ‘अथापि’ क्वचित् ‘कनीयसा’ गुणेन ‘ज्यायांसम्’ अपि सन्तम् उपमिमीते। तदेतच्छन्दस्येव द्रष्टव्यम्। आह कि मुदाहरणम्? उच्यते— ‘तनूत्यजेव ० —— ०’। ‘तनूत्यजा’ तनूत्यक्ती इत्यर्थः’, ‘वनर्गू’ वनगामिनी; तत्र हि तयोश्चौर्यं सिध्यति। एव मस्या मृचि ‘अग्निमन्थनौ बाहू’ प्रशस्तौ ‘तस्कराभ्याम्’ अप्रशस्ताभ्याम् उपमिमीते। ०—०। ‘तत्र’ बाह्वोः ‘ज्यायान् गुणः अभिप्रेतः’ तयोः प्रशस्तत्वात्; अप्रशस्तत्वाच्च तस्करयोः कनीयान्। द्वितीय मुदाहरण मेतस्मिन्नेवार्थे ‘अथापि कनीयसा ज्यायांसम्’–इति। ‘विधवेव देवरम्’ यथा विधवा मृतभर्तृका काचित् स्त्री शयने रहसि अतितरां यत्नवती देवर मुपचरति ०—० तस्मात् तेनोपमिमीते अश्विनौ ०—०। एव मस्या मृचि देवरेण कनीयसा ज्यायांसौ अश्विनौ उपमीयते, विधवया च यजमानः”–इति।

९९—५— निघ० ३. २५. ‘निख्यम्’ १।

—१२— निरुक्ते परिदेवनाया द्वे उदाहरणे प्रदर्शिते।

तद्यथा— "अथापि परिदेवना कस्माच्चिद्भावात्। सुदेवो अद्य प्रपतेदनावृत् ( ऋ० सं० १०. ९५. १४. )', 'न विजानामि यदि वेद मस्मि ( ऋ० सं० १. १६४. ३७. )'–इति"–इति ७. १. ३। 'परिदेवना—संशयोत्थापनम्'–इति, 'आत्मनिन्दापूर्वको विलापः परिदेवनेत्युच्यते, यदि नाम एवं स्यात् साधु स्यादिति'–इति च दुर्गाचार्यः। परिदेवन मनुताप एव प्रसिद्धः।

—१३— ( नि० ७. ३. )=( ७. १. ३. )।

— १४— श्रूयते। कठ० उप० ४. १.।

१००—१— श्रूयते कठ० उप० ४. १.।

—२–इति। अस्य मन्त्रस्य दुर्गाचार्यकृतं व्याख्यानं त्विदम्— 'न' एतत् अहं ('वि') विस्पष्टं 'जानामि',— 'यदि वा इदम् अस्मि' कारणं परं ब्रह्माख्यम्? अथ वा इदं तत्कार्यं द्वैत मस्मीति। अनयोः कार्यकारणयोर्द्वैताद्वैतयोरन्तरा वर्त्तमानो 'निण्यः' अन्तर्हितः, अविद्यया 'सन्नद्धः' च। अनेकैः सन्देह-ग्रन्थिभिः 'मनसा' उभे अपि द्वैताद्वैते 'चरामि' गच्छामीत्यर्थः। एवं सति 'यदा' 'मा आ अगन्' माम् आगच्छेत् 'प्रथमजा बुद्धिः; सा हि सर्वेन्द्रियेभ्यः प्रथमं जायते 'ऋतस्य' भगवत आदित्यस्य स्व-भूता; तस्य हि प्रकृष्टा बुद्धिः, प्रक्षीणसर्वसंशया, तया सर्वं मिद मसंशयं परिज्ञाय किं महं कारणसतत्त्व उत द्वैतसतत्त्व इति। ततः 'अस्याः' कृत्स्न-प्रज्ञातायाः 'वाचः' 'भागम्' अहम् ('अश्नुवे) अश्नुयाम्, यदियं कृत्स्ना वागभिवदति तत्सर्वं मह मापुया मित्यर्थः"–इति ( निरु० ७. १. ३. )॥

[ ३८ ]

१०० - ८— अमर्त्यः। 'प्राणा अमृताः शरीरं मर्त्यम्'-इति शत० ब्रा० १०. १. ४. १ ॥

—१३— लभ्यते। वस्तुतोऽन्नपरिणामा एवास्माकं देहाः। तदुक्तं छान्दोग्ये— 'तस्मिन् ( चन्द्रलोके ) यावत्सम्पात मुषित्वा ऽथैत मेवाध्वानं पुनर्निवर्त्तन्ते ०—० त इह व्रीहियवा ओषधि-वनस्पतयस्तिलमाषा इति जायन्ते ऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्न मत्ति यो रेतः सिञ्चति तद्भूय एव भवति'-इति ( ५. १०. ५, ६. )। बृहदारण्यके चैव मेव ( ८. २. १६. )।

—,,— गृभीत इत्यस्यैवेदं लौकिकं रूपं गृहीत इति। 'हृग्रहोर्भश्छन्दसि'-इति पा० ३. १. ८४. वा०।

—१४— प्राङेति। नैव प्राक्शब्दस्य स्वर्गादिलोकोऽर्थः, नाप्यत्र तथा सङ्गच्छते; न हि कोऽपि अनेन गृहीतः स्वर्ग-च्छन्ति। अस्मन्नये तु 'प्राङ् एति, अपाङ् एति'-इति जीवस्य लोकान्तरात् जन्ममृत्युरूपे गमनागमने एव विवक्षिते ते च स्वधया गृहीतस्यैव भवति। स्वधेति निघण्टावुदकनामसु च ( १. १२. ८७. ) पठितम्; तस्माद् अन्यत्र यदुक्तं श्रद्धेति, तदेवेह स्वधेति। तदुक्तं पञ्चाग्निविद्यायाम्— 'असौ वै लोकोऽग्निः ०—० तस्मिन्नग्नौ श्रद्धां जुह्वति'-इत्यादि छा० उप० ६. २. ९। तच्छ्रद्धाशब्दस्य व्याख्यानं तत्र शङ्कराचार्येणैवं कृतम्— "ताः सूक्ष्मा आप आहुतिकार्यभूता अग्निहोत्रसमवायिन्यः कर्त्तृ-सहिताः श्रद्धाशब्दवाच्याः सोमलोके कर्त्तुः शरीरान्तरारम्भाय द्युलोकं प्रविशन्त्यो हूयन्त इत्युच्यन्ते। तास्तत्र द्युलोकं प्रविश्य सोममण्डले कर्त्तुः शरीर मारभन्ते। तदेतदच्यते देवाः श्रद्धां

जुह्वति तस्या आहुत्यै सोमो राजा सम्भवतीति। 'श्रद्धा वा आपः'–इति श्रुतिः। वेत्थ यतिथ्या माहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्तीति प्रश्नस्तस्य च निर्णयविषयेऽसौ वै लोकोऽग्निरिति प्रस्तुतम्। तस्मादापः कर्मसमवायिन्यः कर्तुः शरीरारम्भिकाः श्रद्धाशब्दवाच्या इति निश्चीयते। भूयस्त्वादापः पुरुषवाच इति व्यपदेशो न त्वितराणि भूतानि न सन्तीति। कर्मप्रयुक्तश्च शरीरारम्भः। कर्म चाप्समवायि। ततश्चापां प्राधान्यं शरीरकर्तृत्वे। तेन चापः पुरुषवाच इति व्यपदेशः। कर्मकृतो हि जन्मारम्भः सर्वत्र। तत्र यद्यप्यग्निहोत्राहुतिस्तुतिद्वारेणोत्क्रान्त्यादयः प्रस्तुताः षट् पदार्था अग्निहोत्रे, तथापि वैदिकानि सर्वाण्येव कर्माण्यग्निहोत्रप्रभृतीनि लक्ष्यन्ते। दाराग्निसम्बद्धं हि पाङ्क्तं कर्म प्रस्तुत्योक्तम्— कर्मणा पितृलोक इति। वक्ष्यति च— अथ ये यज्ञेन दानेन तपसा लोकञ्जयन्तीति"–इति॥

—१६— शरीरत्रयेण। तद्यथा— स्थूलम्, लिङ्गम्, अधिष्ठानं चेति। तेषां स्वरूपादीनि साङ्ख्यशास्त्रादौ निर्दिष्टानि। तत्र, स्थूलदेहस्त्वस्मच्चक्षुर्गोचर एव; लिङ्गशरीरनिर्णयाय तु "सप्तदशैकं लिङ्गम्"–इति साङ्ख्यसूत्रम्। 'सूक्ष्मशरीर मप्याधाराधेय भावेन द्विविधं भवति। तत्र सप्तदश मिलित्वा लिङ्गशरीरम्। तच्च सर्गादौ समष्टिरूप मेक मेव भवतीत्यर्थः। एकादश इन्द्रियाणि, पञ्चतन्मात्राणि, बुद्धिश्चेति सप्तदश। अहङ्कारस्य बुद्धावेवान्तर्भावः। ०—०। प्राणश्चान्तःकरणस्यैव वृत्तिभेदः, अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भावः। ०—०।'–इति च तद्भाष्यम्। वेदान्तिनये 'वासना भूतसूक्ष्मं च कर्मविद्ये तथैव च। दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः'–इति वाशिष्ठम्। अत्र बुद्धि-

धर्माणा मपि वासनाकर्मविद्यानां पृथगुपन्यासः, भूतसूक्ष्मं चात्र तन्मात्रा, दशेन्द्रियाणि ज्ञानकर्मभेदात्। 'पञ्चप्राणमनोबुद्धि-दशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्'—इति च लक्षणान्तरं वेदान्तिना मेव। अधिष्ठानशरीरलक्षणं त्वेवं साङ्ख्यसूत्रे—"तदधिष्ठानाश्रयाद्देहे तद्वादात्तद्वादः"—इति। 'तस्य लिङ्गस्य अधिष्ठान माश्रयः वक्ष्यमाणभूतपञ्चकम्, तस्याश्रये षाट्कौषिकदेहे तद्वादो देहवादः, तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहस्य वादादित्यर्थः। लिङ्गसम्बन्धादधिष्ठानस्य देहत्वम्, अधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्व मिति पर्यवसितोऽर्थः'—इति च तद्भाष्यम्। वेदान्तिभिरिद मेव कारणशरीर मुच्यते। तदित्थम् अधिष्ठानं कारणं वेत्येकम्, लिङ्गं सूक्ष्मं वेत्यपरम्, स्थूलं षाट्कौषिकं वा तृतीय मिति शरीरत्रयम्। षाट्कौषिकदेह एव मातापितृजः। तत्र मातृतो लोमलोहितमांसानि, पितृतस्तु स्नायूस्थिमज्जानः इति षट्को गणः। तदुक्तं विस्तरशो निरुक्त-परिशिष्टे (१३.२.७.) तद्यथा—"पार्थिवांस्त्वष्टौ गुणान् विद्यात्। त्रीन् मातृतस्त्रीन् पितृतः। अस्थिस्नायुमज्जानः पितृतः, त्वङ्-मांसशोणितानि मातृतः। अन्नं पान मित्यष्टौ"—इति। गर्भोपनिषदादावप्येव मेव।

१००—१८— श्रूयते। श्वेता० उप० ५. ७.।

१०१—११— इत्यर्थः। निरुक्तपरिशिष्टे त्वस्यैवं ह व्याख्याने—"अपाञ्चयति प्राञ्चयति स्वधया गृभीतो ऽमर्त्य आदित्यो मर्त्येन मनसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्यत्यादित्यं न चन्द्रमस मित्यधिदैवतम्। अथाध्यात्म मपाञ्चयति प्राञ्चयति स्वधया गृभीतो ऽमर्त्य आत्मा मर्त्येन

मनसा सह तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा पश्य-त्यात्मानं न मन इत्यात्मगति माचष्टे"–इति ११. ३. ४ ॥

——

[ ३९ ]

१०२—२— श्रूयते। मु० उप० १. १. ४, ५।

—६— एतद्वै ०—० प्रसिद्धम्। 'एतद्वै तदक्षर मेतस्य वा अक्षरस्य प्रशासने'–इत्येव मिह पाठो न्याय्यः।

'एतद्वै तदक्षरम्'–इति बृ० उप० ३. ८. ८।

'एतस्य वा अक्षरस्य प्रशासने'–इति च बृ० उप० ३. ८. ९।

'यया तदक्षर मधिगम्यते'–इति मु० उप० १. १. ५।

'येनाक्षरं पुरुषं वेद सत्यम्'–इति मु० उप० १. १३।

—९— श्रुतेः। बृ० उप० शत० ब्रा० १४. ६. ९. २८।

—१२— श्रुतेः। बृ० उप० ४. १०. २२।

१०३—७— गवामयनादीनि ताण्ड्यमहाब्राह्मणे तृतीय-प्रपाठकतो ग्रन्थान्तं यावत् यथाक्रमेण विहितानि।

—११— 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्य-स्त्रिभिरेति सूर्यः'–इति तै० ब्रा० ३. १२. ९. १।

—१२— श्रुतेः। "आदित्यो वा एष एतन्मण्डलं तपति, तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्म-ण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एत-स्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलं स यजुषां लोकः; सैषा त्रय्येव विद्या तपति, य एषोऽन्तरादित्ये हिरण्मयः पुरुषः"–इति तै० आ० १०. १३।

—१२— 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः'-इति तै० आ० १०. १२।

—२१— श्रूयते। ऐ० ब्रा० ५. ५. ७.। तत्रायं विशुद्धः पाठः— "तान् वेदानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त, भूरित्येव ऋग्वेदादजायत, भुव इति यजुर्वेदात्, स्वरिति सामवेदात्; तानि शुक्राण्यभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति; तानेकधा समभरत् तदेतदोमिति"-इति।

१०४—१—"यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव"-इति मा० उप० १.१। "ओमिति ब्रह्म"-इति तु तै० उप० १. ८. १।

—५— श्रुतेः। "यदृचोऽधीते पयसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ति यद्यजूंषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कूल्या यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथानाराशंसीर्मेदसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ति। यदृचो ऽधीते पय आहुतिभिरेव तद्देवांस्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति ०—० ओ मिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत् परम मक्षरम्। तदेतदृचाभ्युक्तम्— 'ऋचो अक्षरे ०—० समासत इति"-इति तै० आ० २. १०, ११।

—८— (नि० १३. १०.)=(१३. १. १०) तद्यथा— "ऋचो अक्षरे परमे व्यवने यस्मिन् देवा अधिनिषण्णाः सर्वे, यस्तन्न

वेद किं स ऋचा करिष्यति, य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति ; कतमत्तदेतदक्षर मो मित्येषा वागिति शाकपूणिर्ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते नानादेवतेषु च मन्त्रेष्वेतद्ध वा एतदक्षरं यत्सर्वांत्रयीं विद्यां प्रतिप्रतीति च ब्राह्मणम्" ॥

---

[ ४० ]

१०४—२२— परिधानीया। परिधानं समापनम्, तदर्था ऋक् परिधानीयेत्युच्यते। तथा हि "सर्वत्रोत्तमां परिधानीयेति विद्यात्" –इति आश्व० श्रौ० २. १६. ८। 'अथातः परिधानीया एव'–इत्यादि, 'उभय्यः परिधानीया भवन्ति'–इत्यादि च ( ६.२.४,५.) ऐतरेयकखण्डौ द्रष्टव्यौ।

१०५—४— गोनाम। यास्केन त्विह स्वमते 'अघ्न्येति, वागेषा माध्यमिका'–इत्युक्त्वा तत उक्तं 'घर्मधुगिति याज्ञिकाः'–इति, तथा प्रदर्शितं चास्य पदस्य द्विविधं निर्वचनम्— 'अघ्न्या अहन्तव्या भवति, अघघ्नीति वा'–इति ११. ४. ९।

—१४— ( नि० ११. ४४. )=( ११. ४. १०. )। घर्मधुग्गोपक्षे माध्यमिकवाक्पक्षे चैतदेकविध मेव व्याख्यान मुपपद्यते। अतएवैतन्निगमप्रदर्शनोपक्रमे सामान्यत एवोक्तं यास्केन "तस्या एषा भवति"–इति। 'यदि वाक् यदि गौः तस्याः (उदाहरणम्) एषा ( ऋक् ) भवति'–इति च दुर्गकृतं तद्व्याख्यानम्। वाक्पक्षे त्वस्य व्याख्यानं दुर्गभाष्ये प्रथम मेव दृश्यते। तद्यथा— "सुयवसादिति। पूर्ववदार्षम्। माध्यमिका वागुच्यते। शोभनं यवस मुदक मध्यात्मीकृत्य सूर्यात् तेन 'भगवती' धनवती, उदकेन उदकवती भव। 'अथ' पुनः 'इदानीम्' एवं त्वयि भग-

वत्यां वय मपि त्वदुत्सृष्टेनोदकेन 'भगवन्तः' धनवन्तः' 'स्याम'। सा च पुनरेवं प्रतिसंवत्सरम् 'अद्धि' 'तृणं' मेघम्। तृद्यतेऽसाविति तृणः, तम्, 'अद्धि' सञ्चूर्णय। 'विश्वदानीं' 'सर्वदा' यथाकालम् 'पिब' 'च' 'शुद्धम्' अकलुषं सूर्यरश्म्युपहृतम् 'उदकम्' 'आचरन्ती' आसेवन्ती, सर्वतो मध्यस्थाने चरन्ती"—इति। घर्मधुग्गोपक्षे तु दुर्गभाष्यं सायणीयतुल्य मेव प्रायः, 'आचरन्ती—आ सर्वतो यथाकाम मरण्ये चरन्ती'—इत्येतावानेव विशेषः॥

---

[ ४१ ]

१०६—३— 'गौरी, रोचतेर्ज्वलतिकर्मणः। अय मपीतरो गौरो वर्ण एतस्मादेव प्रशस्यो भवति'—इति निरु० ११. ४. ३९। अत्र दुर्गाचार्यः 'माध्यमिका वाक्, सा पुनर्दीप्तिमती'—इति।

—,,— छान्दसः। सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति साधारणनियमादिति भावः।

—११— कसुः। "कसुश्च"—इति पा० सू० ३. २. १०७।

—१८— सुप्तिङौ विभक्तीनां प्रत्याहारौ। सुप्='सु, औ, जस्; अम्, औट्, शस्; टा, भ्याम्, भिस्; ङे, भ्याम्, भ्यस्; ङसि, भ्याम्, भ्यस्; ङस्, ओस्, आम्; ङि, ओस्, सुप्'—इति पा० ४. १. २। तिङ्='तिप्, तस्, झि; सिप्, थस्, थ; मिप्, वस्; मस्। त, आताम्, झ; थास्, आथाम्, ध्वम्; इड्, वहिङ्, महिङ्'—इति पा० ३. ४. ७८।

—१९— नामा०। 'चत्वारि पदजातानि— नामाख्याते चोपसर्गनिपाताश्च। तानीमानि भवन्ति। तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति। भावप्रधान माख्यातम्, सत्वप्रधानानि

नामानि'–इत्यादि निरु० १. १. १–२। 'न निर्बद्धा उपसर्गा अर्थान् निराहुरिति शाकटायनः; नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति। उच्चावचाः पदार्था भवन्तीति गार्ग्यः; तद्य एषु पदार्थः प्राहुरिमे, तन्नामाख्यातयोरर्थविकरणम्'–इत्यादि निरु० १. १. ४, ५। 'अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति। अप्युपमार्थेऽपि कर्मोपसङ्ग्रहार्थेऽपि पदपूरणाः'–इत्यादि च निरु० १. १, २, ३।

—२०— आमन्त्रितं सम्बोधनम्, षट् कारकाणि, सम्बन्धश्चेत्यष्टौ।

—२१— अथवेत्ययं पक्षो दोषास्पद इव प्रतिभात्यस्माकम्; पाणिनिशिक्षायाम् 'अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च'–इति परिगणितत्वादिति (३, ३.)।

१०७—१— मूलाधारे। नाभिलिङ्गयोर्मध्यस्थानं यदुच्यते मूलाधार इति, तन्नेह विवक्षितम्; इह तु शब्दानां मूलम् आधारो हृदयाकाश इत्येव। तथाह्युक्तं पाणिनिशिक्षायाम् (२. १, २.)—

'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्'–इति।

—६— (नि० ११. ४०.)=(११. ४. ६.)॥

---

[ ४२ ]

१०७—१०— तस्याः। अत्राह दुर्गाचार्यः— "अलिङ्गो मन्त्र इति चेत्, तस्या इत्येतदेव लिङ्गं मन्वादिश्यते, सम्बन्धा-

इत्येः ; तस्मान्नालिङ्गः । 'तस्याः' गौर्याः"–इति । अत्र देवतापद-श्रुत्यभावात् अयं मन्त्रोऽलिङ्ग इति पूर्वपक्षः, तस्या इति सम्बन्धि-पदश्रुतेः पूर्वोक्तगौर्येवात्र स्तूयत इति समाधानमिति भावः ।

—१९— 'उदकं चरति' इत्यस्य 'सस्यादिकं मुत्पादय-तीत्यर्थः' न जाने कथ मायातः ? 'पुनः पुनः प्रतिसंवत्सरं तत एव चरत्युदकं मेघद्वारेण'–इति तु दौर्गोऽर्थः ।

—२०— ( नि० ११. ४१. )=( ११. ४. ७. ) । अस्मन्मते त्वेतन्निरुक्तव्याख्यानानुसारतः तस्या इति मन्त्रस्यैवं व्याख्यानं भवितु मर्हति— 'तस्याः' गौर्याः माध्यमिकाया वाचः 'अधि' अधिकारे, यावत्प्रदेशेषु स्तनितश्रवणं तावदिति यावत् 'समुद्राः' मेघाः 'विक्षरन्ति' विशेषतः क्षरन्ति, वर्षन्तीति यावत् । 'तेन' विक्षरणेन ( प्रथमं वृष्टिकाले एव ) 'चतस्रः प्रदिशः' चतुर्दिगा-श्रितानि, भूतानि आकाशोदकजीव्यानि चातकादीनि पृथिव्या-दीनि च 'जीवन्ति' । 'ततः' तदनन्तरम्, 'तत्' वृष्टं सत् पर्वता-दिभ्यः प्रस्नुतम् 'अक्षरम्' उदकम् आश्रित्य 'विश्वं' सर्वाणि भूतानि, जरायुजाद्यात्मकास्त्रिविधाश्चतुर्विधाः पञ्चविधा वा प्राणि-जातयः 'उपजीवति' उपजीवन्तीति । "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति,— आण्डजं जीवज मुद्भिज्ज मिति"– इति छा० ब्रा० ८. ३. १ । 'जीवजं = जरायुजम् ०—० स्वेदज-संशोकजयोराण्डजोद्भिज्जयोरेव यथासम्भव मन्तर्भावः'–इति तत्र शा० भा० । "आण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि च"–इति ऐ० आ० ६. १. ३ ॥

———

[ ४३ ]

१०८—६ शकमयं ०—० धूमम्। सायणस्यैष स्वकपोलकल्पितः शकधूमार्थः खल्वश्रद्धेयः स्यात्; निघण्टौ शकशब्दस्योदकवाचित्वेन परिगणितत्वात्, बृहद्देवतार्थविरोधाच्च। निघण्टावुदकनामसु 'शकम्'-इति पठितम् ( १. १२. १७. )। बृहद्देवतायाश्चतुर्थे ऽध्याये एतन्मन्त्रव्याख्यानपरश्चैष श्लोकः— "मेघः शकस्तस्य धूमः सलिलं वा स एव वा। सोम उक्षा भवन्त्यस्य पावकाश्च त्रयो ऽधिपाः"-इति ३८। 'शकधूमं नक्षत्राणि यद्राजान मकुर्वत'-इति, 'भद्राह मस्मभ्यं राजञ्छकधूम त्वं कृधि'-इति, 'तस्मै ते नक्षत्रराज शकधूम सदा नमः'-इति, 'शकधूमजाः + + + तान् + + + नाशय'-इति च अथ० सं० ६. १३. २. ४, ६, ७; ८. ३. ४. ५। 'अस्मिन्त्से३ तच्छकपूत एनः'-इति ऋ० सं० १. १२५. ५। 'शकपूताख्य ऋषिः'-इति तद्भाष्येऽयमेव सायणः। हंहो ऋषिः किं शक्ना पूतः? उदकेन पूत इति तु सङ्गच्छत एव।

—१०— उक्षाणम्। निघण्टौ महन्नामसु 'उक्षा'-इत्येकादशं पदम् ( ३. ३. ११. )। 'उक्षणः' एतान् माध्यमिकान् संस्त्यायान्। 'उक्षणः' उक्षतेर्वृद्धिकर्म्मणः; उक्षन्त्युदकेनेति वा'-इति निरु० १२. १. ९। 'वर्द्धयन्ति हि ते ओषधीरवश्यायाः, त एव वा बहुत्वाद्वृद्धा भवन्ति। उक्षतेर्वा सेचनार्थस्य'-इति च तट्टीका।

—,,— पृश्निम्। निघण्टौ दिवश्च आदित्यस्य साधारणनामसु 'पृश्निः'-इति द्वितीयं पदम् ( १. ४. )। निरुक्तेऽपि 'पृश्निरादित्यो भवति ०—० अथ द्यौः'-इति २. ४. २। 'अयं वेनश्चोदयत् पृश्निगर्भाः (ऋ० सं० १०.१२३.१.)'-इत्यस्य व्याख्याना-

वसरे तूक्तं यास्केन 'पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा'–इति १०. ४. २। 'पृश्निरादित्यः; प्रकृष्टो ह्यनेन वर्ण आष्टः प्रासः। यास्तस्य गर्भत्व मुपगताः रश्म्यन्तर्गताः परिपक्वाः आपो मासाष्टकेन सम्भृताः, ताः वेनश्चोदयति प्रावृषि वर्षभावेन प्रेरयति। वेनः, मध्यमो वायुः'–इति च तत्र दुर्गाचार्यः। 'इयं (पृथिवी) वै पृश्निः' तै० ब्रा० १. ४. १. ५। ऋ० सं० ८. ७. १०। 'पृश्नयः' –इत्यस्य 'मरुन्मातृभूताः'–इति, 'माध्यमिका वाचः'–इति, 'मरुतः'–इति चैते त्रयोऽर्थाः कृताः सायणेन। ऋ० सं० ७. ३६. १३; १. २३. १०; ५. ५८. ५. एषु क्रमेण द्रष्टव्याः।

—१२— वीराः। 'वीरो वीरयत्यमित्रान् वेतेर्वा स्याद् गतिकर्म्मणः, वीरयतेर्वा'–इति यास्कः १. ३. २। 'वीरः। 'वि-ईरयत्यमित्रान्' नानाप्रकारं मारयतीत्यर्थः। 'वेतेर्वा स्याद् गतिकर्म्मणः' गत्यर्थे वर्त्तमानस्य; गच्छत्येवासावभिमुखं शत्रून्। 'वीरयतेर्वा' विक्रमार्थस्य; विक्रान्तो ह्यसौ भवति"–इति टीका।

—१५— धर्म्माणि। 'धर्म्मणे' धारणाय निरु० ७. ७. ३। 'धर्म्माणम्' धारयितारम निरु० ८. ३. ५। 'धर्म्मणि' कर्म्मणि निरु० ११. १ १२. दुर्ग०। 'तानि धर्म्माणि' तानि कर्म्माणि निरु० १२. ४. ७. दुर्ग०।

—„— प्रथमानि। 'प्रथम इति मुख्यनाम; प्रतमो भवति' –इति निरु० २. ६. ५। 'प्रथमम्' परमम्"–इति च ३. १. २।

—१६— यद्दा। सोमस्योच्चत्वम् ऋ० सं० १. १३८. १०; ३. ७. ७. सा० भा० द्रष्टव्यम्। बृहद्देवतायाञ्चैतन्मन्त्रव्याख्यानपरश्लोके ऽभ्युक्तं 'सोम उच्चा'–इति ४, ३८। परं तत्र शारीरीषधिचन्द्रमसां कतमोऽर्थोऽभीष्ट इति तु विचार्य मेव।

—१८— व्याख्येयः। वयन्तु ब्रूमः— वैदिकशब्दार्थनिर्णये वेदाङ्गं निघण्टुग्रन्थ एव प्रबलं प्रमाणम्, ततो यास्कीयं निरुक्तं बृहद्देवतादिग्रन्था अपि; लोकव्यवहाराः तदनुगतग्रन्थाश्च तत उत्तरम्। सम्भवति नैघण्टुके, नैरुक्ते, बृहद्देवतादिकृते वार्थे न हि लौकिकोऽन्योऽर्थः प्रमाणं भवितु मर्हति। ततोऽत्र मन्त्रे श्रुतस्य शकशब्दस्य नैघण्टुक उदकार्थो बृहद्देवताकृच्छौनकोक्तो वैकल्पिको मेघार्थोऽपि वा ग्राह्यः; न हि निघण्टौ, निरुक्ते, बृहद्देवतादिके वा शकृदर्थः शकशब्द उपलभ्यते।

तदेव मस्य मन्त्रस्य नैघण्टुकं व्याख्यान मेवं स्यात्— 'शकमयम्' उदकमयं रश्मिग्राहृतवाष्पमयं 'धूमम्' धूमवर्णं धूमाज्जातं च, नवजलधरमिति यावत्; 'आरात्' नातिदूरे 'अपश्यम्' पश्यामि। 'विषूवता' व्याप्तिमता 'अवरेण' नीचैःस्थितेन 'एना' एनेन उदकधूमात्मकेन मेघेन 'परः' आदित्यः, अस्तीति शेषः, आच्छन्न इति भावः। 'वीराः' विक्रान्ताः रश्मयः, 'पृश्निं' प्राष्टवर्ण मेतम् 'उक्षाणं' महान्तं सेचनसमर्थं च शकमयं धूमम् (मेघं), अथवा 'पृश्निं' तत्स्थां माध्यमिकां वाचं च, अथवा 'पृश्निं' पृथिवीं च 'अपचन्त' पचन्ति, परिपक्वं परिपक्वां वा यथा स्यात् तथा कुर्वन्ति। तेषां रश्मीणां 'तानि' पक्वीकरणानि 'धर्म्माणि' कर्म्माणि 'प्रथमानि' मुख्यानि 'आसन्' सन्तीति। अपश्यम्, अपचन्त, आसन्, एषु सार्वकालिको लकारः (३.४.६, पा० सू०)।

बृहद्देवताकृन्मते त्वस्यैव मर्थः स्यात्— 'शकमयं' मेघमयं 'धूमं' सलिलं, 'शकमयम्' उदकमयं 'धूमं' धूमाकारं मेघं वा, 'आरात्' अनतिदूरे 'अपश्यम्' पश्यामि। 'विषूवता' व्याप्तिमता 'अवरेण' नीचैःस्थितेन 'एना' एनेन मेघेन सलिलेन वा

( आच्छन्नः ) 'परः' आदित्यः अस्ति । "वीराः" 'त्रयः पावकाः' पार्थिवमध्यमदिव्यभेदात् त्रिविधा अग्नयः 'पृश्नि' प्राष्टवर्णम् "उत्ताणं" 'सोमं' शारीरौषधिचन्द्रभेदात् त्रिविधमेव त्रिविधान्यतमं वा 'अपचन्त' पचन्ति सदैव । एषा मग्नीनां 'तानि धर्म्माणि' सोमपरिपक्कीकरणकर्म्माणि 'प्रथमानि' मुख्यानि 'आसन्' सन्तीति ॥

---

[ ४४ ]

१०९—७— ऋतुथा । 'था हेतौ च छन्दसि'–इति पा० सू० ५. ३. २६ । इह सूत्रे किमो ऽनुवृत्तिरविवक्षिता स्यादेवमादिप्रयोगदर्शनात् ।

—११— शचीभिः । शचीति कर्मनाम निघ० २.१.२२ ।

—१२— प्राजिशब्दस्य गत्यर्थता त्वेतद्व्याख्यानावसरे यास्केनैव कथिता ( १२. ३. ८. ) ।

—१४— न्यायविदः । तथा च तत्सूत्रम्—"स्पर्शश्च वायोः"–इति वै० सू० २.१.८ । 'शब्दधृतिकम्पाश्चेति चार्थः'–इति तद्वृत्तौ ।

—१८— ( नि० १२. २७. ) = ( नि० १२. ३. ८. ) । एतद्व्याख्यानोपक्रमेऽपर मपि किञ्चिदुक्तं तत्र महामतिना यास्केन । तद्यथा— 'केशीदं ज्योतिरुच्यत इत्यादित्य माह । अथैते इतरे ज्योतिषी केशिनी उच्येते;—धूमेनाग्निस्तेजसा च मध्यमः'–इति । तदयं मध्यमो विद्युदग्निरेवेत्यस्माकम् ।

—१९— अनुवाक्या । "ह्वयति वा अनुवाक्यया प्रयच्छति याज्यया ०—० सा या पुरस्ताल्लक्षणा सानुवाक्या स्यात् ०—०, अथ योपरिष्टाल्लक्षणा सा याज्या स्यात्"–इति शत० ब्रा० १, ७.

२, १७-१८। 'पुरोऽनुवाक्या देवतास्मरणार्था, याज्या च हविः-प्रदानार्था'-इति कात्या० श्रौ० १. ८. ८. वृ०। 'सर्वेषां मग्रेऽग्रे ऽनुवाक्यास्ततो याज्याः'-इति आश्व० श्रौ० ३. ७, ३। "याज्या-नुवाक्ययोर्लक्षणं दर्शयति— 'पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति ; जातानेव भ्रातृव्यान् प्रणुदत। उपरिष्टाल्लक्ष्मा याज्या; जनिष्य-माणानेव प्रति नुदते'-इति (तै० सं० २. ६. २. ३.)। मन्त्र-प्रतिपाद्याया देवताया नामधेयं लक्ष्म। तद्यस्या ऋचि पूर्वार्द्धे विद्यते सा पुरोऽनुवाक्या; तन्नाम यस्या मुत्तरार्द्धे विद्यते सा याज्या। तद्यथा— अग्निर्मूर्द्धा इति पूर्वार्द्धे ऽग्निशब्दः, जिह्वा मग्ने चकृषे इत्युत्तरार्द्धेऽग्निशब्दः"-इति सा० भा०। 'अनुवाक्या तिष्ठन्नन्वाह, आसीनो याज्यां यजति'-इति शत० ब्रा० १. ४. २. १८, १९॥

---

[ ४५ ]

११०—३— सैषा। प्रवह्लिकेयम्। गूढार्थत्व मेवेह प्रवह्लि-कात्वम्। तदाह दुर्गाचार्यः— 'प्रवह्लिकेत्यनभिव्यक्तिविशिष्टो वाक्यार्थः'-इति। 'प्रवह्लनं निर्हृदयं सान्त्ववचनम्'-इति चान्यत्र (ऐ० ब्रा० ६. ५. ७. सा० भा०)।

—२०— व्याकरण०। तथाहि पातञ्जले महाभाष्ये पस्प-शायाम्— " 'चत्वारि वाक् परिमिता पदानि' चत्वारि पदजा-तानि, नामाख्यातोपसर्गनिपाताश्च। 'तानि विदुर्ब्राह्मणा ये मनीषिणः'। मनस ईषिणः। 'गुहा त्रीणि निहिता नेङ्गयन्ति' गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमिषन्ती-त्यर्थः। 'तुरीयं वाचो मनुष्या वदन्ति' तुरीयं वा एतद्वाचो यन् मनुष्येषु वर्त्तते, चतुर्थ मित्यर्थः"-इति।

१११—५ – श्रुतिः। तै० सं० ६. ४. ७. ३।

—८— कल्पः। तै० आ० १. २६. १।

—१४— मातृकाः। मातृका वर्णमालेति मेदिनीकरः।

—१५— परा०। तद्यथा अलङ्कारकौस्तुभस्य प्रथमकिरणे—

'मूलाधारात् प्रथम मुदितो यस्तु तारः पराख्यः
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ् मध्यमाख्यः।
वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना-
बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः॥"–इति।

अथ मल्लिनाथधृतोऽपरः श्लोकः—

'वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा।
द्योतितार्था तु पश्यन्ती सूक्ष्मा (परा) वागनपायिनी'–इति।

तथा मञ्जूषाया मुद्धृतश्लोकाः—

"प्राणापानान्तरे देवी वाग्वै नित्यं हि तिष्ठति।
स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तॄणां क्रमरूपानुपातिनी।
प्राणवृत्ति मनुक्रम्य मध्यमा वाक् प्रवर्त्तते।
अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवातः परा वागनपायिनी"–इति।

'चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरित मन्तःकरणं मूलाधारस्थित मनलं चालयति, तच्चालितश्चानल-स्तत्स्थलस्थानिलचालनाय प्रभवति, तच्चालितेन चानिलेन तत्रैव सूक्ष्मरूपेणोत्पादितः शब्दः 'परा' वागित्यभिधीयते। ततो नाभि-देशपर्य्यन्तं चलितेन तेन तद्देशसंयोगादुत्पादितः शब्दः 'पश्यन्ती'-इति व्यवह्रियते। एतद्द्वयस्य सूक्ष्मतरसूक्ष्मतमतया ईश्वरयोगि-

मात्रगम्यता, नास्मदीयश्रुतिगोचरता। ततस्तेनैव हृदयदेशं परिसरता हृदयसंयोगेन निष्पादितः शब्दो 'मध्यमा'-इत्युच्यते। सा च स्वकर्णपिधनेन ध्वन्यात्मकतया सूक्ष्मरूपेण कदाचिदस्माक मपि समधिगम्या। ततो मुखपर्य्यन्त मागच्छता तेन कण्ठदेशं प्राप्य, आहत्य मूर्द्धानं, तत्प्रतिघातेन परावृत्य च मुखविवरे कण्ठादितत्तदष्टस्थानेषु स्वाभिघातेनोत्पादितः शब्दो 'वैखरी'-इत्युच्यते'-इति तद्व्याख्यानं शब्दार्थरत्ने। लघुशब्देन्दुशेखरादावप्येव मेव।

११२—७—( नि० १३. ९. ) = ( निरु० १३. १. ९. )।

—१३— अथापीत्यादिः मनुष्याणा मितीत्यन्तो निरुक्तग्रन्थस्त्विह भाष्यकृतानेनोद्धृतः, केनचिल्लिपिकरेण प्रक्षिप्तो वेति सन्देहः; सोऽत्राप्यनुसन्धेय इत्युक्तेरेवैतद्भाष्यसमाप्तिप्रतीतेरिति ॥

---

[ ४६ ]

११३—९— एकैव वा०। "सूर्यआत्मेत्युदितस्य हि कर्मद्रष्टाऽथैतदनुप्रवदन्त्यथैतं महान्त मात्मान मेषर्गणः प्रवदन्ति— 'इन्द्रं मित्रं वरुण मग्नि माहुरिति"-इति निरु० १३. २. १।

—१२— 'अग्निः सर्वा देवताः'-इति ऐ० ब्रा० २. १. ३।

—१९—( नि० ७. १८. ) = ( निरु० ७. ४. ५. )। सायणप्रदर्शितस्यैतस्य निरुक्तग्रन्थस्योपक्रमग्रन्थस्त्वेषः— 'अथापि ब्राह्मणं भवत्यग्निः सर्वा देवता इति, तस्योत्तरा भूयसे निर्वचनाय' -इति, उपसंहारग्रन्थस्त्वायम्— 'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते ऽयमेव सोऽग्निर्निपात मेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते'-इति। 'निपातो नाम अप्राधान्यम्, भक्तिरित्यर्थः'-इति च तट्टीकाशेषः ॥

[ ४७ ]

—२१— "वर्षकामेष्टिः कारीरी ०—० तिस्रश्च पिण्ड्य उत्तराः ०—० 'कृष्णं' नियानं हरयः सुपर्णा नियुत्वन्तो ग्रामजितो यथा नरः ०—० प्रत्यृचं सूक्तेन वा"–इति आश्व० श्रौ० २. १४. १–९ ।

११४–१०— देवानां०—०यनम् । तद्यथा मनुसंहितायाम्—

"दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।

अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्"–इति ( १. ६७. ) ।

—१७— ( नि० ७. २४. ) = ( निरु० ७. ७. १. ) । तत्पाठस्त्वयम्— "कृष्णं निरयणं रात्रिरादित्यस्य, हरयः सुपर्णा हरणा आदित्यरश्मयस्ते यदामुतो ऽर्वाञ्चः पर्यावर्त्तन्ते सहस्थानादुदकस्यादित्यादथ घृतेनोदकेन पृथिवी व्युद्यते ; घृत मित्युदकनाम, जिघर्त्तेः सिञ्चतिकर्मणो ऽथापि ब्राह्मणं भवत्यग्निर्वा इतो वृष्टिं समीरयति, धामच्छद्दिवि भूत्वा वर्षति, मरुतः सृष्टां वृष्टिं नयन्ति, यदासावादित्योऽग्निं रश्मिभिः पर्यावर्त्तते ऽथ वर्षतीति"–इति ॥

——

[ ४८ ]

११५—१३— न शब्दः । "नेति प्रतिषेधार्थीयो भाषायाम् । उभय मन्वध्यायम् । 'नेन्द्रं देव ममंसत ( ऋ० सं० १०. ८६. १. )'–इति प्रतिषेधार्थीयः, पुरस्तादुपचारः ; तस्य यत् प्रतिषेधति । 'दुर्मदासो न सुरायाम् ( ऋ० सं० ५. ७. १९. १. )'–इति उपमार्थीयः, उपरिष्टादुपचारः ; तस्य येनोपमिमीते"–निरु० १. २. १ । अन्वध्यायम् = छन्दसि । अस्मन्मते त्वत्रापि न-शब्दः उपरिष्टादुपचार एव ; 'त्रिशता'–इति पदादुपरि 'न'–

इति उपचरित इति। तेन सामर्थ्यकल्पनया वैदिक-न-शब्दार्थ-निर्णायकनैरुक्तवचनसङ्कोचोऽप्रयोजन एवेति।

—१५— चार्थे। तत्र निरुक्ते एव प्रदर्शिते ब्राह्मणवचने तथैवार्थस्य दर्शनात् 'षष्टिश्च'–इत्यादि।

—१८— षष्टिश्च ०—० इति ब्राह्मणम्। शत० ब्रा० १०. ३. २. १८; ऐ० ब्रा० ४. २. ६।

११६—२— ( नि० ४.२७. ) = ( निरु० ४.४.६. )। तदीय-पाठस्त्वेवम्— "द्वादश प्रधयश्चक्र मेक मिति मासानाम्। मासा मानात्। प्रधिः प्रहितो भवति। तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति ( ऐ० ब्रा० ४. २. ६; शत० ब्रा० १०. ३. २. १८. ) च ब्राह्मणं समासेन। सप्तशतानि च विंशतिश्च तस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति ( ऐ० ब्रा० २. २. ७; शत० ब्रा० १२. १. १०. ४. ) च ब्राह्मणं विभागेन"–इति। अत्र 'समासेन, अहोरात्रयोरेकत्वेनेत्यर्थः'–इति, 'विभागेन, अहोरात्रयोर्विभागेन'–इति च दुर्गाचार्यः॥

———

[ ४८ ]

११६—८— स्तनः। ध्वनिकर्मार्थस्तनयतेरेवेदं रूपं भवितु मर्हति ( निरु० १०. १. ११. )। अस्ति उभोवाची च स्तन-शब्दः ( निरु० १३. २. ६. )। 'वाचो वाव तौ स्तनौ; सत्यानृते वाव ते'–इति ऐ० ब्रा० ४. १. १.। 'वत्सः स्तनं प्रेप्सति'–इति च तै० सं ५. ४. ३. १।

—"— शशयः। शशयानाः = शयानाः इति निरु० ८.१. ६.।

'निर्वाच: संवत्सरं सुप्ता इव'–इति तट्टीका। ऋक्संहितायां चतसृषु ऋक्षु श्रुतः शशयशब्दः। तत्र प्रथमा इयं— 'यस्ते स्तनः' –इति। द्वितीया ३. ५५. १६. तत्र 'शशयाः, नभसि शयाना वर्त्तमानाः'–इति सायणीयं भाष्यम्। तृतीया ३. ५७. २. तत्र 'शशयं, नभसि शयानं मेघम्'–इति च। 'शशयं राधः'–इति चतुर्थी ८. ५४. ८. सा तु वालखिल्यमन्त्रान्तःपठितेत्यव्याख्याता सायणेनेति।

—,,— मयोभूः। मय इति निघण्टौ सुखनामसु पठितम् ( ३. ६. ७. )।

–१०–वार्याणि। 'वार्याणि = वननीयानि'–इति निरु०८. ४. ८.।

११६–१२— सरस्वति। 'वाङ्नामान्युत्तराणि सप्तपञ्चाशत् ०—०। सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवन्ति। तद्यद् देवतावदुपरिष्टात् तद् व्याख्यास्यामः'–इति निरु० २. ७. १। "सरस्वती व्याख्याता; तस्या एषा भवति— 'पावका नः सरस्वती ( ऋ० सं० १. ३. १०. )' ०—०। तस्या एषाऽपरा भवति— 'महो अर्णः सरस्वती ( ऋ० सं० १. ३. १२. )' ०—० वागर्थेषु विधीयते, तस्मान्माध्यमिकां वाचं मन्यन्ते"–इति च निरु० ११. ३. ४, ५, ६। 'वाग्घि सरस्वती'–इति ऐ० ब्रा० ३. १. २। पुनः 'वाग् वै सरस्वती'–इति च ऐ० ब्रा० ३. ३. १२। तै० सं० ३. ८. १. ७। 'मनो वै सरस्वान्, वाक् सरस्वती'–इति शत० ब्रा० ७. ५. १. ३१। अहो देवतावदित्यस्योदाहरणायैव यास्कोद्धृतस्य 'महो अर्णः'–इत्यस्य व्याख्याने इमं निरुक्तग्रन्थ मुद्धृतवतापि सायणेनोक्तम् 'नदीरूपा प्रतिपाद्यते'–इति! 'वागर्थेषु'–इत्यादिकं नैरुक्तं किमु तदा तेनानुपलब्ध मेव? किञ्च यास्केन खलु द्विविधा

सरस्वती स्वीकृता,—नदीरूपा देवतारूपा च, सा च देवता माध्यमिका वागेवेत्यपि व्याख्याता ; ब्राह्मणग्रन्थादावपि सर्वत्र तथैव ; अहो 'महो अर्णः'–इत्यस्य व्याख्यानोपक्रमे कथङ्कार मुक्तं सायणेन 'द्विविधा हि सरस्वती, विग्रहवद्देवता नदीरूपा चेति ?

११७—२—( ६. १४. )=( ६. ३. ५. )।

—४— धातवे। तुमर्थे तवेन् प्रत्ययः ( पा० सू० ३.४.९. )॥

———

[ ५० ]

—१७ – त्रियत इत्यशुद्धम्, क्रियत इति पाठ्यम्।

—,,—तैत्तिरीयकम्। सं० ६.३.४, ५ अनुवाकौ द्रष्टव्यौ।

११८–५– कर्मदेवाः। "स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषा मधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः, स मनुष्याणां परम आनन्दः। अथ ये शतं मनुष्याणा मानन्दाः, स एकः पितॄणां जितलोकाना मानन्दः। अथ ये शतं पितॄणां जितलोकाना मानन्दाः, स एको गन्धर्वलोक आनन्दः। अथ ये शतं गन्धर्वलोक आनन्दाः, स एकः कर्मदेवाना मानन्दाः; ये कर्मणा देवत्व मभिसम्पद्यते। अथ ये शतं कर्मदेवाना मानन्दाः, स एक आजानदेवाना मानन्दः ; यश्च श्रोत्रियोऽवृजिनोऽकामहतः"–इति बृ० उप० ४. ३. ३३। अत्रेदं शाङ्करं भाष्यम्– "स यः कश्चिन्मनुष्याणां मध्ये 'राद्धः' संसिद्धोऽविकलः, समग्रावयव इत्यर्थः। ०—०। युधिष्ठिरादितुल्यो राजाऽत्रोदाहरणम्। दृष्टं मनुष्यानन्द मादिं कृत्वा शतगुणोत्तरोत्तरक्रमेणोन्नीय परमानन्दं यत्र भेदो निवर्तते त मधिगमयति। अत्राय मानन्दः शतगुणोत्तरोत्तरक्रमेण वर्द्धमानो यत्र द्वविकाष्ठा मनुभवति, यत्र गणितभेदो निवर्तते

ऽन्यदर्शनश्रवणमननाभावात्तं परमानन्दं विवक्षन्नाह । अथ ये मनुष्याणा मेवम्प्रकाराः शतमानन्दभेदाः, स एकः पितृणाम् । तेषां विशेषणं जितलोकाना मिति । श्राद्धादिकर्म्मभिः पितॄंस्तोषयित्वा तेन कर्म्मणा जितो लोको येषां ते जितलोकाः पितरस्तेषां पितॄणां जितलोकानां मनुष्यानन्दशतगुणीकृतपरिमाण एक आनन्दो भवति । सोऽपि शतगुणीकृतो गन्धर्वलोक एक आनन्दो भवति । स च शतगुणीकृतः कर्म्मदेवाना मेक आनन्दः । अग्नि-होत्रादिश्रौतकर्मणा ये देवत्वं प्राप्नुवन्ति ते कर्मदेवाः । तथवा-ऽऽजानदेवाना मेक आनन्दः । आजानत एवोत्पत्तित एव ये देवास्त आजानदेवाः । यश्च श्रोत्रियो ऽधीतवेदो ऽवृजिनो वृजिनं पापं तद्रहितो यथोक्तकारीत्यर्थः, अकामहतो वीततृष्ण आजानदेवे-भ्योऽर्वाग्यावन्तो विषयास्तेषु ; तस्य चैवंभूतस्याऽऽजानदेवैः समान आनन्द इत्येतदन्वाकृष्यते च-शब्दात्"—इति । तैत्तिरीयारण्यकेऽपि प्राय एव मेव ( ८. ८. २, ३. ) ।

—६— श्रुतिः । तै० सं० ६. ३. ५, ६. । शत० ब्रा० १२. २. १. १३-१५ । ऐ० ब्रा० १. ३. ४. ।

—१४— ब्राह्मणम् । ऐ० ब्रा० १. ३. ५ । तत्रेदं साय-णीयं भाष्यम्— "उदाहृत ऋचः पादं व्याचष्टे— 'यज्ञेन वै तद्देवा यज्ञ मयजन्त, यदग्निनाग्नि मयजन्त ते स्वर्गं लोक मायन्' —इति । 'अग्निना' क्रियमाणेन नूतनेन, पूर्वसिद्ध माहवनीयम् 'अग्निम्' 'अयजन्त' पूजितवन्तः इति 'यद्' अस्ति, तेन कारणेन 'यज्ञेन वै देवा यज्ञ मयजन्त'—इत्युच्यते । उभौ यज्ञशब्दौ स्वका-रणभूत मग्निद्वय मुपलक्षयतः । देवशब्देनेदानीं देवत्वेन वर्त्त-मानाः पूर्वसिद्धा ऋत्विजो विवक्षिताः ; 'ते' च पूर्वं मनुष्ठितेन

स्वर्गं लोकं' प्राप्ताः। अवशिष्टं पादत्रयं पठति— 'तानि धर्माणि प्रथमान्यासन्, ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः सन्ति देवाः'–इति। इदानीं देवत्वेन वर्त्तमानैः पूर्वसिद्धैः ऋत्विग्-यजमानैः यानि ज्योतिष्टोमादीनि कर्माण्यनुष्ठितानि, 'तानि' सर्वाणि 'प्रथमानि' 'धर्माणि' आदिसृष्टिकालीनानि सुकृतिसाधनानि 'आसन्'। 'ते ह' ते चानुष्ठातारः 'महिमानः' महत्त्वोपेताः 'नाकं सचन्त' कं सुखम्, अकं दुःखम्, तद्रहितो भोगो नाकः, सम्प्राप्तवन्तः। 'यत्र' यस्मिन् लोके 'पूर्वे' साध्याः पूर्वसृष्टिगताः यज्ञादिसाधकाः, इदानीं यज्ञादिभिः साध्यत्वेन वर्त्तमानाः, 'देवाः' 'सन्ति' वर्त्तन्ते; तं नाकं सचन्तेति पूर्वत्रान्वयः। चतुर्थपादस्य तात्पर्यं दर्शयति— 'छन्दांसि वै साध्या देवास्ते ऽग्रे ऽग्निनाग्नि मयजन्त, ते स्वर्गं लोक मायन्'–इति। 'छन्दांसि वै' गायत्र्यादिच्छन्दोऽभिमानिन एव 'साध्याः' इदानीं जनैः पूज्याः 'देवाः'। ते एव पूर्वसृष्टेन 'अग्निना' मथितेनाग्निना आह्वनीयम् 'अग्निम्' अयजन्त, पूजितवन्तः। 'ते' च तेन यागेन 'स्वर्गं' प्राप्ताः। न केवलं छन्दोदेवा एव चतुर्थपादे विवक्षिताः, किन्तु अन्येऽपीत्याह— 'आदित्याश्चैवेहासन्नङ्गिरसश्च ते ऽग्रे अग्निनाग्नि मजयन्त ते स्वर्गं लोक मायन्'–इति। इदानी मादित्यशब्देनाभिधेया ये देवाः, अङ्गिरःशब्देनाभिधेया ये च ऋषयः, ते द्विविधा अपि 'इहैवासन्' भूमावेव पूर्वसृष्टौ मनुष्यरूपेणावस्थिताः। 'तेऽग्रे'-इत्यादि पूर्ववत्। तदेवं चतुर्थपादतात्पर्यद्वय मुक्तम्। यद्वा, छन्दांसीत्यादिक मेव चतुर्थपादतात्पर्यम्, आदित्यादिक मितरपादतात्पर्यं मिति द्रष्टव्यम्"–इति।

मन्त्रोऽय मिह दाशतय्यां दशममण्डले ( ९०. १६. ) पुनरा-

म्नातः। तत्रैवं व्याख्यानं कृत मेतेनैव सायणाचार्येण— "पूर्वं प्रपञ्चेनोक्त मर्थं सङ्क्षिप्यात्र दर्शयति। 'देवाः' प्रजापतिप्राणरूपाः 'यज्ञेन' यथोक्तेन मानसेन सङ्कल्पेन 'यज्ञ' यथोक्तयज्ञस्वरूपं प्रजापतिम् 'अयजन्त' पूजितवन्तः। तस्मात् पूजनात् 'तानि' प्रसिद्धानि 'धर्माणि' जगद्रूपविकाराणां धारकाणि 'प्रथमानि' मुख्यानि 'आसन्'। एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः; अथोपासना-तत्फलानुवादकभागार्थः संगृह्यते,— 'यत्र' यस्मिन्विराट्प्राप्तिरूपे 'नाके', 'पूर्वे साध्याः' पुरातना विराडुपास्ति-साधकाः 'देवाः' 'सन्ति' तिष्ठन्ति, तत् 'नाकं' विराट्प्राप्तिरूपं स्वर्गं 'ते' 'महिमानः' तदुपासका महात्मानः 'सचन्त' समवयन्ति प्राप्नुवन्ति"—इति।

तैत्तिरीयसंहितायास्तृतीयकाण्डे (५. ११. ६.) अप्याम्नातोऽयम्। तत्रेदं सायणीयं भाष्यम्— "'देवाः' देवत्वं प्रेप्सवो यजमानाः 'यज्ञेन' यज्ञसाधनेन नूतनेनाग्निना सह 'यज्ञ' यज्ञसाधनं पुरातनम् अग्निम् 'अयजन्त' पूजितवन्तः। 'तानि' मिलितानि अग्निद्वयसाध्यानि कर्माणि सुकृतानि 'प्रथमानि आसन्' मुख्यानि अभवन्। 'ते महिमानः' ते खलु महान्तो यजमानाः 'नाकं सचन्ते' स्वर्गं समवयन्ति। 'यत्र' स्वर्गे 'पूर्वे' यजमानाः 'साध्याः' साध्यफलोपेताः 'देवाः सन्ति' देवा भूत्वा वर्त्तन्ते, ते नाकं सेवन्त इति पूर्वत्रान्वयः"—इति। इद मेव भाष्यं सायणाचार्यस्य प्रथमम्; 'आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा (ऋ० सं० सा० भा० भू० श्लो०)'—इत्युक्तितस्तैत्तिरीयभाष्यस्य प्राथम्योपलब्धेः। यद्यपि तत्कृतं काण्वभाष्य मप्याध्वर्यवभाष्य मेव, तथापि 'तस्य बोधायनं सूत्रम्'—इत्युक्त्वा सायणस्य तैत्तिरीयशाखत्वप्रतीतेः, स्वशाखाया

एव व्याख्याने प्रथमप्रवृत्तिर्नैसर्गिकी चेत्युपपद्यते तैत्तिरीयभाष्यस्यैव प्राथम्य मिति दिक् ।

शुक्लयजुस्संहितास्वप्यय माम्नातः (वा० सं० ३१.१६.)। सायणीयकाण्वभाष्यन्वित उद्धृत इवेति तदुद्धरण मिहाकिञ्चित्करम् ।

अथर्वसंहितायाञ्च ( ७.१.५.१. ) दृश्यतेऽयं मन्त्रः। तत्र कृतं व्याख्यान मेव स्यात्सायणस्यान्तिमम्। तच्चेदम्—"'देवाः' कर्मणा देवत्वं प्राप्ता यजमानाः, पूर्वं 'यज्ञेन' अग्निना निर्मन्थ्येन 'यज्ञ' होमाधारम् आहवनीयम् अग्निम् 'अयजन्त' ( यजिरत्र सङ्गतकरणवाची ) अनुष्ठानाय संयोजितवन्त इत्यर्थः। 'यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते'—इति हि तैत्तिरीयकम् ( तै० सं० ६. २. १. ७. )। 'तानि' 'धर्माणि' अग्निसाधनानि कर्माणि 'प्रथमानि' ( प्रथम इति मुख्यनाम ) प्रतमानि प्रकृष्टतमानि 'आसन्' फलप्रसवसमर्थानि अभवन्नित्यर्थः। धर्माणीति। धर्मशब्दः अपूर्वे पुल्लिङ्गः, तत्साधने नपुंसक इति च 'अर्धर्चाः पुंसि'-इति सूत्रे ( पा० २. ४. ३१. ) वृत्तिकारेण लिङ्गानुशासनं कृतम्। 'ते ह' ते खलु 'देवाः' 'महिमानः' महत्त्वयुक्ताः 'नाकम्' कं सुखम्, अकं दुःखं, तद् अत्र नास्तीति नाकः स्वर्गः, तं 'सचन्त' सङ्गताः। 'षच समवाये (भ्वा० उ० ९९७.), लङि 'बहुलं छन्दस्यमाङ्योगेऽपि'-इति ( पा० ६. ४. ७५. ) अडभावः। 'यत्र' यस्मिन् नाके 'पूर्वे' पुरातनाः 'साध्याः' प्राणाभिमानिनो देवाः साध्या इत्युच्यन्ते। तथा च वाजसनेयकम्— 'प्राणा वै साध्या देवास्त एत मग्र एव मसाधयन्'-इति ( श० ब्रा० १०. २. २. ४. )। यद्वा छन्दोभिमानिनो देवा आदित्या अङ्गिरसश्च साध्या देवा इत्युच्यन्ते। ते देवाः 'सन्ति' निवसन्ति। तस्मादिदानी

मपि यज्ञाधिकारिभिरेवं कर्त्तव्य मित्यर्थः। अत्रैतरेयब्राह्मणम्—'यज्ञेन वै तद् देवा यज्ञ मयजन्त, यदग्निनामग्नि मयजन्त। ते स्वर्गं लोक मायंस्तानि धर्म्माणि प्रथमान्यासन्, ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः सन्ति देवा इति। छन्दांसि वै साध्या देवाः। तेऽग्रेऽग्निनाग्नि मयजन्त, ते स्वर्गं लोक मायन्नादित्याश्चैवेहासन्नङ्गिरसश्च। तेऽग्रेऽग्निनाग्नि मयजन्त ते स्वर्गं लोकमायन्''—इति (ऐ० ब्रा० १. ३. ५.)। यद्वा 'देवाः' इदानीं देवभाव मापन्नाः, पूर्वं 'यज्ञेन' अग्निना पशुभूतेन 'यज्ञ'' यष्टव्य मग्निम् 'अयजन्त' पूजितवन्तः। अग्नेरेव मूर्त्तिभेदेन देवत्वं पशुत्वं च द्रष्टव्यम्। ''अग्निः पशुरासीत् त मालभन्त तेनायजन्तेति च ब्राह्मणम्'—इति हि यास्कः (निरु० १२. ४. ७.)। 'साध्याः' यज्ञादिसाधनवन्तः। 'साधनाः द्युस्थानो देवगण इति नैरुक्ताः'—इति हि यास्कः (निरु० १२. ४. ७.)। शिष्टं पूर्ववद् व्याख्येयम्। अथ वा 'यज्ञेन' ज्ञानयज्ञरूपेण 'यज्ञः' ('यज्ञो वै विष्णुः'—इति श्रुतेः। तै० ब्रा० १. ३. ८. ५.) विष्णुः, तम् 'अयजन्त' आत्मत्वेन ध्यातवन्तः। ते 'नाकं' स्वर्गम् 'दुःखेन यन्न सम्भिन्नं न च ग्रस्त मनन्तरम्। अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्''—इत्युक्तनित्यसुखरूपम्। 'यद् गत्वा न निवर्त्तन्ते तद् धाम परमं मम'—इति (भ० गी० १५. ६.) भगवतोक्तं स्थानं 'सचन्त' सेवन्ते प्राप्नुवन्ति। साध्याः (व्यत्ययेन कर्त्तरि कृत्यप्रत्ययः) साधकाः, अहङ्ग्रहोपासका इत्यर्थः। यद्वा साध्यं ज्ञानेन प्राप्यं वस्तु येषा मात्मत्वेन अस्तीति; अर्श आदित्वात् अच् प्रत्ययः (पा० सू० ५. २. १२७.)। शिष्टं समानम्''—इति ॥

—१५— यद्वा 'विष्णुर्वै यज्ञः'—इति ऐ० ब्रा० १. ३. ४।

—१९— ( नि० १२. ४१. )=( निरु० १२. ४. ७. ) । तत्पाठस्त्वेवम्— "'यज्ञेन यज्ञ मयजन्त देवाः' अग्निनाग्नि मयजन्त देवाः। 'अग्निः पशुरासीत् त मालभन्त तेनायजन्त'—इति च ब्राह्मणम् ( तै० सं० ५. ७. २६ ; शत० ब्रा० १३. २. १. १३–१५. )। 'तानि धर्माणि प्रथमान्यासन्', 'ते ह नाकं महिमानः' समसेवन्त। 'यत्र पूर्वे साध्याः सन्ति देवाः' साधनाः। द्युस्थानो देवगण इति नैरुक्ताः, पूर्वं देवयुग मित्याख्यानम्"–इति।

अथ प्रकरणात् ऐतरेयादिष्वाम्नानात् निरुक्तमतालोचनाच्चावगम्यतेऽस्याप्याधिदैविक मेव व्याख्यानं मुख्य मिति। तच्चैवं भवितु मर्हति— "देवाः" 'आदित्याः' आदित्यस्य स्वभूताः ( रश्मयः ) "यज्ञेन" पार्थिवाग्निकृतवाष्परूप साधनभूतेन 'अग्निना', 'अग्निम्' मध्यमं ( वैद्युतं ) 'अयजन्त' यजन्ते, ( मेघसृजनं कुर्वन्ति )। "तानि" अग्नि मालभ्य अग्नियजनानि ( वाष्प मवलम्ब्य मेघसृजनानि ) "धर्माणि" कर्माणि "प्रथमानि" मुख्यानि 'आसन्' सन्ति सदैव ; तेषां देवाना मिति यावत्। अतएवाह यास्कः— 'यदासावादित्यो ऽग्निं रश्मिभिः पर्यावर्तते ऽथ वर्षति'–इति ( निरु० ७. ७. १. )। "ते" देवाः "यत्र" लोके "पूर्वे" पूर्वं ( रसाकर्षकतया ) "साध्याः" मेघसृजनरूपेष्टेः 'साधनाः' "सन्ति" सन्तः ( अतएव ) "महिमानः" माहात्म्ययुक्ताः "देवाः" 'अङ्गिरसः' पार्थिवाना मङ्गानां रसाकर्षकाः इति "ह" प्रसिद्धाः ; त मेव "नाकं" स्वर्गलोकम् ( वस्तुतः सूर्यं ) "सचन्त" 'समसेवन्त' सेवन्ते। तदित्थं यज्ञकर्मणां स्वर्गप्राप्ति-साधनत्वं तत एव प्राधान्य' चाख्यातम्, सूर्यरश्मेर्मेघसृजनरूपं वस्तुतत्त्वं चोपदिष्ट मिति ॥

[ ५१ ]

११९—३— चवा० । पा० सू० ८. १. ५९ ।

—७— आहवनीयाद्याः । "उत्सर्गेऽपराह्णे गार्हपत्यं प्रज्वाल्य दक्षिणाग्नि मानीय विट्कुलाद् वित्तवतो वैश्यात् भ्राष्ट्राद् वा इत्येके भ्रियमाणं वा प्रज्वाल्यारणिमन्त्तं वा मथित्वा गार्हपत्यादाहवनीयं ज्वलन्त मुद्धरेत्"-इति, "पिता वा एषोऽग्नीनां यद् दक्षिणः, पुत्रो गार्हपत्यः, पौत्र आहवनीयः"-इति च आश्व० श्रौ० २. २. १, १२ । दक्षिणाग्नेरेव नामान्तर मन्वाहार्यपचन इति । एषां त्रयाणा मग्नीनां समुदितं नाम 'त्रेता'-इति । तथाहि म० सं० २. २३१ —'पिता वै गार्हपत्योऽग्निः, माताग्निर्दक्षिणः स्मृतः । गुरु राहवनीयस्तु साग्नित्रेता गरीयसी"-इति । त एते सभ्याव-सथ्याभ्यां पञ्चाग्नयः कथ्यन्ते । स एषोऽर्थस्तु अधियज्ञपक्षे ज्ञेयः, अधिदैवतपक्षे तु 'अग्नयः' रश्मय एव । एतद्ब्रह्माण्डीयो द्युविभागस्तु रश्मिभिः पूर्णः सदैवास्ति, तथैव तृप्तश्च ; न हि तत्-स्थं तत्रापि पर्जन्यवर्षण मपेक्षते इति भावः । तदेव मिहैतद्विज्ञानत्रितय मुपदिष्टम्—

(१) एतदेवोदकं सूर्यरश्म्याकर्षणादूर्ध्वमाप्य मेघीभूतं वर्षति ।

( २ ) तद्वर्षणेनैव भूस्थानाना मस्माकं तृप्तिर्नान्यथा ।

( ३ ) द्युलोके नैव वृष्टिर्भवति, स तु सदैव प्रचण्डातपपूर्ण-स्तथैव तृप्तश्चेति ।

निरुक्ते तु आग्नेयीष्वृक्षु यत्र यत्र वर्षकर्म्म श्रूयते, तत्र सर्वत्रै-वाग्निर्मध्यमो गृह्यादिति शङ्का मपनोदयितु ममध्यमाग्निघटिता मिमा मृच मुदाजहार । अपि चैतस्या विशेषतो व्याख्यानं निष्प्रयोजन मिति मत्वावदत् 'इति सा निगदव्याख्याता'-इति

( ७. ७. १. )। निगदेन पठनमात्रेण व्याख्याता उपलब्धार्थेय मित्यर्थः ॥

---

[ ५२ ]

११९—११ – अन्वारम्भणीयायाम्। दर्शपूर्णमासारम्भे प्रथम-प्रयोगे अन्वारम्भणीया इष्टिर्भवति। तथाहि— "अन्वारम्भणीया ऽऽग्नावैष्णव एकादशकपालः सरस्वत्यै चरुः सरस्वते द्वादशकपालो दर्शपूर्णमासारम्भे"–इति कात्या० श्रौ० ४. ५. २२।

१२०—१— दिव्यम्। द्युः सूर्यः, तेन उत्पन्नम्, दिवि द्युसीम्नि ( द्युसमीपे अन्तरिक्षे ) भव मिति वा।

—,,— वायसं। चातका एव ख-वायसाः ख-काका इति यावत्। तैः परिवृतं नवजलधर मपि वायस मुच्यते उपचारात्।

—७ – सर ० — ० नाम। निघ० १. १२. ३८.। वाङ्नामसु च निघ० १. ११. ५५। सरस्वानिति तु मध्यस्थानदेवतासु पठित मेव ( निघ० ५. ४. १५. )। निरुक्ते ऽपि तथैव मध्यस्थान-देवव्याख्यानावसरे एव सरस्वानुपात्तः, 'ये ते सरस्वः ( ऋ० सं० ७. ६. ८. ५. )'–इति तन्निगमश्च प्रदर्शितः। तदेवं स्फुट मेवो-पलभ्यते ऽयं सरस्वच्छब्दो नूनं मध्यमवचनः, स चात्र कोऽन्यो भवितु मर्हति पर्जन्यादिति। किञ्च यास्केन हि "अथास्य ( मध्यमस्य ) कर्म्म – रसानुप्रदानम्, वृत्रवधः, या च का च बल-कृतिः"–इति, "अथास्य (आदित्यस्य) कर्म्म— रसादानम्, रश्मि-भिश्च रसधारणम्, यच्च किञ्चित् प्रवह्लितम्"–इति च निर्णीतम् ( निरु० ७.३.३,४. )। इह मन्त्रे खलु 'वृष्टिभिस्तर्पयन्तम्'– इति रसानुप्रदानं स्फुटम्; अतोऽस्य मन्त्रस्य मध्यमदेवताकत्वे

कोऽस्ति संशयः। यद्यत्र रसादानादीनां त्रयाणा मादित्यकर्म्मणा मेक मपि गम्येत, तर्ह्यस्य सूर्यदेवताकत्वं न वेति विचारो वा प्रसज्येत। तस्माद् इह यदुक्तं सायणेन सूर्य मिति, तत्स्याद्भ्रान्तिमूलक मिवेति। अध्यात्मपक्षेऽप्यस्य व्याख्यानं भवत्येव; 'मनो वै सरस्वान्'—इति शतपथे ( ७. ५. १. २१. ) श्रवणात्। तत्पक्षे तु दिव्य मित्यादिकं विशेषणं यथोपपादं व्याख्येय मिति शम्॥

---

## ॥ अथ ऋग्ब्राह्मणस्य ॥

( भाष्यभूमिका )

१२१—९— 'निश्वसिता'—इति क, निःश्वसितं'—इति ग।

—१२— 'आदिशत् सायणाचार्यं'—इति ग-पाठः।

—१४— 'कृपालुः सायणाचार्यो'—इति मुद्रितेषु ऐतरेयारण्यक-तैत्तिरीयारण्यक-सामवेदीय-छन्द-आरण्यक-उत्तरा-भाष्येषु, ताण्ड्याद्यष्टब्राह्मणभाष्येषु च पाठः।

१२२—१७— अतएवोक्तम् ( भाग० पु० १. ४. २५. )—

१२३—१— इति ( १. १. ५. )।

—४— श्रुतिः। ऋ० सं० १०. ९०. ९।

—५— सूत्रेण। वे० सू० १. १. ३।

१२३—७ – श्रुतिः। ऋ० सं० ८. ७५ ६।

—८— स्मृतिः। ‘आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः’–इति चैतच्छ्लोकस्यापरार्द्धं ब्रह्मसूत्रस्य शाङ्करभाष्यादौ द्रष्टम् (१. ३. २८ सू० भा० )।

—९— इति। वे० सू० १. ३. २९।

—१८— एव। ननु कोऽयं वेद इत्यारभ्य व्याख्यातव्य एवेत्यन्तो ग्रन्थः तै०-सं०-भूमिकाया मपि।

—२०— अध्ययनविधिः०। अध्ययनविधिश्चैषः— “यस्तित्याज सखिविदं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्”–इति ऋ० सं० १०.७१.६। “अग्निं वै जातं०—० सुकृतस्य पन्था मिति। तस्मात् स्वाध्यायोऽध्येतव्यः”–इति च तै० आ० २. १५।

—२१— आम्नायते च। ‘वचनद्वयं शाखान्तरगतम्’–इति ऋ० सं० सा० भा० भू०।

—२२— ‘यद्गृहीत’–इति स्वादिपुस्तकपाठः, मुद्रितैतत्संहितानिरुक्तयोश्च।

१२४—२— इति। पातञ्जलमहाभाष्यस्य पस्पशाह्निके चोद्धृत मिदं वचनम्।

—७— श्रूयते। तै० सं० ५. २. १२. २।

१२५—२— हिः। तै० सं० ५. १. ७. ३।

—६— अत एवोक्तम्। मीमांसार्थसङ्ग्रहे चोद्धृत मिदं वचनं व्याख्यातं च सोदाहरणप्रदर्शनम्।

—१२ – इति। आप० य० प० सू० ३४।

—१२ – प्रथमपादे। जै० सू० ३२. अधि० ८।

१२—५१९— आम्नायते । तै० ब्रा० १.६.४.३; ७.१.१ ।

१२६—१— आम्नायन्ते । तै० आर० २. ९ ।

—४— देवा० । तै० सं० १. ५. १. १ ।

—५— इदं वा० । तै० सं० २. २. ९. १ ।

—७— इति० । तै० आर० १. २६. १ ।

—९—गाथाभिः । 'यमगाथाभिः'—इति पाठः । तै०सं०५.१.८.२ ।

—१०— नाराशंस्यः । ऐ०आ० २. ९. २. भाष्ये तूदाहृतम्— "होता यक्षन्नराशंसम् ( वा० सं० २१. ३१. )"—इति ।

—१४— अग्निर्वै० । ऐ० ब्रा० १. १. १ ।

—२१— समाम्नायते । ऐ० आर० १. ८. २ ।

१२७—७— इत्यादिकं । ऐ० ब्रा० १. १.१ ।

—,,— इत्यन्तं । ऐ० ब्रा० ८. ५. ५ ।

—८— अथ० । ऐ० १ आ० १. १. १ ।

—९— आचार्याः० । ऐ० ३ आ० २. ६. ९ ।

—१०— इति । अहो चित्र मेतत् महानाम्न्याख्यमन्त्रजातस्य एतस्य चतुर्थारण्यकस्यानैतरेयत्वेन कथं न ग्रहणं कृत मिति ? तद्भाष्यान्ते तूक्त मिदम्—'तदिदं नवसङ्ख्याना ऋचां पुरीषपदानाञ्च प्रतिपादकं ग्रन्थजातं यद्यपि कर्म्मकाण्डे पठितुं युक्तं तथाप्यरण्ये एवाध्येतव्य मित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितम्'—इति ए. सो. मु. ३८४ पृ० द्रष्टव्यम् ।

—१२— विधीयते । १–१७ अ० ५ ख० । तत्रापि प्रथमाध्याये दीक्षणीयेष्टिः, द्वितीये प्रायणीयेष्टिः उदयनीयेष्टिश्च, तृतीये आतिथ्येष्ट्यादयः, चतुर्थेऽभिष्टवादयः, पञ्चमे सोमक्रयाद्या इत्येव मुत्तरत्र बोध्यम् ।

१२७—१२— गवामयनम् । १७ अ० ६ ख०–१८अ० ३ख० ।

—१३— आदित्यानामयनम् । १८ अ० ३–८ ख० ।

—,,— अङ्गिरसामयनम् । १८ अ० ३–८ ख० ।

—,,— द्वादशाहः । १९–२४ अ० ।

—१४— प्रासङ्गिकम् । २५–४० अ० । अग्निहोत्रादिकम्, पशङ्गविभागादिकम्, स्तोत्रशस्त्रयोर्विशेषादिकञ्चेति यावत् ।

—१५— ज्योतिष्टोमस्य । "अथ यदेन मूर्ध्वं सन्तं ज्योतिर्भूत मस्तुवन्स्तस्माज्योतिः-स्तोमं सन्तं ज्योतिष्टोम मित्याचक्षते"–इति ऐ० ब्रा० ३. ४. ५ । ज्योतिष्टोमशब्देन सोमयागोऽभिधीयते ।

—१६— स्तुतेः । "ज्योतिष्टोमं प्रथम मुपयन्त्यस्मिन्नेव तेन लोके प्रतितिष्ठन्ति गोष्टोमं द्वितीय मुपयन्त्यन्तरिक्ष एव तेन प्रतितिष्ठन्त्यायुष्टोमं तृतीय मुपयन्त्यमुष्मिन्नेव तेन लोके प्रतितिष्ठन्ति" –इति तै० सं० ७. ४. ११. १ । ज्योतिष्टोमपद्धतिस्तु का० श्रौ० सू० ७–११ अ० द्रष्टव्या ।

—१४— सप्त० । 'अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति संस्थाः'–इति आश्व० श्रौ० ६. ११. १ । सर्वे सोमयागाः संस्थया सप्तविधा एवेत्यर्थः'–इति च तत्र तट्टीकोपसंहारः । तदेवं सोमसम्पाद्य एक एव ज्योतिष्टोमः अग्निष्टोमाद्याख्यः सप्तविधः । तद्यथा— अग्निष्टोमसाम्ना यज्ञायज्ञीयाख्येन यज्ञसमाप्तिर्यत्र सोऽय मग्निष्टोमः ; तत्रैवाग्निष्टोमे राजन्यस्य षोड़शिनं गृह्णीयादिति आग्निमारुतादूर्ध्वं षोडशिग्रहस्य स्तुतशस्त्रे यदा भवतस्तदा सोऽत्यग्निष्टोम इत्युच्यते । एव मुक्थ्यादयश्च ।

१२७–१८— वक्ष्यते । तत्राग्निष्टोमः प्रथमाध्यायादि पञ्च-

दशाध्यायीयचतुर्थखण्डान्तं यावदुक्तः, पञ्चदशाध्यायीयान्तखण्डयो-रुक्थ्यः, षोड़शाध्यायीयादिचतुःखण्डेषु षोड़शी, ततः पञ्चमषष्ठ-खण्डयोः सप्तदशाध्यायीयाद्यखण्डपञ्चके चातिरात्र इति विवेकः। "एतद्वा अग्निष्टोमं प्रथम मुपयन्त्यथोक्थ्य मथ षोड़शिन मथा-तिरात्र मनुपूर्वम्"–इति तै० सं० ७. ४. १०. १।

—१९— प्रकृतिः। "अग्निष्टोम एकाहानां प्रकृतिः"–इति च आप० य० प० सू० १४१।

१२८—१— सोमेन। आप० श्रौ० १०. १. १।

—२— ऋग्वेदस्य। तथाहि— "ऋग्वेदेनैव हौत्र मकुर्वत यजुर्वेदेनाध्वर्यवं सामवेदेनोद्गीथम्"–इति शत० ब्रा० ११. ५. ८. ४। "तदाहुर्महावदाः यदृचैव हौत्रं क्रियते यजुषाध्वर्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवति। अथ केन ब्रह्मत्वं क्रियत इति? त्रय्या विद्ययेति ब्रूयात्"—इति चेहोपरिष्टात् ५. ५. ८। एव मापस्तम्बोऽप्याह "ऋग्वेदेन होता करोति, सामवेदेनोद्गाता, यजुर्वेदेनाध्वर्युः, सर्वैर्ब्रह्मा, वचनाद् विप्रतिषेधाद्वान्यः कुर्यात्"–इति १९–२३।

—३— इष्टिः। दीक्षणीयेष्टिः। दीक्षणीयार्थस्त्वग्रे (१३१पृ०) द्रष्टव्यः।

—५— तृतीयपादे। जै० सू० १२. अधि० ६।

—१६— श्रुतिलिङ्गादि०। तथाच जैमिनिदर्शनसूत्रम्- "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्य मर्थविप्रकर्षात्"–इति ३. ३. १४।

१३०—१०— आम्नायते। इय मेवर्क् आग्नावैष्णवस्य हविषो याज्या इति वक्ष्यति (१५३ पृ० ४ ख०)।

—१२— शास्त्रेषु। शस्त्रेषु इति पाठ्यम्।

११०—१४— द्वादश। वक्ष्यतीहैव 'चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि'–इति ( ३. ४. १. )। तत्र द्वादश स्तोत्राणि द्वादश शस्त्राणि भवन्ति। प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्, अप्रगीतमन्त्रसाध्या स्तुतिस्तु शस्त्रम्। 'स्तोत्र मग्रे शस्त्रात्'–इति चाश्वलायनम् ( ५. १०. १. )। तानि स्तोत्राणि यथा— बहिष्पवमानः, माध्यन्दिनपवमानः, आर्भवपवमानश्चेति त्रीणि पवमानस्तोत्राणि; चत्वार्याज्यस्तोत्राणि, चत्वारि पृष्ठस्तोत्राणि, एकं यज्ञायज्ञीयं स्तोत्र मिति द्वादश। आज्यम्, प्रउगम्, मरुत्वतीयम्, निष्केवल्यम्, वैश्वदेवम्, आग्निमारुतञ्चेति षट् होतुः शस्त्राणि; तथा मैत्रावरुणादीनां त्रयाणां होत्रकाणा मपि षडिति द्वादश। 'प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्रकाः'–इति आश्वलायनम् ५. १. १०। मैत्रावरुण इति प्रशास्तुरेव नामान्तरम्।

—१५—आम्नातः। 'आग्नेयं होताज्यं शंसति'–इत्यादि २.५.५।

—१६— आम्नातः। 'विष्णोर्नु कं वीर्याणि प्र वोचम् (ऋ० सं० १०.१५४.१.)–इति वैष्णवीं शंसति'–इति ३. ३. १४। 'आग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते'–इति नि० ७.६.४।

१११—७— आग्नावैष्णवः। 'सास्य देवता'–इति पा० ४.२.२४।

—८— पुरोडाशः। पुरोडाशपाकादिप्रकारस्तु आपस्तम्बीयश्रौतसूत्रे ( १. २२–२५. ) आद्यप्रश्नीयसप्तमाष्टमपटलयोः कात्यायनीयश्रौतसूत्रे २. ४. ५ च द्रष्टव्यः। "अतुङ्ग मपूपाकृतिं कूर्मस्येव प्रतिकृति मश्वसफमात्रं करोति, यावन्तं वा मन्यते ( आप० श्रौ० १. २५. ४, ५. )"–इति सूत्राभ्यां पुरोडाशस्वरूपं चाधिगम्यम्। 'पुरोडाश मेव कूर्मं भूत्वा सर्पन्तम्'–इति च शत०

ब्रा० १. ६. २. ३ । तैत्तिरीयब्राह्मणीये पौरोडाशिके काण्डे ( ३. २. ४–८. ) च ।

—६— प्रापितः । तथाहि-- "द्वयोश्चास्य स्वरयोर्मध्य मेत्य सम्पद्यते स डकारो ळकारः"—इति पार्षदसूत्रम् १. १. ४ ।

—२१— वचन० । 'व्यत्ययो बहुलम्'—इति पा० ३.१.८५ ।

—२३— दीक्षणीय० । दीक्षणीयेष्टिरेव सर्वेष्टिमूलम् । वक्ष्यति हि 'दीक्षणीयेष्टिस्तायते ता मेवानु याः काश्चेष्टयस्ताः सर्वा अग्निष्टोम मपियन्ति'—इति ( ३. ४. २ ) । सैषा प्रथमेष्टिः शतपथब्राह्मणस्य तृतीये काण्डे प्रथमाध्यायतो द्वितीयाध्यायीय-द्वितीयब्राह्मणान्तं यावदाम्नाता, तैत्तिरीये सांहितिकब्राह्मणे च ६ का० १ प्र० १–४ अनु० । एवम् आश्व० श्रौ० ४. २. १–१७ । तथा 'दीक्षणीयायास्तन्त्रं प्रक्रमति'—इत्यादि आप० श्रौ० १०. ४–२०. । कात्या० श्रौ० सप्तमाध्यायस्य प्रथमकण्डिकातः पञ्चम-कण्डिकाया द्वादशसूत्रं यावदपि। तत्रान्त्यकण्डिकायाः सप्तमसूत्रस्य वृत्तौ याज्ञिकदेवेन दीक्षितधर्माश्च कतिचित् सङ्गृह्य दर्शिताः ।

—१२२—२ संस्कृतः । 'संस्कृतं भक्षाः'—इति पा० ४.२.१६ । एकादशकपालस्थापनप्रकारस्त्वेवम्— पूर्वं मध्यम मुपदधाति, ततः पुरस्तात् तृतीयम् , मध्यमाद् दक्षिणं चतुर्थम् , चतुर्थात् पूर्व मेकस्य कपालस्यान्तरालं परिशिष्य पञ्चमम् , चतुर्थपञ्चमयोरन्त-राले षष्ठम्, चतुर्थस्य पश्चात् सप्तमम् , तस्य पश्चादष्टमम् , सर्वेभ्य उत्तरतो नवमदशमैकादशानि प्राक्संस्थानि । किञ्च पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रसिद्धेः यावत्कपालं प्रथनविधेश्च तदर्थ-कपालचितेरपि अर्थाद् वृत्ताकारत्वम् । कपालानि तु घर्षणादुपायेन तथा करणीयानि यथा च कपालचितिक्षेत्रं वृत्तं सम्पूर्येत ।

१३२—१०—० मिच्छन्ति। तथाचैतत् पाणिनीयं सूत्रम्—"आदिरन्त्येन सहेता"—इति १. १. ७१।

—११— इति। "येन विधिस्तदन्तस्य"—इति पाणिनीय-सूत्रस्य (१. १. ७२.) पतञ्जलिकृते महाभाष्ये पठितैषा परिभाषा, परिभाषेन्दुशेखरे च व्याख्याता (८९.)।

—१९— काण्डे। संहितायाः प्रथमकाण्डीयः प्रथमप्रपाठकः समग्र एवेष्टिकाण्ड उच्यते, तत्रैवान्त्यांशः पौरोडाशिक इत्यपि। ब्राह्मणस्य तृतीयकाण्डीयो द्वितीयप्रपाठकश्च तस्यैव शेषः।

—२१— इति। तै० ब्रा० ३. २. ८. १०।

—„— सौमिके। संहितायाः प्रथमकाण्डीयं द्वितीयादि प्रपाठकत्रयं सौमिकं काण्डम्; षष्ठकाण्डं च तद्ब्राह्मणम्। तत्राप्यवान्तरकाण्डानि नव। तदुक्त मनुक्रमण्याम्— "अध्वरप्रभृति त्रीणि तद्विधिर्वाजपेयकौ। सवः शुक्रियकाण्डे च नवेन्दोरिति धारणा"—इति। तथाच अध्वरकाण्डम्, ग्रहकाण्डम्, दक्षिणाकाण्डम्, तदीयविधिकाण्डम्, वाजपेयमन्त्रकाण्डम्, वाजपेयविधिकाण्डम्, सवकाण्डम्, शुक्रियकाण्डम्, शुक्रियविधिकाण्डं चेति नवकाण्डात्मकं सौमिकं काण्डम्।

—२३— इति। तै० सं० ६. २. २।

—„— "विष्लृ व्याप्तौ"—इति जु० प० १३।

—२४— विष्णुशब्दः। निघ० ३. १७. १२; ४. २. ३८.। निरु० ५. २. ३; १२. २. ७. ८।

१३३—१४— आमनन्ति। तै० सं० ५. ५. १।

१३४—१०— काण्डे। तै० सं० १. १. ४।

—१८,१९— इति, इति च। ऋ० सं० १. २२. १७, १८।

१३५—१२— स्त्रियै। "षष्ठ्यर्थे चतुर्थीति वाच्यम्"–इति पा० २. ३. ६२. वा० १.।

१३६—१७— आमावास्यम्। 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'–इति पा० सू० ४. ३. १६।

—२३— आश्वलायनः। श्रौ० ४. १. १।

—२४— आग्रयणेष्टिः। "आग्रयण मैन्द्राग्न मग्रपाकस्य व्रीहीणां यवानां च" कात्या० श्रौ० ४. ६. १। "आग्रयणं व्रीहिश्यामाकयवानाम्" आश्व० श्रौ० २. ९. १। "य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात् तस्य का प्रायश्चित्तिः" ऐ० ब्रा० ७. २. ८। "आग्रयणेष्ट्या यजते"–इति च शत० ब्रा० २.४.३.१।

१३७—१— पशुः। कात्या० श्रौ० षष्ठाध्यायो द्रष्टव्यः। तै० ब्राह्मणेऽपि २. २. २. ३; ३. ६. ३।

—३— इति। आप० श्रौ० ५. २३. २। कात्यायनोऽप्याह "दर्शपूर्णमासाभ्या मिष्ट्वाऽन्येन यजेतेति श्रुतेः"–इति ७ १. १।

—७—इति। आश्व० श्रौ० ४. १. २।

—१२—मन्तरेणाधान। इत उत्तर मेवं पाठ्यम्— स्रामनन्ति— "अथो खलु यदेवैनं यज्ञ उपनमेत्, अथादधीत, सैवास्यर्द्धिः"–इति (तै० ब्रा० १. १. २. ८.)। आपस्तम्बोऽपीद मेव सोमाधान (मुद्राकरप्रमादजैषा त्रुटिस्तयीसंग्रहे)

—१३— इति। आप० श्रौ० ५. ३. २१। "अथ नक्षत्राणि; कृत्तिकासु ब्राह्मण आदधीत ०—० वसन्तो ब्राह्मणस्य ०—० सोमेन यक्ष्यमाणो नर्त्तुं सूर्क्षेन्न नक्षत्रम्"–इति तत्र पाठः। 'न सूर्क्षेत्, नाद्रियेत'— इति तट्टीका रौद्रदत्ती। "सोमेन यक्ष्यमाणो नर्त्तुं पृच्छेन्न नक्षत्रम्"–इति आश्व० श्रौ० २.१.१५।

१३७—१४— चोदकप्राप्तां। तथाहि प्रकृतौ 'पञ्चदश सामिधेनीरन्वाह'-इति तै० सं० २. ५. ८. २।

—१६—इत्याद्या:। तै० ब्रा० ३. ५. २. १-१२।

—,,— एकादश०। यद्यपि मूले द्वादश ऋच आम्नाताः, तथाप्यन्त्ययोरधिकारिभेदेन विकल्पितत्वात् एकादशैव।

—१७— सामिधेन्यः। पा० ४. ३. १२०. वा० ६। 'समिन्धे सामिधेनीभिर्होता, तस्मात्सामिधेन्यो नाम'-इति शत० ब्रा० १. ३. ५. १.। तासामुत्पत्तिस्त्वेवमाम्नायते— "ऋषेर्ऋषेर्वा एता निर्मिता यत्सामिधेन्यः"-इति तै० सं० २. ५. ७. ५। 'भिन्नेभ्य ऋषिभ्यः प्रवर्त्तितास्ताः सामिधेन्यः'-इति च तत्र भाष्ये सायणः।

—१८— इतिवचनात्। तै० सं० २. ५. ७. १।

—२०— ऋचौ। समिध्यमाना ऋक् (तै० ब्रा० ३. ५. २.) नवमसामिधेनी-- ऋ० सं० ३. २७. ४; समिद्धवती ऋक् तु (तै० ब्रा० ३. ५. २.) दशमसामिधेनी— ऋ० सं० ५. २८. ५। तथा ह्याश्वलायनः 'अथ सामिधेन्यः'-इत्युपक्रम्याह— 'समिध्यमानो अध्वरे समिद्धो अग्न आहुतेति द्वे'-इति श्रौ० १. २. ७।

—,,— प्रक्षेप्तव्ये। सामिधेन्य ऋच एकादशैव। तासु प्रथमाया अन्तिमायाश्च त्रिस्त्रिःपाठेन पञ्चदशसङ्ख्या पूरणीया भवति। सप्तदशसङ्ख्यायाः पूरणीयत्वे तु पृथुपाजेत्याद्यपरर्ग्द्वयस्य तासु प्रक्षेपोऽपि विधीयते। एवमेकविंशतित्वे सम्पादनीये पञ्चानामृचां प्रक्षेपणीयता विहिता। ताः प्रक्षेपणीयर्च एव धाय्या उच्यन्ते (ऐ० ब्रा० ३. २. ७.)। तत्र धाय्ययोर्धाय्यानां वा प्रक्षेपस्तु समिध्यमान-समिद्धवत्योर्मध्ये एव भवति। ते च ऋचौ सामिधेनीषु नवमीदशम्यौ।

—२१— इति। आश्व० श्री० ४. २. १।

—२२— इत्येका। ऋ० सं० ३. २७. ५।

—२३— द्वितीया। ऋ० सं० ३. २७. ६।

१३८—१— अग्नये। शत० ब्रा० १. ३. ५. २।

—२— होता। "अग्नये समिध्यमानायानुब्रूहीति सम्प्रेष्यति" –इति आप० श्री० २. १२. १। 'होतेति शेषः'–इति, 'ब्रूहीत्युकारः प्लावयितव्यः'–इति च तट्टीका। 'ब्रूहिप्रेष्यश्रौषड्वौषडावहाना मादेः'–इति च पा० सू० ८. २. ९१।

—८— इति। ३. १. ६।

—२०— चतुर्थपादे। जै० सू० ५–९. अधि० ३।

—२४— दर्श०। तै० सं० २. ५. ६।

१३९—२— श्रवणात्। 'यः सोमेन यक्ष्यमाणो ऽग्नीनादधीत, नर्तु स प्रतीक्षेन्न नक्षत्रम्'–इति तत्पूर्णपाठः।

—१०— इति। तै० सं० ५. ५. १।

—११— उत्पन्नौ। तै० सं० ७. १. २. ४।

—२१— पौर्णमासं। 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'–इति पा० सू० ४. ३. १६। "पौर्णमासं हविरिदं मेषां मयि"–इति च स्फुटम् तै० ब्रा० ३. ७. ४. ४.।

१४०—३— षष्ठे पादे। जै० सू० ९. अधि० २।

—९— ऋचः। तै० ब्रा० ३. ५. २. १–१२।

—११— अन्वाहेति। तै० सं० २. ५. ८. २।

—१५— मित्रविन्दा०। मित्रविन्देष्टिः शत० ब्रा० ११. ४. ३. २०। साङ्ख्या० श्री० ३. ७. १। कात्या० श्री० ५. १२. १। अध्वरकल्पस्तु हविर्यज्ञविशेषः। शत ब्रा० १.१.४.७; ६.६.१.४।

१४०—१७— सप्तदशपङ्क्तेरनन्तर मेषा पङ्क्तिः पाठ्या—

तत्रैवान्यविध मपि ( जै० सू० १०, अधि० ३. )—

—२२— इति। तै० सं० २. ५. १. २।

१४१—४— भाष्यकारः। मीमांसाभाष्यकारः शबरस्वामी। जै० सू० ३ अ० ६ पा० १० सू०।

—७— अष्टमपादे। जै० सू० १७-१९, अधि० ८।

—१३— वैमृधे। वैमृधेष्टिः तै० सं० २. ५. २. ४। शत० ब्रा० ८. ५. २. ५ ॥

---

[ २ ]

१४३—८— यजति०। "श्रुयजीषिस्तुभ्यः करणे"–इति पा० सू० ३. ३. ९४. वा० १.। अम० ३. ४. ४१।

—१०—इच्छति०। 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' –इति पा० सू० ३. ३. ९६।

—१८— जुहोति०। 'ह्नन्विधाह्वत्विच्च चानुपसर्गस्येति वक्तव्यम्'–इति पा० ३. २. १३५. वा० १। उणा० २. ९४। 'जुहोतेरित्यौर्णवाभः'–इति निरु० ७. ४. २।

—१९— ह्वयति०। "ह्वातव्यः"–इति, "होतारं ह्वातारम्" –इति च निरु० ४. ४. ५; ७. ४. २।

१४४—६— ऊतिशब्दः। 'ऊतिः' निघ० ४. २. १५; 'ऊतिरवनात्'–इति च निरु० ५. १. ३।

१४५—२— इति। "अग्नि मग्न आवह। सोम मावह। अग्नि मावह"–इत्यादयः तै० ब्रा० ३. ५. ३. २।

—८— हौत्ते। 'तस्य धर्म्यम्। अण् महिष्यादिभ्यः'–इति पा० सू० ४. ४. ४७, ४८॥

---

[ २ ]

१४७—२— आमनन्ति। तै० सं० ६. १. १, २।

—३— दीक्षातपसी। 'मुण्डनादिसंस्कारो दीक्षा, आहारादिनियमस्तपः ; अप्सु स्नानेन तदुभय मव्यवधानेनैव प्राप्नोति'–इति च तद्भाष्यं सायणीयम्।

—८— समाम्नायते। ऐ० आ० २. ४. १. ६।

—१०— अपां कार्यम्। "अन्न मशितं त्रेधा विधीयते,– तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्मा७ंसं, योऽणिष्ठस्तन्मनः। आपः पीतास्त्रेधा विधीयन्ते,– तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति, यो मध्यमस्तल्लोहितं, योऽणिष्ठः स प्राणः"—इत्यादि छा० उ० ६. ५. १, २।

—२२— आमनन्ति। तै० सं० ६. १. १. ४। 'नवनीतस्य पाकजन्यास्तिस्त्रोऽवस्थाः ;— पक्वम्, ईषत्पक्वम्, निःशेषपक्वञ्च। द्रव्यान्तरप्रक्षेपेण सुरभि, निःशेषपक्वम् अतएव बह्वृचाः पठन्ति— 'आज्यं वै देवानाम्'–इति ( ऐ० ब्रा० १.१.३. )'–इति सा० भा०।

१४८—८— शाखान्तरे। तै० सं० ६. १. १. ५, ६। तद्यथा— 'दक्षिणं पूर्वं माङ्क्ते ; सव्यं हि पूर्वं मनुष्या आञ्जते, न निधावते ; नीव हि मनुष्या धावन्ते। पञ्चकृत्व आङ्क्ते ०—०, अपरिमितं हि मनुष्या आञ्जते। सतूलया आङ्क्ते, अपतूलया हि मनुष्या आञ्जते ०—० –इति। 'मनुष्येषु योषित्सु अञ्जने वामभागपूर्वत्वं प्रसिद्धम्। अञ्जनोपेताङ्गुलिः चक्षुषि सहसा पुनः-

पुनः पर्यावर्त्तनं निधावनम् । तच्च मनुष्याः कुर्वन्ति । + + + ।
अग्रसहिता शरेषीका सतूला । मनुष्याणा मिषीकानियम एव
नास्ति, कुतः सतूलत्वनियमः'–इत्यादि तत्र सा० भा० । शतपथ-
ब्राह्मणेऽपि "अथाच्यावनक्ति"–इत्यादि ३. १. ३. ६–१६ ।

१४८—१६— शाखान्तरे । तै० सं० ६.१.१.७,८ । तन्मन्त्रा
अपि तत्रैव पुरस्तात् १. २. १ ।

—२०— क्नूतः । द्वाभ्याम्, त्रिभिः, पञ्चभिः, षड्भिः,
सप्तभिः, नवभिः, एकविंशत्या ।

१४९—५— शाखान्तरे । तै० सं० ६. १. २. १ ।

—७— आपस्तम्बः । श्रौ० १०. ८. १ ।

१५०—४— तदेतत् दृष्टान्तपुरस्सरं शाखान्तरे प्रपञ्चितम्—
'गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षित-
विमितात् प्रवसेद् यथा योनेर्गर्भः स्कन्दति तादृगेव तन्न प्रवस्तव्य
मात्मनो गोपीथाय'–इति । एष पाठः शुद्धः । तै० सं० ६.२.५.५ ।
शत० ब्रा० ३. २. १ द्रष्टव्यञ्च ।

—१९— अथाङ्गुलीः । श्रौ० १०. ११. ३, ४ ।

१५१—२— शाखान्तरे । तै० सं० ६. १. ४. ३ ।

—१२— सूत्रकारः । आप० श्रौ० ६. ६. ११ ।

—२२— संसव ०—०तिः । तत्र संवेशाय त्वेत्यादयः पञ्च
मन्त्राः तै० सं० ३. १. ७. १ द्रष्टव्याः ।

१५२—११— तृतीयपादे । जै० सू० २९–३१. अधि० ११ ।

—१४— श्रूयते । तै० सं० ५. ६. १. ४ ।

—१५— श्रुतम् । तै० सं० ६. १. ३. २ ॥

———

( ४ )

१५४--३-- 'त्वमग्ने'-इति। ऋ० सं० ५. १३. ४।

--४-- 'सोम यास्ते'-इति। ऋ० सं० १. ९१. ९।

—५— अनुब्रूयात्। आश्व० श्रौ०—'प्रेषितो जपति' १. १. २७, 'द्वे द्वे तु याज्यानुवाक्ये' २. १. ७, 'दैवतलक्षणा याज्यानुवाक्याः' २. १४. १८।

—८— तृतीयः पादः। पूर्णपाठस्त्वेवम् "त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः। त्वया यज्ञं वितन्वते"-इति।

—१६— 'अग्निः प्रत्नेन'-इति। ऋ० सं० ८. ४४. १२।

—१७— 'सोम गीर्भिः'-इति। ऋ० सं० १. ९१. ११।

—,,— 'द्वितीयस्य'-इति शुद्धम्। आश्व० श्रौ० १. ५. ३५। तै० ब्रा० ३. ५. ६. ४, ५; सं० २. ६. २।

—२१— इति। अम० को० ३. १. ७७।

१५५—६— 'अग्निर्वृत्राणि'-इति। ऋ० सं० ६. १६. ३४।

—७— 'त्वं सोमासि'-इति। ऋ० सं० ३. ९१. ५।

—,,— द्वितीयस्य। आश्व० श्रौ० १. ५. २९। तै० ब्रा० ३. ५. ६. १, २; सं० २. ६. २।

—१३— अस्ति। तद्यथा— "अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः"-इति।

—१४— विद्यते। तथाच तत्पाठः— "त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः"-इति।

—२१— 'अग्निर्मुखम्'-इत्येषा। तै० सं० २. ४. ३. ३।

—२२— 'अग्निश्च'-इति। तै० सं० २. ४. ३. ४। अग्निर्मुखमिति अग्निश्चेति चैते ऋचावन्यशाखीये गम्येते; आश्व-

लायनेन हि प्रपञ्च विहिते ( श्रौ० ४. २. ३ )। तैत्तिरीयपाठौ तु किञ्चिद्भिन्नाविवेति द्रष्टव्यौ।

—२२— याज्यालक्षणं प्रदर्शित मिहैव पुरस्तात् (१२३,१२४ पृ०)।

—२३— तु०—० षा। पङ्क्तिरेषा भ्रमाद् द्विर्मुद्रिता। चतुर्विंशपङ्क्तेः परस्तात् 'यद्यप्यर्थानुसारेण'—इत्येतानि पदानि संयोज्यानि च।

—२४— 'अल्पाच्तरम्'—इति। पा० सू० २. २. ३४।

१५६—२२— इतिशब्दः। 'इतिकरणोऽर्थनिर्देशार्थः'—इत्यादि पात० भा० १ अ० १ पा० ६ आह्निके द्रष्टव्यम्।

१५७—३— त्रिष्टुबिति। तै० ब्रा० १.७.९.२। त्रिष्टुगिति पाठः। 'गायत्री पुरोऽनुवाक्या भवति, तत्र तु त्रिष्टुग् याज्या'—इति ( तै० सं० २. ६. २. ५. ) च तद्विधायकं वचनम्।

—५— चतुर्थपादे। जै० सू० २, ३; अधि० २।

—१२— विधीयते। पुरोऽनुवाक्या देवतास्मरणार्था भवति, याज्या तु हविःप्रदानार्था। तथाहीयं शतपथश्रुतिः— 'ह्वयति वा ऽनुवाक्यया, प्रयच्छति याज्यया'—इति १. ७. २. १७। "सर्वेषा मग्रेऽग्रे ऽनुवाक्यास्ततो याज्याः"—इति आश्व० श्रौ० ३. ७. ३॥

---

[ ५ ]

१५८—१९— स हव्य०। ऋ० सं० ३. ११. २।

—२०— अग्निर्होता। ऋ० सं० ३. ११. १।

१५९—१— स्विष्टकृद्यागस्य। "स्विष्टकृद्यागानुमन्त्रणम् तै० सं० १. ६. २. ४। तद्ब्राह्मणम्, तन्निर्वचनसूचको मन्त्रश्च तत्रैव भाष्ये। स्विष्टकृद्यागविधिस्तु तै० सं० २. ६. ६. ५.। तद्विचारास्तु मी० जै० सू० ३.४,४२–४५ पुनः ४६,४७ ; ततः ४.१,२८–३२।

१५९—३— आह्व। आश्व० श्रौ० २. १. २१।

—८— ऋचि। ऋ० सं० ३. ६२. १०।

—१९— कुर्वीतेति। एतदनन्तरं ख-गातिरिक्तपुस्तकेष्वेषो-ऽधिकः पाठो दृश्यते— 'अग्ने वाजस्य गोमतः'–इत्येका ( ऋ० सं० १. १७८. ४. ) उष्णिक्, 'स इधानो वसुष्कविः'–इत्यपरा ( ऋ० सं० १. ७९. ५. ); ते उभे शतसंवत्सरायुष्कामः कुर्वीत।

—,,—अक्षरचतुष्टयेन। तथाचेदं पिङ्गलस्य छन्दःसूत्रम्— 'चतुरश्चतुरः प्राजापत्यायाः'–इति ३. ११।

—२४— कुर्वीतेति। एतदनन्तरमपि ख-गातिरिक्तेषु पुस्तकेषु एषोऽधिकः पाठो दृश्यते— 'त्व मग्ने वसून्'–इति द्वे ( ऋ० सं० १. ४५. १, २. ) अनुष्टुभौ।

१६०—३— श्रुत्यन्तरे। तै० सं० २. ५. १०३।

—४— सम्पद्यन्ते। "अनुष्टुबनुष्टोभनात्। 'गायत्री मेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभति'–इति ब्राह्मणम्"–इति निरु० ७. ३. ७। 'द्वात्रिंशदक्षरानुष्टुप् चत्वारोऽष्टाक्षराः समाः' इति च पार्ष० सू० ३. ४. ६।

—१३— एना वो। ऋ० सं ७. १६. १, २।

—,,— द्वे इत्यस्यानन्तर मेष पाठः ख-गातिरिक्तपुस्तकेष्वधिकः— 'उदस्य शोचिरस्थात्'–इति ( ऋ० सं० ७. १६. ३. )।

—१८— आमनन्ति। तै० सं० ५. ३. २. ३, ४ [ 'व्रह्-त्युदजयत्'–इति विशुद्धः पाठः ]।

—२०— त एवा०। तै० ब्रा० १. ५. १२. ३।

१६१—४— अग्निं तं। ऋ० सं० ५. ६. १।

—५— पाङ्क्तो वै यज्ञ इति। एतदनन्तरं ख-गातिरिक्तेषु पुस्त-

क्वेष्वेषोऽपि पाठः — 'वि'-शब्दो वक्ष्यमाणबहुविधपाङ्क्तत्वप्रसिद्धि-प्रदर्शनार्थः । वेदनं प्रशंसति — "उपैनं यज्ञो नमति य एवं विद्वान् पङ्क्तीः कुरुते"–इति ॥

१६१—७ — द्वे विरूपे । ऋ० सं० १. ९५. १, २ ।

—१०— अष्टमो धातुः । निघ० २. ९. १ । अम० को० ३. ४. २२५ । है० अने० २. २७७ । मेदि० सा० १९ । का० उप० २.१३.५ । शुशु० १. ४. १२ ; २१. १० । 'ओजस्वित्तस्य विस्ताररूपं दीप्तत्व मुच्यते'–इति च साहित्यदर्पणे । 'ओजस्ते-जसि धातूना मवष्टम्भप्रकाशयोः । ओजो बले च दीप्तौ च'–इति विश्वः ३.१९ । रघु० ५. ३७ ।

—१४— जनस्य गोपाः । ऋ० सं० ५. ११. १, २ ।

—१८— प्रेद्धो । ऋ० सं ७. १. ३ । ७. १. १८ । 'प्रेद्धो अग्न इमो अग्न इति संयाज्ये विराजावित्युक्त एते प्रतीयात्'–इति आश्व० श्रौ० २. १. ३० ॥

---

[ ६ ]

१६३—२१,२२— प्रेद्धो, इमो । ऋ० सं० ७. १. ३, १८ ।

१६४—२ — परिहृतत्वात् । वस्तुतः त्रिंशदक्षरैव विराट् सर्ववेदप्रसिद्धा ; तथा ह्याम्नातं तैत्तिरीयैः स्फुटम्— 'त्रिंशदक्षरा विराट्'–इति ( सं० २. ५. १०. ३. ) । 'विराजो दिशः'–इति ( ४. ५. ) च वैदिकछन्दःसूत्रं तदनुगतम् । इह त्वाद्याया एका-क्षरन्यूनत्वेन छन्दःशास्त्रमते निचृदितिविशेषणान्वितं विराट्त्वम्, अपरायास्तु स्वराड्विशेषणान्वित मित्यभिप्रायः ( पि० ६.१९,२०.)।

—१७ — इत्येते । ऋ० सं० ७. १. ३, १८ ।

१६५—१२— आपस्तम्ब: १०. १२. ७, ८ ।

—१७— 'चक्षिङ् दर्शने'–इति अदा० आ० ७। "चनसितं विचक्षण मिति च प्रातिपदिकनिर्देश:, न विभक्तिर्विवक्षिता । एतद्दर्शयति 'चनसितेति ब्राह्मणम्—' आमन्त्रयेतेति शेष: । आमन्त्रयेतेत्येव भारद्वाज:। 'तद्यथा देवदत्त चनसित! मित्रपाल विचक्षण!"–इति तट्टीका । 'विचक्षण-चनसिनवतीं वाचम्'–इति च कात्या० श्री ७. ५. ७ ।

—२३— ०प्रमाणानां । "स्मृति: प्रत्यक्ष मैतिह्य मनुमान-श्चतुष्टयम्'–इति तै० आर० १. २. १ । 'तदेतत् स्मृत्यादिचतुष्टय मवगतिकारणभूतं ( धर्म्मस्य ) प्रमाणम्'–इति तत्सायणभाष्यम् । 'प्रत्यक्षानुमानोपमानशब्दा: प्रमाणानि'–इति गौ० सू० १.१.३ ।

१६६—१५— वाजसनेयिन: । शत० ब्रा० १. ३. १. २७। 'चक्षुषा वै सम्राट् पश्यन्त माहुरद्राक्षीरिति, स आहाद्राक्ष मिति, तत् सत्यं भवति'–इति च पुनस्तत्रैवोपरिष्टात् १४. ६. १०. ८= बृ० उप० ४. १. ४ ।

—१७— तैत्तिरीयाश्च । 'नानृतं वदेत्'–इति ( तै० सं० २.५. ५.६. ) विधौ विचारितं च मीमांसायाम् जै० सू० ३.४.१२,१३ । तत्राधिकरणं चारचितं स-व्याख्यानं माधवाचार्येण । तद्यथा—

'अनृतं न वदेदेष: पुन्धर्मो वानुवादगी: ।
स क्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधि: क्रतौ ।
अनृतोक्ति: पुमर्थत्वात् तन्निषेधे यथा विधि: ।
स्मार्तानुवाद: पुंक्रत्वो: श्रुतिप्रक्रिययोर्वशात् ।
नाख्याते पुरुषानूक्ति: क्रतावेव प्रयाजवत् ।
स्मार्तोक्तनियमादन्य: संयोगेऽत: क्रतौ विधि: ॥

दर्शपूर्णमासप्रकरणे श्रूयते—'नानृतं वदेत्'-इति। तत्र पुरुषधर्मत्वेनायं प्रतिषेधो विधीयते'-इत्यादि ( जै०अधि०मा० ३.४.४. )।

१६७—१— न भवतीत्यर्थः। अस्मन्मते तु 'विचक्षणवतीमेव वाचं वदेत्'-इत्यस्य विधिवचनस्य हि दृष्टविषयमात्रकथनविधाने ऽदृष्टविषयकथननिषेधे च तात्पर्यम्; विचक्षणेतिमन्त्रयुक्तमिथ्याकथनेऽपि न दोष इति नाभिप्रेतो ब्राह्मणवादिना मिति। चनसितविचक्षणान्वितनामधेयग्रहणस्य विधानन्तु इतः पृथक् ( आप० श्रौ० १०.१२.७,८; कात्या० श्रौ० ७.५.७; लाट्या० श्रौ० ३.३.१४. ) दीक्षितधर्मान्तर मिति दिक्।

—२— समासार्थः। समग्राग्निष्टोमपरिचयाय क्रतुसङ्ग्रहतः काश्चिदग्निष्टोमपद्धतिकारिकाः सङ्क्षिप्येह दर्शयामः। तद्यथा—

"अथाग्निष्टोमसंस्थेन ज्योतिष्टोमेन यो यजेत्।
स पूर्वं ऋत्विजो हृत्वा देवभूमिं विनिश्चयेत्।
दीक्षणीयां निर्वपेत सोऽपि पत्नीसंयाजसंस्थितिम्।
कृते प्राचीनवंशे ऽथ संस्कारा वपनादयः।
हुत्वा दीक्षाहुतीः, कार्या दीक्षा कृष्णाजिनादिभिः।
दीक्षितो नियमैर्युक्तो भवेत् क्षीरव्रतादिभिः।
द्वादशाहं दीक्षितोऽथ भिक्षित्वा द्रव्य मानयेत्।
सोमं चर्मण्यवस्थाप्य विवसेत् सोमविक्रयी।
संवृन्ता प्रायणीया स्याद्, गृह्णीयात् क्रयणीपदम्।
क्रीत्वा सोमं रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेत्।
आतिथ्यां निर्वपेत् सोम मासन्द्या मुपसादयेत्।
आतिथ्येष्टिरिडान्ता स्यात्, तानूनप्त्र मवद्यति।
दीक्षा मवान्तरा मेति, प्रवर्ग्योपसदोः कृतिः।

दिनत्रये तत् कृतं स्यात्, वेदिर्मध्यदिने भवेत् ।
षट्त्रिंशत्पददीर्घैषा प्राग्वंशात् पूर्वतः स्थिता ॥
प्रातः प्रवर्ग्य मुद्वास्य, पश्चादुत्तरवेदितः ।
शकटे द्वे हविर्द्धाने, हविर्द्धानं च मण्डपम् ।
पश्चात्सदस्तस्य मध्ये निखातौडुम्बरी मिता ।
दक्षिणस्यानसोऽधस्ताद् गर्त्तानुपरवान् खनेत् ।
विधाय फलकाभ्यां तानग्रे कुर्यान्मृदा खरम् ।
निर्वपेद्धिष्ण्यगानग्नीषोमीयं पशु माचरेत् ।
प्रयुज्याचितपात्राणि दर्शवत् सर्व माचरेत् ।
आज्य आसादिते वेद्या मन्ते यूपं समुच्छ्रयेत् ।
यूपस्योच्छ्रयणादूर्ध्वं समापय्य पशुं ततः ।
वैसर्जनानि हुत्वाग्निं सोमं ग्रावादि चानयेत् ।
हविर्द्धाने स्थापयित्वा गृह्णीयाद्वसतीवरीः ।
प्रयुञ्ज्यात् सोमपात्राणि महारात्रे खरादिषु ।
ग्रावस्तु स्थापिते सोमे पक्षिणां ध्वनितः पुरा ।
स्यात् प्रातरनुवाकार्थं मुपाकरण मादरात् ॥
वसतीवर्य्यपां प्राप्तौ प्रचारः स्याद् दधिग्रहे ।
उपांश्वदाभ्यौ हुत्वा च महाभिषव माचरेत् ।
उपांशु मन्तर्यामं च हुत्वा रिक्तं तु सादयेत् ॥
अथैन्द्रवायवं पात्रैर्गृहीत्वा सादयेत् खरे ।
यो मैत्रावरुणस्तं तु श्रीणाति पयसा ग्रहम् ।
शुक्रः शृतो हिरण्येन, शृतो मन्थी तु सक्तुभिः ।
गृहीत्वाग्रयणं, गृह्णात्यतिग्राह्याभिधान् ग्रहान् ।
गृहीत्वौक्थ्यं, ध्रुवो ग्राह्यः, पवमानग्रहास्त्रयः ।

पूतभृद् द्रोणकलशो ऽपरश्चाधवनीयकः ।
ते बहिष्पवमानाय, प्रचरन्त्यत्र पञ्च ते ।
गृहीत्वाश्विन माग्नेयं, पशोः कुर्यादुपाकृतिम् ।
सवनीयपुरोडाशैश्चरित्वा ह्यैन्द्रवायवम् ।
हुत्वा ग्रहं, द्वयोर्मैत्रावरुणाश्विनयोर्हुती ।
शुक्रमन्थ्यादिकान् हुत्वा, चमसानपि जुह्वति ।
संरच्यर्त्तुग्रहैन्द्राग्नसोमप्रतिगरांस्ततः ।
आज्यस्तोत्रेभ्य ऊर्द्ध्वं हि प्रातस्सवनसंस्थितिः ॥

माध्यन्दिने तु सवने पुरोडाशः पशोर्भवेत् ।
ग्रहो मरुत्वतीयः स्यात्, पवमानेन संस्तुतिः ।
दधिघर्मे हुते दद्यात् दक्षिणास्ते यथायथम् ।
मरुत्वतीयांस्तान् हुत्वा माहेन्द्रेण समाप्यते ॥

तृतीयसवनारम्भ आदित्यग्रह माचरेत् ।
आर्भवेण स्तुवीताथ पश्वङ्गैः प्रचरत्ययम् ।
सावित्रवैश्वदेवाख्यौ ग्रहौ, सौम्यचरुस्तथा ।
पात्नीवतग्रहादूर्द्ध्वं यज्ञायज्ञीयसंस्तवः ।
आग्निमारुतशस्त्रं स्याद्, गृह्णीयाद्धारियोजनम् ।
समाप्ते सवने, पश्चात् कुर्यादवभृथं ततः ।
कुर्यादुदयनीयेष्टि मनुबन्ध्यां यजेत गाम् ।
देविका निर्वपेद्, देवसुवासापि यजूंष्यथ ।
उपोष्य, वेदि माग्नेय मिष्टाग्निष्टोमसंस्थितिः"–इति ॥

———

## ॥ अथ ऋगारण्यकस्य ॥

---

१६८—९.— प्रथ०—० तावता। 'प्रथमारण्यके' ऋगारण्यकस्य बह्वृगारण्यकस्य ऐतरेयारण्यकस्य वा ग्रन्थस्य प्रथमे भागे 'महाव्रतं' नाम अहः, तत्रानुष्ठेयं 'कर्म' अपि महाव्रतम् 'उदीरितम्' अभिहितं विहितम्। 'तावता' महाव्रतकर्मविधानेन 'अत्र' प्रथमारण्यके 'संवत्सराख्यसत्रस्य' गवामयनादेः 'शेषः' अवशिष्टांशः 'पूर्णः' समाप्तितां गत इति। अरण्येऽध्येयोऽध्यायः आरण्यकः (पा० सू० ४. २. १२९. वा०)। तादृशा अध्याया यत्र सन्ति, तदारण्यकं काण्डम्। इह ग्रन्थे तद्भागविशेषा एव प्रथमत्वादिभिर्विशिष्यन्ते। तत्र प्रथमपञ्चमयोर्महाव्रतं कर्म, द्वितीयादिषु त्रिषु प्राणविद्योपासनादीनि। तत्रापि द्वितीयभागीयचतुर्थादिषु चतुर्ष्वध्यायेषु ब्रह्मविद्याभिहिता। सैवैतरेयोपनिषदिति प्रसिद्धा। तदेतत्सर्वं त्रयीपरिचये ९२ पृ० ८ पं०—९६ पृ० ९ पं० द्रष्टव्यम्। प्रथमे पञ्चमे चोभयत्र महाव्रताख्यानस्य हेतुर्महाव्रताहःपरिचयोऽपि संक्षेपतस्तत्रैव (९४, ९५, ११५ पृ०) दर्शितः।

—१२— कर्मकाण्डं। 'यज्ञो ब्रह्म च वेदेषु द्वावर्थौ काण्डयोर्द्वयोः'—इति छ० आ० सा० भा० भू०। उपासनाकाण्डं तृतीय मिति च केचित्। वस्तुत उपासनायाश्च कर्मत्व मेव। तदाहाचार्यश्छान्दोग्यभाष्योपक्रमे— 'कर्माङ्गविषय मेव तावदादावुपासन मुपन्यस्यति"—इति। 'उपासनं तु यथाशास्त्रसमर्थितं किञ्चिदालम्बन मुपादाय तस्मिन् समानचित्तवृत्तिसन्तानकरणम्' —इति च तत्रैव।

—१३—आरण्यकम्। त्रयीपरिचये ९२ पृ० ८—१५ पं० द्र०।

१६८—१— उपनिषदित्युच्यते । उपनिषद्, ब्रह्मविद्या, परविद्या, इत्येकार्थानि पदानि वेदान्तिनाम् । तथा चैते तैत्तिरीयोपनिषद्भाष्यवार्त्तिकश्लोकाः ( १. २२-२६. )—

"तस्मादविद्याव्युच्छित्तौ स्यादवस्थान मात्मनि ।
न चाविद्याप्रहाणं स्याद् ब्रह्मविद्या मृते क्वचित् ॥
तस्माद्विद्याप्तये ज्ञेया प्रारब्धोपनिषत्परा ।
सैवाविद्यापनुत्त्यर्था विद्या चैवात्मगामिनी ॥
विद्यासंशीलिनां यस्माद्गर्भजन्माद्यशेषतः ।
उपमृद्नाति विद्येयं तस्मादुपनिषद्भवेत् ॥
उपेत्य वा निषण्णं तच्छ्रेय आत्यन्तिकं यतः ।
तस्मादुपनिषज्ज्ञेया ग्रन्थस्तु स्यात्तदर्थतः ॥"-इति ।

—१६— इति च । छा० उ० ३. ८. २६ ।

—२०— श्रुतिः । छा० उ० ४. ४. २३ ।

—२२— श्रुतिः । मु० उ० २. १. २० ।

१७०—२— श्रुतिः । मु० उ० २. २. ८ ।

—३— श्रुतिः । कठ० उ० १. २. १२ ।

—६— श्रुतिः । मु० उ० ३. २. २ ।

—८— श्रुतिः । मु० उ० ३. १. ४. ।

—१३— स्मृतेश्च । म० सं० १२. ९२, ९३ श्लोकौ—

"यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥
एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा"-इति च ।

—१५— श्रुतिः । तै० उ० २. ७. २ ।

१७१—२३। स्मर्यते। म० सं० २. ८४।

१७३—३— आत्मा वा। ऐ० आ० ४. १. १।

—४— प्रज्ञानं। ऐ० आ० ६. १. ३।

—६— स एष। बृ० उ० ४. ४. २२।

—७— अस्थूल। "अस्थूल मनण्वह्रस्व मदीर्घ मलोहित मस्नेह मच्छाय मतमो ऽवायुनाकाश मसङ्ग मरस मगन्ध मचक्षुष्क मश्रोत्र मवागमनो ऽतेजस्क मप्राण ममुख ममात्र मनन्तर मवाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन"-इति बृ० उ० ३.८.८।

१७६—६— अग्नि मीळे। ऋ० सं० १. १. १।

—७— अङ्गो रूपम्। ऐ० आ० १. ५. ३. १४।

—८— उकथ मुक्थम्। ऐ० आ० २. १. २. १।

—९— आचार्या आचार्याः। ऐ० आ० ३. २. ६. ९।

—१४— भाष्यकाराः। पूजायां बहुवचनम्।

—२०— नेह नाना। बृ० उ० ४. ४. १९।

१७७-१६- इति। ऋ० सं० ८.१०१.१४। शत० ब्रा० २.५.१।

१७८—२३— अनुभवन्ति। अस्मन्मते त्वत्र 'वङ्गावगधा-श्चेरपादाः'-इत्यस्य व्याख्यानायेदृशं कष्टकल्पनं निष्प्रयोजनम्; अपि तु 'वङ्गाः' वङ्गदेशीयाः, 'वगधाः' मगधाः, 'चेरपादाः' चेर-नामजनपदवासिनः। तास्त्रिविधा एव प्रजाः 'वयांसि' काक-चटकपारावतादिसदृशाः। दुर्बलत्वेन, दुराहारत्वेन, बहुपत्यत्वेन च सादृश्यम्। इहाङ्गदेशस्यापि मगधत्वेन परिग्रहः, कलिङ्ग-सौराष्ट्रयोः कलिङ्गान्ध्रयोर्वोभयोरेव चेरपाद इति। अत एव 'अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गच्छन् पुनः संस्कार मर्हति'-इति, "अङ्गवङ्गकलिङ्गान्ध्रान् गत्वा संस्कार

मर्हति"–इति च ( मिता० देवलः, प्रा० वि० ) स्मृत्युक्तं सङ्गच्छते। "किं ते कृण्वन्ति कीकटेषु गावः"–इत्यादिषु श्रुतिषु ( ऋ० सं० ३. ५३. १४. ) चोपलभ्यते मगधनिन्दा। कीटक इति हि मगधस्यैव नामान्तरम्; 'कीकटेषु गया पुण्या, पुण्या नदी पुनःपुना। च्यवनस्याश्रमं पुण्यं, पुण्यं राजगृहं वनम्'–इति वायुपुराणीयस्मृतिवचनसामञ्जस्यादिति दिक्।

१८०—२०— न मितं। बृ० उ० ४. ४. २२।

१८१—२— दृश्यते। कठ० १. ३. १२।

—४— उपासनम्। "उपासनं तु यथाशास्त्रसमर्थितं किञ्चिदालम्बन मुपादाय तस्मिन्समानचित्तवृत्तिसन्तानकरणं तद्विलक्षणप्रत्ययानन्तरित मिति विशेषः। तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वादद्वैतज्ञानोपकारकाण्यालम्बनविषयत्वात्सुसाध्यानि चेति"–इति छा० उ० १.१.१. शा० भा०। " 'उपासानिशितं' सन्तताभिध्यानेन तनूकृतं संस्कृत मिति"–इति मु० उ० २. २. ३. शा० भा०। 'उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि'–इति वेदान्तसारः। मनोमयत्वाद्यारोपेण सर्वदृष्ट्या ब्रह्मोपासनं शाण्डिल्यविद्या च छा० उप० ३ प्र० १४ ख० द्रष्टव्या।

—१२— मीमांसायां। ब्रह्ममीमांसाया मुत्तरमीमांसायां चेति यावत्। 'अथातो धर्मजिज्ञासा'–इत्यादिभिर्द्वादशाध्यायीसूत्रैः जैमिनिमुनिकृता कर्मणां मीमांसा कर्ममीमांसेत्युच्यते, पूर्वमीमांसेति च। एवम् 'अथातो ब्रह्मजिज्ञासा'–इत्यादिभिश्चतुरध्यायीसूत्रैर्व्यासेन कृता ब्रह्मणो मीमांसा ब्रह्ममीमांसेत्युच्यते उत्तरमीमांसा चेति विवेकः।

—२२— चतुर्थपादे। ब्र० सू० ४४-४६; अधि० १३।

१८२—१—आर्त्विज्यं। 'सर्वे वा अन्य उद्गातुः प्राञ्च आर्त्विज्यं कुर्वन्ति'-इति शत० ब्रा० ४.३.२.२ ; ५.८.१ ; ५.४.५.२२ ; 'अध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान् वा अन्वन्य ऋत्विजः'-इति च १३. ४. १. ४। 'अनुवर्त्मान्वा अयं होता सामगस्याभूदुद्गातरि यशोऽधात्''-इति ऐ० ब्रा० २. ३. ४। 'उद्गातेव शकुने साम गायसि'-इति ऋ० सं० २. ४३. २। तै० सं० ३. २. ९. ५ ; ६. ३. १. ५।

—१०— प्रथमपादे। ब्र० सू० ६; अधि० ५।

—१५— य एवासौ। छा० उ० १. ३. १.। 'स ऋचैव हौत्रमकरोद्, यजुषाध्वर्यवं, साम्नोद्गीथम्'-इति ऐ० ब्रा० ५. ५. ७।

१८३—१— तृतीयपादे। ब्र० सू० ५५, ५६; अधि० ३१।

—७— ऐतरेयोपनिषदि=ऐतरेयारण्यके ; अत्रैव खण्डे (ऐ० आ० २. १. २.)।

—८— उक्थन्तु। 'पाञ्चजन्यं वा एतदुक्थं यद् वैश्वदेवम्'-इति, 'अथाह यदेतास्तिस्र उक्थिन्यो होत्राः ०—० आज्यमेवाग्नीध्रीयाया उक्थं, मरुत्वतीयं पोत्रीयायै, वैश्वदेवं नेष्ट्रीयायै'-इति, 'एतानि वा अत्रोक्थानि'-इत्यादि च ऐ० ब्रा० ३, ३, ७; ६. ३. ६ ; ५, १०। 'उक्थानि प्रधानशस्त्राणि'-इति तत्र सायणः। 'अर्धऋचैरुक्थानां रूपम्'-इति वा० सं० १९. २५। 'उक्थं शस्त्रम् ; प्र वो देवायाग्नये (ऋ० सं० ३. १३. १.) इत्यादिकम्'-इति तत्र महीधरः १५.१०। 'त्रयो ह वै समुद्राः। अग्निर्यजुषाम्, महाव्रतं साम्नाम्, महदुक्थ मृचाम्'-इति शत० ब्रा० ९. ५. २. १२। "'स्तुत मनुशंसति'-इतिविहितानां

मप्रगीतमन्त्रसाध्यस्तुतिरूपाणां मुक्थशब्दाभिधेयानां शस्त्राणाम्" –इति च सायणः तै० सं० ३. १. २ ।

—१५— तत्रैव । ब्र० सू० ६१–६६ ; अधि० ३६ ।

१८४—१ उपाकुर्यात् । तै० सं० ३. १. २. ४ भाष्यं द्रष्टव्यम् ।

—,,— अनुशंसति । 'अग्नि' सञ्चित मनुगीत मनुशंसेत्'–इति आश्व० श्रौ० ४. ८. २४ । 'तदिदं रथन्तरं स्तुतम् , आभ्यां प्रतिपदनुचराभ्या मनुशंसति' इति ऐ० ब्रा० ८. १. १ । 'शंसन्त मनुशंसन्ति बह्वृचाः शस्त्रकोविदाः'–इति चुलिकोपनिषत् ।

—१३— यस्य । "यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति"–इति तै० सं० ३. ५. ७. २, ३ ।

१८४—५— तत्रैव । ब्र० सू० ४२ ; अधि० २७ ।

—१८— चमसेन । चमसो सोमपानपात्रविशेषः, अत्राप्-प्रणयन मपि भवति । तल्लक्षणं यथा यज्ञपार्श्वे ( ९८–१०२. )—

"चमसानां तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ।
त्र्यङ्गुलस्तु भवेत्स्कन्धो विस्तारश्चतुरङ्गुलः ॥
विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः ।
अन्येभ्यो वापि वा कार्यास्तेषां दण्डेषु लक्षणम् ॥
होतुर्मण्डल एव स्याद् ब्रह्मणश्चतुरस्रकः ।
उद्गातॄणां च वास्रिः स्याद्याजमानः पृथुः स्मृतः ॥
प्रशास्तुरवतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः ॥
पोतुरग्रेविशाखी स्यान्नेष्टुः स्याद्विग्टहोतकः ॥
अच्छावाकस्य रास्नाव आग्नीध्रस्य मयूखकः ।
इत्येते चमसाः प्रोक्ता ऋत्विजां यज्ञकर्मणि ॥
पलाशाद्वा वटाद्वान्यवृक्षाद्वा चमसाः स्मृताः ॥"–इति ।

## ॥ त्रुटीपत्रम् ॥

( त्रयीटीकाया: १६७ पृष्ठस्य २३ पङ्क्तेरनन्तरं पाठ्यम् )

१८५—२३— याश्च ०—० अशीतयः । 'गायत्रीं तृचाशीतिं शंसति, ०—० इमं लोकं सन्तनोति । बार्हतीं तृचाशीतिं शंसति, ०—० अन्तरिक्षलोकं सन्तनोति । औष्णिहीं तृचाशीतिं शंसति ०—० अमुं लोकं सन्तनोति'–इति चात्रैवोपदिष्टात् ( ऐ० आ० १. ४. ३. ) । उदाहृताश्चैते तृचा: शौनकेन पञ्चमारण्यके— 'गायत्री तृचाशीति:०—०सूक्ते'-इति, 'बार्हती तृचाशीति:० — ०नव'–इति, 'औष्णिही तृचाशीति:०—०एतास्तिस्रस्तृचाशीतय:'–इति च ऐ० आ० ५. २. ३–५ । तदेवं 'महाँ इन्द्रो य ओजसा ( ऋ० सं० ८. ६. १. )'–इत्येवमादिभिश्चत्वारिंशदधिकशतद्वयसङ्ख्याकाभिर्गायत्रीच्छन्दस्काभिर्ऋग्भिरेका गायत्री तृचाशीतिः सम्पद्यते, तथा 'मा चिदन्यद् विशंसत ( ऋ० सं० ८. १. १. )'–इत्येवमादिभि: २४०सङ्ख्याकाभिर्बृहतीच्छन्दस्काभि: ऋग्भिरेका बार्हती तृचाशीति: सम्पद्यते, एवं 'य इन्द्र सोमपातम ( ऋ० सं० ८.१२.१. )'–इत्येवमादिभि: २४०सङ्ख्याकाभिरुष्णिक्छन्दस्काभि: ऋग्भिरेकौष्णिही तृचाशीति: सम्पद्यते । ता एतास्तिस्रस्तृचाशीतयो भवन्तीति ॥

॥ त्रयीसङ्ग्रहस्य मङ्गलाचरणम् ॥

विश्वरूपं प्रणम्याथ नन्दरामं च छान्दसम् ।
त्रयीचतुष्टये रच्ये त्रयीविद्याप्रचारणे ॥
त्रयीपरिचयं ख्यात्वा सर्ववेदनिदर्शनम् ।
त्रयीसङ्ग्रह माख्याति श्रीसत्यव्रतसामगः ॥

"एष यश्चमसो देवपानस्तस्मिन् देवा अमृता मादयन्ते"–इति ऋ० सं० १०. १६. ८.। "तिर्यग्बिलश्चमस ऊर्ध्वबुध्नः"–इति अथ० सं० १०. २६. ९। "चमसः कस्मात्? चमन्त्यस्मिन्निति"–इति निरु० १०. १. १२।

१८४—१९— अपः प्रणयेत्। तथाहि तैत्तिरीयकम्—"अपः प्रणयति"–इत्यादि ब्रा० ३. २. ४। तत्प्रकारस्तत्कल्पे दर्शितः—"अपरेण गार्हपत्य मुपविश्य कंसं वा चमसं वा प्रणीताप्रणयन मानीय, तस्मिंस्तिरःप्रविन्न मप आनयन्नाह—'ब्रह्मन्नपः प्रणेष्यामि, यजमान! वाचं यच्छेति सम्प्रेष्यन्, समं प्राणैर्धारयमाणोऽविषिञ्चन् हृत्वोत्तरेणाहवनीयं दर्भेषु सादयित्वा"-इति। विचारितं चैतदपःप्रणयनं मीमांसायाश्चतुर्थाध्यायस्य द्वितीयपादे (१४, १५) सूत्रद्वयात्मकपञ्चमाधिकरणेनेति।

—२२— वर्षति। "वृष्टौ पञ्चविधं सामोपासीत। पुरोवातो 'हिङ्कारः', मेघो जायते स 'प्रस्तावः', वर्षति स 'उद्गीथः', विद्योतते स्तनयति स 'प्रतिहारः', उद्गृह्णाति तत्-'निधनम्', वर्षति हास्मै। वर्षयति ह य एवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते"-इति छा० उ० २. ३. १, २।

—२४—"तेनोभौ ०—० न वेद"–इति छा० उ० १.१.१०।

१८५—५— उक्थ मित्यारभ्य। ऐ० २ आर० १ अ० २ख०— ३अ० (खण्डेनैकेनोन मध्यायद्वयम्)।

—२०— त्र्यशीतिषु। 'अशीतीः शंसेत्'–इति शत० ब्रा० ९. ५. १. ६२। त्रि+ऋच्। पा० सू० ६. १. ३७. वा० १। शतपथे कात्यायनसूत्रे च "त्रिच"–इति पाठः प्रायः सर्वत्रैव।

१८६—३— 'ध्वन्तरिच'–इति पाठ्यम्।

१८६—१९— आत्मानम्=मनुष्यशरीरम्।

—२३— देहः=पुरुषः।

—२४— ब्रह्मणो लोकः। "अयं पुरुषो ब्रह्मणो लोकः"-इति ३ ख० (१)। 'पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते' -इति अथ० सं० १०. २. २८; ७. १७; ११, ८. ३२।

—२५— प्रजापतित्वं च। "अथातो विभूतयोऽस्य पुरुषस्य। तस्य वाचा सृष्टौ पृथिवी चाग्निश्च"-इत्यादिः (७ ख०)।

१८७—५— नन्वह मिति शुद्धम्।

—६— 'आत्मेति०—०सूत्रेण। ब्र० सू० ४. १. ३। अत्रेद मधिकरण मारचितं माधवाचार्येण (अधि० २.)—

"ज्ञात्वा स्वात्मतया ब्रह्म ग्राह्य मात्मतयाऽथवा ?।
अन्यत्वेन विजानीयाद्दुःख्यदुःखिविरोधतः॥
औपाधिको विरोधोऽत आत्मत्वेनैव गृह्यताम्।
गृह्णन्त्येव महावाक्यैः स्वशिष्यान् ग्राहयन्ति च॥"-इति।

—८— "न प्रती०—०सूत्रेण। ब्र० सू० ४. १. ४। अत्र चेद मधिकरण मारचितं माधवाचार्येण (अधि० ३.)—

"प्रतीकेऽहंदृष्टिरस्ति न वा ? ब्रह्माविभेदतः।
जीवप्रतीकयोर्ब्रह्मद्वाराहंदृष्टिरिष्यते॥
प्रतीकत्वोपासकत्वहानिर्ब्रह्मैक्यवीक्षणे।
अवीक्षणे तु भिन्नत्वान्नास्त्यहंदृष्टियोग्यता॥"-इति।

—११— वचनबलात्। निरुक्तेऽप्येव मसकृदुक्तम्—"आम्नाय वचनादहिंसा प्रतीयेत"-इति (१. ५. २), "आम्नायवचना-देतद्भवति"-इति च ७. ७. १।

—२२— प्राणदृष्टिम्। बृहदारण्यके त्वेतत् सुव्यक्तं श्रुतम्।

तद्यथा — "उक्थं प्राणो वा उक्थं प्राणो हीदꣳ सर्व मुत्थापयत्यु-द्धास्मादुक्थविदीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकतां जयति य एवं वेद"—इति ५.१३.१। 'उक्थं तथोपासनान्तर मुक्थं शस्त्रम्। तद्धि प्रधानं महाव्रते क्रतौ। किं पुनस्तदुक्थम् ? प्राणो वा उक्थम्। प्राणश्च प्रधान इन्द्रियाणाम्, उक्थं च शस्त्राणाम्, अत उक्थ मित्युपासीत। कथं प्राण उक्थम् ? इत्याह — प्राणो हि यस्मादिदं सर्व मुत्थापयति। उत्थापनादुक्थं प्राणः। न ह्यप्राणः कश्चिदुत्तिष्ठति। तदुपासनफल माह— उद्धास्मादेवंविद उक्थ-विज्ञाणविदीरः पुत्र उत्तिष्ठति ह दृष्ट मेतत्फलम् ; अदृष्टं सायुज्यं सलोकतां जयति य एवं वेद'—इति तद्भाष्यं शाङ्करम्।

१८८—४— असौ वा। १३. २. ६. १. शत० ब्रा०।

—२३— ०प्रसिद्ध्यर्थौ। पा० सू० ८. २. ९९, ८. ४. ५७।

—२०— भूमौ०—०न्तीति। तथाहि छान्दोग्यश्रुतिः— "अथ य इमे ग्राम इष्टापूर्त्ते दत्त मित्युपासते, ते धूम मभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्ष मपरपक्षाद्यान् षड् दक्षिणैति मासाꣳस्तान्नैते संवत्सर मभिप्राप्नुवन्ति, मासेभ्यः पितृलोकं पितृलोकादाकाश माकाशाच्चन्द्रमस मेष सोमो राजा तद्देवाना मन्नं तं देवा भक्षयन्ति। तस्मिन्यावत्सम्पात मुषित्वा ऽथैत मेवाध्वानं पुनर्निवर्त्तन्ते यथेत माकाश माकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति ; त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते ऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्न मत्ति यो रेतः सिञ्चति तद्भूय एव भवति। तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनि मापद्येरन्,— ब्राह्मणयोनिं वा क्षत्रिय-

योनिं वा वैश्ययोनिं वा; अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनि मापद्येरन्,— श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा"–इति ५. १०. ३–७।

—२३ — अभिहिता। पा० सू० ८. २. १०७।

१८९—१— प्रशस्तत्वात्। तथाहि छा० उ० ७.९.१,२— "अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्त्ताऽविज्ञाता भवत्यथाऽन्नस्यायै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवत्यन्न मुपास्स्वेति; स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति, यावदन्नस्य गतं तत्रास्य यथा कामचारो भवति योऽन्नं ब्रह्मेत्युपास्ते"–इति।

—९ — युक्तम्। तथाहि तै० उ० ३. २.— "अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति"–इति। पुनस्तत्रैव दशमे खण्डे— "एतत्साम गायन्नास्ते— 'हा३वुहा३वु हा३वु अहमन्नमहमन्नमहमन्नम्। अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः। अहꣳश्लोककृदहꣳश्लोककृदहꣳश्लोककृत्। अहमस्मि प्रथमजा ऋता३स्य। पूर्वं देवेभ्योऽमृतस्य ना३भायि। यो मा ददाति स इदेव मा३वाः। अहमन्नमन्नमदन्त मा३द्मि। अहं विश्वं भुवन मभ्यभवा३म्। सुवर्णज्योतीः। य एवं वेद। इत्युपनिषत्"–इति। अत्र हाउ३ अहमन्न मित्याद्येकस्य साम्नः प्रतीकम्, अहं श्लोककृदिति द्वितीयस्य, अहमस्मीति तृतीयस्य अस्थिभूता ऋक्, अहं विश्व मिति चतुर्थस्य साम्नः प्रतीक मेव। एषु प्रथमतृतीये छन्दोगेषु कौथुमाना मारण्यके श्रूयेते (५. २.

७; २. १. ३४.)। अपरे तु शाखान्तरीये स्याताम्। अथवैतदेक मेव साम। तच्च कौथुमानां गानग्रन्थेषु नाम्नात मिति स्याच्छाखान्तरीयम्। युक्ततरश्चैष पक्षः, 'एतत्साम'—इत्येकवचनश्रवणात्। अस्य सुरेश्वराचार्यकृतव्याख्यानश्लोकास्त्विमे (३.१०.७९–८८.)—

"सर्वांल्लत्वादिमांल्लोकान्पश्यन्नात्मतया बुधः।
एतद् ब्रह्मसमं साम गायन्नास्ते कृतार्थतः॥
द्वेधा भिन्न मिदं सर्वं मन्न मन्नाद एव च।
सत्याद्यश्चादिरूपात्मा अह मेवैतदीक्ष्यताम्॥
तयोः श्लोकस्य सम्बन्धो भोज्यभोक्तृत्वलक्षणः।
अहमेव यथोक्तात्मा न मत्तोऽन्यस्ततोऽस्ति हि॥
क्रियाकारकनिर्मुक्तं पश्यन्नात्मान मात्मनि।
त्रिरहो इति भवेत् स्तोभो विस्मयार्थश्च स स्मृतः॥
त्रिरुक्तिश्चादरार्थेय मह मन्न मितीष्यते।
अश्रद्दधानलोकस्य प्रतिपत्त्यर्थ मुच्यते॥
मूर्तामूर्तात्मकस्यास्य ह्यन्नान्नादत्वरूपिणः।
अतद्दानग्रजोऽहं वै न तदश्नाति हि श्रुतिः॥
देवेभ्यः पूर्व मेवाहं नाभिरस्मास्मृतस्य च।
कारणत्वाद्भवेन्नाभिर्मन्निष्ठा वाऽमृतात्मता॥
अदत्वाऽन्नं तु पात्रेभ्यो यो मा मश्नाति घस्मरः।
अह मन्न मदन्तं तं प्रत्यद्मीहान्नवन्नरम्॥
यो मां ददाति पात्रेभ्यो देशकालसमन्वितम्।
ददत्त्वि ममावन्नं मा मवत्येव सर्वदा॥
सत्यज्ञानादिरूपोऽह मविद्योत्थ मशेषतः।
अहं ह्यभिभवाम्येको दिनकृच्छार्वरं यथा॥"-इति।

अहमस्मीति कौथुमाना मारण्यार्च्चिके प्रथमदशति नवमी ऋक्। अस्याः सायणाचार्यकृतं भाष्य मिहैवोपरिष्टादुद्धृतं द्रष्टव्यम् (२१७ पृ०); शाङ्करभाष्य मपि दर्शयिष्यामस्तट्टीकनावसरे।

—२२— पुनर्भूमावागच्छन्ति। "तदे ह वै तदिष्टापूर्त्ते कृत मित्युपासते, ते चान्द्रमस मेव लोक मभिजयन्ते। त एव पुनरावर्त्तन्ते। तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते; एष ह वै रयिर्यः पितृयाणः"—इति प्र० उ० १, ९॥

---

## ॥ अथ सामसंहितायाः ॥

—-○॰○—-

( भाष्यभूमिका )

१९१—१५— ऋग्यजुर्वेदौ। यद्यपीह ऋग्वेदस्य प्रथमश्रुतेस्तस्यैव व्याख्यानं कृतं पुरस्तादित्यवस्येत, परं न तथा; अपि तु यजुर्वेदस्यैव व्याख्यानं पूर्वं कृतम्; इहैवंश्रुतिवीजन्तु पाणिनेरनुशासन मेव। तथा ह्यस्तीदं सूत्रम्— 'अल्पाच्तरम्'—इति (पा० २.२.३४)। वस्तुतो वेदानां व्याख्याने वुक्कमहीपतेरादेश मवाप्य तन्मन्त्री माधवार्यः स्वमध्यमानुजेन सायणाचार्येण 'वेदार्थप्रकाश'-सञ्ज्ञकानि यानि वेदभाष्याणि कारितानि। तत्र प्रथम मेव तैत्तिरीयसंहिताभाष्यम्; तैत्तिरीयसंहितावतरणीश्लोके तत्पूर्व मपि कस्यचित् वेदग्रन्थस्य व्याख्यानं कृत मित्यनुल्लेखात्।

तथाहि— 'ब्राह्मणं कल्पसूत्रे द्वे मीमांसां व्याकृतिं तथा ।
उदाहृत्याथ तैः सर्वैर्मन्त्रार्थः स्पष्ट मीर्य्यते'–इति ।
ततस्तद्ब्राह्मणभाष्यम् ; तथा च तदवतरण्याम्—
'व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता ।
तद्ब्राह्मणं व्याकरिष्ये सुखेनार्थविबुद्धये'–इति ।
ततस्तदारण्यकभाष्यम् ; तदुक्तं तदुपक्रमे—
'व्याख्याता सुखबोधार्थं तैत्तिरीयसंहिता ।
तद्ब्राह्मणञ्च व्याख्यातम् ; शिष्ट मारण्यकं ततः ।
— — — — तद्व्याख्याय प्रतन्यते'–इति ।
ततः ऋक्संहिता भाष्यम् । तथाहि तत्रावतरण्याम्—
'आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा ।
यजुर्वेदो ऽथ हौत्रार्थं ऋग्वेदो व्याकरिष्यते'–इति ।

तत ऐतरेयब्राह्मणभाष्यम्, ततस्तदारण्यकभाष्यम् । ततः सामवेदस्य छन्दोऽभिधां संहिताम्, ततस्तदीयोत्तराख्यां संहिताम्, ततस्तस्यैवाष्टौ ब्राह्मणानि च व्याचष्टे यथाक्रमेणेति ।

अथ शुक्लयजुर्वेदस्य काण्वसंहितायाश्च भाष्य मस्ति सायणीयम्, शतपथब्राह्मणभाष्य मपि । त एते नाद्यापि मुद्रिते । अथर्वसंहिताया अपि भाष्यं कृत मनेन । मुद्र्यते च तत् सम्प्रति । अथर्वब्राह्मणभाष्य मपि कृतं स्यात् तेनेति ।

अथात्रैतदन्यदपि ज्ञेय मस्ति । तैत्तिरीयसंहितादीनां सामब्राह्मणान्तानां षोडशग्रन्थानां भाष्याणि प्रणीय, पश्चात् प्रणीतानि काण्वसंहिताभाष्यादीनि चत्वारीति । तथाहि काण्वसंहिताभाष्यावतरण्याम्—

'ऋग्यजुस्सामवेदा ये व्याख्यातास्तेषु तद्यजुः ।

कृष्णं शुक्ल मिति द्वेधा तत् कृष्णं तैत्तिरीयकम् । ०—० ।
व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते । ०—० ।

तत्रेदं काण्ववेदाख्यं शुक्लं यजुः पूर्वं न व्याख्यातं किन्तु तैत्तिरीयाख्यं कृष्णं यजुरेव व्याख्यातम् । तस्मादिदानीं काण्वशाखा व्याख्यायते । यद्यप्यनयोः शाखयो रुभयो राध्वर्यव एव प्रयोगः प्रतिपाद्यते, तथापि मन्त्रपाठविशेषैः प्रयोगविशेषैर्वास्ति महान् भेदः । स चानुष्ठातृभेदेन व्यवस्थितविषयत्वान्न विकल्प्यते'—इति । अथर्वसंहिताब्राह्मणयोर्भाष्ये तु स्वर्गते बुक्कमहीपतौ तदात्मजस्य हरिहरनृपस्यादेशतः प्रणीते ऽतः सर्वान्तभूते, त एवोनविंश-विंशे । तथाहि तदवतरणीश्लोकाः ( ४–१०. )—

"तत्कटाक्षेण तद्रूपं दधतो बुक्कभूपतेः ।
अभूद्धरिहरो राजा क्षीराब्धेरिव चन्द्रमाः ॥
विजितारातिव्रातो वीरश्रीहरिहरक्षमाधीशः ।
धर्म्मब्रह्माध्वन्यः कलिं स्वचरितेन कृतयुगं कुरुते ॥
साधयित्वा महीं सर्वां श्रीमान् हरिहरेश्वरः ।
भुङ्क्ते बहुविधान् भोगान् असक्तो रामवत् सुधीः ॥
विजयी हरिहरभूपः समुद्वहन् सकलभूभारम् ।
षोडश महान्ति दानान्यनिशं सर्वस्य तुष्टये कुर्वन् ॥
तन्मूलभूत मालोच्य वेद माथर्वणाभिधम् ।
आदिशत् सायणाचार्यं तदर्थस्य प्रकाशने ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तु मुद्यतः ॥
व्याख्याय वेदत्रितय मामुष्मिकफलप्रदम् ।
ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति ॥"—इति ।

१९१—२१— तदाहुः। तै० ब्रा० १. ५. ११। तत्रैव प्रथमकाण्डे राजसूयप्रकरणे (८ प्र० १३ अ०) स्तोमानां स्वरूपविशेषश्च सामब्राह्मणोदाहरणेन विस्पष्टः प्रतिपादितः। तथा सप्तमकाण्डीयप्रथमाध्यायेऽपि द्रष्टव्यः।

—२५— समामनन्ति। तदारम्भग्रन्थस्त्विहैवोपरिष्टाद् द्रष्टव्यः २०२—२११ पृ०।

१९२—९— "आशु ०—० चत्वारिंशः"—इति। तै० सं० ४. ३. ८। अस्तीह किञ्चित्पाठाशुद्धिः, उद्ध्रियमाणैतद्भाष्यदृष्ट्या भवेत् सा शोधनीया। तदस्यानुवाकस्यैतत् सायणीयं भाष्यम्—"'आशुः' 'भान्तः'— इत्यादीनि स्तोमविशेषाणि, तत्र कानिचिद्गुणवाचीनि, कानिचिद्द्रव्यवाचीनि, तथा सति गुणसम्बन्धद्रव्यतादात्म्यं स्तोमेषूपचर्य तत्तत्स्तोमरूपत्वं तत्तदिष्टकायाः प्रशंसार्थमुपन्यस्यते। तत्रैव मन्त्रयोजना— 'आशुः' शैघ्र्यगुणोपेतः 'त्रिवृत्' स्तोमः; हे इष्टके! तद्रूपा त्वमसि। एवमुत्तरत्रापि योज्यम्। 'भान्तः' भासमानः। 'व्योम' प्रसिद्धं द्रव्यम्। प्रकृष्टा तूर्त्तिः त्वरा यस्यासौ 'प्रतूर्त्तिः' शीघ्रकारिणीत्यर्थः। 'तपः' प्रसिद्धम्। 'अभिवर्त्तः' सामविशेषः, सह विंशत्या सङ्ख्यया वर्त्तते इति 'सविंशः' स्तोमविशेषः। 'धरुणः' धारकः। 'वर्चः' बलहेतुः। 'सम्भरणः' सम्यक् पोषकः। 'योनिः' प्रजोत्पादकः। 'गर्भाः' प्रसिद्धाः। 'ओजः' अष्टमो धातुः। 'क्रतुः' ज्योतिष्टोमादिः। 'प्रतिष्ठा' स्थितिहेतुः। 'ब्रध्नस्य' आदित्यस्य 'विष्टपं' निवासस्थानम् 'असौ वा आदित्यो ब्रध्नः'—इतिश्रुत्यन्तरात्। 'नाकः' स्वर्गाख्या भोगभूमिः। विपरीतत्वेन वर्त्तनं यस्यासौ 'विवर्त्तः' त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा अनेनैवाम्नातक्रमेण

क्वचिदनुष्ठीयन्ते, क्वचित्तु विपरीतक्रमेण ; अत एव सूत्र-कारेण क्वचिदुक्तं— 'त्रयस्त्रिंशारम्भणास्त्रिवृदुत्तमाः'-इति । 'धर्त्रः' धारकः, 'चतुष्टोमः' त्रिवृत्पञ्चदशसप्तदशैकविंशानां समूहः । एतैः स्तोमवाचिभिरष्टादशभिर्मन्त्रैः स्तोमरूपत्व मापादिता अष्टादशेष्टका उपदध्यात्''-इति । एषा मष्टादशानां मन्त्राणां विशेषतो विनियोगादिक मेतद्ब्राह्मणाम्नानादेवावगन्तव्यम् । तच्च तै० सं० ५. ३, ३. द्रष्टव्यम् ।

१९२-१५- ब्राह्मणान्तरानुसारेण । तद्धि ब्राह्मणान्तरं तैत्तिरीयसंहितायां श्रुतम्, "देवा वै यज्ञं अकुर्वत"- इत्यादि (५.३.३.) ।

—१६— सूत्रकारैः । लाट्यायनादिभिः । तथाह तैत्तिरीयभाष्येऽयमेवाचार्यः— 'अष्टादश-नवदशादयस्तु न्यायेनोन्नेयाः 'उपस्तोमाः' । ते तु ब्राह्मणे ( तै० सं० ५. ३, ३. ) आम्नाताः । तदुन्नयनार्थस्त्वावृत्तिप्रकारः सामसूत्रादवगन्तव्यः'-इति । सामसूत्रं तु लाट्यायनीयं द्राह्यायणीयं वेति । इहादिपदात् निदानसूत्रस्यापि ग्रहणमिष्टम् । उक्तेष्वष्टादशसु स्तोमेषु त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशश्चेति षण्णां, चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशानां छन्दोमनामकानाञ्च त्रयाणां स्तोमाना मावृत्तिप्रकारादिक मेव सामवेदीये ताण्ड्यमहाब्राह्मणे द्वितीयतृतीयप्रपाठकयोर्विहितं दृश्यते ; नान्येषाम् । अतोऽन्येऽष्टादश-नवदशादयो नव 'उपस्तोमाः' उच्यन्ते ( तै० सं० ४. ३. ८. १. सा० भा० ) । तेषा मुन्नयनार्थं आवृत्तिप्रकारस्त्वेव माह लाट्यायनः—"वर्द्धमानस्तोमेषु प्रथमस्य पर्यायस्य प्रथमा तृचभागा तस्यास्त्रिर्वचनम्''-इत्यादि ६. ५। ऐतरेयके ब्राह्मणे च स्तोमवृद्धौ नियमविशेषो विहितः— "एकां द्वे न स्तोम मतिशंसेत् ;

तद्यथाभिद्दिषते पिपासते क्षिप्रं प्रयच्छेत्, तादृक्तद्यो क्षिप्रं देवेभ्यो ऽन्नाद्यं सोमपीथं प्रयच्छानीति; क्षिप्रं हास्मिंल्लोके प्रतितिष्ठति"–इति (६. २. ५.)। 'त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशादयः स्तोमा विहिताः (सा० ब्रा० २, ३ प्र०)। विहितस्य सप्तदशस्तोमस्य विवृद्ध्या अष्टादशादयः स्तोमा निष्पाद्यन्ते। तथाहि विहितस्यैकविंशस्य विवृद्ध्या द्वाविंशादयः स्तोमाः सम्पाद्यन्ते'–इत्यादि तु तद्भाष्यम्।

—१८— इत्यादिश्रुतिभ्यः। तद्यथा—"त्रिवृद् बहिष्पवमानं, पञ्चदशान्याज्यानि, पञ्चदशो माध्यन्दिनः पवमानः, सप्तदशानि पृष्ठानि, सप्तदश आर्भव, एकविंꣳशो ऽग्निष्टोमः; सोक्थः पञ्चदशी रात्रिस्त्रिवृत्सन्धिः"–इत्यादि ता० ब्रा० २०. १. १। ताण्ड्यसप्तमे (१ख.) त्वाज्यनामनिर्वचनं द्रष्टव्यम्, ऐतरेयके च तथा २. ५. ४।

—२१— प्रदर्शिताः। विस्तरभयानेह ते उद्धृताः, परमनुपदं प्रदर्श्यन्त एव स्तोमप्रणयनविधायकास्ताण्ड्यद्वितीयप्रपाठकीयाद्यखण्डास्त्रयः; तत्पाठादेव स्थालीपुलाकन्यायेन सर्वं सामान्यतो ऽवगन्तव्य मपि स्यात्।

—२२— इत्यादिवचनैः। त्रयीपरिचये १०५ पृ० यथोक्त मित्यादिकं द्रष्टव्यम्। तत एतच्चाधिकरणं पाठ्यम्—

"अंशैः सामर्चु कृत्स्नं वा प्रत्यृचं तिसृभिः स्तुतेः।
अंशैर्नैवं स्तुतेरंशैरसिद्धेः प्रत्यृचं भवेत्॥

'एकं साम तृचे क्रियते स्तोत्रियम्'–इति श्रूयते, तत्र त्रेधा विभक्तेषु सामांशेषु एकैकोंशः एकैकस्यामृचि गातव्यः; कुतः? एकस्य साम्नः तिसृभिर्ऋग्भिर्निष्पादनस्य श्रवणात्। इति प्राप्ते, ब्रूमः— स्तोत्रियमिति स्तुतिनिष्पादकत्वं कृत्स्नस्य साम्नो विधी-

यते, न तु सामांशानाम्; स्तुतिर्नाम गुण-कथनपर मेकं वाक्यम्, तच्च वाक्य मेकस्या मृचि सम्पूर्णम्, ततः कृत्स्नेन साम्ना तद् वाक्यं संस्कार्य मिति प्रत्यृचं सामाभ्यसनीयम्; तथा सति द्वितीयतृतीययोर्ऋचोस्तस्यैव साम्न आवर्त्तमानतया सामान्तरत्वाभावाद् ऋक्-त्रय-निष्पाद्यत्व मविरुद्धम्। तस्मात् प्रत्यृचं कृत्स्नं साम समापनीयम्"-इति मी० अधि० ९. २. ३।

१८२—२३— तृचप्रगाथादिरूपाणि सूक्तानि। आदिपदादेकर्च-षडर्चादीन्यपि। त्रि+ऋचः=तृचः। 'ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि'-इति पा० सू० ६. १. ३४. वा०। प्रगाथस्त्वेवं निरूपितो ऽधिकरणमालायाम्—

"रथन्तरे ककुब् ग्राह्या ग्रथ्या वाद्योऽर्थवत्त्वतः।
पुनःपदा-प्रसिद्धयादेरन्त्योऽर्थोऽन्यत्र वीक्ष्यताम्॥

इद माम्नायते— 'न वै बृहद्रथन्तर मेकच्छन्दो यत्तयोः पूर्वा बृहती ककुभावुत्तरे'-इति। अय मर्थः— बृहद्रथन्तरं तदेतत् सामद्वय मितरसामवदेकच्छन्दस्कं न भवति; यस्मात् कारणात् तयोर्बृहद्रथन्तरसाम्नोराश्रयभूतासृक्षु पूर्वा बृहतीच्छन्दस्का उत्तरे तु द्वे ऋचौ ककुब्छन्दस्के; इतरेषां वामदेव्यादिसाम्ना माश्रये तृचे ऽवस्थिताः तिस्र ऋच एकच्छन्दस्का उत्तरा-ग्रन्थे आम्नाताः संशयविलेश-परिहाराय 'समासु गायेत्'-इतिन्यायेन निर्णीता एव; इह तु वाचनिकं विषमच्छन्दस्कासु गान मिति। तत्र रथन्तरस्याश्रयतया तृचो नोत्तराग्रन्थे समाम्नातः, किन्तर्हि? प्रगाथस्तदाश्रयत्वेनाम्नातः। स च द्वाभ्या मृग्भ्यां निष्पन्नत्वात् द्व्यृचो भवति। तयोश्च द्वयोर्ऋचोः 'अभि त्वा शूर'-इत्येषा (१प्र० ११सू० १ऋ०) प्रथमा, सा च बृहती; न 'त्वा वाऽ्ऽ अन्यो

दिव्यः'-इत्येषा (१प्र० ११सू० २ऋ०) द्वितीया, सा च पङ्क्तिच्छन्दस्का। तथाच सति तां पङ्क्तिच्छन्दस्कामपनीय तस्याः स्थाने दाशतयीगते द्वे उत्पत्तिककुभौ ऋचौ ग्रहीतव्ये। कुतः? अर्थवत्त्वात्; उदाहृतेन 'ककुभावुत्तरे'-इतिवाक्येन रथन्तरसाम्नः आश्रयत्वेन ककुभोर्विनियुज्यमानयोः ककुबुत्पत्तिरर्थवती भवति, अन्यथा वैयर्थ्यं स्यात्। किञ्च आम्नाताया एकस्याः पङ्क्तेः स्वीकारे सति ऋचोर्द्वयोरेव लाभात् 'एकं साम तृचे क्रियते स्तोत्रियम्'-इति वचनं विरुद्ध्येत, तस्माद्रथन्तरसाम्नि द्वे ककुभावुत्तरे ग्रहीतव्ये। अयमेव न्यायो बृहत्सामन्यपि योजनीयः। इति प्राप्ते, ब्रूमः— आम्नातयोर्बृहतीपङ्क्त्योरेव ककुब् ग्रथनीया। तथाहि— 'अभि त्वा शूर'-इत्येषा बृहती प्रथमा स्तोत्रिया; तस्यामविकृताया मेव रथन्तरं गातव्यम्। ततस्तस्या ऋचश्चतुर्थं पादं पुनरुपादायोत्तरस्याः पङ्क्तेः पूर्वार्द्धेन सह योजनीयम्, सेयमष्टाविंशत्यक्षरा त्रिपदा द्वितीया स्तोत्रिया। सा चैका ककुप् सम्पद्यते। तस्यां ककुभि चरमं पादं पङ्क्तेरुत्तरार्द्धेन सह प्रग्रथ्य तृतीया स्तोत्रिया कर्तव्या। सा च द्वितीया ककुप् सम्पद्यते। अनेन प्रग्रथनप्रकारेण द्वयोर्ऋचोराम्नातयोः तृचनिष्पत्तेर्नास्त्युक्तो वचनविरोधः। अस्मिंश्च ग्रथने 'पुनःपदा'-इति (ता० ब्रा० १७.१.१२.) श्रौतोक्तिर्लिङ्गम्। तथाच श्रूयते —'एषा वै प्रतिष्ठिता बृहती, या पुनःपदा, तद् यत् पदं पुनरारभते तस्माद् वत्सो मातरमभि हिङ्करोति'-इति। अयमर्थः— या बृहती पुनःपदा भवति, सैषा प्रतिष्ठिता स्थिरा भवति। पदं चतुर्थः पादः। सोऽप्युगन्तरसम्पादनाय पुनः पठ्यते, ततः सा बृहती पुनःपदा। सेयमृङ् माता, तस्याः पादो वत्सः; तथा सति यस्मादत्र चतुर्थं पादमुद्गाता पुनरारभते, तस्माद्

वत्सो मातर मभिवीक्ष्य हिमिति शब्दं करोतीति। न केवलं लिङ्गमात्रेण प्रग्रथनं, किन्तु छन्दोगानां प्रसिद्ध्यापि। ते ह्येवं स्मरन्ति—'काकुभः प्रगाथः'-इति। किञ्च प्रगाथशब्दार्थपर्यालोचनेनापि ग्रथनं गम्यते,—प्रकर्षेण ग्रथनं यत्र स प्रगाथः। प्रकर्षो नाम आम्नातादृक्पाठादाधिक्यम्। तच्च पूर्वोक्तरीत्या पादाभ्यासपुरःसर मृगन्तरसम्पादनेनोपजायते। तस्मात् नोत्पत्ति-ककुभौ ग्रहीतव्ये; किन्तर्हि? प्रग्रथनेन द्वे उत्तरे ककुभौ सम्पाद्य, तासु तिसृषु रथन्तरं गातव्यम्। तथा बृहदपि। एवं सति पङ्क्तेः पाठः सार्थो भवति। न चैवं ककुबुत्पत्तिवैयर्थ्यमिति शङ्कनीयम्; वाचःस्तोमे तदुपयोगात्। तस्मान्न क्वापि प्रग्रथने अनुपपत्तिः"-इति ६. १. ६. १ व०।

१८२—२३—आश्रयत्वेन। साम्ना मृगाश्रितत्वं त्रयीपरिचये १००-१०५ पृष्ठेषु आलोच्यम्। 'ऋच्यध्यूढं साम'-इति च छान्दोग्यश्रुतिः १. ६. १-५; ७. १-४।

—२५—अध्यायैः। सामवेदीय कस्मिन्नपि ग्रन्थे अध्याय इति नाम परिच्छेदविभागो नास्ति; अस्ति प्रपाठक इति, अर्द्ध-प्रपाठक इति च। सामसंहिता तु गानच्छन्दोभेदात् द्विविधा। तत्र योनिः, आरण्यकः, उत्तरा चेतिप्रसिद्धाश्छन्दोग्रन्था एव आर्च्चिकाः। सायणमते आरण्यकाध्यायस्य योनिग्रन्थान्ताध्यायत्वाद् द्वावेवार्च्चिकौ। एष तूत्तरार्च्चिको नवप्रपाठकात्मको द्वाविंशत्यर्द्धप्रपाठकात्मकश्च। तत्र षष्ठादिषु चतुर्षु प्रपाठकेषु त्रयस्त्रयोऽर्द्धप्रपाठकाः, तदन्यप्रपाठकेषु द्वौद्वावर्द्धप्रपाठकाविति स्थितम्। भाष्यकृता त्वत्र प्रपाठकविभागो नाङ्गीकृतः, अपि त्वर्द्धप्रपाठकाना मेवाध्यायत्वं शेषार्द्धप्रपाठकयोरेकत्वं च स्वीकृत्यैव मुक्ता मिति विवेकः॥

[ १ ]

१८३—१— बहिष्पवमानं। ज्योतिष्टोमस्य प्रातस्सवनानुष्ठाने 'उपास्मै गायता नरः ( उ० १. १. १–९. )'–इत्यादिषु त्रिषु सूक्तेषु गायत्रं साम गातव्यं भवति। तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमान मित्युच्यते; अत्रावस्थितानामृचां पवमानार्थत्वाद् बहिस्सम्बन्धाच्च; न खल्विदं स्तोत्र मितरस्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्बशाखायाः सन्निधौ प्रयुज्यते किन्तु सदोबहिःप्रसर्पद्भिः प्रयुज्यते। अस्यैव बहिष्पवमानस्य त्रिवृन्नामकः स्तोमो भवति। तस्य च स्तोमस्य विधायकं ब्राह्मणं 'तिसृभ्यो हिङ्करोति ( १. २. १–२. )'–इत्यादिक मिहैवाग्रे समुद्धृत्य दर्शितम् ( २०२—२१२ पृ० )। "स तु वै यज्ञेन यजेत ( २. १. ८. )"–इत्यादिकं ब्राह्मणं बहिष्पवमानस्य विधायकम्। "इमे वै लोका गायत्रं त्रिवृद् गेयम् ( २.२.१. )" –इत्यादिकं ब्राह्मणं तत्र गीतानां गायत्राणां विधायकम्। "ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येव मासस्पुः"–इति च रहस्यम् ( छा० उ० १.१२.४. )। अन्यत्रान्यत्र च—'नव प्रातर्ग्रहा गृह्यन्ते, नवभिर्बहिष्पवमाने स्तुवते'–इति ऐ० ब्रा० ३. १. १। 'मुखं वा एतद्यज्ञस्य यद् बहिष्पवमानः'–इति च ऐ० ब्रा० २. ३ ४.। 'त मेतयोपसमेत्योपासीदन् उपास्मै गायता नर इति तस्मादेतया बहिष्पवमान उपसद्यः'–इति तै० ब्रा० १. ५. ९. ७। "देवाः 'तम्' इन्द्रम् 'एतया' उपास्मा इत्येतयर्चा ( 'उपसमेत्य' ) समीपे प्राप्य ( 'उपासीदन्' ) उपाविशन्, 'तस्मात्' 'एतया' ऋचा ( 'बहिष्पवमानः' ) बहिष्पवमानाख्यः स्तोत्रविशेषः ( 'उपसद्यः' ) सामगैरारब्धव्यः"–इति तद्भाष्यम्।

"ग्रहान् गृहीत्वा बहिष्पवमानं सर्पन्ति, पराञ्चो हि यन्ति, पराचीभिः स्तुवते, वैष्णव्यर्चा पुनरेत्योपतिष्ठते"–इति तै॰ सं॰ ३. १. १०. ३। "पवित्रं वै बहिष्पवमान आत्मान मेव पवयते"–इति च तै॰ सं॰ ६. ४. ६. २ । शत॰ ब्रा॰ ४. २. ५. ११; २१; १०. १. २. ७; १२. ३. ४. ३। सूत्रेषु च— आश्व॰ श्रौ॰ १. ४; साङ्ख्या॰ श्रौ॰ ६. २१. १; १४. ३१. २; कात्या॰ श्रौ॰ २०. ५. २; लाट्या॰ २. १. ९; २. १; ६. ६. १६।

—१— स्तोत्रम्। "अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्; प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्"–इति पूर्वमीमांसान्यायमालाव्याख्याने माधवाचार्यः (३अ॰ १पा॰ ५अधि॰)। तदेतस्मात् अप्रगीतमन्त्रसाध्यन्तु शस्त्रम्, प्रगीतमन्त्रसाध्यं स्तोत्र मिति सिद्धान्तात् बहिष्पवमान मपि प्रगीतेनैव भाव्यम्। प्रगीत मेव वेदेषु सामेत्युच्यते। अतएव मीमांसान्यायमालायाः प्रथमाध्यायीय-चतुर्थपादे चित्राधिकरणव्याख्याने माधवाचार्येणोक्तम् — 'सूक्तत्रयपठितानां नवाना मृचां गानं त्रिभिः पर्यायैः कर्त्तव्यम्'–इति। अन्यत्र च (५अ॰ ३पा॰ ४अधि॰) "तेषु त्रिषु तृचेषूर्द्धं गानेन त्रिवृत्स्तोमो भवति'-इति। बहिष्पवमानस्तोत्राख्यस्य साम्नो नानारूपत्वं च सामब्राह्मणे दशमप्रपाठकीयनवमखण्डतः एकादशप्रपाठकीयप्रथमखण्डान्तं यावत् समाम्नातम्। "त्रिवृतः स्तोमात् रथन्तरं पृष्ठं निरमिमीत"–इति शत॰ ब्रा॰ ८. १. १. ६। "एतानि सामानि यत्पृष्ठानि"–इति तै॰ ब्रा॰ १. ८. ८. ३। 'तानि च पृष्ठानि षट्,— रथन्तर–बृहद्–वैरूप–वैराज–शाक्वर–रैवत-सामभिर्निष्पाद्यानि'–इति मी॰ न्या॰ ७अ॰ ३पा॰ ३अधि॰ माधवाचार्यः। 'स्पर्शनात् स्पृष्ठानीत्येवं निरुक्तिर्द्रष्टव्या'–इति च तत्रैव

१अ० ४पा० २अ० माधवः। 'त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणव-त्रयस्त्रिंशाख्याः स्तोमाः षडहे पृष्ठस्तोत्रसम्बन्धाः पृष्ठ्या इत्युच्यन्ते'-इति चाह सामब्राह्मणभाष्ये (१९. ९.) सायणाचार्यः। पृष्ठानां समूहः पृष्ठ्यः (पा० सू० ४. २. ४२. वा०)। "पृष्ठ्यः षडहो भवति"-इति तै० सं० ७. २. ६. २। पृष्ठ्यषडहविवरणन्तु त्रयी-परिचये (११४पृ० २४पं०) द्रष्टव्यम्। तथाचैकषष्ठ्यधिकत्रिशत-दिनसाध्येषु गवामयनादिसत्रेषु पञ्चविंशदिने, पञ्चपञ्चाशत्तमदिने, पञ्चाशीतितमदिने पञ्चदशाधिकशततमदिने, पञ्चचत्वारिंशद-धिकशततमदिने, ऊनसप्तत्यधिकशततमदिने, नवत्यधिकशततम-दिने, एकादशाधिकद्विशततमदिने, एकचत्वारिंशदधिकद्विशत-तमदिने एकसप्तत्यधिकद्विशततमदिने, एकाधिकत्रिशततमे च दिने एतत्त्रिवृत्साध्यं पृष्ठस्तोत्रं गेयं भवतीति।

—२— तृचम्। ऋक्त्रयात्मक मिदं सूक्त मिति भावः। एवं द्वितीयतृतीये सूक्ते अपि। ता एताः सूक्तत्रयात्मिका नवर्चो बहिष्पवमानस्य स्तोत्रस्याश्रिभूता इति बहिष्पवमान्य इति व्यप-दिश्यन्ते। तद्यथा— "ये पराचीभिर्बहिष्पवमानीभिः स्तुवते" -इति सामब्राह्मणम् ६. ८. १७, १८; तत्रैव भाष्ये 'बहिष्पव-मानीयाभिः स्तोत्रीयाभिः'-इति च (१८ भा०)। "बहिष्पव-मान्यः स्तोत्रीयाः"-इति चान्यत्र भाष्ये (११. २. १.)। विशेष-तस्त्वाद्यतृचस्यैतस्य स्तोत्रियः, द्वितीयस्य अनुरूपः, अन्तिमस्य पर्यास इति त्रिधा नामकरणं श्रूयते। तद्यथा—"स्तोत्रियस्तृचो भवति"-इति (१४. १.), "अनुरूपो भवति"-इति (११. ६.), च सामब्राह्मणम्, "अन्त्यानि सूक्तानि × × × पर्यासा इत्या-चक्षते"-इति शत० ब्रा० १२. २. ३. २। सा० सू० २.६.१६।

—२— ॐ। ओङ्कारस्य परमेष्ठी ऋषिः (आ० ब्रा० १.१.), दैवी गायत्रीच्छन्दः ("दैव्येकम्" पि० छ० सू० २. ३.), परमात्मा देवता। 'ओ मित्येतदक्षर मुद्गीथ मुपासीत ( छा० उ० २.१.१. )'—इत्यादिकं विधायकं ब्राह्मणम्।

१८३—६— 'देवयु' ऋ० सं० पाठः। तत्रापि 'देवयु = देवयुम्'—इति भाष्यम्। तथाच तत्र सुपां सुलुगिति ( पा० सू० ७. १. ३९. ) सूत्रेण द्वितीयैकवचनस्य लुक्, इह तु सु आदेश इत्येव भेदः सम्पन्नः।

—८— ०सूक्ते। अस्य सूक्तस्य 'असितो देवलो वर्षिः, तौ च काश्यपगोत्रजौ'—इति ऋग्भाष्ये सायणः। अनुक्रान्तं चाश्वलायनेन तथैव। तद्यथा— 'समिद्ध एकादश काश्यपो ऽसितो देवलो वा विंशतिः सूक्तानि'—इति ३. २। "अथोत्तर मुपासितः काश्यपो देवलो वा"—इति ऋषिनैगेयः ( ८. १. )। सामवेदीयर्चां ऋष्यादिज्ञानायैव नैगेयग्रन्थाः प्रोक्ताः। एतत्सूक्तीयर्चां गायत्रीच्छन्दः; "गायत्र्या वसवः"—इति पिङ्गलोक्तेः ( ४. २. )। "ऊनाधिकेनैकेन निचृद्-भुरिजौ ( ६. १८. )"—इति पैङ्गलशासनाच्चेयं गायत्री, निचृदिति। "उपास्मै त्रयस्तृचाः सौम्याः"—इति दैवतनैगेयवचनाच्चासां ( ३. १. ) सोमो देवता। "यत्काम ऋषिर्यस्यां देवताया मार्थपत्य मिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति" —इति हि नैरुक्तवचनं ( ७. १. १. ) चात्र साधकम्। "उपास्मै गायता नर इति ग्रामकामाय प्रतिपदं कुर्यात् (सा० ब्रा० ६.८.१.)" —इत्यादिश्रुतिभ्यः प्रतिपत्करणादौ चासां विनियोगः।

—८— तृचे। एता एव तिस्र ऋचः ऋक्संहितायां ९. ११. १, २, ३। आसु तिसृष्वृक्षु 'यज्ञायज्ञीयं' नाम साम श्रूयते।

तद्यथा ऊहैकविंशप्रपाठकीयप्रथमार्धे एकादशं साम—

४ ३ २ ४ २ ४र ५ २ १ २
उपाऽ५स्मै। गा३या३तानारः। पा३वामा-

२ १ २ १ २ २ १
३ना। या२३आ। हुम्मायि। दा३वायि। आभि-

२ र ३ २ १ २ १ र
देवाऽ२इया२वताउ॥ तं (१)॥ आ। भिते मा।

२ १ २ २ १ —१र र २
धू३नापा३याः। आथा२र्वा। वोआ२३मा।

१ २ २ १ र र ३ २
हुम्मायि। आ३यूः। दायिवन्देवायदा२यिवयाउ॥

१ २ १ २ १ २ २
युः (२)॥ सा। नःपवा। स्वा३शाङ्गा३वायि।

१ —१र २ १ २ १
यज्ञा२ना। यशा२३मा। हुम्मायि। वीं३तायि।

१ र र ३ २
शाऽराजन्नोषधा२यिभ्यआउ (३)॥ य॥

'यज्ञा-यज्ञा'-इत्यनेन शब्देन युक्तायां 'यज्ञा-यज्ञा वो अग्नये' -इत्यस्या मृचि ( छा० आ० १.१.४.१.) उत्पन्नं साम यज्ञायज्ञीय मित्युच्यते। आर्षेयब्राह्मणानुशासनं ह्यत्र बीजम् ( आ० ब्रा० १.५.)। तच्च गानं योनिग्रन्थे विद्यते (गे० गा० १.१.२२.)। तदेव गान मिह तिसृष्वृक्षु गातव्यं भवति ; ज्योतिष्टोमं प्रकृत्य 'यज्ञायज्ञीयेन स्तुवीत'-इतिश्रुतेः (ता० ब्रा० २.२.६.)। तच्च साम तिसृष्वृक्षु एकम्, अथवा प्रत्यृचं समापनीय मिति संशये मीमांसाया मिद मधिकरण मारचितम्— "सामैकस्यां त्र्यृचे वा स्यादाद्यः स्वाध्यायवद् भवेत्। वचनाल्लिङ्गसंयुक्ताद् स्तोत्रे

साम तृचे भवेत् ॥ पवमानाज्यपृष्ठादिस्तोत्रेषु यद् विहितं रथन्तर-बृहद्-वैरूपादि-साम अध्येतारः एकस्या मृच्यधीयते, तत् किं स्तोत्र-प्रयोगकालेऽप्येकस्या मृचि गेयम्, किं वा तृचे गेयम्?–इति संशयः। अध्ययनस्यानुष्ठानार्थत्वाद् यथाध्ययन मेकस्या मृचि साम्नः कृतं, तथैकस्या मेव साम गेयम् इति पूर्वपक्षः। 'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति,द्व्यक्षरेणोत्तरयोः'–इति तिसृष्वृक्षु प्रस्तोत्रा गातव्य-भागौ निरूप्यते, तदिदं तृचस्य लिङ्गम्;— 'ऋक्सामे वाव मिथुनी सम्भवाव'–इत्यादौ ऋग्देवता-सामदेवतयोः संवादरूपेऽर्थ-वादे सामदेवतैका मृचं द्वे ऋचौ च प्रत्याख्याय तिस्रः ऋचो ऽङ्गीचकार, तदिद मपरं लिङ्गम्; ताभ्यां लिङ्गाभ्या मुपबृंहिताद् 'एकं साम तृचे गीयते स्तोत्रियम्'–इतिवचनात् तृचे गातव्य"–इति (१०. ६. १.)। ऋक्सामसंवादः सभाष्यैतरेयके च द्रष्टव्यः (२. २. १२.)। तदेवं यद्यप्युपास्मै इति तृच मवलम्ब्य त्रीणि यज्ञायज्ञीयानि गीतानि, तथापि समुदितं सामत्रय मेकं स्तोत्रीयं सामेति विशेषणविशिष्टं व्यपदिश्यते सर्वत्रेति निष्कर्षः।

१८३—८— प्रथमा। उत्तरार्चिकद्वितीयाध्यायीयाष्टादशे सूक्ते इय मेव पुनस्तृतीयापि।

१८३—६— नेतारो यज्ञस्य। अधियज्ञपक्षे एषोऽर्थः; अध्यात्म-पक्षे तु मनुष्या इत्येव (निघ० २. ३. २.); अधिदैवतपक्षेऽपि स्यादर्थः सूर्यकिरणा इति (निरु० १०. ३. ६.)।

—१०— यष्टु मिच्छते। वस्तुतो नेदं यजेः सन्नन्तस्य रूपम्; अस्ति हि नैघण्टुकं धात्वन्तरं गच्छत्यर्थं इयक्षतीति (निघ० २. १४. ४०.)। तथा च 'गच्छते'–इत्येवार्थोऽस्य युक्ततर इव प्रति-भात्यस्माकम्।

—११— अभिषूयमाणाय । अय मध्यर्थोऽधियज्ञपक्षे एव ।

—११— सोमाय । सोमो वल्लीरूप ओषधिविशेषः ; 'ओषधिः सोमः'–इति हि नैरुक्तम् ( ११. १. २. )। चन्द्रमसोऽपि नामान्तर मस्ति सोम इति ; 'चन्द्रमा वा'–इति हि नैरुक्तवचनम् ( ११. १. ५. )। 'सोमं मन्यते ( ऋ॰ सं॰ १०. ८५. ३. )'–इति-मन्त्रव्याख्यानावसरे पुनः सोममितिपदस्य द्विविधं व्याख्यानं जगाद यास्कः— 'सोमम् ०—० ओषधिम् ०—० इत्यधियज्ञ मथाधिदैवतं सोमं ०—० चन्द्रमसम्'–इति (११.१.४.)। "सोमो वै चन्द्रमाः"–इति च तै॰ ब्रा॰ १. ४. १०. ७। निरुक्तपरिशिष्टे तु "अथात्मनो महतः प्रथमं भूतनामधेयान्यनुक्रमिष्यामः"–इत्युपक्रम्योदाहरणप्रसङ्गेणोक्तम्— "सोमो आत्मापि"–इति १३. २. १०–१२। पुनस्तदुत्तरखण्डे ( १३ )— " 'सोमः पवित्र मत्येति रेभन् ( ऋ॰ ९. ९६. ६. )'–इत्यय मपि पवित्र मिन्द्रियाण्यत्येति स्तूयमानोऽय मेवैतत् सर्व मनुभवत्यात्मगति माचष्टे"–इति।

—१३— देवयुरित्यस्य देवकाम मिति व्याख्यान मृक्संहितापाठानुसृतम् ; तत्र हि श्रूयते देवयु मिति । अस्मन्मते त्विह देवयुरिति स्यादथर्वाण इत्यस्य विशेषणम् ; उभयत्रैव सुपां सुलुगित्येव ( पा॰ सू॰ ७. १. ३९. ) शरणं तुल्यम। क्याच्छन्दसीति चेह स्मर्तव्यम् ( पा॰ सू॰ ३. २. १७०. )।

—१४— पयः इति तृतीयैकवचनस्य लुकि रूपम् (७.१.३९.); मधुनेत्यस्यार्थो गव्येनेति। अस्मन्मते तु पय इति यथाश्रुत मेव व्याख्येयं गव्य मिति, मधुनेत्यस्यार्थश्च कर्त्तव्यो मधुररसेन सोमेनेति। अधिदैवताध्यात्मपक्षयोस्त्वेवमादीनां पदाना मर्था यथोपपत्तु ज्ञेयाः।

१८३—१४— ऋषयः। एषोऽप्यर्थोऽधियज्ञीयः। अत्रेदं निरुक्तम् —"माध्यमिको देवगण इति नैरुक्ताः, पितर इत्याख्यानम्, अथाप्यृषयः स्तूयन्ते"—इति ११. २. ७। 'प्राणो वा अथर्वा'—इति च श्रूयते। "स वा अयं प्राणस्त्रेधा विहितः प्राणोऽपानो व्यानः"—इति, "सप्त वै शीर्षन् प्राणाः"—इति चैतरेयकम् (२.४.५; १.३.६.)। "अन्तर आत्मा प्राणमयः"—इति च तैत्तिरीयकम् (उप० २.२.)।

—१५ — समकुर्वन्। एष च संस्कारः श्रयणं नाम। सोमकण्डनानन्तरं द्रोणकलशाधानम्, ततो निग्राभ्यासिञ्चनम्, ततो ग्रहाणा मासादनम्, तत उत्तरं ग्रहाणां ग्रहणम्। तत्र प्रथम मन्तर्यामसञ्ज्ञं ग्रहं गृह्णाति, तत ऐन्द्रवायवम्, ततश्च मैत्रावरुणम्। गृहीते तु तस्मिन् तन्मुखं कुशावन्तर्धाय लौकिकेन दुग्धेन श्रीणाति ( का० श्रौ० ९. ६. ९.)। 'श्रयणं च द्रव्यान्तरसंसर्जनेन मृष्टीकरणम्'—इति च तत्रैव भाष्यम्। मन्थिग्रहं तु सक्तुभिः श्रीणाति ( का० श्रौ० ९. ६. १३.)। यत्र यत्र श्रीणातीति श्रूयते, तत्र सर्वत्रैव द्वे दर्भतृणे ग्रहस्योपरि प्रागग्रे उदगग्रे वा निधाय श्रयणं कार्यं भवति। का० श्रौ० ९. ६. १० द्रष्टव्यम्।

—१६— राजन्। "सोमो वै ओषधीनाम् राजा"—इति तै० सं० ६. १. ९. १। "सोमोऽस्माकं ब्राह्मणानाᳫं राजेत्याह ( सं० १. ८. १२.), तस्मात् सोमराजानो ब्राह्मणाः"—इति तै० ब्रा० १. ७. ६। 'सोमो वै रेतोधा रेत एव तद्दधाति"—इति तै० ब्रा० २. ७. ४। "सोमो वै राजा गन्धर्वेष्वासीत्"—इत्याद्याख्यानम् ( ऐ० ब्रा० १. ५. १.)। "प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् सूर्यां सावित्रीम्"—इति च ऐ० ब्रा० ४. २. १.। "निरुक्तपक्षे ज्योत्स्नां सोमाय ददाति। यदुक्तम् 'आदित्यतोऽस्य दीप्तिर्भवति'—

(निरु० २. २. २.)'–इति निरुक्तवृत्तौ दुर्गाचार्यः (१२. १. ८.)। तथाचैवमादिषु प्रजापतिरादित्यः। 'नित्यः कश्चिदर्थः प्रजापतिः स्याद् वायुराकाश आदित्यो वा'–इत्याह मीमांसाभाष्ये शबरस्वामी (१. २. १०.)। ऐतिहासिकपक्षनिरासप्रकारो १२. १. ८–११ खण्डेषु वर्णितो यास्केनापि॥

"द्विजानां वीरुधां चैव नक्षत्रग्रहयोस्तथा।
यज्ञानां तपसां चैव सोमं राज्येऽभ्यषेचयत्"–इति हरि०२५८॥

———

[ २ ]

१८४—१— तृचम्। एतस्यापि तृचस्य ऋषिः स एव; छन्दोऽपि प्रायस्तदेव; प्रथमोत्तमयोः पादयोर्द्व्यक्षरहीनत्वाद् विराट्त्वमपीति विशेषः। "द्वाभ्यां विराट्-स्वराजौ"–इति हि पिं० सू० ६. २०। देवता च प्रायः पूर्ववत्; "त्रयस्तृचा सौम्याः × × × द्वितीयस्योत्तमे सूर्यो नैघण्टुकः (३. २.)"–इति नैगेयवचनात्। "दविद्युतत्या रुचेति व्राताय प्रतिपदं कुर्याद्"–इति च ब्राह्मणम् २. १. ९। व्रातशब्दः समूहार्थः प्रसिद्धः (अम० को० २.५.३९.), इह किञ्चिद्विशेषार्थोऽपि। तथाहि— 'व्रातशब्दस्तु परस्परसखिभूतं यजमानसमुदायं ब्रूते'–इत्याह तद्भाष्ये सायणः। एतास्तिस्र ऋचः ऋक्संहितायां (९. ६४. २८–३०.) च स्तुताः। आस्वपि यज्ञायज्ञीयं सामैव गीतं श्रूयते। तद्यथा ऊह० २१. १. १२—

४ ३ ४ २ ४र २ १
दवाऽ५यिद्यु। ता३ती३याऽरुचा। पा३रायि-
२ २ १ २ १ २ २
ष्टो३भा। ता२३श्रा। हुस्मायि। का३र्षा।
१ र र २ २ १ २ १र
सोमाःशुक्रागवा२शिराउ॥ रा(१)॥ हायि। न्वानो-

होतृ३भायिर्हा३यिताः । आवा२जम् । वाजा२३
या । हुम्मायि । क्रा३मीत् । सायिदन्तोवनुषो२
यथाउ ॥ था(२) ॥ ऋ । धक्सोमा । सू२वास्ता३
यायि । सन्ना२म्मा । नोदा२३यिवा । हुम्मायि ।
का३वायि । पावस्वसूरियो२ दृशाउ (३) ॥ यौ ॥

यद्यपि गानाश्रयाणा मृचां भवत्येव पार्थक्यम् , तथापि न तन्मात्रेण भवेद् गानान्तरत्व मिति च सिद्धान्तितं मीमांसायाम् । तथाहि— "साम्नोऽभिधानशब्देन"–इत्यारभ्य "सामञ्जस्यम्"–इति यावत् एकविंशतिसूत्रात्मकः सप्तमाध्यायीयो द्वितीयः पादः समग्र एवैतद्विषयको द्रष्टव्यः । तत्रारचित मधिकरणञ्चोद्धृतं मया त्रयीपरिचये १००पृ० १६ पङ्क्तितः ।

—६— दविद्युतत्येति यङ्लुगन्तस्य द्योततेः शतरि ङीपि तृतीयैकवचने रूपम् । तत्र द्युतेरभ्यासस्य सम्प्रसारणाभावोऽत्वं विगागमश्च ।

—७— परिष्टोभन्त्या । अस्ति च स्तोभतिरर्चतिकर्मसु पठितम्, निघण्टौ ३. १४. ४ द्रष्टव्यम् ।

—७— "कृपा, कृप् कृपतेर्वा कल्पतेर्वा"–इति निरुक्तम् ६. २. ५ । 'कृपा इत्यस्यापि कल्पितया इत्येव सर्वप्रतीतिः'–इति तत्र दौर्गी वृत्तिः । कृपतिर्नैरुक्तो धातुः, लोके तु लत्वेन भाव्यम् । 'कृपा'-इति निघण्टावर्चतिनामसु च पठितम् ( ३. १४. १२. ) ।

—८— गवाशिराः । “ ‘गवाशिरः’ पूर्ववद् विकारे प्रकृतिशब्दः । गोभिः क्षीरैः आशिरो मिश्रिताः सञ्जाताः । किञ्च ‘गवाशिरः’ गोभिरुदकैर्भिर्मिश्रिताः सञ्जाताः । यद्वा गोभिः स्तुतिलक्षणैर्मन्त्रैर्मिश्रिताः । अत एव शुक्रा दीप्ताः सञ्जाताः ; ‘आशिर मवनयति शुक्रत्वाय ( शत० ब्रा० ४. ३. ३. १९. ; ऐ० ब्रा० ३. ३. ३.)’–इति श्रुतिः”–इति सुषुमेत्यृग्भाष्ये आह सायणः ( १. १३७. १. ) । अत्र लौकिकवाक्येऽपि यदयुक्तं दृश्यते उदकैभिरिति छान्दसं रूपम् , तत्प्रमादिक मेव । सम्भवेच्चैवं सर्वेषां छन्दोमग्नधियां श्रोत्रियाणाम् । अतएवोक्तं केनचित् कविना— “गुरुनटदैवज्ञभिषक्छ्रोत्रियमुखगह्वराणि यदि न स्युः । व्याकरणभीता अपशब्दमृगाः क्व विचरेयुः”–इति । विभिन्नदेशीयेषु जीर्णेष्वपि पञ्चसु पुस्तकेषु एकविधस्यास्यैव पाठस्य दर्शनात् निर्णीतं न चास्त्यत्र पाठान्तरेति । “आशीराश्रयणाद्वाश्रपणाद्वा × × × ‘इन्द्राय गाव आशिरम् ( ऋ० सं ६. ५. ६. १.)’–इत्यपि निगमो भवति”–इति नैरुक्तम् ६. २. ४ । आश्रयण माश्रयः, आश्रपणं च प्रक्षेपः । तथाच सोमरसाश्रयभूतानां सोमरसे प्रक्षेपणीयानां वा दुग्धादिद्रव्याणां वाचक एष ‘आशिर्’–इति । ‘आशिर्’ –इति, ‘आशिर’–इति च समानार्थौ शब्दौ । सायणेन च क्वचित्सोमरसस्याश्रयतया क्वचिदप्रधानरूपप्रक्षेपणीयतया चैतौ व्याख्यातौ । तद्यथा—‘गवाशिरः’–इत्यस्य ( ऋ० सं० १. १३७. १.) व्याख्याने ‘गोभिः’–इति अप्रधाने तृतीयानिर्देशात् प्रक्षेपणीयतया अप्राधान्यं द्योतितम् ; अन्यत्र ( ऋ० सं० १. ५. ५. ) ‘दध्याशिरः’ –इत्यस्य व्याख्याने ‘दध्येव आशीः आश्रयणं येषां सोमानां ते दध्याशिरः’–इतिव्याख्यानेन दध्यादेराश्रयतया प्राधान्यं च व्या-

आङ्गिरसश्च त्रयः पुत्राः''-इति च नैरुक्तम् ( ११. २. ४. )। प्रथममण्डलीयसप्तविंशसूक्तव्याख्याने 'वाजः = बलविशेषः'-इति, ८, ९ ऋग्भाष्ये 'वाजम् = संग्रामम्'-इति चाह सायणः।

१९४—१२— आ। आ उपसर्गः, अक्रमीदितिक्रियया सम्बन्धयितव्यः। 'छन्दसि परेऽपि, व्यवहिताश्च'-इति हि पाणिनिः १. ४. ८१, ८२.। निरुक्ते— ''आ इत्यर्वागर्थे''-इति १. १. ५, ''एतस्मिन्नेवार्थे ( समुच्चयार्थे ) ०—० 'आ'-इति''-इति १.२.२, ''अथाप्युपमार्थे दृश्यते''-इति २. ३. ४, ''अथाप्यध्यर्थे दृश्यते'' -इति च ५. १. ६.।

—,,— अक्रमीत्। सार्वकालिको लुङ् (पा० सू० ३.४.६.)।

—,,— वनुषः। निघण्टौ— वनुष्यति = क्रुध्यति, हनिष्यति च ( २. १२. ८; ४. २. ८. )। ''वनुष्यतिर्हन्तिकर्मा ऽनवगतसंस्कारो भवति''-इति निरु० ५. १. २।

—१३— सीदन्तः। 'सीदन् = अङ्गभाव मुपगच्छन्'-इति निरु० १०.४.८. वृत्तिः। 'स्वसा = सु—असा, स्वेषु सीदतीति वा'-इति निरु० ११. ३. १२।

—१५— यास्कः। निरु० ४. ४. ४।

—१७— स्वस्तये। ''स्वस्तीत्यविनाशिनामास्तिरभिपूजितः सु अस्तीति''-इति नैरुक्तम् ३. ४. ४। ''स्वस्तये = स्वस्त्ययनाय'' -इति च ५. ४. १०।

—१७— सञ्जग्मानः। गमेः सम्पूर्वात् सार्वकालिके लुङि ( पा० सू० ३.४.६. ) 'समो गम्यृच्छिभ्याम्'-इत्यात्मनेपदविधानात् ( पा० सू० १.३.२९. ) लिटः कानजादेशे ( पा० सू० ३.२.१०६. ) द्विर्भावे ( पा० सू० ६.१.८. ) हलादिशेषे ( पा० सू० ७.४.६० )

अभ्यासस्य चुत्वं (पा० सू० ७.४.६२.) गमहनेत्युपधालोपः (पा० सू० ६. ४. ९८.); कानचश्चित्त्वादन्तोदात्तत्वम् (पा० सू० ६. १. १६३.), गतिसमासे कृदुत्तरप्रकृतिस्वरत्वञ्च (पा०सू०६.२.१३९.)।

—१८— पवस्व। निघण्टौ— पवते= गच्छति (२. १४. १०८.); अध्येषणाकर्मसु च पवस्वेति द्वितीयं पदम् (३. २१.)। 'सत्कृत्य दातृभिर्दातुं प्रतिग्रहीतॄणां प्रार्थना अध्येषणेत्युच्यते'—इति निरु० ३. ४. २. दुर्गा०। "अग्नि मीळे = अग्निं याचामि। ईळिरध्येषणाकर्मा पूजाकर्मा वा"—इति निरु० ७. ४. २। 'सनिस्त्वध्येषणा'—इत्यमरः २. ७. ३२। 'सनिः अध्येषणा द्वे यत् गुर्वादेः कचिदर्थे प्रार्थनया नियोजनं तत्र'—इति तट्टीका अमरविवेकः। " 'पवस्व' चर॥" एवं मुद्रणं विशुद्धं भवेत्।

—१९— पाठौ। तत्र 'दिवाकविः'—इति ऋक्संहितायाः। हित इत्यस्य स्थाने यत इति च ऋक्संहितापाठः॥

---

[ २ ]

१९५—१— वचम्। ऋषिः— 'पव० वैखानसा अङ्गिरसः'—इति छन्दोनैगेयः ८. १.। ऋगनुक्रमणिकाया मप्येवम्। 'शतसङ्ख्याका वैखानसाख्याः संहता ऋषयः'—इति ऋ० सं० ९. ६६ सा० भा०। 'वैखानसा वा ऋषयः इन्द्रस्य प्रिया आसन्' इति सा० ब्रा० १४. ४। पुरहन्मा वा एतेन वैखानसो ऽञ्जसा स्वर्गं लोक मपश्यत्'—इति सा० ब्रा० १४. ९। 'स तपोऽप्यत। स तपस्तप्त्वा शरीर मधूनुत। तस्य यन्मांस मासीत् ततो ऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्। ये नखास्ते वैखानसाः।

श्चे वालास्ते वालखिल्याः । यो रसः सो ऽपां मन्तरतः कूर्मंभूतᳪ सर्पन्तं त मब्रवीत्'–इत्यादि तै० आ० १. २२. २, ३ । महा० भा० १.१३ । हरि० ४३५३ । रामा० १. ५१. २७ ; ३. १०. २ ; ३९. ३० ; ४. ४०. ६० ; ४४. ४० । भाग० ३. १२. ४३ । छन्दस्तु गायत्र्येव, तत्राप्यन्त्या निचृद्विशेषणविशिष्टा । देवतापि सोम एव, पूर्वविधानानुसारतः । ऋक्संहितायान्त्वेतास्तिस्र ऋचः ९. ६६. १–३ । एतास्वपि यज्ञायज्ञीयं सामैव गीतं श्रूयते । तद्यथा ऊ० गा० २१. १. १३—

४१ २ ४ २ ४२ ५ २ १<br>
पवा५मा । ना३स्या३तेक्रावायि । वा३जा<br>
२ २ १ २ १ २ २<br>
यिन्त्वा३र्गाः । श्चा२३सा । हुम्मायि । चा३ता ।<br>
१ २ ३२ १ २ १२ २<br>
श्चावंन्तोनश्चवा२श्चवाउ ॥ वा(१) ॥ श्चा । च्छाकोशाम् ।<br>
२ १२ २ १ —१ २ २ १<br>
मा३धूश्चू३ताम् । श्वसा२र्यम् । वारे२३श्चा । हुम्मायि<br>
२ १ १२ २२ १ २<br>
वा्रा२यायि । श्चावावशन्तधा२यितयाउ ॥ या(२) ॥ श्चा ।<br>
१ २ १ २ २ १ —१२ २<br>
च्छासमू । द्रा३मायिन्दा३वाः । श्वसा२ङ्गा । वीना२<br>
२ १ २ २ १ २२<br>
३ये । हुम्मायि । ना३वाः । श्चाम्मन्त्तश्चयो२निमाउ ।<br>
१११<br>
वा३४५ (३) ॥ वौ ॥

यज्ञायज्ञीयसाम्नो निधन मेतत्— 'वा३४५'–इति । निधनं नाम साम्नोऽन्तिमो भागः ; यज्ञायज्ञीयं नाम स्तोत्रसाम, 'उपास्मै'–

–इत्यादिषु नवसु ऋक्षु गेयं भवति, 'तच्चेह समास मितीहैव श्रूयत एतन्निधन मिति याज्ञिकसङ्केतः ।

—८— पूयमानस्य । अयियमपक्षे एषोऽर्थः । 'पवमानो हरित आ विवेश ( ऋ० सं० ८. १०२. १४. )'–इत्यस्या ऋचो व्याख्याया माह 'वायुरेव पवमानः'–इति (ऐ० आर० २.१.१.८.), 'अयं पवमानः'–इति च शत० ब्रा० २. ५. १ । 'पूङ्यजोः शानन्'–इति पा० सू० ३. २. १२८ । पवते = गच्छति निघ० २.१४.१०८ । सर्गाः = उदकानि निघ० १. १२. ८७ ( 'सर्गो वेगः' देव० ) । ऋ० सं० ७. ७. ११. ४ । निरुक्तपरिशिष्टे महाभूतनामधेयेषु च 'सर्गाः'–इति पठितम् ( निरु० १३. २. ११ ) ।

—९— क्यच् । पा० सू० ३.१.८. वा० । निघण्टौ अर्वन्शब्दो ऽश्वनामसु १. १४. २ । अर्वबाहुल्यात् उत्कृष्टार्वस्थानत्वाद्वाभवनामकरण मेकस्य देशस्यार्वेति ( अरव् ) च सम्भाव्यते ।

—११—'वाजिशाला तु मन्दुरा'–इति अम० को० २.२.७ ।

—२१— द्रोणकलशम् । द्रोणकलशं सोमपात्राणि च सोमाधारा भवन्ति । तथाहि 'द्रोणकलशः—द्रुममयः कलशाकारो वैकङ्कतः ; यस्योपरि धाराग्रहा गृह्यन्ते'–इति, 'सोमपात्राणि—(१) नव ग्रहपात्राणि, (२) दश चमसाः, (३) परिप्लवाः, (४) ऋतुपात्रे, (५) जर्णापवित्रे, (६) स्थाल्यश्चतस्रः, (७) पूतभृदाधवनीयौ, (८) उदचनी, (९) सोमासन्दी–इत्येवमादीनि'–इति च कात्या० श्रौ० ८.७.५ सूत्रव्याख्यायां याज्ञिकदेवः । "ग्रहाश्सोमस्य मिमते द्वादश"–इति ऋ० सं० १०. ११४. ५. । "'ग्रहान्' गृह्यन्त एभिरिति ग्रहाः । 'ग्रहवृदृनिश्चिगमश्च'–इति ( पा० सू० ३. ३. ५८. ) करणेऽप् प्रत्ययः"–इति तत्र सा० भा० ।

पुनस्तत्रैवाग्रे— "षट्त्रिंशांश्च चतुरः कल्पयन्तः"–इति (६)। "पूर्वं सामान्येन यज्ञग्रहानुक्त्वेदानीं सर्वग्रहादिपूर्वको यज्ञोऽभिधीयते। 'षट्त्रिंशान्' द्वावुपांश्वन्तर्यामौ, ऐन्द्रावायवादयस्त्रयो द्विदेवत्यग्रहाः, द्वौ शुक्रामन्थिनौ, आग्रयण उक्थ्यो ध्रुवश्चेति त्रयः, ऋतुग्रहा द्वादश, ऐन्द्राग्नो वैश्वदेवश्च द्वौ, त्रयो मरुत्वतीयाः, एको माहेन्द्रः, आदित्यसावित्रौ द्वौ, वैश्वदेवः पात्नीवतो हारियोजन इति त्रयो ग्रहाः ; एवं षट्त्रिंशद्भवन्ति (सङ्कलनया त्वत्र त्रयस्त्रिंशदेव भवन्ति ?)। अत्यग्निष्टोमे पूर्वे षट्त्रिंशद्ग्रहा द्वावंश्वदाभ्यौ दधिग्रहः षोडशीति चेति चत्वारः। एतांश्चत्वारिंशत्सङ्ख्याकान् ग्रहान् 'कल्पयन्तः' सोमेन पूरयन्तः"–इति तद्भाष्यं सायणीयम्। तत्राग्निष्टोमीयेषु त्रयस्त्रिंशद्ग्रहेषु उपांश्वादयश्चतुर्विंशतिः प्रातस्सवने, मरुत्वतीयादयश्चत्वारो माध्यन्दिनसवने, आदित्यादयः पञ्च तृतीयसवने गृह्यन्त इति विवेकः। ग्रहग्रहणादिमन्त्रास्तु वा० सं० ७-८-अध्याययोर्यथाक्रमेणैव श्रुताः, तद्ब्राह्मणे तु ९-१०-अध्याययोर्विहिताश्चेति।

(१) कात्यायनभाष्योक्तानि नव ग्रहपात्राणि— अन्तर्यामादीनां ध्रुवान्तानां प्रातस्सवनिकानां धाराग्रहाणां पात्राण्येव विवक्षितानि। तथाहि— 'उन्नेता आधवनीयकलशादुदञ्चेन सोममादाय यजमानहस्तस्थिते होतृचमसे निग्राभ्यास्वासिञ्चति, ततो यजमानस्ता निग्राभ्याः पवित्रे द्रोणकलशस्योपरि उद्गातृभिर्विस्तार्य धृते आसिञ्चति सन्ततम्। ततः सन्ततं स्रवन्त्या धारायाः सकाशाद् ध्रुवपर्यन्तान् ग्रहान् गृह्णाति'–इति, 'सन्ततं स्रवन्त्याः धारायाः शेषा मन्तर्यामादीनां ध्रुवपर्यन्तानां ग्रहण सुक्तम्'–इत्यादि च का० श्रौ० ९. ५. १७, ९. ६. १ सूत्रयोर्व्याख्याने

याज्ञिकदेवः । इमानि च पात्राणि प्रादेशपरिमितान्युर्द्धानि मध्यसङ्कुचितानि उलूखलाकाराणि वैकङ्कतानि भवन्ति ( का० श्री० ६. १. १४. ) ।

(२) दश चमसाः— सोमपानपात्राणि । 'चमसो देवपानः' –इति ऋ० सं० १०. १६. ८ । 'औदुम्बरेण चमसेन चतुःस्रक्तिना'–इति शत० ब्रा० ७.२.११.२ । 'दश चमसान्त्सहृन्तानधः' –इति का० श्री० ८. २. २२। 'त्सरुमतः'–इति च मानवसूत्रम् । तथाच मुष्टियुक्तानि । न्यग्रोध-रोहितक-पर्णान्यतमकाष्ठनिर्मितानि। होतुः, ब्रह्मणः, उद्गातुः, सुन्वतः, प्रशास्तुः, ब्राह्मणाच्छंसिनः, पोतुः नेष्टुः, आग्नीध्रस्य, अच्छावाकस्येति दश । कात्या० श्री० ( ८. ८. २५ ; १२. १३.) भाष्यं द्रष्टव्यम् ।

(३) परिप्लवाः— चतस्रः स्थाल्यः। परिप्लवेति यौगिकी सञ्ज्ञा। सा हि द्रोणकलशमध्ये निहिता सती लघुत्वात् परि समन्तात् प्लवते । तया च द्रोणकलशात् सोमरसस्य ग्रहणं क्रियते, पूतभृतश्च सर्वत्रापि आयनोन्नयनसम्भरणादौ सोमो नीयते। दण्डरहिता वारणी चैषा भवति। 'सम्भरणी'–इति चास्या एव नामान्तरम्। स्रुचः पुष्कर मिव पुष्करं यस्या इति विग्रहतः खल्वियं 'स्रुक्पुष्करा'–इत्यप्युच्यते ( का० श्री० ८.२.१५. ) ।

(४) ऋतुपात्रे— स्रुक्पुष्कराकारे, अग्रे मूले च मुखं ययोः तादृशे द्विमुखे च, श्रीपर्णीद्रुमविकारे अश्वत्थकाष्ठनिर्म्मिते वा भवतः ( का० श्री० ८.२.१३. ) ।

(५) ऊर्णापवित्रे— जीवन्मेषाणां श्वेतरोमग्रथितसूत्रनिर्मिते सोमरसपावनार्थे भवतः। तत्रैकं यजमानस्यारत्निमात्रम्, तदेव द्रोणकलशे स्थाप्यते; अथापरं प्रादेशमात्रम्, तदेव परिप्लवायां

युज्यते। तदेतद् द्वितीय मूर्णापवित्रं भवतुरभयतोदश मिति दशापवित्रं चोच्यते ( का० श्रौ० ९, २. १६, १७. )।

(६) स्थाल्यश्वतस्रः— 'आग्रयणोक्थ्यादित्यध्रुवाणाम्'—इति का० श्रौ० ९. २. १४ सूत्रव्याख्यायां याज्ञिकदेवः।

(७) पूतभृद्-आधवनीयौ— पूतं सोमं बिभर्त्तीति पूतभृत्। एतत्संज्ञकः पृथुमुखो महाकलशो भवति। आधवनीयश्च तद्रूप एव; आधूयते प्रक्षाल्यते सोमोऽस्मिन्नित्येव तत्र प्रकृतिप्रत्ययगतोऽर्थविशेषः ( का० श्रौ० ९. २. २०. )। यज्ञे यद्यपि आधवनीयकुम्भस्यैव प्राथम्यम्, तथापि 'अल्पाच्तरं ( पूर्वम् )'—इति शब्दानुशासनाद् ( पा० सू० २. २. ३४. ) द्वन्द्वे तस्य परप्रयोगः पूतभृदाधवनीयाविति।

(८) उदञ्चनी— पूतभृदाधवनीययोः कुम्भयोः सोमोदकग्रहणसाधनपात्रभूतौ जलभाण्डविशेषौ। का० श्रौ० ९. २. २१; ९. ६. १५; १०. ५. १. भाष्याणि द्रष्टव्यानि। 'उदकोऽनुदके'—इति पा० सू० ३. ३. १२३। 'घृतोदञ्चनमेतद् भाण्डम्। अनुदके किम्? उदकोदञ्चनः'—इति तत्र दीक्षितः ( सि० कौ० )।

(९) सोमासन्दी— "औदुम्बरी मासन्दीं नाभिदघ्ना मरत्निमात्राङ्गी मूता माहरन्ति चत्वारः"—इति सूत्रम्। "अध्वर्य्वादयः आसन्दी मञ्चिका, तां सोमस्यासादनार्थं शकटसमीपे आहरन्ति। 'औदुम्बरीम्' उदुम्बरवृक्षावयवैः काष्ठैर्निष्पादिताम्, 'नाभिदघ्नाम्' नाभिः प्रमाणं यस्याः सा नाभिदघ्नी इति प्राप्ते छान्दसष्टाप् प्रत्ययः नाभिप्रमाणपादयुक्ताम्, 'अरत्निमात्राङ्गीम्' अरत्निमात्राण्यङ्गानीषोपलक्षणानि यस्याः, 'ऊताम्' मुञ्जरज्ज्वा व्यूताम्। सौत्रामण्यां हि श्रूयते 'मुञ्जविवयना भवति'—इति ( शत० ब्रा० १२.

८. ३. ६.) । तत्र चाचार्येणोक्तम् ( १८. ४. ७. ) 'सोमासन्दीवत्' –इति । एतच्च तदैवोपपद्यते यदा चत्र आसन्दी मुञ्जरज्वा व्यूता भवतीति; अरत्निमात्राङ्गीति शाखान्तरात्"–इति तद्वृत्तिः । "अभिमृशत्येनां वरुणस्य ऋतसदन्यसीति ( वा० सं० ४. ३६. )"–इति सूत्रम् । 'अध्वर्युर्हस्तेन स्पृशति'–इति तद्वृत्तिः । "कृष्णाजिन मस्या मास्तृणाति वरुणस्य ऋतसदन मसीति ( वा० सं० ४. ३६. )'–इति सूत्रम् । 'प्राग्ग्रीव मुत्तरलोम कृष्णमृगचर्म'–इति तद्वृत्तिः । "तस्मिन्त्सोमं निदधाति वरुणस्य ऋतसदन मासीदेति ( वा० सं० ४.३६.)"–इति सूत्रम् । 'तस्मिन्नासन्द्या मास्तीर्णे कृष्णाजिने सोमं निदधाति वासोवद्ध मेव स्थापयति'–इति च तद्वृत्तिः ( का० सू० ७. ९. २७–३०. ) ।

तिष्ठतु प्रासङ्गिकवर्णनम् । अथेह कोश मित्यस्य द्रोणकलश मिति व्याख्यान मधियज्ञ मेव । "कोशः कुष्णातेर्विकुषितो भवत्यय मपीतरः कोश एतस्मादेव । सञ्चय आचितमात्रो महान् भवति"–इति नैरुक्तम् ५. ४. ८ । " 'विकुषितः' स विविधं कुषितो 'भवति' चर्मकोशः शुषिरत्वात् । 'अय मपीतरः' द्रव्यकोशः 'एतस्मादेव' कुष्णातेः । 'सञ्चयः' सञ्चयकोषः । स हि 'आचितमात्रः' मात्राभिः मात्राभिः आचितो 'भवति' महत्त्वात्" –इति तत्र दौर्गी वृत्तिः ।

१८५—१५— अच्छा इति 'निपातस्य च (पा० ६.३.१३६.)' –इति दीर्घः । "अच्छाभेराप्तु मिति शाकपूणिः"–इति निरु० ५. ४. १० । 'अच्छेत्येष शब्दो ऽभेरर्थे भवति; आप्तु मिति योऽर्थ उक्तः स्यात्, स एवार्थः अच्छेत्यनेनोक्तो भवति । एवं शाकपूणिः आचार्यो मन्यते'–इति दु० ।

१८५—१५— अव्यये। "अतिरोमाण्यव्यया"–इति ऋ० सं० १. १३५.६। "अव्यया— अव्ययानि, अच्छिन्नानि रोमाणि; पवित्र-सम्बन्धीनि अविरोमाणि। यद्वा, अव्यया— अविमयानि। मकारो लुप्यते। तादृशानि रोमाणि, अतिक्रम्य, पात्राद् गच्छन्तीति शेषः"–इति सायणीयं तद्व्याख्यानम्। अव्यय मिति महत आत्मनो नामधेयेषु च पठितं निरुक्तपरिशिष्टे (१३. २ ११.)। "तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः"–इति मु० उ० १. १. ६। "ज्योतिरव्ययः"–इति श्वेता० उ० ३. १२। "मनश्चावयवैः सूक्ष्मैः सर्वभूतकृदव्ययम्"–इति म० सं० १. १८।

—१६ — वारे। 'वारवन्तम्०—०वालवन्तम्'–इति निरु० १. ६. ६। 'वालम् पर्व, वृणोतेः; (वाल मिवाणुत्व)'–इति निरु० ११. ३. १०। "अव्यो वारैः परिपूतः"–इति ऋ० सं० ८. २. २। 'अवेर्मेषस्य वारैः वालैः परिपूतः'–इति तत्र सा० भा०। "अध्वर्युः पुरस्तादुपकल्पयेत— अधिषवणं चर्म, अधिषवणे फलके, द्रोणकलशम्, दशापवित्रम्, अद्रीन् (ग्रावाणः), पूतभृतं च, आधवनीयं च, स्थालीम्, उदञ्चनम्, चमसं च"–इति ऐ० ब्रा० ७. ५. ६। दशापवित्रपरिचयस्तूक्त एव (२०० पृ० १ पं०)। 'निवहावसरौ वारौ'–इति च अम० को० ३. ३. १६१।

-१७—ऋरमादेशः। "असृग्रम्— सृष्टवानस्मि। असृग्रम् = असृजम्। सृज विसर्गे। लटो मिप्। तुदादिभ्यः शः। 'बहुलं छन्दसि (पा० ७. १. ८.)'–इति अत्र विकरणस्य रुडागमः। जकारस्य गकारः। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः (पा० ६. ४. ७१.)'–इत्यडागम उदात्तः। सतिशिष्टत्वात् स एव शिष्यते"–इत्यपि

ऋ० सं० १. ९. ४ सा० भा० । "प्राक्षग्रम् = प्रगच्छन्ति"–इति च ऋ० सं० ८. १७. १. सा० भा० ।

—१८— अङ्गु०—० तत् । निघ० २. ५. ७ । निरुक्ते—'धीतिभिः = कर्मभिः २. ७. २ ; ११. २. ४ ; १२. २. १५ ; धीतिः = प्रज्ञा इति १०. ४. ४ ; १३. ३. ३ । धीतयः = 'धीयमानाः पीयमानाः'–इति च ऋ० सं० ८. २०. ४. सा० भा० ।

—१९— अवावशन्त । अवावशन्त = शब्दयन्ते इति च ऋ० ८. ८०. २ सा० भा० । समवावशीताम् = संस्तूयेते इति निरु० १२. १. ३ ।

—२०— इन्दवः । "इन्दुरिन्धेरुनत्तेर्वा"–इति निरु० १०.४.४ । 'इन्धेर्दीप्त्यर्थस्य उनत्तेर्वा क्लेदनार्थस्य उभय मपीन्दावुपपद्यते चन्द्रमसि'–इति तद्वृत्तिः दु० । "एतान्यह्नविभांज्जि वेनो ऽसुनीतिऋत इन्दुः"–इति निरु० १०. ४. ५ । इन्दुरिति आदित्यार्थः आत्मार्थश्च निरु० १३. २. ११,१६, १७ द्रष्टव्याः । निघण्टौ—उदकम् १. १२. ८४ ; यज्ञः ३ १७. १३ ; चन्द्रमाः ५. ४. २७ ।

—२१— समुद्रम् । समुद्रः = अन्तरिक्षम् निघ० १.३.१५ । "तत्र समुद्र इत्येतत् पार्थिवेन समुद्रेण सन्दिह्यते । समुद्रः कस्मात् ? समुद्द्रवन्त्यस्मादापः, समभिद्रवन्त्येन मापः , सम्मोदन्ते ऽस्मिन् भूतानि, समुदको भवति, समुनत्तीति वा"–इति निरु० २. ३. १ । तत्रैवान्यत्रान्यत्र— समुद्रः = मेघः १०. ३. ८ ; ११. ४. ८ ; आदित्यः १२. ३. १२, १३, १४, आदित्य आत्मा च १३. २. ११, १७ । ब्रह्मलिंगपि सर्वविद्यत्वात् समुद्र उच्यते "समुद्रोऽसि विश्वव्यचाः"–इति ता० ब्रा० १. ४. १० ।

१९६—२— त्वहम् । निघ० ३. ४. ५ ।

१८६—३— यद्यपि निघण्टौ ऋतशब्दस्य उदकम्, धनम्, सत्यम्, अन्तरीक्षस्योदकदेवश्चेति चत्वारो ऽर्था दृश्यन्ते, यज्ञार्थं ऋतशब्दस्य प्रोक्त एवासक्तन्निरुक्ते (६. ४. ७; ८. २. ३; ८. ३. ४.), किन्तु 'ऋतस्य योनिः'–इति तु निघण्टावुदकनामस्वेव पठितम् (१. १२. ७०.)। निरुक्ते आदित्यवाचक आत्मवाचकश्च स शब्दः (१३. २. ११.)।

—४— अन्यतोऽत्तम् (ऋ० सं० १. १२२. ८.) "गमेश्छान्दसे लुङि, मन्त्रे घसेत्यादिना (पा० सू० २. ४. ८०.) च्लेर्लुक्, गमहनेत्युपधालोपः (पा० सू० ६. ४. ९८.)"–इति।

१८६—१२— कौ०—०तः। यद्यपि गानग्रन्थेषु "संहिता पदप्रकृतिः (ऋ० प्राति० २. १. १.)"–इति, "परः सन्निकर्षः संहिता (पा० १. ४. १०९.)"–इति च लक्षणे न घटेते; साम्नां पदपाठाभावात्। तथा 'पदप्रकृतिः संहिता, पदप्रकृतीनि सर्वचरणानां पार्षदानि'–इति निरुक्तोक्तिश्च (१.६.१.) न तत्र समन्वयते, किन्तु 'वर्णाना मेकप्राणयोगः संहिता (का० प्राति० १. १५८.)'–इति लक्षणं तु घटत एव; अपिवा वैदिकपरम्पराप्रसिद्धिरेवात्र बहु मन्यते ऽस्माभिः। वस्तुतः साम्नां संहितात्वं संहितोपनिषदादौ श्रूयत एव। तद्यथा— "बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति ताण्ड्यः"–इति (ऐ० आ० ३. १. ६.)। मनुसंहितायां च स्मर्यते— "साम्नां (संहितां) वा सरहस्यानां (११. २६२.)"–इति। तत्र संहितेति सामवेदीयार्चिकापरनामच्छन्दस्संहिताया गानात्मकचतुर्ग्रन्थानां तदतिरिक्तानां महानाम्न्यादीनां च ऋक्स्तोभसामात्मिकानां सर्वेषा मेव सामवेदीयमन्त्राणां बोधो भवति; प्रकरणात्। तथाहि—

"ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ।
साम्नां वा सरहस्यानां सर्वपापैः प्रमुच्यते ॥
यथा महाह्रदं प्राप्य क्षिप्तं लोष्टं विनश्यति ।
तथा दुश्चरितं सर्वं वेदे त्रिवृति मज्जति ॥
ऋचो यजूंषि चान्यानि सामानि विविधानि च ।
एष ज्ञेयस्त्रिवृद् वेदो यो वेदैनं स वेदवित् ॥"-इति ।

—१३— आविर्गानम् । कयानश्चीत्यादिषु त्रिषु योनिगानेषु 'काऽऽया'-इति-स्तोत्रियसाम्नि च 'हाइ'-इत्यादीनां प्रायः-सर्वसामस्थायिनां पदस्तोभानां विद्यमानत्वे ऽपि वाक्यस्तोभगीतेः सम्मिश्रणादर्शनादेषा माविर्गानत्वम् । तथाहि सामतन्त्रभाष्योपक्रमे— "आविर्गानं स्तोभहीनम्"-इति । वाक्यस्तोभगानमिश्रणशून्य मिति तदर्थः ।

—१४— गेय मिति आदिगानग्रन्थस्य सञ्ज्ञा यौगिकी । तदुत्तरग्रन्थस्यारण्ये ऽध्येयत्वेनारण्यगान मिति, तदुत्तरयोश्च द्वयोः ऊहनान्वितत्वाद् ऊहगान मूह्यगानं चेति अस्ति समाख्याविशेषतः प्रसिद्धिः ; आदिगानस्य तु तन्नास्तीति गेय मित्येव नामधेयं सिद्धं निर्विवादम् । ऊहोह्यनामकयोस्तृतीयचतुर्थगानग्रन्थयोः श्रुतानां रथन्तरादिसाम्ना मिह योनिगानानि सन्तीति योनिगान मिति चास्य समाख्यान्तरम् । गुर्जरदेशीयाः प्रायः स्तोभगानप्रिया भवन्तीति, ब्रह्मयज्ञपाठ्यादिनित्यप्रयोजनीयानां साम्ना मध्ययनं पूर्वं कार्य मिति धिया वा, अरण्यगानग्रन्थ मेव प्रथम मध्यापयन्ति, तत इम मिति गेयगानस्यैव 'वेगानम्'-इति च सञ्ज्ञान्तरम् । 'द्वि' इत्येव हि गुर्जरभाषायां 'बे'-इति व्यवह्रियते । 'वेयगानम्'-इति च तस्यैवापभ्रंश-नाम ।

१०६—१४— सामत्रयम्। तत्र प्रथमद्वितीययोः साम्नोर्नाम वाचस्सामेति, तृतीयं खलु प्रसिद्धं वामदेव्यम्। तथाहि — 'वाचस्सामनी द्वे महावामदेव्यं तृतीयं, वामदेव्यं वा'—इति आर्षे० ब्रा० १. १९। एषां त्रयाणा मेवाश्रिभूता ऋक् तु छन्दआर्चिकग्रन्थे (२प्र० २अ० ३द० ५ऋक्) पठिता। ऋक्संहिताया मपि (४. ३१. १.) सा दृश्यते। सैषा ऋक—

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
"कया नश्चित्र आ भुवदूती सदावृधः सखा।
२ ३ १ २ ३ २
कया शचिष्ठया वृता॥"

१९७—६— स्तोत्रियम्। अत्र त्रीणि वामदेव्यसामानि; तत्प्रथमं तु योनिग्रन्थे श्रुतम् (गे० गा० ५. १. २५.), तदेवेह पुनरुक्तम्; उत्तरयोर्ऋचोरपि तत्स्वरेणैव गानद्वय मिति सामत्रयात्मक मेकं स्तोत्रियं सम्पन्नम्। तथा चैषां त्रयाणां वामदेव्यसाम्ना मेकत्वेनैकं नाम वामदेव्यस्तोत्रियम्; महावामदेव्यसाम चास्यैव समाख्यान्तरम्।

"अपो वा ऋत्वग्र मार्च्छत्, तासां वायुः पृष्ठे व्यवर्तत, ततो वसु वामᳪ समभवत्, तस्मिन् मित्रावरुणौ पर्यपश्यतां, तावब्रूतां वामं मयां इदं देवेष्वाजनीति, तस्माद् वामदेव्यम्"—इति वामदेव्यनामनिर्वचनम् (ता० ब्रा० ७. ८. १.)। वामदेवेन दृष्टं साम वामदेव्यम्; 'वामदेवाड् ड्यड्ड्यौ (पा० ४. २. ९.)'—इति हि व्याकरणम्। एतदाश्रिभूतस्य तृचस्य च ऋषिर्वामदेव एव। तथाहि ऋग्भाष्ये सायणः— 'कया न इति ०—० वामदेवस्यार्षं मैन्द्रं गायत्रम्। अभी षु ण इत्येषा पादनिचृन्नाम गायत्री'—इति। "यत् कवतीषु तेन प्राजापत्यम्, को हि प्रजापतिः ०—०;

यद्गायत्रीषु तेनाग्नेयम्, गायत्रच्छन्दा ह्यग्निः, यत् पृष्ठेषु न्यदधु-स्तेनैन्द्रꣳ, सर्वाणि हि पृष्ठानीन्द्रस्य निष्केवल्यानि ; यन्मैत्रा-वरुणो ऽनुशंसति, तेन मैत्रावरुणम् ; यद्बहुदेवत्य मुत्तमं पदं, तेन वैश्वदेवम्"–इति ता० ब्रा० ७, ८, ३–७। तदित्थं नाम-निर्वचनच्छन्दोदैवतनिर्णयाः सम्पन्नाः। "वामदेव्येनानुष्टुवन्ति शान्त्यै"–इति (ता० ब्रा० ७, ९, २.)। एतेन शान्तिकर्म-ण्यस्य विनियोगश्च विज्ञातः। "ध्रुव आसीनो वामदेव्येनोद्गायेत्" –इति तत्रैवासननियमः। "यथाङ्कुली पुत्रान् सन्दश्यासच्छिन्दती हरति, यथा वातोऽप्सु शनैर्वाति"–इति च तत्रैव गानप्रकारो-पदेशः। 'अङ्कुली = मार्जारी'–इति तत्र सायणभाष्ये। "वार-वन्तीयं वा (गे० गा० १. १, ३०.), वामदेव्यं वा (गे० गा० ५. १, २५.), शुद्धं वा (गे० गा० ३, १ १५.), एतेषा मेकं पशुकामाय सन्धिं कुर्यात्"–इति (ता० ब्रा० ९.१.२२.) चास्य सन्धिसामत्वम्।

अथ तत्स्तुतिः— "यो वै सत्रस्य सद्म वेद, सद्म भवति ; वाम-देव्यं वै साम्नां सद्म"–इति (४. ८, १०.), "एते वै पूर्णात् पूर्ण मभ्युत्तिष्ठन्ति, ये वामदेव्येन स्तुत्वोत्तिष्ठन्ति ; अन्तरिक्षं वामदेव्य मन्तरिक्षेणेदं सर्वं पूर्णम्"–इति (१५.१२.४,५.) च सामब्राह्मणम्। "उपहूतं वामदेव्यꣳ सहान्तरिक्षेण"–इति तै० ब्रा० ३, ५. १३. १। "उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह, पशवो वै वाम-देव्यं पशूनेव सहान्तरिक्षेणोपह्वयते"–इति तै० सं० २, ६, ७. २। पश्यतु तावत् यदिदं ब्राह्मणग्रन्थीयं वचनम्, तदेव मन्त्रः ; यच्चेदं मन्त्रग्रन्थीयम्, तदेव ब्राह्मणमिति। अत एवोक्तं वान्त-स्वरूप एष वेदस्त्वित्तिरिणा गृहीत इति। अथाम्नायशनै

श्रूयते— "वामदेव्य मभिगायत उद्ध्रियमाणे, अन्तरिक्षं वै वामदेव्यम्, अन्तरिक्ष एवैनं प्रतिष्ठित माधत्ते; अथो शान्तिर्वै वामदेव्यं, शान्त मेवैनं पशव्य मुद्धरते"—इति तै० ब्रा० १. १. ८. २। 'वामदेव्यस्योपद्रवशान्तिकरत्वात् पशुप्राप्तिहेतुत्वाच्च एन मुद्ध्रियमाण मग्निं शान्तं पशुसाधनं च कृत्वोद्धरति'—इति तद्भाष्ये सायणः।

'वामदेव्यं मिथुने प्रोतम्'—इति च रहस्यम् (छा० २.१३.२.)।

अस्याश्रयभूता ऋचस्तु उत्तरार्च्चिके श्रूयन्ते। ता इमाः—

१२ ३१ २२ ३२ ३१ २३ १२ २ ३
"कया नश्चित्र आ भुवदूती सदावृधः सखा। कया

१ २ ३२ १ २ ३१ २२३ १ २
शचिष्ठया वृता॥ कस्त्वा सत्यो मदानां मंहिष्ठो

२ १ ३ ३१ २ ३ २ ३ १२ ३ २उ २
मत्सदन्धसः। दृढ़ा चिदारुजे वसु॥ अभी षु णः

१२ ३१ २ ३२ ३१२ ३१२
सखीना मविता जरितॄणाम्। शतम्भवास्यूतये॥"

इमा एव ऋचः कवत्य उच्यन्ते। आसु रथन्तरसामापि गीतं भवति (त्रयीपरिचये १०० पृ० १६ पं०)। तच्च गानम् ऊहे १. २. ९। स्वारसौपर्णं नाम सामान्तरं चात्र गीयते। तदपि ऊहे एवेति (१०. १. ८.)।

१९८—१— द्वितीयछचे। माध्यन्दिने सवने एकः पवमानः, चत्वारि पृष्ठस्तोत्राणि भवन्ति। तत्र पवमाने त्रीणि सूक्तानि,— उच्चा ते जात मित्येकं सूक्तम् (उ० आ० १. १. ८.), पुनानः सोमेति द्वितीयं सूक्तम् (उ० आ० १. १. ९.), प्र तु द्रव परिकोश मिति तृतीयं सूक्तम् (उ० आ० १. १. १०.); पृष्ठस्तोत्रेषु अभि त्वा शूरेति प्रगाथरूपं प्रथमं सूक्तम् (उ० आ० १. १. ११.),

कया नश्चित्र इति द्वितीयम् ( उ० आ० १. १. १२. ), तं वो दस्म मृतीषह मिति तृतीयं प्रगाथरूपम् ( उ० आ० १. १. १३. ), तरोभिर्वो विददसु मिति ( उ० आ० १. १. १४. ) प्रगाथरूपं चतुर्थं सूक्त मिति। तदेवं माध्यन्दिनसवने प्रयोज्येषु चतुषु आज्य-पृष्ठस्तोत्रेषु द्वितीयं मैत्रावरुणपृष्ठ मिति व्यपदिष्टं यत् महा-वामदेव्याख्यं स्तोत्रियं साम, तदाश्रयभूत मिदं सूक्तम्। तदिद मृक्त्रयात्मक मिति तृच मुच्यते, ऋक्संहितायाञ्चैतत् ४.३१.१।

—१४— पाठौ। पूर्वः सामवेदीयोऽपर ऋग्वेदीयः। अथास्य गुरुपरम्परोपदेशलब्धं व्याख्यानान्तर मपीह दर्शयामः—

तत्र प्रथमा। 'चित्रः' चायनीयः पूजनीयः ( निरु० १२. २. ५. ), ईश्वरः 'कया' प्रज्ञया सह 'नः' अस्माकम् 'आ' अधि अन्तःस्थः ( निरु० ५.१.६. ), 'भुवत्' ( लेटोरूपम् ) भवति ? अत्रोत्तरम्— 'ऊती' ऊत्या ( पा० ७. १. ३९. ) अवनप्रज्ञया ( निघ० ४. २. १५; निरु० ५. १. ३. । 'अवनं— रक्षणं तर्पणं वा'—इति दे० ) इति निघ० वृ०। 'कया' क्रियया ( अस्म-न्निष्ठया ) [ अनुकूलीभूतः सः ] 'सदावृधः' नैरन्तर्येण अस्माकं वर्द्धयिता 'सखा' मित्रः 'भुवत्' भवति ? अत्रोत्तरम्— 'शचिष्ठया' कर्मिष्ठया प्रज्ञावत्तया च ( निघ० २. २. २२; ३. ९. ८; निरु० १२. ३. ८. ) 'वृता' वर्त्तनेनेति। ईश्वरः सदैवास्माक मन्त-रस्थोऽस्मान् पाति, अस्माकं कर्मिष्ठभावदर्शनेन प्रज्ञावत्तयापि प्रीतः सखिभाव मुपगच्छन् वर्द्धयति चेति भावार्थः। अलसभावो मूढभावश्चास्माक मनिष्टकराविति चेहोपदेशः फलितः ॥ १ ॥

अथ द्वितीया। 'मदानां' मादयितॄणां पदार्थानां मध्ये 'कः' कतमः 'मंहिष्ठः' पूजनीयः 'सत्यः' सत्यभूतश्च 'त्वा' त्वाम् 'मत्सरत्'

मादयति ? अत्रोत्तरम्— 'अन्धसः' अन्नस्य, रसः इति शेषः [सम्बन्धिश्रुतेः सम्बन्धिन आक्षेपः सुतराम्]। अन्नमद एव पूजनीयो यथार्थश्च; निरन्नस्य हि मदान्तरग्रहणं क्षोभायैव भवति, नापि हि मदान्तरस्य अन्नरसस्येव जीवनहेतुत्वान्नित्य-सेव्यत्वं विद्यते । तदित्थं जीवनधारणायानन्योपायोऽन्नरसमद मेवोपभुञ्ज्यान्नान्य मपूज्य मनित्यञ्चेतीहोपदेशः फलितः । 'रुजे' सर्वविधशारीररोग मपनोदयितुं 'चित्' अपि 'दृढा' सुनिश्चित-फला 'आ' का ? का चिकित्सा ? इति भावः । अत्रोत्तरम्— 'वसु' अग्निः, जाठराग्निवर्द्धनं हि प्रायः सर्वरोगोपशमनं भवति ; यद्वा 'वसु' धनम्, धन मपि हि सद्व्ययितं बहुरोगोपशमनाय भवति । तदेवं जाठराग्निं धनञ्च यत्नतो रक्षेद् वर्द्धयेच्चेतीहोप-देशः फलितः ॥ २ ॥

अथ तृतीया । हे चित्र ! ईश्वर ! 'सखीनां' त्वद्दयालब्ध-सख्यानां 'जरितॄणां' स्तोतॄणां 'नः' अस्माकम् बहूनां त्व मेवैकः 'अविता' । कथम् ? अत्रोत्तरम्— 'ऊतये' अस्मद्रक्षणाय त्वं वस्तुत एकोऽपि विभूत्या 'शतं' [शतशब्दोऽत्र बह्वर्थः] बहुसङ्ख्याकः ; अतोऽस्माकं बहूनामपि 'अभि' अभिमुखः, सर्वानस्मानभिव्याप्य वा 'सु' सुष्ठु 'भवासि' भवसि, विद्यसे इति यावत् । विद्यमानतायाः सौष्ठवञ्च सर्वत्रैकविधत्वम् । तदेवं तस्यैकस्यापि अनेकत्र समभावेन स्थितौ नास्ति सन्देह इतीहोपदेशः फलितः ॥ ३ ॥

———

१९८—१५— छन्नगानम् । "ऋग्विहीनं छन्नगानम्"— इति सामतन्त्रभाष्यमुखबन्धीयलक्षणप्रमाणत एतस्य साम्नश्छन्न-

गानत्वम् ; इह हि वाक्यस्तोभा एव पदस्तोभादिभिर्गीताः, न तु ऋङ्मन्त्रः कश्चिदभिगीतः। वस्तुतः काञ्चिदृच मवलम्ब्य, किञ्चिद्यजुरवलम्ब्यैव वा आर्षं गीतं सामेत्याचक्षते ; "गीतिषु सामाख्या"—इति जैमिनेः शासनात् (२. १. ३६.)। वाक्यस्तोभाश्च नूनं यजूंष्येव ; प्रश्लिष्टपाठत्वेन श्रवणात् (जै० सू० २. १. ३७.)। सामवेदीयार्चिकग्रन्थेषु यथा सामयोनीना मृचां सङ्ग्रहो दृश्यते, सामयोनिभूतानां यजुषाञ्च तथैव स्तोभग्रन्थे ; अपि चार्चिकस्तोभसहितानां गानग्रन्थानां समुदित मेकं नाम सामसंहितेति। तदेव ऋग्यजुस्साममन्त्राणा मिहैकत्र समवायत्वेऽपि साम्ना माधिक्यादेवास्याः सामसंहितेति व्यपदेशः। एव ऋग्वेदीयानां निविन्नैषादीनां यजुष्ट्वेऽपि न ऋक्संहितात्वव्याघातः।

साम्न एतस्य 'उन्नयम्'—इति नामधेयम् ; ऋषिस्तु आदित्यनामा ; यद्यपि छन्दो नास्ति, एतदस्थिभूतानां स्तोभानां यजुष्ट्वात्, तथापि कात्यायनीयवचनप्रामाण्यादनुष्टुबिति केचित् ; आदित्याख्या च देवता ; ब्रह्मयज्ञजपादौ विनियोगश्च दृश्यते। तथाह्यार्षेयब्राह्मणम्—'आदित्यस्योन्नयं तदादित्यात्मेत्याचक्षते'—इति ३. २९। 'उन्नयेत्यस्य आदित्योऽनुष्टुबाख्या'—इति च सुबोधिन्यां ब्रह्मयज्ञपाठपद्धतौ। ब्रह्मयज्ञपाठविधिस्तु गोभिलीयब्रह्मयज्ञसूत्रे द्रष्टव्यम् 'भासं दशस्तोभ मुन्नयम्'—इत्यादि।

—१७— उन्नयामि। चतुर्वेदभाष्यकारो भगवान् सायणाचार्यो नैवंरूपाणां साम्नां भाष्याणि बभाषे, अपि तु ऋङ्मन्त्राणा मेव व्याख्यानानि चकार। अस्मन्मते तु नैतानि सामान्यप्यनर्थकानि भवितु मर्हन्ति ; मन्त्रत्वात्। "मन्त्राः मननात्"—इति हि यास्कः (७. ३. ६.) ; न ह्यनर्थकाणां मननत्वं सम्भवति। तदेवंविधाना

मपि व्याख्यानं नूनं भाष्यकृतां कर्त्तव्यम् । किञ्च व्याख्याता च ऋक् स्तोभादियोगतः सामरूपत्वे प्राप्ते न किं मर्थान्तरता माप्नुते ऽर्थाधिक्यं वा ? तस्मात्तद्विधाना मपि भाष्याणि कार्याणीत्यत्र कास्ति वक्तव्यता । पर महो ! नैतद्विधाना मेकस्यापि भाष्य मस्ति सायणीयम् ; ततस्तेन हि ऋग्भाष्य मेव कृतं, न सामभाष्य मित्युक्तावपि न कञ्चिद्बाधं पश्यामः ।

अथैतस्य साम्न आश्रयभूता ये वाक्यस्तोभाः स्तोभग्रन्थे समाम्नाताः, तेषां पदानि, तत्पदपाठग्रन्थतोऽर्थबोधसौकर्यायेहोद्धृत्य प्रदर्श्यन्ते (२. १०.)—

“उत् । नयामि । आदित्यम् । आ । दित्यम् । प्राञ्चम् । यन्तम् । उत् । नयामि । अहोरात्राणि । अहः । रात्राणि । अरित्राणि । द्यौः । नौः । तस्याम् । असौ । आदित्यः । आ । दित्यः । ईयते । तस्मिन् । वयम् । ईयमाने । ईयामहे । प्रिये । धामन् । न्यञ्चरे । नि । अञ्चरे ।”–इति ।

एष्वेव पदेषु निषादादिस्वरसंयोगात् आर्षं गीतं साम उन्नय मित्याचक्षते ; तदेवेह मुद्रितं त्रयीसङ्ग्रहे ।

अथास्मन्मते त्वेतस्य साम्नः स्यादिदं व्याख्यान मधिदैवतम्— ‘होयि’ विश्वेदेवाः ; तान् स्मरामीति शेषः । ‘उन्नयामि’ ऊर्ध्वं प्रापयामि । कं देशमित्याह—‘आदित्यम्’ रसाना मादानकर्त्तारं,

सर्वेषां भूतानां प्रणेतारं, सदोद्यन्तं, सूर्यम्; सूर्यलोक मिति यावत्। किं वस्त्वित्याह—'प्राञ्चं यन्तम्' पूर्वाभिमुखगामिन मिमं लोकम्, तस्य मात्मान मिति यावत्। 'उन्नयामि'—इति पुनर्वचनं स्वसङ्कल्पदाढर्यार्थम्। पुनरपि विश्वान् देवान् स्तोतु-मुच्यते 'हौयि'—इति। 'द्यौः' असौ द्युलोकः, अन्तरीक्षरूप-समुद्रोपरि वर्त्तमानं सूर्यस्थानम्; 'नौः' नौकेव। 'हाउ' एष लोकः, एतल्लोकवास्यस्मद्दृष्टेरिति यावत्। एतस्मीरजगन्मण्ड-लान्तःस्थितस्य सर्वग्रहोपग्रहबन्धनभूतस्य सूर्यस्य गतिराहित्यात्, तत्स्थानस्य नौत्वेन कल्पितस्य द्युलोकस्यापि ताद्दशत्वं सुतराम्; ततस्ताद्दश्यां नावि नास्ति क्षेपण्यादेरपेक्षा; पर मस्ति तु भास-मानाया नावो वातादुरुपवातत इतश्चेतश्च गतिवारणायारित्रापेक्षा; अत उच्यते— तत्र नावि 'अहोरात्राणि' एव 'अरित्राणि'। यथावत्स्थायित्वस्य दार्ढ्यायैवारित्राणां बहुत्व मिष्टम्। 'हौइ' उक्तार्थः। 'तस्यां' नावि आरूढः, 'असौ' सदैवैकत्र स्थितः सदैवो-दितश्च दृश्यमानः 'आदित्यः', 'हाउ' एतल्लोकवास्यस्मद्दृष्ट्या 'ईयते' प्लवते। 'तस्मिन्' आदित्ये 'ईयमाने' प्लवमाने सति 'हाउ' एतल्लोकवासिनः सर्वे एव 'वयम्' 'ईयामहे' प्लवामहे; तत्रैवादित्ये अस्मदावासभूतलोकादीनां सर्वेषा मावद्धत्वादिति भावः। 'ईया-महे' इत्यस्य पदस्य पुनःपुनरुपादान मेतदादिसौरलोकानां निराधारप्लवित्वस्य सत्यत्वप्रतीतिदार्ढ्यार्थम्। इत उत्तरं गीतं हाउवा पदं च हाउसमानार्थम्। आत्मान मुन्नमय्य सूर्यं प्राप्य क्व गच्छामीत्याह—'स्वियचरे' स्वाचरे, अकारोकारमकारात्मक-प्रणवनामप्रतीकोपासनालभ्ये, 'प्रिये', 'धामन्' धामनि, ब्रह्मलोके ब्रह्मण्येव वेति यावत्। निर्वचनं पार्षत्कृतम्॥

अपिवा स्यात् सूर्यस्यापि काचिदावर्त्तगतिः; यथा स्रोतस्वतीषु क्वचित् क्वचित् जलान्यावर्तमानानि दृश्यन्ते, तथैव नभस्समुद्रे स्थितः सूर्योऽपि स्वस्थाने एव घूर्णते; तदेव वर्णित मिह 'ईयते'–इति। किञ्च यथा रथचक्रमध्यस्थस्य नाभेर्घूर्णनकाले तदरासंलग्ननेमेरपि घूर्णन मवश्यम्भावि, तथेहापि एतत्सौरजगच्चक्रमध्यस्थनाभिरूपस्य सूर्यस्य घूर्णने अराऽरूपरश्मिसंलग्ननेमिस्थाना मस्मदावासानां क्षित्यादीनां तदन्वस्मदादीनां च घूर्णन मप्यवश्यम्भाव्येव; तदेवेहोच्यते 'तस्मिन् वय मीयमान ईयामहे'–इति॥

अथोक्तार्थे साधकानि दर्शयामः— "अयं वाव लोको हाउकारो वायुर्हायिकारश्चन्द्रमा अथकारः आत्मेहकारो ऽग्निरीकार आदित्य ऊकारो निहव एकारो विश्वे देवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः स्वरो ऽन्नं या वाग् विराड् अनिरुक्त स्त्रयोदशः स्तोभः सञ्चरो हुङ्कारः"–इति छान्दोग्यब्राह्मणम् (३.१३. १–३.)। तदेवं छन्दोगानां हाउकारादिषु त्रयोदशसु स्तोभेषु योऽय मौहोयिकारः, स खलु विश्वेषां देवानां स्मारक इति लभ्यते। औहोयिकारः, होयिकारः, होकारश्चाभिन्नार्थाः। तथाह्यक्षरतन्त्रसूत्राणि— 'औहौओहोदृभ्यो हो (२. १.)'–इति, 'य (३. ४.)' –इति, 'इ (३. ५.)'–इति च। 'आदित्यः कस्मात्? आदत्ते रसान्'–इत्यादि नैरुक्तम् (२.४.१.), 'उद्यन्, खलु वा आदित्यः सर्वाणि भूतानि प्रणयति'–इति चैतरेयकम् (५. ५. ६.)। सूर्यस्योदयास्तमयाभावबोधिका चैषा श्रुतिः— 'स वा एष न कदाचनास्त मेति, नोदेति; तं यदस्त मेतीति मन्यन्ते, ऽह्न मेव तदन्त मित्त्वाथात्मानं विपर्यस्यते,— रात्री मेवावस्तात् कुरुते ऽहः परस्तात्; अथ यदेनं प्रातरुदेतीति मन्यन्ते, रात्रेरेव तदन्त मित्त्वा-

यात्मानं विपर्यस्यते,—ऽहरेवावस्तात् कुरुते रात्रीं परस्तात्; स वा एष न कदाचन निम्रोचति"–इति ऐ० ब्रा० ३. ४. ६। आथर्वणिका अप्येषा श्रुतिर्गोपथब्राह्मणेऽधीयते (२. ४. १०.) किञ्चित्पाठव्यतिक्रमेण। छान्दोग्यब्राह्मणेऽप्यादित्यस्योदयास्तमयाभावो बोधितो गत्यभावश्च। तद्यथा—"अथ तत ऊर्द्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता। तदेष श्लोकः—'न वै तत्र न निम्लोच नोदियाय कदाचन। देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति। न ह वा अस्मा उदेति, न निम्लोचति, सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद'"–इति ५.११.१–३। सूर्यस्य गतिराहित्ये मानं पूर्वत्र (४४ ऋग्व्याख्याने) चोल्लिखितम्। 'अयं वाव लोको हाउकारः'–इत्युक्तमिहैव (२१४ पृ० ८ पं०)। हा, हाउ, हाउवेति समानार्थानि। तथा छन्दस्तन्त्रसूत्रे—'औहोओहावः'–इति (२.५.), 'हात्'–इति (६.८.) च द्रष्टव्ये। 'तानि शुक्राण्यभ्यतपत्; तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति; तानेकधा समभरत्, तदेतदो३मिति; तस्मादो मो मिति प्रणौत्यो मिति वै स्वर्गो लोक ओ मित्यसौ यो ऽसौ तपति"–इति ऐ० ब्रा० ५. ५. ७। अत्तर मवलम्ब्य सामभिरात्मोन्नयनेनादित्यपुरुषप्राप्तिः प्रश्नोपनिषदि चाम्नाता—"स यद्येकमात्र मभिध्यायीत, स तेनैव संवेदितस्तूर्ण मेव जगत्या मभिसम्पद्यते; त ऋचो मनुष्यलोक मुपनयन्ते; स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमान मनुभवति। अथ यदि द्विमात्रेण मनसि सम्पद्यते, सोऽन्तरिक्षं यजुर्भिरुन्नीयते; स सोमलोकं; स सोमलोके विभूति मनुभूय पुनरावर्तते। यः पुनरेतन्त्रिमात्रेणैवो मित्येतेनैवाक्षरेण परं पुरुष मभिध्यायीत, स तेजसि

सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं ; स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुष मीक्षते । तदेतौ श्लोकौ भवतः—

'तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः (१)
ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते ।
तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्त
मजर ममृत मभयम्परञ्च (२)'–इति"–इति ( ५.३–७. )।

एतत्त्र्यक्षरात्मकस्य ओङ्कारस्य सर्वफलहेतुत्वं च काठा आमनन्ति— 'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्'–इति ( उप० १.२.१६. )। अथेहेमान्यपि श्रुतिवचनानि स्मर्तव्यानि— 'यस्मिन् षडुर्वीः पञ्च दिशो अधिश्रितास्तस्र आपो यज्ञस्य त्रयो ऽक्षराः'–इति अथ० सं० १३. ३. ६ । 'स होवाचैतद्वै तदक्षरं गार्गि ! ब्राह्मणा अभिवदन्त्यस्थूल मनण्वह्रस्वम्'–इत्यादि, 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति'–इत्यन्तं च बृह० उप० ३. ८. ८–११। 'अथ परा यया तदक्षर मधिगम्यते'–इति मु० उप० १. १. ५ । 'येनाक्षरं पुरुषं वेद'–इति च तत्रैव १. २. १३ । भगवद्गीतायाञ्च 'ब्रह्माक्षरसमुद्भवम्'–इति ( ३. १५. ), 'अक्षरं ब्रह्म परमम्'–इति च ( ८. ३. ), 'कूटस्थोऽक्षर उच्यते'–इति च ( १५. १६. )। 'अक्षरं त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः'–इति म० सं० २. ८४ ॥

अथ शारीरपक्षे ऽप्यस्य साम्नो व्याख्यानं स्यात् ; त्र्यक्षरपदस्य हृदयवाचित्वावलम्बनात् । 'तदेतत् त्र्यक्षरं हृदय मिति' –इत्यादिश्चास्ति हि बृहदारण्यकश्रुतिः ( ५. ३. १. )॥

अथाध्यात्मम् – आदित्यशब्द आत्मार्थोऽपि ; 'अय मादित्यो ऽयं मात्मा'–इत्यादि नैरुक्तदर्शनात् ( १३. ३. ३–८. ) । तथाच प्राञ्चं यन्तम् 'आदित्यम्' आत्मानम् उन्नयामि । किंविषया चोन्नतिरिष्टेत्याह— 'प्रिये' 'त्रयक्षरे' दमदानदयात्मके ( बृह० उप० ५.२.१–३.) 'धामन्' धामनि नामनीति यावत् । 'धामानि त्रयाणि भवन्ति, स्थानानि नामानि जन्मानीति'–इत्याह यास्कः ( ९. ३. ७. ) । इह नामार्थोऽभिप्रेतः । प्रियत्र्यक्षरनाम-कार्ये आत्मान मुन्नमयितु मिच्छामीति भावः । अन्यानि हि पदानि पूर्ववद् व्याख्येयानि ॥

तदेतस्मात्साम्नश्चत्वार उपदेशा लभ्यन्ते । ते चेमे—

( १ ) आत्मनः उन्नतिचेष्टा सर्वथैव कर्त्तव्या । तत्र व्यायाम-शुश्रूषादिना हृदयाद्यङ्गस्योन्नतिर्भाव्या, दमदानदयाभिः धर्म्मो-न्नतिः कार्या, ब्रह्मोपासनेन पूर्णोन्नतिश्च साध्येति सङ्क्षेपः ।

( २ ) पृथिव्येषा सदैव प्राङ्मुखी गच्छति, तत एव पृथिवी-स्थानाना मस्माकं सर्वत्रैव सूर्यस्य पश्चिमाभिमुखगमनं पश्चिमस्यां दिश्यस्तञ्च लक्ष्यते ।

( ३ ) अन्तरीक्षसमुद्रे सर्वे ग्रहाः, ग्रहपतिरादित्यश्च प्लव-माना विद्यन्ते । तत्र द्युलोकरूपे नावि आदित्य आरूढः, तत्रैव सर्वे ग्रहा रश्मिरूपरज्जुभिराबद्धाः ; यथा बृहत्काष्ठवाहे नावि उभयतो रज्जुबद्धानि स्थूणादियोग्यकाष्ठानि आबद्धान्यनुगच्छन्ति दृश्यन्ते तथैव । अत्र च नावि बन्धनमात्रे दृष्टान्तो न तु गमने ; गमनसाधनक्षेपण्यादेरिहाश्रुतेः ।

( ४ ) द्युनौकायाः क्षेपण्याद्यभावात् गत्यभावः सूचित एव, स्वादा अरित्रसाहाय्येन त्वस्थाने भ्रमैरत्वस्थघूर्णनमात्रम् ॥

१९९.--३ — लेशगानम् । 'लेशं स्तोभ मृचा सह'-इति सामतन्त्रोक्तं तल्लक्षणम् ।

—४ — नवमं साम । अश्वव्रत मिति एतस्य नामधेयम् । एतस्याश्वव्रतस्य साम्नोऽश्व ऋषिः, वैश्वानरो देवता, अहीनक्रतौ द्वितीयेऽहनि विनियोगः । उत्तराग्रन्थे समाम्नातं कश्चित् तृचं सूक्तं ( ९. २. १२. ), स्तोभपदग्रन्थे आम्नातानि ( २. २१. ) कतिचित् स्तोभपदानि चैतस्यास्यैनि । तान्येतानीह प्रदर्शयामि यथाक्रमम् । तत्रैतत् तत् तृचं सूक्तम्—

२ २ ३ २ ३ १ २ २ १ २
"अभि वाजी विश्वरूपो जनित्रᳪ
३ २ ३ २ ३ १ २ ३ २
हिरण्ययम् विभ्रदत्कᳪ सुपर्णः ।
१ २ २ १ २ ३ १ २र ३
सूर्यस्य भानु मृतुथा वसानः
१ २ ३ १ ३र ३ १ २
परि स्वयम् मेध मृज्रो जजान ॥ (१)
३ २ २र ३ १ १ ३
अप्सु रेतः शिश्रिये विश्वरूपं
१ २ ३ २उ ३ १ २ ३ १ २
तेजः पृथिव्या मधि यत् सम्बभूव ।
३ १ २ ३ १ २ ३ २ ३ १ २ ३
अन्तरिक्षे स्वम् महिमानम् मिमानः
१ २ ३ २ ३ १ २ ३ १ ३
कनिक्रन्ति वृष्णो अश्वस्य रेतः ॥ (२)
३ २ ३ २ ३ १ २ ३ १ २ ३ ३
अयᳪ सहस्रा परियुक्ता वसानः
१ २ ३ २ ३ १ २
सूर्यस्य भानुं यज्ञो दाधार ।

३ १ २ ३ १ २ ३ १ २
सहस्रदाः शतदा भूरिदावा

३ २ ३ १ २र ३ १ २
धर्त्ता दिवो भुवनस्य विश्पतिः ॥ (३)"-इति।

१ १र १ २र
"ह्वौ। ह्वौ। ह्वौ। स्वः। ज्योतिः।

१ २र १ २र ३ २ १ २र १ २र
ज्योतिः। भाः। शिशुः। वाजी। अश्वः। मेध्यः।

१र
स्वर्वते।"--इति स्तोमपदानि।

१९९—'ह्वौ०—०॥९॥'। अस्मिन्नस्थानतसाम्नि प्रथमाया ऋचो गानं यथा सस्वरस्तोभादियोगत उपचित मूह्यनामतुरीयगानग्रन्थे लिखितं दृश्यते, तथैव स्याद् द्वितीयाया अप्यृचस्तृतीयायाश्चेति ध्येयम्। किन्तु 'जाना २३४५'-इत्यन्त मेव प्रथमाया ऋचो गानम्, 'रेता २३४५:'-इत्यन्तं च द्वितीयाया इति विस्पष्टम्।

२०१—१— सूक्तम्। एतेन तृचेन एक एवाग्निर्देवः त्रिस्थानत्वेन वर्णितः। तत्र प्रथमया पार्थिवो ऽय मग्निः, द्वितीयया आन्तरिक्षो वैद्युतः, तृतीयया द्युस्थः सूर्य इति विवेकः। त्रिस्थान एवाग्निर्वैश्वानर इत्याख्यायते। तदत्र 'वैश्वानरः कस्मात्'-इत्यारभ्य 'अय मेव सोऽग्निर्वैश्वानरो निपात मेवैत उत्तरे ज्योतिषी एतेन नामधेयेन भजेते'-इत्यन्तो निरुक्तग्रन्थः (७, ६, ७ ख०) पर्यालोच्यः। इमे एव केशिन उच्यन्ते (निरु० १२, ३, ७,)।

—,,— प्रथमा। दहनवहनपचनानि हि पार्थिवाग्निकर्माण्येव। तदुक्तं यास्केन 'अग्निकर्मणा चैनं स्तौति— दहसीति, वहसीति, पचसीति'-इति (७,६,८,), 'यच्च किञ्चिद् दार्ष्टि-

विषयक मग्निकर्मैव तत्'–इति च ( ७. ३. १. )। 'हव्यनुग्रहो यस्य विषयः, तद्दार्ष्टिविषयकम् ; प्रकाशादि कर्मेत्यर्थः'–इति तट्टीका। अस्या ऋचि ऋज्र इति पाकार्थपदेनास्याः पार्थिवाग्नि-स्तुतिपरत्वं बोधितम्।

१०—श्रुतिः। 'अग्निं वादित्यः सायं प्रविशति' तै० ब्रा० २. १. २. ९।

—११—द्वितीया। 'वैश्वानरो मध्यम इत्याचार्या वर्षकर्मणा ह्येनं स्तौति'–इत्यादि, 'यत्र वैद्युतः शरण मभिहन्ति यावदनु-पात्तो भवति मध्यमधर्मैव तावद् भवत्युदकेन्धनः शरीरोपशमन उपादीयमान एवाय' ( पार्थिवः ) सम्पद्यत उदकोपशमनः शरीरदीप्तिः'–इति चाह ( नैरु० ७. ६. २, ७. )। तदेवमादि-वचनानि संकृत्यैवास्या व्याख्यानं विवेच्यम्।

—१३— श्रुतिः। तै० सं० २. ६. ६, १।

—१५— निरुक्तम्। 'अग्निः पृथिवीस्थानो, वायुर्वेन्द्रो वान्त-रिक्षस्थानः, सूर्यो द्युस्थानः'–इति ७. २. १।

—१७— श्रुतिः। तै० ब्रा० ३. ९. ५. ५।

—१९— तृतीया। 'अथास्य कर्म— रसादानं, रश्मिभिश्च ( रस- ) धारणं, यच्च किञ्चित् प्रवल्हित मादित्यकर्मैव तत्'–इति ( ७. ३. ४. ), 'अमुष्य रश्मयः प्रादुर्भवन्ति ( नैरु० ७. ६. ७. )'–इत्येवमादीनि च वचनानीहालोच्यास्याः व्याख्यानं विवेच्यम्। प्रव-ल्हनं च निर्हृदयं सान्त्वनम्। ऐ० ब्रा० ६. ५. ७. सा० भा० द्रष्टव्यम्। ननु द्युस्थः सूर्योऽप्यस्या ऋचि वर्णित इति स्वीकारे सूर्यस्येति सम्बन्धषष्ठी कथं सङ्गच्छेतेति चेत्, अत्र 'वैश्वानरो यतते सूर्येणेति ( ऋ० सं० १. ९५. ५. ); न च पुनरात्मनात्मा संयतते, ऽन्येनैवान्यः संयतते ? इत इम मादधात्यमुतो ऽमुष्य

रश्मयः प्रादुर्भवन्तीतोऽस्याश्चिंपस्तयोर्भासोः संसङ्गं दृष्ट्वैव भवघत्'–इति ( ७. ६. ७. ) यास्कोक्त मेव समाधान मालोच्यम्।

अथैतत्स्तोभान् व्याख्यास्यामः। हौ ह्वौ ह्वौ एते औह्वोयिसमानार्थाः। औह्वोयिस्तोभः खलु विश्वेषां देवानां स्मारक इत्युक्तम् ( २१४ पृ० )। ह्वोयि ह्वो औह्वोवा इति च तथा। ह्वोई इति गानकृतं रूपम्। वा २३४ इति च वा-स्तोभस्य गानकृतं रूपम्। वा स्तोभ इह आगमः। औह्वो इत्यस्मादुत्तरस्य वा आगम एव; 'औह्वो'-इति हि अक्षरतन्त्रम् १. ३। ए इत्यस्य प्राणोऽर्थः; 'प्राणः स्वर'–इति छा० ब्रा० ३. १३. २। तथाच प्राणरूप मेतत् स्वःस्थं 'ज्योतिः' सूर्यं, सूर्यमण्डलव्यापिनं पुरुषं ब्रह्म वेत्यर्थः, चिन्तयामीति शेषः। 'ज्योतिः' तस्मादेव स्वर्ज्योतिषः समुत्पन्न मिद मग्निर्ज्योतिः 'भाः' भाति। अस्य पार्थिवाग्नेः सूर्यरश्मितः प्रादुर्भावोऽपि वर्णितो निरुक्ते। तद्यथा— 'अथादित्यादुदीचिप्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमय मसंस्पर्शयन् धारयति, तत् प्रदीप्यते, सोऽय मेव सम्पद्यते'–इति ७. ६. ७। अत एव एष पार्थिवोऽग्निः 'शिशुः' इत्युच्यते। 'वाजी' वेजनवान्। भयं चलनं च वेजन मुच्यते। वाजो बल मन्नं च, तद्दानपेक्षः। भुक्तान्नपाचको जाठरो बलहेतुः, उप्ताना मप्यन्नानां पाचकत्वात् अन्नहेतुश्चेत्यय मुच्यते बलवानन्नवांश्च। 'वाजी वेजनवान्'–इति हि निरुक्ते ऽसकृदुक्तम् ( २. ७. ६ ; ३. १. ३. )। वाजमिति निघण्टावन्ननामसु ( २. ७. २. ), बलनामसु ( २. ९. २. ) च पठितम्। 'अश्वः' अशनवान्; अशनन्त्विह व्यापनम्, तद्वांश्चेह माध्यमिकोऽग्निः। तादृशाग्निपूर्णो मेघश्च तन्नामैव। निघण्टौ

मेधनामसु पठितोऽश्वशब्दो ऽप्येतदर्थकः। मेध्यश्च स एव। इह 'सूरादश्वं वसवो निरतष्ट'-इति मन्त्रवचनं ( ऋ० सं० १. १६३. २. ), ततो ऽश्वः समभवद् यदश्वत्तन्मेध्य मभूत्'-इति ( बृ० उप० १. २. ७. ) ब्राह्मणं च पर्यालोच्यम्। 'स्वर्वत्' स्वरिति द्युलोकनामसु पठितम् ( निघ० १. ५. १. )। तत्स्थत्वेन तद्वान् सूर्यः ; तज्ज्योतिश्च स्वर्वदित्युच्यते ॥

---

## ॥ अथ सामब्राह्मणस्य ॥

२०२—२— कौथुमेत्यादि। त्रयीपरिचये 'अष्टौ हि'-इत्यादिः 'ब्राह्मणं भवतीति'-इत्यन्तो ( १२०–१२२ पृ० ) ग्रन्थ इहालोच्यः।

—८— क्रतुगामिनः। 'महत्मे वोचः'-इत्याद्याः सोमप्रवाक-प्रतिमन्त्रणादयः। सोमप्रपाकप्रतिमन्त्रणादिविधयस्तु लाट्या-यनाश्वलायनापस्तम्बबौधायनकात्यायनसूत्रेषूक्ताः, ताण्ड्यप्रथम-प्रपाठकीयभाष्यतोऽप्यवगन्तव्याः।

—१०— स्तोमभागाः। "रश्मिरसि क्षयाय त्वा"-इत्यादयः ( ता० ब्रा० १. ८, १० ख० )। तैत्तिरीयसंहितायामप्याम्नाताः ( ४. ४. १. १. )। व्याख्याताश्च ते तत्रैव ( ३. ५. २. १. ), पुनः ( ५. ३. ६. १. )। विहिताः खल्वैतरेयकेऽपि ( ५. ५. ८. )।

—१० — स्तोमानिति। नव स्तोमा इह समाम्नाता:। तत्र त्रिवृत्, पञ्चदश:, सप्तदश:, एकविंश:, त्रिणव:, त्रयस्त्रिंशश्चेति षट् पृष्ठ्यषडहस्य ; चतुर्विंशश्चत्वारिंशो ऽष्टाचत्वारिंशश्चेति त्रयश्छन्दोमानाम्। सप्तदशादेर्विवृद्ध्या अष्टादशादयोऽपि भवन्ति। स्तोमवृद्धिनियमस्तु ऐ० ब्रा० ६. २, ५ खण्डे द्रष्टव्य:। किञ्चैते त्रिवृदादय: स्तोमा ज्योतींषि अप्युच्यन्ते ; अत एव तद्वत्त्वात् अग्निष्टोमादीनां सप्तानां ज्योतिष्टोम इति समाख्या। तथाहि तै० संहितायाम्— "प्रजननं ज्योति:"–इत्यादिकं (७. १. १.) द्रष्टव्यम्। "कतमानि तानि ज्योतींषि, य एतस्य स्तोमा इति? त्रिवृत् पञ्चदश: सप्तदश एकविंश एतानि वाव तानि ज्योतींषि, य एतस्य स्तोमा:"–इति च तद्ब्राह्मणम् (१. ५. ११.)। ज्योतिष्टोमशब्दस्य निर्वचनान्तर मप्याम्नात मैतरेयके, तत्राप्यस्ति स्तोमयोगहेतु:। तद्यथा— 'अथ यद्देन मूर्द्ध्वं सन्तं ज्योतिर्भूत मस्तुवंस्तस्माज्ज्योतिस्तोमस्तं ज्योतिस्तोमं सन्तं ज्योतिष्टोम इत्याचक्षते'–इति (३. ४. ५.)। गोष्टोमायुष्टोमशब्दावप्येतत्स्तोमयोगनिमित्तत एव निष्पाद्यौ।

२०२ —११— अस्मिन् ब्राह्मणे। वक्ष्यति चात्र षष्ठप्रपाठकभाष्योपक्रमे— 'चतुर्थे पञ्चमे चैव गवामयन मीरितम्'–इति। अग्निष्टोम:, उक्थ्य:, षोडशी, अतिरात्रश्चेत्येवं चतुस्संस्थो ज्योतिष्टोम ऐतरेयके आदित: सार्द्धेनाध्यायषोडशकेनाम्नात:, इहाप्युपरिष्टात् (६–८प्र०) तदीशान माम्नातं श्रूयते ; तच्चतुष्टय मुपजीव्यैव गवामयनं नाम संवत्सरसत्रम् प्रवर्त्तते। तदेतत्सत्त्वन्तु विहित मैतरेयके (४. २. ६.—३. ८.) ; आश्वलायनेन च तत् 'अथ गवामयनं सर्वकाम:'–इत्यारभ्य 'इति गवामयनम्'–

इत्यन्तैः सूत्रैः ( श्रौ० सू० ११. ७. १–२०. ) व्यक्त मुक्तम् । आश्व-र्यवन्तु शतपथे ( १२.१–३ ), कात्यायनीयश्रौतसूत्रेऽपि ( १३ अ० )। विधिस्त्वस्य तैत्तिरीयसंहितायाञ्च ७. ५. १ ।

२०२—१२ – प्रायणीयादिभिरित्यादि । तानि पञ्चविंशति-दिनानि यथा— अतिरात्रः ( प्रायणीयः ), चतुर्विंशः ( आरम्भ-णीयः ), ज्योतिः, गौः, आयुः, गौः, आयुः, ज्योतिः ( आभिप्लविकः षड़हः ), त्रिवृत् , पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रय-स्त्रिंशः ( पृष्ठ्यः षड़हः ) , अभिजित् , प्रथमस्वरः, द्वितीयस्वरः, तृतीयस्वरः, विषुवान् ( मध्याह्नः प्रधानं च ) चतुर्विंशः, चतुश्चत्वा-रिंशः, अष्टाचत्वारिंशः ( छन्दोमाः ), विश्वजित् , महाव्रतम् ( उपान्त्यम् ), अतिरात्रः ( उदयनीयः ) इति । एतेषा मेव दिनाना मनुलोम-प्रतिलोमावृत्तिभिः संवत्सरं पूर्णं भवति । तदुक्त मिहाश्वलायनेन ( ८.१२.२१. ) – “तदेषाभियज्ञगाथा गीयते —

‘प्रायणीयश्चतुर्विंशः पृष्ठ्योऽभिप्लव एव च ।

अभिजित् स्वरसामानो विषुवान् विश्वजित् तथा ।

छन्दोमा दशमं चाह उत्तमं तु महाव्रतम् ।

अहीनैकाहसत्राणां प्रकृतिः समुदाहृता ।

\+ \+ \+ \+ \+

अहानि पञ्चविंशतिर्यैर्वै संवत्सरो मितः ।

एतेषा मेव प्रभवस्त्रीणि षष्टि शतानि यत् ॥’–इति”–इति । संवत्सरपूर्त्तिप्रकारस्त्वस्माभिः समासतस्त्रयीपरिचये ११४पृष्ठतः प्रदर्शितः । तत्र च ‘छन्दोमवन्तं पशुकामः, पृष्ठ्यावलम्बस्य प्राग् विश्वजितश्छन्दोमा दशमं चाहः’–इति आश्वलायनीयं श्रौतसूत्रं अनुसंधेयम् ( १०. ३. २४. ) ।

—,,— अहोभिः । संवत्सरगतेषु षष्ट्यधिकशतत्रयदिवसेष्वेकैकस्मिन् दिवसे पूर्वोक्तानां संस्थानां मध्ये यथाविधि कयाचित् संस्थया युक्तः सोमप्रयोगः सर्वोऽप्यनुष्ठेयो भवति; सोऽयमेकैकदिनसाध्यः सोमप्रयोगो याज्ञिकैरहःशब्देन व्यवह्रियते । संवत्सरसत्रस्याद्ये दिवसे कश्चिदतिरात्रसंस्थः सोमप्रयोगोऽनुष्ठेयो भवति, तस्मात्तदेवाहः अतिरात्र इत्युच्यते; तस्यैव सत्रप्रायणरूपत्वात् प्रायणीय इति चाख्या । तदनन्तरभाविनि द्वितीयदिवसानुष्ठेये सोमप्रयोगे चतुर्विंशनामकः स्तोमो गीयते; तत एव तदहश्चतुर्विंश इत्युच्यते । संवत्सरसत्रे सामगैः प्रयोक्तव्या ये स्तोमाः, बह्वृचैः प्रयोक्तव्यानि यानि छन्दांसि, याश्च तत्तन्मन्त्रप्रतिपाद्या देवताः, तेषां सर्वेषामनेनैवाह्ना आरम्भः; अत एतदह आरम्भणीय इत्यपि व्यपदिश्यते; प्रायणीयस्याह्नः संवत्सरोपक्रमत्वेऽपि हि सत्रस्य विशेषेण प्रारम्भोऽस्मिन्नेवाहनि याज्ञिकानामभिमतः । एतदहः खलु अग्निष्टोमसंस्थ उक्थसंस्थो वा भवति । एवमुत्तरत्रापि नामहेतवः समूह्याः ।

—१२—एकाहा०—०प्रकृतीनि । "एकाहस्त्र्युपसत्को द्वादश वा"–इति कात्या० श्रौ० ८. २. ३९, ४० । 'एकाहः एकसुत्यः क्रतुः, त्र्युपसत्को भवति; एकसुत्ये यज्ञे तिस्र एवोपसदो भवन्तीत्यर्थः । अथवात्र द्वादशोपसदो भवन्ति'–इति तद्वृत्तिः । उपसदः प्रयोगश्चैवम्— "चतुरासनम् ब्रह्मोपवेशनं समन्त्रकं प्रणीताप्रणयनम् आहवनीयस्यैव परिस्तरणम् पात्रासादनम् पवित्रच्छेदनादि पात्रप्रोक्षणम् असञ्चरे निधानम् कुक्कुटाहननम् (न कर्कस्य) आज्यनिर्वापो वेदवन्धः अग्नीध एव आज्याधिश्रयणम् [illegible] पर्यग्निकरणम् उदकालम्भः सद्यस्कारादानम्

आलभ्य जपः स्तृतायामेव वेदौ तृणनिधानम् बर्हिषः प्रच्छेदं हरणञ्च पूर्वपरिग्रहः ( न रेखाकरण-खनने ) उत्तरपरिग्रहः ( नानुमार्जनम् ) प्रोक्षणीर्मदन्तीरासादयेध्मं बर्हिरुपसादय स्रुचौ संमृड्ढि पत्नीं संनह्याज्येनोदेहीति प्रैषः मदन्तीशब्दस्याप्रयोगो वा ( न स्फ्योदकप्रहारः, न पाण्योरवनेजनम् ) स्फ्येध्मबर्हिषां सादनम् स्रुवजुहूप्रभृतीनां सम्मार्गः सम्मार्जनापासनम् पत्नीसन्नहनम् आज्योद्वासनम् पत्न्यवेक्षणम् वेद्यामासादनम् उत्पवनम् प्रोक्षण्युत्पवनम् आज्यावेक्षणम् तूष्णीं जुह्वा मष्टगृहीतग्रहणम् उपभृति चतुर्गृहीतम् विपरीतं वा इध्मप्रोक्षणम् वेदिप्रोक्षणम् बर्हिषः प्रोक्षणाद्येकवत्स्तरणान्तम् स्रुग्भ्यां त्वेति विशेषः समित्प्रस्तरादानम् कल्पनम् ( नोल्मुके ) परिधिपरिधानम् स्रुच्यानुस्रुच्ययोराधानादुपभृदासादनान्तं आज्यस्थाल्या आसादनम् सर्वेषा मालम्भः उदकालम्भः होतुरामन्त्रणम् सामिधेनीप्रैषः इदमहं नवमेन वज्रेणेत्यवबाधनम् प्रतिप्रणव माधानम् आहवनीयोपवाजनम् पूर्वाघारः सप्रैषाग्निसम्मार्गः आश्राव्य सीद होतरित्येव प्रैष होतुरुपवेशनादि स्रुगादापनान्तम् प्रस्रुतः स्रुचावादायातिक्रमणं कुर्वन्नग्नये ऽनुब्रूहीत्याह अग्निसोमविष्णुयागा यथोक्तम् प्रत्येत्य स्रुचोः सादनम् पाणिप्रक्षालनम् यजमानषष्ठानां मदन्त्युपस्पर्शनम् हिरण्यबन्धनम् सोमाप्यायनम् निह्नवः पवित्रप्रतिपत्तिः सप्रैषोऽग्निसम्मार्गः व्यूहनम् अभ्युक्ष्य परिध्यञ्जनम् ( न सूक्तवाकप्रैषः ; कर्कमते तु सोऽपि भवति ) प्रस्तरादानम् आज्यस्थाल्यां मूलाञ्जनम् उपसद्होमः परिधिविष्टत्योरादानम् अग्नीन्मदन्त्यापा३ इति प्रैषः मदन्तीति प्रत्युक्तिः मरुता मिति नीचैर्हरणम् ताभिरेहीति ब्रुवतोऽग्नेरध्यधिहरणम् अभ्युक्ष्याग्नीधे समर्पणम् मालालम्भोदकालम्भौ संस्रवाहुतिः देवे

निधानम् वेदयोक्तविमोकः एकवद्बर्हिर्होमः प्रणीताविमोकः सुब्रह्मण्याप्रैषस्तदाह्वानमिति च। "द्वादशोपसत्का अहीना मासापवर्गाः। दीक्षा सुत्योपसच्छेषेण। द्व्यहःप्रभृतयो द्वादशाहपर्यन्ताः" -इति च कात्या० श्रौ० २३. १. १-२। "उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य"-इति च कात्या० श्रौ० १२. १. ६। 'प्रकर्षेण क्रियते साकल्येनानुष्ठेय मुपदिश्यते यस्यां सा प्रकृतिः'-इति सायणः (ऐ० ब्रा० भा० भू०)। यथा, कृत्स्नस्यानुष्ठेयस्याग्निष्टोमे प्रत्यक्षश्रुत्यैवोपदिष्टत्वात् स एव उक्थ्यादीनां प्रकृतिः; उक्थ्यादयस्तु विकृतयः, तेषु हि कतिचिद् विशेषानुष्ठेयान्येव प्रत्यक्षश्रुतोपदिश्यन्ते, अवशिष्टं तु सर्वं मनुष्ठेयं 'प्रकृतिवद् विकृतिः कर्त्तव्या'-इति न्यायेनैव सम्पाद्यते।

२०२—१४— द्वादशाहः। अहर्गणाश्च पृष्ठ्यषडहादयः (ऐ० ब्रा० ६. २. २. सा० भा०), तत्साध्याः क्रतवो ज्ञेयाः। द्वादश अहानि यत्रोपदिश्यन्ते, स द्वादशाहः क्रतुविशेषः। स च द्विविधः— भरतद्वादशाहो व्यूढद्वादशाहश्चेति। ऐ० ब्रा० ४प० ४अ०-५प० ४अ०, तै० सं० ७का० २, ३ प्र०, ता० ब्रा० २३-२५ प्र०, आश्व० श्रौ० ७, ८, १०अ० कात्या० श्रौ० १२, २४अ०। तानि च द्वादशाहानि यथा— प्रायणीयः, त्रिवृत्पृष्ठ्यः, पञ्चदशपृष्ठ्यः, सप्तदशपृष्ठ्यः, एकविंशपृष्ठ्यः, त्रिणवपृष्ठ्यः, त्रयस्त्रिंशपृष्ठ्यः, चतुर्विंशच्छन्दोमः, चत्वारिंशच्छन्दोमः, अष्टाचत्वारिंशच्छन्दोमः, अविवाक्यम्, उदयनीयश्चेति।

—१५— दशाहानि। तत्र त्रिवृदाद्यष्टाचत्वारिंशान्तस्तोमसाध्यानि नव, अथापर मविवाक्यं नाम दशम महस्तु यज्ञायज्ञियनाम-साम-साध्यम्। तत्र त्रिवृदादयो नव स्तोमा इह द्वितीय-

तृतीयप्रपाठकयोरुपदिष्टाः, यज्ञायज्ञीयं साम तु गेये ( १.२.२५ ) आम्नात मिति विवेकः ।

२०२—१८— बहिष्पवमान० । सन्त्युत्तराग्रन्थारम्भे एव त्रीणि तृचात्मकानि सूक्तान्याम्नातानि । तत्र 'उपास्मै गायता नरः'-इत्याद्यं सूक्तम्, 'दविद्युतत्या रुचा'-इति द्वितीयम्, 'पवमानस्य ते कवे'-इति तृतीयम् । ज्योतिष्टोमस्य प्रातस्सवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम् भवति । तदिदं सूक्तत्रयगान-साध्यं स्तोत्रं बहिष्पवमान मित्युच्यते ; तत्रावस्थिताना मृचां पव-मानार्थत्वाद् बहिस्सम्बन्धाच्च । न खल्विदं स्तोत्र मितर-स्तोत्रवत् सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्ब-शाखायाः सन्निधौ प्रयुज्यते, किन्तु सदसो बहिःप्रसर्पद्भिः प्रयुज्यते । 'विष्टुतिः' स्तुतिप्रकारविशेषः, स च स्फुटीभविष्यत्यनुपद मिहैव ।

—२०— अनुवाकैः । अनुवाकशब्दः सामवेदे न क्वापि व्यव-ह्रियते ; अपि तु संहिताग्रन्थेषु पूर्वे परिच्छेदे 'प्रपाठकः', तदर्धे 'अर्धप्रपाठकः', तदंशानां प्रायोदशर्चरूपाणां दशदिति, तृचा-दीनां तु सूक्त मिति व्यवहार ; तथा ब्राह्मणग्रन्थेषु सर्वत्रैव पूर्वे छेदे प्रपाठकः, तदंशानां खण्ड इत्येवेति । तदत्र यद्यपि त्रिभिः खण्डैरित्येव वक्तु मुचितम्, परं गुरुमुखादनधीतसामग्रन्थस्य अत्यभ्यस्ततैत्तिरीयानुवाकस्य सायणाचार्यस्य कथं तत् सम्भवे-न्नामेति चिन्तनीय मेव ।

२०२—१४— पञ्च विभक्तयः । पाञ्चभक्तिकं सामेत्युच्यते, साप्तभक्तिकं च । "प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः । तत्पाञ्चविध्यम्"-इति, "ओङ्कारहिङ्काराभ्यां साप्तविध्यम्"-इति च पञ्चविधसूत्रग्रन्थे । 'अवसानं पूर्वं प्रस्तावः'-इत्यारभ्य 'निधनं

पर्वं सामान्त्यम्'–इत्यन्तो ग्रन्थश्च तत्रैव प्रस्तावलक्षणादिनिर्णायकः। छान्दोग्यब्राह्मणे च ४प्र० १–२१ खण्डा एतद्विषयका एवाम्नाताः। तत्राष्टमे सप्तानां भक्तिवाचकशब्दानां सामसु लघुनोपायेन लिपिसङ्केततश्चोपासनाव्याजेन बोधितः। तद्यथा—"अथ सप्तविधस्य ; वाचि सप्तविधꣳ सामोपासीत। यत् किञ्च वाचो हुमिति स हिङ्कारो, यत् प्रेति स प्रस्तावो, यदेति स आदिः, यदुदिति स उद्गीथो, यत् प्रतीति स प्रतिहारो, यदुपेति स उपद्रवो, यन्नीति तन्निधनम्"–इति। पञ्चविधसूत्रग्रन्थोक्त ओङ्कार एवेहादिरिति परिगणितः ; तस्यास्तु भक्तेः स्थानं प्रस्तावभागादुत्तरमिति च सूचितम्। तदेवम्— १ हुम् = हिङ्कारः, २ प्र = प्रस्तावः, ३ आ = आदिः = ओं, ४ उत् = उद्गीथः, ५ प्रति = प्रतिहारः, ६ उप = उपद्रवः, ७ नि = निधनम् इति यथाक्रमेण सप्त भागाः। "हिं३ इति हिङ्कृत्य"–इत्याश्वलायनः (१. २. ३.), "हुं३ इति हिङ्कारः"–इति तु लाट्यायनः। तत्र बह्वृचाना माश्वलायनोक्तो ग्राह्यः, छन्दोगानां तु लाट्यायनीयः, इति विवेकः। छान्दोग्यब्राह्मणेऽप्याम्नातम्— 'हु मिति स हिङ्कारः'–इति (४. ८. १.)। तदेव मिह 'हु३म्'–इति हिङ्कारस्य रूपम्। 'ओ३म्'–इति ओङ्कारस्य रूपम्, तदेवादिरित्युच्यते (छा० उ० १. ८. शा० भा०)। इमौ हिङ्कारोङ्कारौ सर्वसामसु तुल्यौ ; प्रस्तावादयस्तु चत्वारो भागाः सूत्रब्राह्मणाद्यनुसारतो विभिन्नसामसु विभिन्नाकाराः ; केषुचित् सामसु द्व्यक्षरः प्रस्तावः, केषुचित् पादः, इत्येवमादयो गुरूपदेशतो बोध्या भवन्ति। निधनं तु प्रायः सामान्तिमं पद मेव भवति, क्वचित् ब्राह्मणानुसारतः सामान्ते पदान्तर मपि संयुज्यते ; यथा रथन्तरे 'अस्'–

इति, बृहत्साम्नि तु 'हुम्'–इति ( ता० ब्रा० ७. ६. )। ता एताः सप्तभक्तयो यथा रथन्तरे साम्नि—

"हु३म् ( हिं )। आभित्वाशूरनोनुमोवा (प्र)। ओ३म् (आ)। आदुग्धाइवधेनवईशानमस्यजगतः, सुवा२३र्दृशाम् ( उत् )। आयिशानमा२३यिन्द्रा२ (प्रति)। तास्थू२३४षा, ओवाई, हाउवा (उप)। अस् (नि०) ॥"–इति आरण्यकगाने २.१.२१.रथन्तरं नाम साम।

२०३—१५— त्रिभिरुद्गातृभिः। यद्यपि प्रतियज्ञ मेक एवोद्गाता भवति, तथापि उद्गीथाख्यसामगानरूपकार्यसामान्यात् उद्गातृ-प्रस्तोतृ-प्रतिहर्तृ-सुब्रह्मण्याश्चत्वार एवैते उद्गातार उच्यन्ते। तथा ह्यापस्तम्बः—"अध्वर्युं प्रतिप्रस्थातारं नेतार मुन्नेतार मित्यध्वर्यून्, ब्रह्माणं ब्राह्मणाच्छंसिन माग्नीध्रं पोतार मिति ब्रह्मणः; होतारं मैत्रावरुण मच्छावाकं ग्रावस्तुत मिति होतॄन्, उद्गातारं प्रस्तोतारं प्रतिहर्त्तारं सुब्रह्मण्य मित्युद्गातॄन्, सदस्यं सप्तदशं कौषीतकिनः समामनन्ति"–इति श्रौ० सू० १०. १. ८, १०। वस्तुत एकस्योद्गातुः साहाय्यकारिण एवापरे। तथा चैषा शतपथश्रुतिः—"अध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान् वा अन्वस्य ऋत्विजः"–इति १२. ४. १. ४। "षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृप्रतिहर्त्रच्छावाकनेष्ट्रग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतॄन् वृणीते। चतुरो वाद्यान्। तत्पुरुषा इतरे यथावेदम्। ब्राह्मणाच्छंस्यग्नी-

त्पोतारौ ब्राह्मणः"–इति कात्या० श्रौ० ७. १, ६–८। आश्वलायनेनाप्येव मेवोक्तम् (श्रौ० सू० ४. १, २–८.)। "स ऋचैव हौत्र मकरोद्, यजुषाध्वर्यवं, साम्नोद्गीथम्"–इत्यादि (ऐ० ब्रा० ५. ७. ५.)। तदेतस्मादवगम्यते सामवेदिनो ऽप्युद्गातारश्चत्वार इति। तत्र सुब्रह्मण्याख्येनोद्गात्रा तु सुब्रह्मण्योद्गानमात्रं क्रियते, न त्वन्यत् किमपि; अत एवेह चतुर्भिरुद्गातृभिरिति नोक्तं सायणेनेति ध्येयम्।

—१६— साम्ने। लाट्या० सू० २. १. ४।

—१७— कर्मणि। सू० २. ३. १४।

२०८—५— ईश्वरे। पा० सू० ३. ४. १३।

२१२—१२— प्रथमादि खण्डत्रयम्। एतावदेव त्रिवित्स्तोमविधायकं ब्राह्मणम्। बहिष्पवमानं नाम स्तोत्रं त्वेष्वेव खण्डेषु निर्णीतम्। ऐतरेयभाष्येऽप्येतस्य व्याख्यानसारो ऽप्यव्याख्यनेनैव भाष्यकारेण (२. ४. ४.)। तैत्तिरीयभाष्ये ऽप्यस्त्येव मेव (१. ८. १३)। बहिष्पवमानविधिस्त्विहोत्तरत्र (ता० ब्रा० ७. १.), ऐतरेयके (२. ३, ४; ५. ५.) च, तैत्तिरीयकेऽपि (१. ८. १३; ७. १. १.) द्रष्टव्य इति दिक्॥

———

## ॥ अथ सामारण्यकस्य ॥

—○◦○—

२१२—१६— द्वि ०—० च। सामवेदस्य सर्व एव संहिताग्रन्था गानार्चिकभेदाद् द्विधा विभक्ताः, आरण्यकग्रन्थश्च संहितात्मक एव। तथाच द्वैविध्य मुपगतस्य छन्दोगारण्यकस्य आर्चिकभागात् द्वितीयां दशतं, गानभागात् सेतुनाम साम चेहोद्धृत्य प्रादर्शयं छन्दोगारण्यकनिदर्शनाय। दश परिमाण मस्य वर्गस्येति 'दशत्'। 'पञ्चद्दशती वर्गे वा'–इति हि पा० सू० ५. १. ६०। तथा च दशद्दशकौ पर्यायशब्दौ। तत्र छन्दोगाना मार्चिकग्रन्थेषु सर्वत्रैव दशच्छन्दो व्यवह्रियते, न तु दशकः। स्त्रीलिङ्गश्चैष दशच्छब्दः; तथाहि "या प्रथमा दशत्"–इत्यादि शत० ब्रा० ८. ५. २. १५। अथ यद्यप्युक्तविग्रहार्थपर्यालोचनया दशच्छन्दस्य दशर्क् समुदाये एवात्र वृत्तिः स्वीकार्या, तथापि तन्न्यूनाधिकसमुदायेऽपि व्यवहारो दृश्यत एव। एवं सामवेदीयाचरतत्त्वादौ दशकशब्दस्यापि बोध्यम्। तदस्यां दशति सप्तैव ऋच आम्नायन्त इति न विस्मयकरम्। सेतुसाम तु अरण्यगाने (२. २. २४.) समाम्नातम्। उद्धृतं तदिह २१६ पृष्ठे 'हाउ। ३।'–इत्यादि द्रष्टव्यम्। तस्य विशोक ऋषिः, त्रिष्टुप् छन्दः, आत्मा देवता; 'सेतुसाम्नो विशोकस्त्रिष्टुबात्मा'–इति हि सुबोधिनीकारः। गोभिलीय-ब्रह्मयज्ञसूत्रानुसारेण कौथुमानां ब्रह्मयज्ञपाठे ऽस्यापि विनियोगो भवति। तत्र पाठ्येषु भासादिसामस्विदं द्वादशम्। "स्वर्ग्यं सेतुषाम पुरुषगतिर्वा विशोकं वा"–इत्यार्षेयकम् ३.१२। यद्यपि सेतुषामिति मूर्द्धन्यमध्यं नाम वैदिकम, तथापि सेतुसामेति दन्त्यमध्य मेव व्यवह्रतं दृश्यते लोके॥

२१२—१७— त्वमेतदिति। ऋ० सं० ८. ८३. १२। एता मृच मवलम्ब्य अरण्यगाने त्रीणि सामान्याम्नातानि (२. २. २०—२२.)। तेषां त्रयाणा मेव नाम वार्षाहर मिति। तथा ह्यार्षेयब्राह्मणम्— 'त्रीणि वार्षाहराणि'—इति ३. १५।

—१९— श्रुतकक्षः। य एव श्रुतकक्षः, स एव सुकक्षः; अत एव ऋग्भाष्येऽस्या ऋचः सुकक्षऋषिरित्युक्तापीह्योतं तेनैव सायणेन श्रुतकक्ष इति। 'श्रुतकक्षः सुकक्षो वा'—इत्यनुक्रान्तं शौनकेन (ऋ० सं० भा० ८. ९२.)। स च आङ्गिरसः। तदुक्त मार्षेयनैगेये— 'सुकक्ष आङ्गिरसः'—इति। वस्तुतश्छन्दोगार्चिक-मन्त्राणां हि ऋषिनैगेयत एवर्षिविज्ञानम्, दैवतनैगेयतो दैवत-विज्ञानम्, छन्दोनैगेयतश्च भवति छन्दोविज्ञानम्; तथा आर्षेय-ब्राह्मणतो योनिगानारण्यगानयोरार्षादिज्ञान मेवं पुष्पसूत्रतश्चो-ह्योह्यगानयोरिति ज्ञेयम्।

—२०— हे इन्द्रः!। इहेन्द्रशब्दो नूनं परमेश्वरवाचकः; तदन्यस्य कस्यैवं सामर्थ्यं वर्त्तेत। तदाह यास्कः—" 'इन्द्रं मित्रं ०—० मातरिश्वान माहुः' (११२ पृ०)। इम मेवाग्निं महान्त मात्मान मेक मात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुण मग्निम्"—इत्यादि ७. ४. ५। पुनरपि "अथैनं महान्त मात्मान मेषर्गणः प्रवदन्तीन्द्रं मित्रं वरुण मग्नि माहुरिति"—इति १२. ३. १। 'क्षेत्रज्ञसञ्ज्ञकः'—इति, 'अस्य सर्वस्य शुभाशुभकर्मणोः द्रष्टा वा'—इति च इन्द्रपदव्याख्यानावसरे देवराजः (निघ० ५. ४. ४.)। "यस्य द्यावापृथिवी पौंस्यं महद् यस्य व्रते वरुणो यस्य सूर्यः। यस्येन्द्रस्य सिन्धवः सश्चति व्रतम्"—इति ऋ० सं० १०१. ३, "नकिरिन्द्र त्वदुत्तरो न ज्यायोऽस्ति वृत्रहन्। नक्येवं यथा त्वम्"

–इति सा० छ० आ० ३. १. १. १०., "इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै"–इति अथ० सं० ६.९८.१; एवमादीनां मन्त्राणा मर्था इहालोच्याः।

२१३—२— ङीप्। पा० सू० ४. १. ३९।

—३ – यास्कः। निरु० ९. ३. ५।

—७— पाठः। ऋ० सं० ८. ९३. १३। अध्यापक–म्याक्ष-मूलर-सम्पादिते प्रथममुद्रिते ऋक्संहितापुस्तके 'परुष्णीषु'–इत्येव पाठो दृश्यते, स तु मुद्रणसंशोधकप्रमादज एव ज्ञेयः, रोथ्-सम्पादिते सामवेदार्चिके (२६९ पृ०) ऽप्युद्धृतैषा ऋक्, तत्र त्वस्त्येव पाठः 'पुरुष्णीषु'–इति द्रष्टव्यम्। किञ्च मूलरसम्पादिते तत्र 'परुष्णीषु'–इत्यारभ्य 'नानावर्णासु'–इत्यन्तो ग्रन्थो नास्त्येव; अत्रापि मुद्रणसंशोधकप्रमाद एव भवेन्निदानम्॥

[ २ ]

—८— अरूरुचदिति। एषा ऋक् ऋ० सं० ९. ८३. ३। तत्र तु 'मिमीति भुवनेषु'–इत्यस्य स्थाने 'बिभर्त्ति भुवनानि'–इति पाठः। एता मृच मवलम्ब्य अरण्यगाने द्वे सामन्याम्नाते (३. १. ९, १०.)। तयोर्नाम स्वर्ज्योतिरिति। तथाह्यार्षेयकम् — 'स्वर्ज्योतिषी द्वे'–इति ३. १६। उत्तरार्चिके ऽप्येषा पुनराम्नाता (२. २. १६. ३.)। तत्र यस्मिन् तृचे सूक्ते इयं श्रूयते, तत्सूक्त मवलम्ब्य च पञ्च सामानि स्तुतानि। तत्र ऊहगाने स्वारम्, कावम्, यज्ञायज्ञीयञ्चेति त्रीणि (७. २. १; १२. २. ३; १५. १. १.), ऊह्यगाने अरिष्टम्, षड़िड़पदस्तोभञ्चेति द्वे (१. १. ८; ४. १. ३.) इति विवेकः।

—११— पवित्रश्चाङ्गिरसः; अनुक्रमण्यां नैगेये च तथैवोक्तः।

—१२— पवमानो देवता। "सौमी ; पितरश्चतुर्थः पादः" -इति त्विह दैवतनैगेयः।

—१५— नैरुक्ताः। २.४.२। "पृश्निरादित्यो भवति ; प्राश्नुत एनं वर्ण इति नैरुक्ताः ; संस्प्रष्टा रसान्संस्प्रष्टा भासं ज्योतिषां संस्पृष्टो भासेति वा"-इति तत्पाठः। अथैतस्यैतद्दुर्गाचार्यकृतं व्याख्यानम्—" 'पृश्निरादित्यो भवति'। आह कस्मात्? उच्यते— 'प्राश्नुत एनं वर्ण इति नैरुक्ताः'। 'प्राश्नुते' प्रकर्षेण व्याप्नोति 'एनम्' आदित्यं 'वर्णः' प्रोज्ज्वलः 'इति' 'नैरुक्ताः' मन्यन्ते। 'संस्प्रष्टा रसान्' स हि नित्यकालमेव रसानां संस्प्रष्टा भवति। तस्य तदेव कर्म वक्ष्यति— 'अथास्य कर्म,— रसादानम् (७.३.४,)' -इति। 'संस्प्रष्टा भासं ज्योतिषाम्' आदित्यसंसर्गादेव ग्रह-नक्षत्रचन्द्रमसां भासो नश्यन्ति। 'संस्पृष्टो भासेति वा' दीप्त्या ह्येष सर्वतः संस्पृष्टो भवति"-इति।

—,,— अग्रियः। 'अग्राद्द्यत्। घच्छौ च'-इति पा० सूत्रे ४. ४. ११६, ११७।

—,,—अरूरुचत्। सार्वकालिको लुङ् (पा० सू० ३.४.६.)।

—१७— वाजयुः। छन्दसि परेच्छायामपि क्यच् (पा० ३. १. ८. वा०)। 'क्याच्छन्दसि (पा० ३.२.१७०.)'-इति उः।

२१४—२— सूर्यात्मा सोमः। अधियज्ञोऽर्थं एषः, अपि कष्टकल्पना-प्रसूतः।

—४— यद्वा। अधिदैवतं नाम पक्षान्तरमभिप्रेत्यैव मुक्तम्। अध्यात्मपक्षे त्वस्या ऋचोऽर्थः स्फुटतमो गम्यते। तद्यथा— 'अस्य' परमात्मनो 'मायया' प्रज्ञानेन 'उषसः अग्रियः पृश्निः' आदित्यः 'अरूरुचत्' रोचयति ; 'उक्षा' पर्जन्यश्च 'भुवनेषु वाजयुः' सन्

'मिमीति'; 'मायाविनः' प्रज्ञावन्तः, प्रकृतिसमन्विता वा सर्वे जरायुजाण्डजोद्भिज्जस्वेदजाः प्राणिनः 'ममिरे' सदैव स्व-स्व-प्रजां वर्द्धयन्ति; तत्रापि विशेषतः 'नृचक्षसः' नृ-नामानः 'पितरः' पालकाः प्राणिनः 'गर्भम् आदधुः' गर्भाधानं कुर्वन्ति। तदेतत्सर्वं मस्यैव मायया भवन्तीति यावत्। यद्यपि सर्व एव प्राणिनो मायाविनः, तथापि तत्र मनुष्याणां प्राधान्यख्यापनाय ब्राह्मणवसिष्ठन्यायेन पुनरुपन्यासः। प्राधान्यं च पालकत्वेन; मनुष्या एव हि शिशूनां शरीराणि स्वास्थ्यविधानैः, मनांसि चाध्यापनादिभिः पालयन्तीति। निघण्टौ प्रज्ञानामसु 'माया'-इति नवमं पदम् ( ३.९. )। मायाम् = प्रज्ञाम् इति, मायाः = प्रज्ञानानि इति च यास्कः ( निरु० ७. ७. ५; १२. २. ६. )। माया = बुद्धिः इति त्रिकाण्डशेषः २. ३. ३१८। 'मायाभि रिन्द्र मायिन मवातिरः'-इति ऋ० सं० १. ११. ७; ३२. ४; ८०. ७; २. ११. १०; १७. ५, इत्येवमादयः। वा० सं० १३. ४४; २३. ५२; ३०. ७। 'यं मायाभिरन्वचरन्मनीषिणः'-इति अथ० सं० १२. १. ८; १३. २. ३। ऐ० ब्रा० ६. ३६; ८. २३। तै० ब्रा० ३. १०. ८. २। शत० ब्रा० २. ४. २. ५; 'काश्चिन्मायां कुर्यात्'-इति १३. ४. ३. ११; ११. १. ६. १२। 'ता मिन्द्रः कया चन मायया हन्तुं नाशंसत'-इति ता० ब्रा० १३. ६. ९। अथ "तेषा मसौ विरजो ब्रह्मलोको न येषु जिह्म मनृतं न माया चेति"-इति ( १. १६. ) प्रश्नोपनिषद्वाक्यस्य व्याख्यानावसरे भगवता शङ्कराचार्येण यदुक्तं मायालक्षणम्— 'माया नाम बहिरन्यथात्मानं प्रकाश्यान्यथैव कार्यं करोति, सा माया मिथ्याचाररूपा'-इति, तामतथ्यादिसंहितागतमन्त्रेषु न तद् दृश्यते; निघण्टुनिरुक्तयोस्तथोल्लेखा-

भावात्। यत्त्वानतिप्राचीनेषु सायणीयवेदार्थप्रकाशनामभाष्यादिषु सैषा शाङ्करी माया बहुत्र गृहीतेति दृश्यते, तदप्ययुक्त मेव स्यात्; तत्र सर्वत्रैव नैघण्टुकनैरुक्तार्थसामञ्जस्येऽन्यविधार्थस्यान्याय्यत्वात्। 'चौरिकान्तमायाभिर्धर्मस्यापैति पादशः'–इति म० सं० १,८२। एव मादौ तु स्यात् मिथ्याचाररूपाया मायाया ग्रहणम्; न हि तत्र वेदाङ्गविरोधोऽस्ति विप्रतिपत्तिकरः। अथान्योऽप्यस्ति मायार्थः। तद्यथा भगवद्गीतायाम्— 'प्रकृतिं स्वा मधिष्ठाय सम्भवाम्यात्ममायया'–इति (४.६.), 'दैवी ह्येषा गुणमयी मम माया दुरत्यया'–इति (७. १४.), 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया'–इति (१८. ६१.) च। प्रकृतिवाच्यप्यस्ति मायाशब्दः। तथाहि— 'मायां तु प्रकृतिं विद्यान् मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्व मिदं जगत्' –इति श्वेता० उ० ४, १०। 'ब्रह्मशक्तिर्माया'–इति च छान्दोग्ये॥

[ २ ]

२१४—७— इन्द्र इदिति। एषा ऋक् ऋ० सं० १. ७. २। एता मृच मवलम्ब्यारण्यगाने एकं साम समाम्नातम् (३.१.११)। तस्य नाम यस्व मिति (आर्षे० ब्रा० ३. १७.)। उत्तरार्चिकेप्येषाम्नाता (२. १. ८. २.)। तत्र यस्मिन् चतुर्ऋचे सूक्ते इयं श्रूयते, तत्सूक्त मवलम्ब्यैक मपि साम न दृश्यते कौथुमीगानग्रन्थेष्विति।

—८— द्वयोः। अस्या उत्तरस्याश्च। 'इन्द्रो ह मधुच्छन्दा वैश्वामित्रः'–इति चात्र नैगेयः। "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः, पञ्चाशदेव ज्यायांसो मधुच्छन्दसः, पञ्चाशत् कनीयांसः"–इत्यादि ब्राह्मणं चात्रानुसन्धेयम् (ऐ० ब्रा० ७. ३. ६.)।

अस्यैव मधुच्छन्दसो दाशतय्या मेकादश सूक्तानि ( १ म० १-१० ; ९ म० १ )। अथ यास्कोक्तो विश्वामित्रर्षिपरिचयो-ऽप्यत्रोद्ध्रियते— "तत्रेतिहास माचक्षते,— विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव। विश्वामित्रः सर्वमित्रः। सर्वं संसृतं। सुदाः कल्याणदानः। पैजवनः पिजवनस्य पुत्रः। पिजवनः पुनः स्पर्द्धनीयजवो वामिश्रीभावगतिर्वा। स वित्तं गृहीत्वा विपाट्छुतुद्र्योः सम्भेद माययावनुययुरितरे। स विश्वामित्रो नदी-स्तुष्टाव गाधा भवतेति"—इति निरु० २. ७. २। स च कौशिकः। तदाह "कुशिकस्य सूनुः"—इति ऋ० सं० ३. ३३. ५.। "कुशिको राजा बभूव"—इत्यादि तद्व्याख्याने यास्कः ( निरु० २.७.३. )।

—१४— इत्यर्थः। इत उत्तरं व्याकरणप्रक्रियादिकं च वर्णितं ऋग्भाष्ये। तद्यथा— " 'हर्योः' हरत इति हरी, इन्, नित्त्वादाद्युदात्तः। 'सचा' सहेत्युक्तम्। 'सम्मिश्लः' मिश्रणं मिश्रः, मिश्रयतेर्घञ् ( पा० सू० ३. ३. १८. )। सम्यक् मिश्रो यस्यासौ सम्मिश्रः, लत्वं छान्दसम्, सम्यक् मिश्रयितेत्यर्थः। बहुव्रीहौ पूर्व-पदप्रकृतिस्वरत्वम्। 'वचोयुजा' वचसा युज्येते इति वचोयुजौ, तयोः। षष्ठीद्विवचनस्य सुपां सुलुगित्याकारादेशः ( पा० सू० ७. १. ३९. )। युज्शब्दो धातुस्वरेणान्तोदात्तः। कृदुत्तरपद-प्रकृतिस्वरेण स एव शिष्यते। 'वज्री' वज्र मस्यास्ति, अत इनि-ठनौ ( पा० सू० ५. २. ११५. ); प्रत्ययस्वरः। 'हिरण्ययः' 'ऋत्व्य-वास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ( पा० सू० ६.४.१७५. )'—इति हिरण्मयशब्दस्य मकारलोपो निपात्यते ; अकारः प्रत्यय-स्वरेणोदात्तः, पूर्वेणानुदात्तेन सहैकादेश उदात्तेनोदात्त इत्यु-दात्तः"—इति। एषोऽर्थोऽधियज्ञपक्षे ज्ञेयः।

[ ४ ]

—१५— इन्द्र इति। एषा ऋक् ऋ० सं० १. ७. ४। अत्र साम नाभवत्। उत्तरार्चिके ऽप्येषाम्नाता (२. १. ८. ३.)। तत्रापि सामाभाव एव। अस्याः स्वरत्र्यादिकं पूर्ववत् ज्ञेयम्।

—२०— रक्ष। इत उत्तरं व्याकरणप्रक्रियादिकं च वर्णित मृग्भाष्ये। तद्यथा—" 'वाजेषु' 'वृषादीनां च (पा० सू० ६. १. २०३.)'–इत्याद्युदात्तत्वम्। 'नोऽव' नसः सकारस्य रुत्वोत्वगुणेषु प्रकृत्यान्तःपादमिति प्रकृतिभावो न भवति; अव्यपर इति निषेधात् (पा० सू० ६. १. ११५.), 'अव रक्षणे'। 'तिङ्ङतिङः'–इति (पा० सू० ८. १. २८.) निघातः। यद्यपि सहस्रप्रधनेष्ववेत्यध्याहृतां क्रिया मपेक्ष्य प्रथमायाः श्रूयमाणाया अवेति क्रियायाः 'चवायोगे प्रथमा (पा० सू० ८.१.५९.)'–इति निघातनिषेधः प्राप्तः, तथापि वाजेष्वित्यत्र चकारस्य लुप्तत्वात् 'चादिलोपे विभाषा (पा० सू० ८.१.६३.)'–इति निषेधस्य विकल्पितत्वादत्र निघातः प्रवर्त्तते। सहस्रशब्दः 'कर्दमादीनां च (फि० सू० ३. १०.)'–इति मध्योदात्तः। 'सहस्रप्रधनेषु वाजेषु' बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। 'उग्रः', 'उच समवाये', चस्य गः, ऋज्रेन्द्रेति रन्, व्यत्ययेनान्तोदात्तः। 'ऊतिभिः' ऊतियूतीत्यादिनाक्तिनुदात्तः"–इति। एषोऽर्थो ऽधियज्ञपक्षे ज्ञेयः॥

[ ५ ]

२१५—१— प्रथश्चेति। एषा ऋक् ऋ० सं० १०.१८१.१। एता मृच मवलम्ब्यारण्यगाने (३. २. ५, ६.) द्वे सामन्याम्नाते। तयोर्द्वयोरेव नाम वसिष्ठस्य इति (आर्षे० ब्रा० ३. १९.)।

—६— अपश्यत् ०—० निर्णयः। 'प्रथो वासिष्ठः'–इति ऋषिनैगेयः, 'प्रथश्च तृतीये धाता सविता विष्णुः'–इति दैवत-नैगेयः। बहुदेवतात्वादेव वैश्वदेवत्वम्। तथाचानुक्रान्तम्— 'प्रथश्चैकर्चाः प्रथो वासिष्ठः, सप्रथो भारद्वाजो, घर्मः सौर्यो वैश्वदेवमिति'–इति।

२१५—६— वसिष्ठस्य। "यद्वै नु श्रेष्ठस्तेन वसिष्ठः। अथो यद्वस्तृतमो वसति तेनो एव वसिष्ठः"–इति वसिष्ठशब्दनिर्वचनम् शत० ब्रा० ८.१.१.६। वसिष्ठो मैत्रावरुणः। तथाहि ऋ० सं०—

"उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसो ऽधिजातः। द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवा पुष्करे त्वाददन्त"–इति ७. ३३. ११। एतद्भाष्ये शौनकीया इमाः श्लोकाश्च उद्धृताः—

"तयोरादित्ययोः सत्रे दृष्ट्वाप्सरस मुर्वशीम्।
रेतश्चस्कन्द तत्कुम्भे न्यपतद्वासतीवरे॥
तेनैव तु मुहूर्त्तेन वीर्यवन्तौ तपस्विनौ।
अगस्त्यश्च वसिष्ठश्च तत्रर्षी सम्बभूवतुः॥
बहुधा पतितं रेतः कलशे च जले स्थले।
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः॥
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः।
उदियाय ततोऽगस्त्यः सम्यामात्रो महातपाः॥
मानेन सम्मितो यस्मात्तस्मान्मान्य इहोच्यते।
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि मीयते॥
कुम्भ इत्यभिधानं च परिमाणस्य लक्ष्यते।
ततोऽप्सु ग्रहमाणासु वसिष्ठः पुष्करे स्थितः॥
सर्वतः पुष्करे तं हि विश्वे देवा अधारयन्निति॥"–इति।

निरुक्तेऽप्येषा ऋग् व्याख्याता (५. २. २.)। ऋक्संहितायां बहुषु मन्त्रेषु वसिष्ठस्य वर्णनं श्रूयते, तत्र सप्तममण्डलीयत्रयस्त्रिंशे सूक्ते ऽस्य परिचयः सुव्यक्तः। तत्सूक्तीया मष्टमीमृच मुदाजहार च यास्कः "अथापि ऋषयः स्तूयन्ते— 'सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः। वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः'-इति यथा"-इति ११. २. ८। 'वसिष्ठो वर्षकामः पर्जन्यं तुष्टाव'-इत्यादि (६. १. ६.), 'पाशा अस्यां व्यपाश्यन्त वसिष्ठस्य मुमूर्षतः'-इत्यादि च (६. २. ५.) निरुक्ते। "यस्तिग्मशृङ्गो वृषभो न भीमः (ऋ० सं० ७. २९.), उदु ब्रह्माण्यैरयत श्रवस्या (२३.)-इति वसिष्ठः"-इति ऐ० ब्रा० ६. ४. २। 'इति सूक्तद्वय मसृजत'-इति तद्भाष्यम्। वस्तुत एतद्दृष्टा बह्वृचो बह्वृचा अधीयते। तद्यथा— ७. १-३२; ७. ३३, १-९; ७. ३४-१०४; ९. ६७, १९-३२, ९. ९०; ९. ९७, १-३; १०. १३७, ७। सामसंहितायाञ्चास्य बहूनि सामानि। तत्र आर्षेयब्राह्मणपाठात् योनिसाम्नां पुष्पसूत्रपाठाच्च स्तोत्रियसाम्नां नामान्यवगन्तव्यानि; मत्कृते सामपरिचयेऽपि तानि सुव्यक्तान्येव। रथन्तरसामद्रष्टृत्वेनैवास्य विशेषतः प्रसिद्धिः; सामसु ब्राह्मणयज्ञे रथन्तरस्यैव प्राधान्याख्यानात्। तथाह्यैतरेयकम्— "ब्रह्म वै रथन्तरं, क्षत्रं बृहद्; ब्रह्म खलु वै क्षत्रात् पूर्वम्०—०अथान्नं वै रथन्तरम्०—०अथेयं वै पृथिवी रथन्तरम्, इयं खलु वै प्रतिष्ठा, प्रतिष्ठा मेवास्मै तत् पुरस्तात् कल्पयति"-इत्यादि ८. १. १। अत एवास्य बहुसामद्रष्टृत्वेऽप्यस्या मृचि (१०. १८१. १.) स्तूयते 'रथन्तर मा जभार वसिष्ठः'-इति। वाजसनेयिनश्चामनन्ति— "विहृतो रथन्तरं वसिष्ठ ऋषिः"-इति वा० सं० १३. ५४।

"त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीत वसिष्ठ ऋषिः"—इति तद्ब्राह्मणम् (शत० ८. १. १. ६.)। "ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्; स वसिष्ठो ऽकामयत, कथ मिन्द्रं प्रत्यक्षं पश्येयमिति। स एतन्निहव मपश्यत्ततो वै स इन्द्रं प्रत्यक्ष मपश्यत्। स एन मब्रवीद् ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिता भरताः प्रजनिष्यन्ते; अथ मान्येभ्य ऋषिभ्यो मा प्रवोच इति। तस्मा एतान् स्तोमभागानब्रवीत्ततो वै वसिष्ठपुरोहिता भरताः प्राजायन्त। सेन्द्रं वा एतत्साम, यदेतत्साम भवति सेन्द्रत्वाय"—इति ता० ब्रा० १५. ५. २४। 'वसिष्ठो वा एतं पुत्रहतो ऽपश्यत्'—इत्यादि च तत्रैव ४. ७. ३। तैत्तिरीयसंहितायां च 'वसिष्ठो हतपुत्रो ऽकामयत' —इत्यादि ७. ४. ७। 'विश्वामित्र-जमदग्नी वसिष्ठेनास्पर्द्धेथाम्'—इत्यादि च तत्रैव ३. १. ७। वासिष्ठयज्ञश्चाम्नात आपस्तम्बेन (श्रौ० सू० ३. १७. २२.)। "प्रजापतिर्वै वसिष्ठः"—इत्यादि शत० ब्रा० २. ४. ४. २। अथर्वसंहितायाञ्च (४. २९. ३.)—

"यावङ्गिरस मवथो यावगस्तिं मित्रावरुणा जमदग्नि मत्रिम्।
यौ कश्यप मवथो यौ वसिष्ठं तौ नो मुञ्चत्वंहसः"—इति।

अथ मनुसंहितायाम् (१. ३४, ३५.)—

"अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्।
पतीन् प्रजाना मसृजं महर्षीनादितो दश॥
मरीचि मत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वसिष्ठञ्च भृगुं नारद मेव च॥"—इति।

"प्राणो वै वसिष्ठ ऋषिः"—इति शत० ब्रा० ८.१.१.६। आध्यात्मिकपक्षे एषोऽर्थः स्याद् योजनीयः।

२१५—७— भरद्वाजस्य। 'भरणाद् भरद्वाजः'—इति यास्कः

( निरु० ३. ३. ५. )। "अन्नं वाजो यो वै × × बिभर्त्ति, सो ऽन्नं वाजं भरति, तस्मात् × × भरद्वाज ऋषिः"–इति भरद्वाज-शब्द-निर्वचनम् शत० ब्रा० ८. १. १. ९। भरद्वाजो बार्हस्पत्यः। 'त्वं ह्यग्ने सप्तोनेति बार्हस्पत्यो भरद्वाजः षष्ठं मण्डल मपश्यत्'–इति हि अनुक्रमणीवचनम्। दिवोदासपुरोहितो ऽय मासीदिति परिचयोऽप्यस्ति। तथाहि 'दिवोदासं वै भरद्वाजपुरोहितं नाना-जनाः पर्ययतन्त'–इत्यादि ता० ब्रा० १५. ३. ७। ऋक्संहिताया मेतद्दृष्टा बह्व्य ऋचः श्रुताः। तद्यथा— ६. १ ३०; ६. ३७-४३; ६. ५३–७४; ९. ६७. १-३; १०. १३७, १। तदीय-सूक्तेभ्योऽन्यत्रापि तद्विषयो वर्णितः श्रूयते तत्र। तद्यथा— १. ११२. १३; ११६. १८। सामसंहितायाञ्चास्य बहूनि सामानि। तत्र आर्षेयब्राह्मणपाठात् योनिसाम्नां पुष्पसूत्रपाठाच्च स्तोत्रिय-साम्नां नामान्यवगन्तव्यानि; मत्कृते सामपरिचयेऽपि तानि सुव्य-क्तान्येव। किञ्च बृहत्सामद्रष्टृत्वेनैवास्य विशेषतः प्रसिद्धिः; सामसु क्षत्रिययज्ञे बृहत एव प्राधान्याख्यानात्। तथा ह्यैतरेय-कम्— "तद्भारद्वाजं भवति; भारद्वाजं वै बृहदार्षेयेण; सत्रोमैष ह वाव क्षत्रिययज्ञः सम्बृद्धो यो बृहत्पृष्ठस्तस्माद्यत्र क्व च क्षत्रियो यजेत, बृहदेव तत्र पृष्ठं स्यात्तत्समृद्धम्"–इति ८.१.२। अत एव क्षत्रधर्मप्राधान्याख्यापने गीतोपदेशे (१०.३५.) 'बृहत् साम तथा साम्नाम्'–इत्युक्तम् ( तत्तु साम छ० आ० ३प्र० १अ० ५.द० २ ऋचि उत्पन्नम्, आर० गा० १प्र० १अ० २७ साम )। अत एव बहुसामद्रष्टृत्वेऽप्यस्य स्तुत्यर्थं ऋक्संहितायां प्रथश्चेत्यस्या ऋचो ऽनन्तर मेषा ऋगाम्नाता ( १०. १८१. २. )—

आविन्दन् ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत्।

धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नेः"–इति ।

वाजसनेयिनस्त्वामनन्ति—"पञ्चदशाद् बृहद् भरद्वाज ऋषिः"–इति वा० सं० १३. ५५ । "पञ्चदशात् स्तोमाद् बृहत्पृष्ठं निरमिमीत भरद्वाज ऋषिः"–इति तद्ब्राह्मणम् ८.१.१.८ ।

अथर्वसंहितायाञ्च ( ४. ९. ५. )—

"यौ भरद्वाज मवथो गविष्ठिरं विश्वामित्रं वरुण मित्र कुत्सम् ।
यौ कक्षीवन्त मवथः प्रोत कण्वं तौ नो मुञ्चत्वंहसः"–इति ।

अथ मनुसंहितायाम् ( १०. १०७. )—

'भरद्वाजः क्षुधार्त्तस्तु सपुत्रो विजने वने ।
बह्वीर्गाः प्रतिजग्राह वृबोस्तक्ष्णो महातपाः"–इति ।

"मनो वै भरद्वाज ऋषिः"–इति शत० ब्रा० ८.१.१.९ । आध्यात्मिकपक्षे एषोऽर्थः स्याद् योजनीयः ।

२१५—९— रथन्तरं । 'स वाचं व्यसृजत, सा वायथन्तर मन्वपद्यत, रथं मर्याः क्षेप्तातारीदिति तद्रथन्तरस्य रथन्तरत्वम्'–इति, 'प्राणापानौ वै बृहद्रथन्तरे'–इति, 'इवं वै रथन्तर मन्तरिक्षं वामदेव्यं द्यौर्बृहदिमे लोकाः'–इति च ता० ब्रा० ७. ६, १७.११ खण्डयोर्द्रष्टव्यानि । तत् साम छ० आ० ३प्र० १अ० ५द० १ऋचि उत्पन्नम् , आर० गा० २प्र० १अ० ३१साम । प्रदर्शितं तत्पुरस्तादिहैव ( २३० पृ० ) । 'अमिति रथन्तर मपान मभि समवेष्टत'–इति तन्निधनविधिः ता० ब्रा० ७. ६ । 'वसिष्ठस्य च रथन्तरम्'–इति तन्नामविधिः आर्षे० ब्रा० २. १३ । रायन्तरः प्रगाथस्तूत्तरार्चिके १. १. ११ सूक्तरूपः । तत्र गीतं रथन्तरं नाम स्तोत्रियं साम तूह्यगानारम्भे एव द्रष्टव्यम् । तदेव ब्राह्मणस्याग्निष्टोमे पृष्ठं भवतीति ज्योतिष्टोमपृष्ठञ्चोच्यते । अथान्यसूक्तेष्वपि

"ऋवतीषु रथन्तरं गायेत्"-इत्येवमादिवचनबलाद् रथन्तर-स्तोत्रियसामादि गीयते। २०८ पृ० १२ पं० द्रष्टव्यम्।

—१२— 'हृग्रहोर्भश्छन्दसि'–इति पा० सू० ३.१.८४. वा०।

—,,— 'सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः'–इति पा० सू० ३, २. ४६। 'अरुर्द्विषदजन्तस्य मुम्'–इति पा० सू० ६. ३. ६७। 'इह रथेन तरतीति व्युत्पत्तिमात्रं, न त्ववयवार्थानुगमः' –इति सिद्धान्तकौमुद्यां दीक्षितः॥

[ ६ ]

२१५—१६— षष्ठी। ऋक्संहिताया मेषा २.४१.२। एता मृच मवलम्ब्य आरण्यके शुक्रं नाम सामैक माम्नातम् (३.२.७.) आर्षे० ब्रा० ३. १९। क्वचिद् गायत्री ; द्वितीयपादस्यैकाक्षरन्यून-त्वात्। वस्तुतः पादानां पृथक्पृथगध्ययने नास्त्यक्षरन्यूनतेति च बोध्यम्। 'नियुत्वान् वायव्या'–इति दैवतनैगेयः। 'नियु-त्वान् गृत्समदः शौनकः'-इत्यार्षनैगेयः। गृत्समदस्तु आङ्गि-रसः शौनहोत्रः, पश्चाद् भार्गवः शौनकः। तथाहि— "गृत्समद ऋषिः। स च पूर्वं माङ्गिरसकुले शुनहोत्रस्य पुत्रः सन् यज्ञकाले ऽसुरैर्गृहीत इन्द्रेण मोचितः। पश्चात्तद्वचनेनैव भृगुकुले शुनक-पुत्रो गृत्समदनामाभूत्। तथा चानुक्रमणिका— 'य आङ्गिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत्, स गृत्समदो द्वितीयं मण्डल मपश्यत्'–इति। तथा तस्यैव शौनकस्य वचन मृष्यनुक्रमणे — 'त्व मग्न इति गृत्समदः शौनको भृगुतां गतः। शौनहोत्रः प्रकृत्या तु य आङ्गिरस उच्यते इति'–"–इति ऋ० सं० द्वितीय-मण्डलभाष्योपक्रमे सायणः। [ इह सायणवचने तस्यैवेत्युल्लेखस्तु एकरूपनामजन्यभ्रममूलक एव ; अतएवैतच्छ्लोके य इति परोक्ष-

निर्देश उपपद्यते। तथा च 'तस्यैव'-इत्यस्य स्थाने 'तन्नोतीयस्यैव' इति वक्तव्यम्; मण्डलद्रष्ट्रनुक्रमणीकारयोः पार्थक्यात्।] महाभारते अनुशासनपर्वणि च तथा (१८. ३० अ०)—

'ऋषिर्गृत्समदो नाम शक्रस्य दयितः सखा'-इत्यादि १८ श्लो०, तथा— 'वीतहव्यो महाराज! ब्रह्मवादित्व मेव च।

तस्य गृत्समदः पुत्रो रूपेनेन्द्र इवापरः॥ ५८॥

शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत्।

ऋग्वेदे वर्त्तते चाग्र्या श्रुतिर्यस्य महात्मनः॥ ५९॥

यत्र गृत्समदो ब्रह्मन् ब्राह्मणैः स महीयते।

स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्॥ ६०॥"-इति।

"गृत्समद मर्थ मभ्युत्थितं कपिञ्जलो ऽभिववाशे। तदभिवादिन्येषर्ग्भवति— 'भद्रं वद ०—० कपिञ्जलः'-इति। सा निगदव्याख्याता। गृत्समदो गृत्समदनः; गृत्स इति मेधाविनाम, गृणातेः स्तुतिकर्मणः"-इति निरु० ९. १. ४, ५।

२१५—१८— निघण्टुः। १. १५. १०। 'वायुश्च नियुत्वान्'-इति निरु० ५. ४. १०।

—१९— शुक्रः। "शुक्रो द्रोणकलशे"-इति का० श्री० ९. ५. १९। 'द्रोणकलशे यः सोमः, स शुक्रसञ्ज्ञकः'-इति तद्व्याख्यानम्।

—,,— यामेः। निघण्टौ याच्ञाकर्मसु यामीति द्वितीयं पदम् (३. १९.)। वस्तुत इह 'यमेः'-इत्येव पाठः शुद्धः। 'यम उपरमे'-इति धा० प० ९८४।

२१६—२— गन्ता। नेदं रूपं तृजन्तम्; अपि तु तृन्नन्त मेव। आद्युदात्तश्रुतिरेवात्र नियामिका भवति। 'ञ्नित्यादिर्नि-

त्यम्'—इति हि पाणिनीयानुशासनम् ६. १. १९७। गकारस्योपरि एकाङ्क एव तस्योदात्ततां ज्ञापयति। सति त्वस्य तृजन्तत्वे 'चितः (पा० ६. १. १६३.)'—इत्यन्तोदात्तत्वं स्यात्, ततश्च 'अनुदात्तं पद मेकवर्जम् (पा० ६. १. १५८.)'—इति गकाराकारस्यानुदात्तता श्रूयेत, अनुदात्तताज्ञापकः '३' एष एवाङ्कस्तस्योपरि दृश्येत च। नापीदं गन्तासीत्येकं पदं लुण्मध्यमैकवचनस्य। तथा सति 'तास्यनुदात्तेत् (पा० ६.१.१८६.)'—इत्यादिना इकारस्यानुदात्तता श्रूयेत, दृश्येत च तत्र तृतीयाङ्को ऽनुदात्तताज्ञापकः। आर्षः पदपाठग्रन्थश्चैवमादिषु भवत्येव नियामकः।

—,,— यातोऽसि। 'यातासि'—इति शुद्धम्। अधियज्ञोऽर्थ एषः। "हे 'वायो!' यतः 'सुन्वतः' यजमानस्य 'गृहं' प्रति त्वं 'गन्ता' गमनशीलः 'असि' [तृन्नन्तः; आद्युदात्तत्वात् (पा० ६. १. १९७.)], अतो 'नियुत्वान्' अश्ववान् सन् 'आगहि' आगच्छ। शपो लुक् (पा० २. ४. ७२.)। 'अय' 'शुक्रः' ग्रहः 'ते' त्वां प्रति 'अयामि' अयतु प्राप्नोतु। लकारपुरुषव्यत्ययः (पा० ६. १. ८५.)। शुक्रादिग्रहाणां पात्रं त्व मेवेति भावः"—इति वा० सं० २७. २९ व्याख्याने महीधरः। एषोऽप्यर्थो ऽधियज्ञ एव॥

[ ७ ]

२१६—५— सप्तमी। ऋक्संहितायां मेषा ८. ८९. ५। उत्तरार्चिके ऽप्येषा पुनराम्नाता ६. २. १९. १। एतन्मूलकानि सप्तदश सामानि आरण्यके आम्नातानि (३. २. ९–२५.)। तेषा माद्यानां षण्णां स्वर मिति पर मिति च समाख्या, ततः स्वरीयांसि त्रीणि, ततः पश्चानुगानम्, ततो हरनुगानम्, ततश्चतु-

रनुगानं चेति सङ्कलनया सप्तदश सामानि । पञ्चभिरेक मेव पञ्चानुगान मुच्यते । एवं द्व्यनुगानं चतुरनुगानञ्च । तदेवं यद्यपि गानग्रन्थे लिखितसङ्ख्यातोऽत्र सप्तदश सामानीति बुध्यते, किन्तु वस्तुतो द्वादशैव । तदेतन्नामविधिः श्रुयते आर्षेयब्राह्मणे यथा— 'वायोः षट् स्वराणि, पराणि वा ०—० विष्णोस्त्रीणि स्वरीयांसि पञ्चानुगानं, द्व्यनुगानं, चतुरनुगानम्'–इति ३, १८ । उत्तरामूलकानि त्रीणि स्तोत्रियसामान्यूह्यगाने द्रष्टव्यानि ( १. २. १६ ; २. १. ३ ; ३. २. १६. ) । तत्र प्रथमं रथन्तरं नाम, द्वितीयं चतुर्थस्वरम्, तृतीयं बृहदिति । "स्वरसामान एते भवन्ति ; स्वर्भानुर्वा आसुर आदित्यं तमसाऽविध्यत्, तं देवाः स्वरैरस्पृण्वन् ; यत् स्वरसामानो भवन्त्यादित्यस्य स्तृत्यै । परैर्वै देवा आदित्यं स्वर्गं लोक मपारयन् ; यदपारयंस्तत्पराणां परत्वं ; पारयन्त्येनं पराणि य एवं वेद"–इत्यादि चात्र सामब्राह्मणम् ( ता० ४. ५. १–४. ) ।

२१६—५— नृमेधपुरुमेधौ । नृमेधपुरुमेधावाङ्गिरसाविति ऋषिनिर्णयः ; ऋष्यनुक्रमण्यामपि तथैव । अथ ऋक्संहितायां यस्मिन् सूक्ते एषा ऋक् पञ्चमी , तत् सूक्तं तदुत्तरसूक्तं च, द्वे एवैते नृमेधपुरुमेधाभ्यां दृष्टे; केवलनृमेधदृष्टानि चान्यानि चत्वारि सूक्तानि तत्र श्रुतानि ( ८. ८८, ८९ ; ९. २७, २९. ) ; केवलपुरुमेधदृष्टं तु सूक्तं न श्रूयते तत्रैक मपि । 'ऐन्द्र्याः' इन्द्रदेवताकायाः, 'अनुष्टुभः' अनुष्टुप्छन्दस्काया अस्या ऋचो नृमेधपुरुमेधौ द्वौ ऋषी ज्ञेयावित्यर्थः । अनुष्टुप्त्वं चास्या निचृद्विशेषणान्वित मेव ; प्रथमपादस्यैकाक्षरहीनत्वादिति ।

—६— त्वतो । 'स्वतो'–इति ऋग्भाष्यपाठः ।

—७— मंह० —०न्द्र ।। 'मंहनीयधनवन्निन्द्र !'–इति ऋग्-

भाष्यपाठः ; अत्राप्येष एव स्यादिष्टतः । 'मघ मिति धननामधेयं, मंहतेर्दानकर्मणः'–इति निरु० १. ३. २ । निघण्टौ— मघम् २. १०. १ ; मंहतिः ३. २०. १० ( 'मंहते' ) ।

—७— वृत्रासुरहननाय । एतच्च भाष्य माख्यानपरम् ; यास्कस्य स्वमते आधिदैविकं व्याख्यान मेव युक्ततरम् । तथाहि— 'तत् को वृत्रः ? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति'–इति निरु० २. ५. २ । "इन्द्रो ह्येतेन वृत्र मह्नन् ०—० वृत्रो यच्चन्द्रमाः"–इत्यादि च शत० ब्रा० १.६. ४. १–२१ । 'तपन्नादित्य एवेन्द्रः परमैश्वर्ययोगात्, चन्द्रस्य वृत्रत्वं प्रतिपादितम्'–इति तद्भाष्ये हरिस्वामी । तदेव मस्या ऋच आधिदैविकार्थोऽपि स्यादेव ।

—९— उत । एष पाठ ऋग्वेदीयः । अत्रत्यपाठस्तु 'उतो'–इति । तत्र 'उत', 'उ' इत्येव मवग्रहः कृतः पदकारेण । समानार्थः ।

—१०— 'दिव्यं । 'दिवं' इति शुद्धं । 'द्याम्'–इति ऋ० सं० ॥

---

( सेतुसाम )

२१६—१८— हाउ । राणायनशाखाध्येतॄणां 'हाऽवु'–इति पाठः । एष पदस्तोभश्छन्दोगाना मारण्यकगानेषु बहुत्र श्रूयते । अस्यार्थस्तूक्तः पुरस्तात् ( २१४ पृ० ) । तैत्तिरीयोनिषदि श्रुतस्यान्नसाम्नो व्याख्यानावसरे शङ्कराचार्यस्त्वेतत्पद मेवं वाचचक्षे— "हा३वु हा३वु हा३वु । अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम् । कः पुनरसौ विस्मय इत्युच्यते । अद्वैत आत्मा निरञ्ज-

नोऽपि सन्नह मेवान्न मन्नादस्य । किञ्चाह मेव श्लोककृत् । श्लोको नामान्नान्नादयोः सङ्घातस्तस्य कर्त्ता चेतनावान् । अन्नस्यैव वा परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य पारार्थ्येन हेतुना सङ्घातकृत् । त्रिरुक्तिर्विस्मयत्वख्यापनार्था"–इति ३. १०. ५ ।

अथ सेतूंस्तरादीनां वाक्यस्तोभइतिसामगप्रसिद्धानां यजुषां व्याख्यानं तु समग्रसामसंहिताव्याख्याने प्रवृत्तेनाप्यार्चिकभागमात्रं व्याख्याय कृतार्थम्मन्येन भगवता सायणाचार्येण नैवाकारि, नाप्यन्यद् भाष्य मेवमादीना मिदानीं लभ्यते, तदद्य तानीमानि यथोपदेशं व्याख्यास्यामः । प्रसिद्धं ह्येतत्—गन्तव्यग्रामादीनां पथि यदि नद्याद्यन्तरायः स्यात् , तदुत्तरणाय नूनं तत्र शिलाकाष्ठलोहादिभिः सेतुर्निर्मीयते, गन्तव्यस्थानगमनान्तरायोत्तरणोपायभूतेन तेनैव सेतुना त मन्तराय मुत्तीर्य निर्विघ्नं गच्छति चतुरः पान्थः । अस्ति चास्माकं स्वर्गं नाम गन्तव्यं स्थानम् ; तत्पथि सन्ति च चत्वारोऽन्तरायाः ; तानुत्तर्तुं चत्वारः सेतवश्च सन्त्येव ; किन्तु बहवो हि स्वर्जिगमिषवो न तान् जानन्ति , अत एव कुमार्गगामिनः सन्तस्तेष्वन्तरायेषु पतिता विपद्यन्ते ; तदत्र सर्वेषा मेव स्वर्गार्थिना मभिलषितावाप्तिसिद्धये तन्मार्गान्तरायेभ्यश्चतुर्भ्यः समुत्तरणाय चत्वारः सेतव इह साम्नि समुपदिश्या इत्यत आह सेतूंस्तरेत्यादि ।

'अदानम्' देशकालपात्रान् लब्ध्वापि विद्याधनादिदानसमर्थोऽपि योग्यदानाकरणम् । तदेतदस्माकं स्वर्गाध्वनि सुखासौ वा एकोऽन्तरायः । त मिम मन्तराय मुत्तर्तुं दानरूपः सेतुरारोहणीयः । तं सेतु मारुह्य तदन्तराय मुत्तरतां न भवति स्वर्लाभव्याघातः । एवं क्रोधं नाम द्वितीय मन्तराय मक्रोधेन सेतुना समुत्तरेत् ,

तृतीयान्तरायभूता मश्रद्धां श्रद्धाख्यसेतुना समुत्तरेत्, असत्यरूपं चतुर्थ मन्तरायं सत्यसेतुना समुत्तरेदिति ।

तदेतत्क्रतुचतुष्टयं मनसि कृत्वैवाम्नायते सेतूंस्तरेत्यादि । हे जीव ! आत्मन् ! 'सेतून्' दानाक्रोधश्रद्धासत्यरूपान् अवलम्ब्य 'दुस्तरान्' दुःखेन तर्त्तुं योग्यान् ( न तु तर्त्तुं मशक्यान् ) गिरि-नदीगहनमरीचिकातुल्यान् अदानक्रोधाश्रद्धासत्यरूपान् स्वर्गम-नान्तरायभूतान् 'तर' अतिक्रम । 'चतुरः' चतुस्सङ्ख्याकान् 'सेतून' अवलम्ब्य, अन्तरायान् 'तीर्त्वा' अतिक्रम्य 'ज्योतिर्गच्छ' अभीष्टं ब्रह्मस्वरूपं लभस्व । यद्वा 'सेतून्' उक्तान् दानादीन् अवलम्ब्य, 'दुस्तरान्' अदानादीनन्तरायान् 'तीर्त्वा' अतिक्रम्य 'चतुरः' दक्षः कर्त्तव्येष्विति यावत् । 'दक्षे तु चतुरपेशलपटवः' —इत्यमरः २. १०. १९ । तादृशकार्यदक्षः संश्च 'स्वर्गच्छ' अभीष्टं सुखं लभस्व । ततो 'ज्योतिर्गच्छ' ब्रह्मस्वरूपं साक्षात्कुरु । 'एतद्' ब्रह्मावाप्तिरूपं ज्ञान मेव 'अमृतम्' नित्यं कैवल्यम् । 'एषा' एत-च्छ्रुत्युक्ता इय मेव 'गतिः' मुक्तिः, साधकाना मिति ।

अहमस्मीत्यादृचो व्याख्यानं तु भगवच्छङ्कराचार्येणापि कृतं तैत्तिरीयोपनिषद्भाष्ये । तद्यथा— "अह मस्मि भवामि । प्रथ-मजाः प्रथमजः प्रथमोत्पन्नः । ऋतस्य सत्यस्य मूर्त्तामूर्त्तस्यास्य जगतो देवेभ्यश्च पूर्व ममृतस्य नाभिरमृतत्वस्य नाभिर्मध्यं मत्संस्थ ममृतत्वं प्राणिना मित्यर्थः । यः कश्चिन्मा मा मन्न मन्नार्थिभ्यो ददाति प्रयच्छत्यन्नात्मना ब्रवीति स इदित्थ मेव मविनष्टं यथाभूत मावा अवतीत्यर्थः । यः पुनरन्यो मा मदत्वाऽर्थिभ्यः काले प्राप्ते अन्न मत्ति त मन्न मदन्तं भक्षयन्तं पुरुष मह मन्न मेव सन्प्रत्यद्मि भक्षयामि"—इति ३.१०.६ । अत्र 'नाम'—इत्यस्य स्थाने 'नाभिः'

–इति, 'आवत्' इत्यस्य स्थाने 'आवाः'–इति चैतौ पाठभेदौ शाखान्तरीयौ।

तदेतत् सर्वं कर्मिणा मन्त्राक मवलम्बनीयम्; ज्ञानधनानां तु ब्रह्मैव सेतुस्वरूपम्। तथाम्नातं छान्दोग्ये— "अथ य आत्मा स सेतुर्विधृतिरेषां लोकाना मसम्भेदाय। नैतꣳ सेतु महोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्; सर्वे पाप्मानोऽतो निवर्त्तन्ते; ऽपहतपाप्मा ह्येष ब्रह्मलोकस्तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति; विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति; तस्माद्वा एतꣳ सेतुं तीर्त्वापि नक्त महरेवाभिनिष्पद्यते; सकृद्विभातो ह्येवैष ब्रह्मलोकः। तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति, तेषा मेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति"–इति ८. ४. १–३। श्वेताश्वतरोपनिषदि चैतन्निष्कर्षं आम्नातः (६. १९.)—

"निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम्।
अमृतस्य परꣳ सेतुं दग्धेन्धन मिवानलम्"–इति॥

---

## ॥ अथ अथर्वसंहितायाः॥

(भाष्यभूमिका)

२१९—१०— शौनकीयायाः। त्रयीपरिचये ४० पृ० २२–२४ पङ्क्यो द्रष्टव्याः। अथर्वभाष्योपोद्घाते त्वेवं नव भेदा उक्ताः:— "तस्य ऐहिकामुष्मिकसकलपुरुषार्थपरिज्ञानोपायभूतस्य अथर्व-

वेदस्य नव भेदा भवन्ति । तद्यथा - पैप्पलादास्तौदा मौदाः शौनकीया जाजला जलदा ब्रह्मवदा देवदर्शाश्चारणवैद्याश्चेति"-इति ।

—,,— पूर्वोक्तेष्वेव । उपोद्घातेष्वेवेत्यर्थः । तथाहि— "आथर्वणं कर्मोच्यते । तच्च द्विविधम् । आज्यतन्त्रं पाकतन्त्रं चेति । यत्र प्रधानं हविः आज्यं, तदाज्यतन्त्रम्; यत्र चरुपुरोडाशादिकम्, तत् पाकतन्त्रम् । आज्यतन्त्रेऽयमनुष्ठानक्रमः—प्रथमम् "अव्यसश्च (१९. ६५.)" इति कर्तुर्जपः, बर्हिर्लवनम्, वेदिः उत्तरवेदिः, अग्निप्रणयनम्, अग्निप्रतिष्ठापनम्, व्रतग्रहणम्, पवित्रकरणम्, पवित्रेणेध्मप्रोक्षणम्, इध्मोपसमाधानम्, बर्हिःप्रोक्षणम्, ब्रह्मासनम्, ब्रह्मस्थापनम्, स्तरणम्, स्तीर्णप्रोक्षणम्, आत्मासनम्, उदपात्रस्थापनम्, आज्यसंस्कारः, स्रुवग्रहणम्, ग्रहग्रहणम्, पुरस्ताद्धोमाः आज्यभागौ । "सविता प्रसवानाम् (५. २४.) इति कर्मणि अभितोऽभ्यातानैराज्यं जुहुयात्"-इति (कौ० १४. १.) सूत्रकारवचनात् अभ्यातानानि; एतदन्तं पूर्वतन्त्रम् । ततो यथोपदेशं प्रधानहोमः, तत उत्तरतन्त्रम्—अभ्यातानानि, पार्वणहोमः, समृद्धिहोमाः, सन्नतिहोमाः, स्विष्टकृद्धोमः, सर्वप्रायश्चित्तीयहोमः, स्कन्नहोमः, "पुनर्मैत्विन्द्रियम् (७. ६९.)"-इति होमः, स्कन्नास्मृतिहोमौ, संस्थितिहोमाः, चतुर्गृहीतहोमः, बर्हिर्होमः, संस्रावहोमः, विष्णुक्रमाः, व्रतविसर्जनम्, दक्षिणादानम्, ब्रह्मोत्थापनम् इति । पाकतन्त्रे तु अभ्यातानाभाव एव विशेषः । अन्यत् सर्वं समानम् । तथा च गोपथब्राह्मणम्—

"आज्यभागान्तं प्राक्तन्त्रमूर्ध्वं स्विष्टकृता सह ।
हवींषि यत्र आवापो यथा तन्त्रस्य तन्तवः ।"-इति ।

अद्भुतकर्मणा माज्यतन्त्रत्वेऽपि पाकतन्त्रवद् अभ्यातानाभावः ।

यदाह केशवः — "प्राकृतमन्त्रेष्वभ्यातानानि न भवन्ति, अहुतेषु न भवन्ति, अन्यत्र सर्वत्र भवन्ति"–इति ( के० १४. १. )"–इति। विस्तरस्तु त्रयीपरिचये द्रष्टव्यानि ( १२९ – १३२ पृ० )।

२२० — १७ — अनु० — ०विशेषः। ऐतरेयब्राह्मणभाष्ये तूक्तम्— 'अन्वीक्ष्य मन्त्रण मनुमन्त्रणम्'–इति २. ३. ३। "अथाभिमन्त्रयते ( ३. ८. ५. ११ )"–इत्यादिशतपथीयश्रुत्याद्यर्थाननुसन्दध्युश्च। कात्यायनीयश्रौतसूत्रे च प्रयाजानुमन्त्रणम् ( ३. ३. २. ), अनुयाजानुमन्त्रणं ( ३. ५. १४. ), यूपचषालाभिमन्त्रणम् ( ६. १. १९. ), अपामभिमन्त्रणं ( ६. १०. ७. )। तथा याज्ञवल्क्यसंहितायां पात्राभिमन्त्रणम् १. २३७।

२२१ — ४ — द्रष्टव्यम्। "उपनयनदिवसेऽपि मेधाकामस्य ब्रह्मचारिणोऽनेन सूक्तेन आज्यहोमः कार्यः"–इत्यादिर्भाष्यग्रन्थ इत उत्तरलिखितोऽप्यत्र बाहूल्यभयान्नोद्धृतः।

— १७ — उपधानस्वरूप मुक्तम्। इहैवेतः पूर्वम्। तद्यथा— "उपधानं नाम आज्यादित्रयोदशद्रव्यहोमः। 'उपदधात्यनादेयैे आज्यं समित् पुरोडाशः पयः ओदनं पायसं पशुः व्रीहियवतिलधानाः करम्भः शष्कुल्यः एतानि त्रयोदश हवींषि जानीयाद्'–इति पैठीनसिपरिभाषणात्"–इति।

२२७ — १४ — तदुक्तम्। आदर्शपुस्तके यथादृष्टं लुप्ताक्षरचिह्नं, तथैवेहोद्धृतम्। अस्मन्मते त्विहैवं पाठेन भवितव्यम्— "तदुक्तं न्यायमालायाम्—

'देवः प्रयोजकोऽपूर्वं वा ? ऽऽद्योऽस्य फलदत्वतः।
न विधेये गुणो ह्येषो ऽपूर्वस्य फलतोचिता ॥"–इति ४अधि०।

२२८ – २ – इति। अत्र चैतदधिकरण मारचितं माधवाचार्येण—

"कर्मैव फलदं यद्वा कर्माबाधित ईश्वरः ।
अपूर्वावान्तरद्वारा कर्मणः फलदातृता ॥
अचेतनात् फलासूतेः शास्त्रीयात् पूजितेश्वरात् ।
कालान्तरे फलोत्पत्तेर्नापूर्वपरिकल्पना ॥ ८ ॥"-इति ।

—५— वृ० पू० । अस्य श्रुतित्वं न सर्वसम्मतम् ।

—६— इत्यादि । इह निरुक्तदैवतकाण्डोपक्रमोक्तं यास्कवचनं चालोच्यम् "अथाकारचिन्तनं देवतानाम् । पुरुषविधाः स्युरित्येकम्, ०—० । अपुरुषविधाः स्युरित्यपरम्, ०—० । अपि वोभयविधाः स्युः, अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः, यथा—यज्ञो यजमानस्यैष चाख्यानसमयः"—इति (७, २, २, ३) ।

—२३— इ०—०णे । जै० अधि० ३, ८, ७ द्रष्टव्यम् ।

२२९—७— संग्रहश्लोकः । एष च माधवाचार्येण प्रणीतो जैमिनीयन्यायमालायास्तृतीयाध्यायीयाष्टमपादस्य चतुर्दशाधिकरणार्थ-संग्राहकः । तद्ग्रन्थस्य संग्रहस्वरूपं तु तत्र तदुपोद्घात एव वर्णितम्—'सर्वथापि सहस्रे द्वे नातिक्रामति संग्रहः । मीमांसासागरस्तेन क्रीडापुष्करिणी भवेत्'-इति ।

२३०—२— इत्यधिकरणेऽपि । जै० अधि० ३, २, १४ ।

—८— मिति । अत्रैतौ माधवीयौ संग्रहश्लोकौ—
"सह पत्नीवता त्वष्टा तद्ग्रहे लभ्यते, न वा ?
सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात् सोऽपि लभ्यते ।
सहत्वमात्रं त्वष्टुः स्यात् न पातृत्व मशब्दवत् ।
चोदनाया अभावाच्च न देवोऽतो न लभ्यते ॥"-इति ।

२३२—१५— प्रथमसूक्तस्य । गोपथब्राह्मणे तु "शन्नो देवी-

रभिष्टये'—इत्येव मादिं कृत्वा अथर्ववेद मधीयते''–इति सुव्यक्त माम्नातम् ( पू० १ प्र० २९ ख० )। पातञ्जले महाभाष्ये पस्पशायां चैव मेव। एतत्संहितायां तु शन्नोदेवीति मन्त्रस्य प्रथमानुवाकीयत्वेऽपि न सर्वतः प्राथम्यम्; षष्ठसूक्तीयाद्यत्वेनाम्नानात्। तदेतस्याः शाखाया आद्यपञ्चसूक्ताधिक्यं त्रिषप्तीयादित्वेन पाठवैचित्र्यं चोररीकार्यम्; गोपथं नाम ब्राह्मण मेतच्छाखीयविनियोगादौ मानं सदपि नैतच्छाखीय मित्यपि स्यात् सुवचमिति ॥

अथास्ति सूक्तस्यैतस्य गुरुपरम्परालब्धोऽपरो ऽप्यर्थस्तथा वृष्यकर्मणि बलानामौषधिहोमे तत्त्वेन चास्य विनियोगो दाक्षिणात्येषु प्रसिद्धः। युक्तञ्चैतदथर्ववेदस्यैवोपवेद आयुर्वेद इत्यस्य सर्वसम्मतत्वात्; दृश्यते ह्यत्र संहितायां सूत्रभाष्यकृत्सम्मतं तथाविधमन्त्राणां बाहुल्यमपि। किञ्च मेधाजननकर्मणि तस्य सूक्तस्य विनियोगः सर्ववादिसम्मतः, मेधाजननं च वृष्यानुगत मेव। तथा चैतत्प्रथमाया ऋचो व्याख्यान मेव मपि स्यात् – 'त्रिषप्ताः' त्रिसप्ताः, त्रिगुणिता सप्त सङ्ख्या येषु ताः, एकविंशतिसङ्ख्याका इत्यर्थः। ते खलु त्रिस्थानाः षड्जादयः सप्त स्वराः, त्रिग्रामाश्रया नन्द्यादयो मूर्च्छनाः, वातपित्तकफेतिदोषत्रयाश्रितास्त्रिविधा रसरक्तादयः सप्त धातवो वा। त एते 'ये' 'विश्वा रूपाणि बिभ्रतः परियन्ति'। 'तेषां' त्रिसप्तानां 'तन्वः' तनूः, पूर्णमूर्तीः 'मे' मम (शरीरे) 'दधातु' पोषयतु। 'वाचस्पतिः' वागिन्द्रियस्य बलाधिक्यकरणेन पालकः, 'बला' एतदाख्यो वृष्यौषधिविशेषः ॥ यद्वा 'विश्वा रूपाणि बिभ्रतः' नियतपरिणामिनः प्रकृतिरूपस्य जगत्कारणस्य 'ये' पूर्ववर्णिताः 'त्रिषप्ताः तन्वः' सन्ति, 'तेषां' अवयवान् भावान् वा 'मे' मम 'दधातु' धारयतु पोषयतु चेत्यर्थः ॥

'षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः ॥'–इति,
'उरः कण्ठः शिरश्चैव स्थानानि त्रीणि वाङ्मये ।
उरः सप्तविचारञ्‌ स्यात् तथा कण्ठस्तथा शिरः ॥"–इति हि

नारदीयशिक्षायां १प्र० २ख० ५श्लो०, १ख० ८श्लो० । तदेव मुरःस्थानाः षड्जादयः सप्त, कण्ठस्थानाः सप्त, शिरःस्थानाश्च सप्तेति ते 'त्रिसप्ताः' एकविंशतिप्रकाराः स्वराः ।

'सप्त स्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः'–इति,
'षड्जमध्यमगान्धारास्त्रयो ग्रामाः प्रकीर्त्तिताः'–इति,
'नन्दी विशाला सुमुखी चित्रा चित्रवती सुखा ।
बलाया चाथ विज्ञेया देवानाञ्‌ सप्त मूर्च्छनाः ॥ ९ ॥
आप्यायिनी विश्वभृता चन्द्रा हेमा कपर्दिनी ।
मैत्री च बार्हती चैव पितॄणां सप्त मूर्च्छनाः ॥ १० ॥
षड्जे तूत्तरमन्द्रा स्यादृषभे चाभिरुद्गता ।
अश्वक्रान्ता तु गान्धारे तृतीया मूर्च्छना स्मृता ॥ ११ ॥
मध्यमे खलु सौवीरा हृष्यका पञ्चमे स्वरे ।
धैवते चापि विज्ञेया मूर्च्छना तूत्तरायता ॥ १२ ॥
निषादाद्रजनीं विद्यादृषीणां सप्त मूर्च्छनाः ।
उपजीवन्ति गन्धर्वा देवानाञ्‌ सप्त मूर्च्छनाः ॥ १३ ॥
पितॄणां मूर्च्छनाः सप्त तथा यक्षा न संशयः ।
ऋषीणां मूर्च्छनाः सप्त यास्त्विमा लौकिकाः स्मृताः ॥१४॥"

–इति ना० शि० १. २. ४, ६, ९–१४ । त एते त्रिविधाः सप्त स्वराः, एकविंशतिसङ्ख्याका मूर्च्छनाश्च बलवतां वागिन्द्रियत एव प्रकाशं यन्ति, अतो मेधाकामेन हृष्यकामेन वा वाचस्पतिर्बलादेवो

याचितो भवति; अपि वा 'बला दद्यात्'-इति बलायाः प्रेषणा
ईश्वर एव याच्यते। सप्तधातुनामानि भावप्रकाशे यथा—

'एते सप्त स्वयं स्थित्वा देहं दधति यन्नृणाम्।
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥'-इति।

बलापर्यायप्रकारगुणप्रयोगाश्च तत्रैव पूर्वखण्डे गुडूच्यादिवर्गे यथा—

"बला वाट्यालिका वाट्या सैव वाट्यालकापि च।
महाबला पीतपुष्पा सहदेवी च सा स्मृता ॥
ततोऽन्यातिबला ऋष्यप्रोक्ता कङ्कतिका च सा।
गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका ॥
बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत्।
स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम् ॥
बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम्।
मूत्रातीसारं हरति दृष्टमेतन्न संशयः ॥
हरेन्महाबला कृच्छ्रं भवेद्वातानुलोमनी।
हन्यादतिबला मेहं पयसा सितया समम् ॥"-इति।

अष्टाङ्गहृदयस्य सूत्रस्थाने मधुगणे च वर्णितं 'बलात्रितयम्'
-इति। 'बलामूलान्याहृत्य तैल मेतैर्विपाचयेत्'-इत्यादि च सुश्रुते
१. १३. ७। 'अतिबला' अपि तत्रैव १. १४५. १६; १५७. २; २.
८६. ३; १२०. १४; १५४. २१। 'नागबला' च तत्रैव १. ५३.
११; २. १५८. २१; २०७. ८; ४५०. १०; ४८१. १२। उक्तञ्च
चक्रदत्ते नागबलाघृतम् तद्यथा—

'पादशेषे जलद्रोणे पचेन्नागबलातुलाम्।
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत् ॥
पलार्द्धिकैश्चातिबलाबलायष्टिपुनर्नवा-

प्रपौण्डरीककाश्मर्यप्रियालकपिकच्छुभिः ॥
अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः ।
मृणालबिसशालूकशृङ्गाटककशेरुकैः ॥
एतन्नामबलासर्पी रक्तपित्तक्षयक्षयम् ।
हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम् ॥
बल्य मोजस्य मायुष्यं बलीपलितनाशनम् ।
उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते ॥"—इति ।

आयुर्वेदविज्ञानस्य द्रव्यस्थाने हृष्यवर्गे च बलाचतुष्टयवर्णनं दृश्यते ।
वाल्मीकीयरामायणस्य बालकाण्डे—

"मन्त्रग्रामं गृहाण त्वं बला मतिबलां तथा ।
न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः ॥
न च सुप्तं प्रमत्तं वा धर्षयिष्यन्ति नैर्ऋताः ।
न बाह्वोः सदृशो वीर्ये पृथिव्या मस्ति कश्चन ॥
त्रिषु लोकेषु वा राम ! न भवेत् सदृशस्तव ।
बला मतिबलाश्चैव पठतस्तात ! राघव ! ॥ १५ ॥"

—इत्यादिभिः श्लोकैर्वर्णिते ये बलातिबलाविद्ये, तत्रापि द्विविधाया एतस्या बलाया एव वीर्यकरत्वं क्षुत्पिपासाहरत्वादिकत्वञ्च प्रतीयते, सम्भाव्यते च तदाणाभिमन्त्रणायास्यैव सूक्तस्य प्रयोगस्तेनोपदिष्टः, उपदिष्टो ऽपि स्यादितद्बलातिबलाख्यौषधिसेवननियमो रामायेति व्याख्याता प्रथमा ।

अथास्य सूक्तस्योत्तरयो मपि तिसृणा मचां बलौषधिपक्षे यथोपपाद मेव सूहनीयाः ॥

---

## ॥ अथ अथर्वब्राह्मणस्य ॥

—○○—

२३३—१८— शौ० —०तुः । यद्यपि गोपथे शन्नोदेवीति-मन्त्रस्याथर्वसंहितादिमन्त्रत्वस्मृतेः ( १.१. २९. ) पिप्पलादायाः शौनकीयशाखाया गोपथब्राह्मणकत्वे संशय एव, तथापि सायणाचार्यस्य वचनादवगम्यतेऽस्य ब्राह्मणस्यैतच्छाखामन्त्रविनियोजकत्वादिक मपि । तद्वचनं तु संहिताभाष्योपोद्घाते लिखितं यथा— 'शौनकीयादिषु चतसृषु शाखासु अनुवाकसूक्तऋगादीनां गोपथब्राह्मणानुसारेण पञ्चभिः सूत्रैर्विनियोगोऽभिहितः'–इति ।

२३४—२०— "अथर्वाङ्गिरोविद मेव ब्रह्माणं वृणीष्व, स हि ब्रह्मत्वं वेद"–इतिश्रुतेः ( गो० ब्रा० १. २. २४. ), "तद्यदिन्द्र उष्णीषी ब्रह्मवेदो भूत्वा दक्षिणतः परीत्योपातिष्ठत् , तद् ब्रह्माभवत् , तद् ब्रह्मणो ब्रह्मत्वं ; तस्मा एतदथर्वणो रूपं यदुष्णीषी ब्रह्मा"–इत्यादिश्रुतेश्च ( गो० ब्रा० १. २. १९. ) अस्य ब्रह्मवेदत्वम् , ब्रह्माख्यस्यर्त्विज आर्त्विज्यादिविधानत्वात्र वस्तुतः प्रधान मिति सुव्यक्तम् ।

'अथ ब्रह्मणः'–इत्यादिकण्डिकाद्वयगतानि सप्तचत्वारिंशत्सूक्तानीहावेद्यानि ( आश्व० श्रौ० १. १२, १३ ) ।

२३५—३— "अय मुपर्यर्वाग्वसुः"–इति वा० सं० १५. १९ । "'उपरि' ऊर्ध्वदेशे 'अयम्' 'अर्वाग्वसुः' पर्जन्यः ०—० । अर्वागधोमुखं यद्वसु धनं जलरूपं यस्मात् सोऽर्वाग्वसुः । अधो जलं प्रजाभ्यो ददातीत्यर्थः"–इति तत्र महीधरः । "पर्जन्यो वा उपरि तद्यत्त माहोपरीत्युपरि हि पर्जन्योऽथ यदर्वाग्वसुरित्याहातो ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयते"–इति ( शत० ब्रा० ८. ६. १. २०. )

तद्ब्राह्मणम् । अथ मैत्रावार्ग्व्वसुर्महाभारतीये तृतीये पर्वणि द्वादशे च अर्वावसुरिति वर्णितः ।

२३५—४— "परावसुर्हि वै नामासुराणां होता"—इति शत० ब्रा० १. ५. १, २३ ।

—८— विहितश्चैतत् कौशिकसूत्रे विस्पष्टम् ३. १३७ ।

—९— " 'बृहस्पतिर्ब्रह्मा ब्रह्मसदन आसिष्यते बृहस्पते यज्ञं गोपाय'—इत्युपविश्य जपेत् । एष ब्रह्मजपः सर्वयज्ञतन्त्रेषु साग्नौ यज्ञोपवेशनम्"—इति आश्व० श्रौ० १. १२. ९, १० ।

—१०— "बृहस्पतिराङ्गिरसः"—इति अथ० सं० ११. ५. ४. १० ; ५. २, ३ ।

—१३— 'प्रणीता नाम आपो मन्त्रसंस्कृता आहवनीयस्योत्तरतो निहिताः'—इति आश्व० श्रौ० १. १. ४ सूत्रव्याख्याने नारायणः । 'ब्रह्मन्नपः प्रणेष्यामीत्यामन्त्रितो ब्रह्मा प्रणय यज्ञमित्यमुं मन्त्रं पठित्वा ओं प्रणयेत्यनेन प्रणीयमानाः अनुजानाति' —इत्यादि कात्या० श्रौ० २. २. ८ सूत्रव्याख्याने याज्ञिकदेवः । "ब्रह्मन्नपः प्रणेष्यामीति श्रुत्वा 'भूर्भुवस्स्वर्बृहस्पतिप्रसूतः'—इति जपित्वों प्रणयेत्यतिसृजेत् सर्वत्र"—इति आश्व० श्रौ० १.१२.१२ ।

—१५— "हविष्कृदेहि"—इत्येव हविष्कृन्मन्त्रः ( वा० सं० १. १५. । 'हविष्कृदेहीति त्रिराह्वयति'—इति कात्या० श्रौ० २. ४. १३ । 'तस्य हविष्कृता वाचं विसृजते'—इति च शत० ब्रा० ७. २. २. १ ।

—२३— "परितः समन्तात् स्थाप्यन्त इति परिधयः । 'परितो निधानाच्चेत् परिधय इति नाम, तर्हि यदि त्रयाणां वचनं नास्ति तत्र चत्वारोऽपि भवन्तीति कर्कः, नेति सम्प्रदायः"—

इति याज्ञिकदेवः । 'बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः । त्रयो भवन्त्यशीर्णाग्राः, एकेषां तु चतुर्दिशम्'–इति कर्मप्रदीपवचनं २. ५. १८ । "परिधीन् परिदधाति, आर्द्रानिकाष्ठचीयान् बाहुमात्रान् पालाशवैकङ्कतकार्ष्मर्यबैल्वान्"–इत्यादीनि कात्या० २. ८. १–२ सूत्राणि द्रष्टव्यानि । " 'गन्धर्वस्त्वा विश्वावसुः ( वा० सं० २. ३. )'–इतिमन्त्रेणाहवनीयस्य पश्चादुदगग्रं स्थूलं मध्यमं परिधिं परिदधाति । ततः 'इन्द्रस्य बाहुरसि ( वा० सं० २. ३. )'–इति दक्षिणतः प्रागग्रं मणिष्ठं द्वितीयं परिधिं निदधाति । ततो 'मित्रावरुणौ त्वा ( वा० सं० २. ३. )'–इति उत्तरतस्तृतीयं मणिष्ठतरं प्रागग्रं परिधिं परिदधाति"–इति तत्रैव पद्धतिः ।

२३६—१५— प्रजापतिमेव । 'संवत्सरः प्रजापतिः'–इत्यसकृदुक्तमैतरेयब्राह्मणादौ ( १. ३. २. ५. ) 'संवत्सरे पर्याहृत्य प्रजायते'–इति च ता० ब्रा० १० १२. ५ । 'आ नः प्रजां जनयतु प्रजापतिः'–इति ऋ० सं० १०. ८५. ४३ । 'प्रजापतिमेव प्रथमं देवतानामुपससार'–इति तै० ब्रा० २.२.१०.१ । 'देवानां पिता जनिता प्रजानाम्'–इति च तत्रैव ८. १. ३. ४ । 'नित्यः कश्चिदर्थः प्रजापतिः स्यात्'–इति मीमांसाभाष्ये ( १. २. १०. ) शबरस्वामीति शम् ॥

त्रयीचतुष्टयस्यांशस्त्रयीटीकातृतीयकः ।
कलाविद्यामिते शाके त्रयीबोधाय निर्मितः ॥ ३ ॥

इति श्रीमद्रावसथभट्टाचार्यान्वयेन सामश्रमीतिलब्धोपनामसामगेन श्रीसत्यव्रतशर्मणा प्रणीयमाने त्रयीचतुष्टये
त्रयीटीकाभिधस्तृतीयो भागः समाप्तः ॥

---

reciting the Vedas, first in the natural order of words *Prakriti* and then by the various permutations and combinations of words *Vikriti* in order to fix the verses in the memory and to preserve the purity of their pronunciation."

Appendix to Calcutta Gazette, April 2, 1890.

"Nor should I omit to mention the *Ushá*, edited by the venerable Paṇḍit Satyavrata Sámaśramí, who has done so much for Vedic Literature in India. The *Ushá* is a Vedic journal, and it has already published a large number of small works bearing on the pronunciation, chanting and meaning of Vedic words."

(Proceedings of the Asiatic Society of Bengal, Feby. 1892. P. 53.)

"Discovery of the Sixth Bráhmaṇa of the Sámaveda.

Oxford : June 2, 1890.

* * * I shall be glad if you will allow me to call the attention of Sanskrit scholars to a curious discovery, lately made by Paṇḍit Satyavrata Sámaśramí, * * * to whom we owe a useful edition of the Sámaveda Saṃhitá, we know now that the *Khándogya* consisted really of two parts, and that the two books hitherto missing are the two books of Mantrabráhmaṇa. * * *

The same number of *Ushá* contains also the beginning of Sáma-prátiśákhya. If the series is continued in the same spirit, it deserves the support of all Sanskrit scholars in Europe. F. Max Muller."

(The Academy, No. 944, June 7, 1890.)

"Ushá.—Dieses neue Sanskrit Journal des bekannten indischen Gelehrten beschaftigt sich ausschliesslich mit der V e d a l i t e r a t u r, so ist bereits veroffentlicht eine verbesserte Ausgabe d. M a n t r b r á h m a ṇ a, ein S á m a p r á t i ś á k h y a etc. Prof. M. Muller-Oxford sprach sich in der Academy 7. Juni 1890 sehr gunstig daruber aus, ebenso ausserten sich Dr. Rost India Office and Prof. Senart-Paris. Ich halte standig complete Exx. auf Lager u. liefere Fortsetzung nach jeweiligem Erscheinen."

(Antiquarisdier Catalog, 197.—Leipzig.)

---

## VEDIC WORKS EDITED AND PUBLISHED BY PANDIT SÁMAŚRAMÍ.

(*Now in stock.*)

सामवेदसंहिता—with Sáyaṇa's commentary, and Editor's Bengali translation, descriptions of the Riks, and foot-notes ; in Bengali character. ... ... Rs. 40

यजुर्वेदसंहिता – (white), with Mahídhara's commentary, Editor's Bengali translation and notes. Complete in two volumes. 30

सामपदसंहिता—Pada-pátha of the Sámavedasaṃhitá. ... 4